॥श्रीः॥

# भूमिका

स्वार्थपरार्थभेदेन द्वेधा विभक्तेऽनुमाने परार्थानुमानापरपर्यायस्य पूर्वोक्तराङ्गसहितस्य न्यायस्य व्युत्पादकं न्यायदर्शनं महर्षिणा गोतमेन प्रवर्तितम्, यत् खलु न्यायविस्तरनाम्ना चतुर्दशसु विद्यास्थानेष्वन्यतमतया परिगणितम्। प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्यपञ्चावयववाक्यसमूहः न्यायः इत्युच्यते। परस्य मध्यस्थस्य अर्थः अनुमितिरूपं प्रयोजनं यस्मात्तत् इति विग्रहात् न्यायश्रवणजनितपरामर्शेन मध्यस्थस्य अनुमितिर्जायत इति परनिष्ठानुमितिजनक परामर्शजनकतया न्यायस्य परार्थत्वम्। "तच्चानूमानं परार्थं न्यायसाध्यम्" इति मणिग्रन्थे तु परार्थशब्दः मध्यस्थानुमितिजनकपरामर्शपरः। तर्कसंग्रहादिषु परार्थानुमानं न्याय इति व्यवहृतम्। तत्र परार्थशब्दः मध्यस्थानुमितिजनक-परामर्शप्रयोजकपञ्चावयववाक्यपरः। न्यायव्युत्पादकदर्शनप्रवर्तकः सूत्रकारस्तु–प्रमाणप्रमेयेत्यादिसूत्रे न्यायपदं न प्रायुङ्क्त। अपि तु अवयवपदमेव प्रयुयुजे। पञ्चानामप्यवयवानामावश्यकत्वं सूचयितुम् अवयवपदं प्रयुक्तवान् इत्यूह्यते। "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" इति सूत्रेऽवयवानां पञ्चसंख्याकत्वं निरदिशत्।

तत्त्वचिन्तामणिकारः गङ्गेशोपाध्यायः अवयवप्रकरणारम्भे "तच्चानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते" इति प्रतिज्ञाय न्यायलक्षणम् अवयवसामान्यलक्षणं च निरुच्य प्रतिज्ञादीनां प्रत्येकलक्षणानि निरुच्य प्रतिज्ञादीनां पञ्चानामपि क्रमेण प्रयोक्तव्यत्वम् आवश्यकत्वं च सयुक्तिकं प्रतिपादयाम्बभूव।

## न्यायलक्षणम्

तथा हि–समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः। समस्तरूपपदेन पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वम् अबाधितत्वम् असत्प्रतिपक्षत्वं चेति पञ्च धर्माः विवक्षिताः। "तथा चायम्" इत्युपनयेन "वह्निव्याप्यधूमवांश्चायम्" इत्यर्थकेन लिङ्गस्य धूमस्य पक्षसत्त्वं बोध्यते। व्याप्तिप्रतिपादकेन उदाहरणेन व्याप्तिघटकं पक्षसत्त्वं विपक्षासत्त्वं च बोध्यते। निगमनेन अबाधितत्वम् असत्प्रतिपक्षितत्वं च प्रतिपाद्यते। अतो यथायथं पञ्चावयववाक्यस्य अपेक्षितसकलरूपोपपन्नलिङ्ग प्रतिपादकत्वमस्तीति लक्षणसमन्वयः इति केचिदाहुः। तन्न युक्तम्। लक्षणघटके "समस्तरूपोपपन्नलिङ्ग" इति वाक्ये समस्तरूपोपपन्नलिङ्ग प्रतिपादकत्वसत्त्वात् अतिव्याप्तेः।

किं तु अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनक वाक्यं न्यायः। अनुमितिचरमकारणभूतः यः लिङ्गपरामर्शः व्याप्तिनिष्ठप्रकारतानिरूपितहेतुनिष्ठप्रकारतानिरूपित पक्षनिष्ठविशेष्यताशालि परामर्शः तत्प्रयोजकं यत् शाब्दज्ञानं पञ्चावयवार्थ विषयकसमूहालम्बन–शाब्दज्ञानं वा विशिष्टवैशीष्ट्यावगाहिबोधो वा तज्जनकं वाक्यं न्याय इत्यर्थः। प्रयोजकत्वं चेत्थमुपपादितम्–प्रतिज्ञादिभिः पञ्चभिर्वाक्यैः एकवाक्यतामापन्नैः तत्तद्वाक्यार्थविषयकं समूहालम्बनरूपमन्यद्वा ज्ञानं जायते। तेन विशिष्टवैशिष्ट्यज्ञानात्मकपरामर्शजनकं मनः सहकारिसम्पन्नीक्रियते। तथाविधेन तत्तद्वाक्यार्थविषयकबोधात्मकसहका–रिकारणयुक्तेन मनसा परामर्श उत्पाद्यत इति पञ्चावयवात्मकन्यायजन्यशाब्दबोधस्य परामर्शप्रयोजकत्वमिति। एवं च परामर्शजनकमनस्सहकारित्वमेव न्यायजन्यशाब्दबोधस्य परामर्शप्रयोजकत्वमित्युक्तं भवति। तथा चानुमितिचरमकारणलिङ्गपरामर्श–जनकमनस्सहकारिभूतशाब्दज्ञानजनकत्वं न्यायलक्षणम् इति फलितम्।

अस्मिन् यथाश्रुतार्थेऽनुपपत्तिरस्ति। प्रतिज्ञानिगमनयोः

उदाहरणावयवान्तरयोश्च द्वयोरपि एकार्थप्रतिपादकत्वेन संभावितयोः संभूय एकार्थप्रतिपादकत्वं न संभवतीति सुतरां पञ्चानामवयवानां संभूयैकार्थप्रतिपादकत्वाभावः। अपि च तादृशपरामर्शप्रयोजकत्वं यदि परामर्शविषयतत्तत्पदार्थोपस्थापकत्वरूपं, तदोदाहरणोपनययोरेव न्यायत्वं पर्यवस्यति। ताभ्यामेव परामर्शविषयसकलपदार्थोपस्थापनात्। यदि च परामर्शप्रयोजकत्वं परामर्शानुकूलत्वरूपं, तदा को वह्निमान् पर्वतो वह्निमान् कुतो धूमवत्त्वात् इत्यादिसमुदायस्यापि न्यायत्वं स्यात्। को वह्निमानित्यादिवाक्यानामपि जिज्ञासाज्ञापनद्वारा अवयवप्रयोजकत्वेन तद्द्वारा परामर्शानुकूलत्व- संभवात् इत्यालोच्य- "उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम्" इति दीधितिकारैरुक्तम्। इदमपि लक्षणं मणिग्रन्थादेव लभ्यते। शाब्दज्ञानपदं प्रदिज्ञादिप्रतिपाद्यतत्तद्विशिष्टर्थज्ञानपञ्चकपरम्। जनकवाक्यपदं च प्रत्येकं तत्तद्बोधजनकवाक्यपञ्चकपरम्। अतः प्रदिज्ञादिवाक्यपञ्चकलाभः इदि गदाधरभट्टाचार्यैर्न्यरूपि।

## अवयवलक्षणम्

ततः - अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनक-शाब्दज्ञानजनकवाक्यत्वमवयवत्वमिति पञ्चावयवसामान्यलक्षणमुक्तं मणौ। प्रतिज्ञादिभिः पञ्चभिर्वाक्यैः प्रत्येकं तत्तद्वाक्यार्थविषयकपञ्चबोधाः जायन्ते। ततः महावाक्यार्थबोधः ततः परामर्शः ततोऽनुमितिरिति क्रमस्य विवक्षितत्वात् लक्षणसमन्वयः। दीधितिकारस्तु यथाश्रुतमण्यर्थेऽनुपपत्तिं पश्यन् "न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्; प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं वा अवयवलक्षणमिति निष्कर्षं चकार। गदाधरभट्टाचार्यैश्च न्यायलक्षणघटकोचितानुपूर्वीकत्वपरिष्करणे अवयवलक्षणघटकन्यायान्तर्गतत्वादिदलानां परिष्करणे च बहु पराक्रान्तमिति मदीयव्याख्यानसहकारेण तद्रसमनुभवन्तु तर्करसिका इति प्रार्थये।

## प्रतिज्ञालक्षणम्

"साध्यनिर्देशः प्रतिज्ञा" इति प्रतिज्ञालक्षणप्रतिपादकं सूत्रम्। साध्यप्रतिपादकः शब्दः प्रतिज्ञेति तदर्थः। साध्यम् इति पदे वह्निः इति पदे वा साध्यप्रदिपादकत्वमस्तीति तत्र प्रतिज्ञालक्षणातिव्याप्त्यापत्त्या सूत्रोक्तं लक्षणं न युक्तमिति दूषितं मणौ- "तत्र प्रतिज्ञा न साध्यनिर्देशः, साध्यपदेऽतिव्याप्तेः" इति।

दीधितिकारास्तु सूत्रोक्तलक्षणं समर्थयांचक्रिरे। तथा हि – सूत्रे साध्यपदं नानुमितिविधेयपरम्, येन साध्यपदेऽतिव्याप्तिः स्यात्। किं तु साध्यविशिष्टार्थकम्, साध्यतेऽस्मिन्निति साध्यमिति व्युत्पत्तेः। निर्देशपदं बोधजनकन्यायावयवपरम्। साध्यपदमपि प्रकृतसाध्यविशिष्टार्थकम्। साध्यत्वस्य केवलान्वयितया अवयवान्तरेऽपि साध्यविशिष्टधर्मिबोधकत्व-सत्त्वेनातिव्याप्तेः। तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवह्नित्वादिविशिष्टवैशिष्ट्यज्ञानजनको न्यायावयवः प्रतिज्ञेति पर्यवसितः सूत्रार्थः। अतो न कोऽपि दोष इति।

मणिकारोक्तं प्रतिज्ञालक्षणं तु – उद्देश्यानुमितिचरमकारणलिङ्ग-परामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविष-यकशाब्दज्ञानजनकवाक्यत्वम् इति। सत्यन्तस्य न्यायावयवत्वमिति पर्यवसितोऽर्थः। प्रदिज्ञासमानाकारके न्यायबहिर्भूते वाक्येऽतिव्याप्तिवारणाय तत्। हेत्वादावतिव्याप्तिवारणाय विशेष्यम्। धूमादालोकवान् पर्वतो वह्निमान् धूमात् इत्यादिन्यायान्तर्गतहेतुवाक्येऽतिव्याप्तिवारणाय विशेष्यदलेऽन्यूनपदम्। निगमनेऽतिव्याप्तिवारणाय अनतिरिक्तपदम्।

अस्मिन् मणिकारीययथाश्रुतलक्षणे बहून् दोषान् प्रदर्श्य "यादृशपक्षसाध्यकाः पक्षे यादृशविशिष्टार्थबोधिकाः प्रतिज्ञाः संप्रदायसिद्धाः तादृशानां बोधानामन्यतमेनाप्यनिवर्तनीयस्य संशयस्यानिवर्तको यः तावतामन्यतमो बोधः तज्जनकत्वं प्रतिज्ञालक्षणं वक्तव्यम्" इति निष्कर्षः दीधितिकारैः प्रदर्शितः। न्यायावयत्वे सदि लिङ्गाविषयकज्ञानजनक

प्रदिज्ञात्वमिति लक्षणान्तरम्। एतत्परिष्कारः दीधितिगदाधरीययोः सुदीर्घं कृतः चमत्काराधायकः तत एव द्रष्टव्यः।

हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वम्, लिङ्गाविषयकलिङ्गि-विषयकज्ञानजनकन्यायावयववाक्यत्वम् इति लक्षणान्तरे अपि मणौ प्रदर्शिते। धूमादित्यादिहेतुवाक्याभिधानप्रयोजिका या जिज्ञासा "कुतः" इत्याकारिका तज्जनकत्वं प्रतिज्ञायामस्तीति प्रथमलक्षणस्य समन्वयः। द्वितीयलक्षणे लिङ्गमस्यास्तीति व्युत्पत्त्या लिङ्गिपदं साध्यपरम्। लिङ्गिविषयकमित्यस्य साध्यवद्विशेष्यकम् इत्यर्थः। लिङ्गाविषयकं साध्यवद्विशेष्यकं च यत् ज्ञानं तज्जनकत्वं प्रतिज्ञायामस्तीति लक्षणसमन्वयः। साध्यविषयकमिति यथाश्रुतार्थे "इदं जलं निःस्नेहत्वप्रकारकप्रमाविषयत्वशून्यत्वात्" इत्यादौ "यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषयः" इत्युदाहरणे अतिव्याप्तेः।

ततः प्रतिज्ञात्वजातिमत्त्वं प्रतिज्ञायाः लक्षणमिति मतमनूद्य देवदत्तप्रभवत्वादिना संकरात् प्रदिज्ञात्वं न जातिः इति तत् दूषितम्।

ततः प्रतिज्ञा न साधनाङ्गम्। विप्रदिपत्तिवाक्यात् वादिप्रतिवादिभ्यां तत्तत्पक्षपरिग्रहे सति तत्र प्रमाणाकाङ्क्षायां हेतुवाक्यस्यैव प्रथमं वक्तव्यत्वात् इति पूर्वपक्षं कृत्वा शब्दः अनित्यः, शब्दः नित्यः इति विप्रतिपत्तिवाक्यानन्तरं समयबन्धः अमुकं प्रमाणादिकमवलम्ब्य मयेदं साधनीयम् इति प्रमाणादिव्यवस्था, तदनन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वा आकाङ्क्षायां शब्दानित्यत्वं साधनीयम्। तच्च साधनं साध्यनिर्देशं विना हेतुमात्रनिर्देशेन न शक्यम्। हेतुवाक्यार्थान्वय-प्रतियोग्युपस्थापकपदाभावात्। अनुपस्थिते नाप्यर्थे न योग्यतामात्रेणान्वयेऽतिप्रसङ्गात्। न च विप्रतिपत्तिवाक्योपस्थितसाध्येन हेत्वर्थान्वय इति वाच्यम्। प्रतिवादिविप्रतिपत्त्या समयबन्धेन च व्यवहितत्वात्। प्रतिवादिविप्रतिपत्तिं प्रमाणादिव्यवस्थारूपं समयबन्धं च विना स्वपक्षस्थापनस्याभावात्। विप्रतिपत्तिवाक्यस्य पक्षस्वीकारोपयोगितया शान्ताकाङ्क्षत्वाच्च हेत्वर्थेनान्वयानुपपत्तेः। यदि तु व्यवहितस्य

वादिविप्रतिपत्तिवाक्यस्य शब्दः अनित्यः इतिवाक्यस्य आवृत्तिः क्रियते तर्हि सैव प्रतिज्ञेति समाहितम्। तस्मात् साध्यनिर्देशं विना न हेतोः आकाङ्क्षा, न वा हेतुवाक्यस्यान्वबोधकत्वमिति प्रतिज्ञायाः साध्यनिर्देशरूपायाः आवश्यकतया साधनाङ्गत्वं तस्याः इत्युपसंहृतम्।

## हेतुलक्षणम्

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां साधनत्वव्यञ्जक विभक्तिविशिष्टहेतुबोधकपदप्रयोग एवोचित इति प्रतिज्ञानन्तरत्वं हेतुवाक्यस्य। अनाकाङ्क्षितार्थाभिधाने निग्रहस्थानापत्तेः।

अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्या-विषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वं हेदुवाक्यस्य लक्षणम्। जनकान्तं न्यायावयवार्थकं न्यायबहिर्भूतहेतुसदृशवाक्यातिव्याप्तिवारकम्। प्रतिज्ञादावतिव्याप्तिवारणाय साध्याविषयकत्वनिवेशः। "इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात्" इत्यत्र "यत् दण्डाज्जातं तत् दण्डसंयोगाजन्यद्रव्यत्वाभाववत्" इति व्यतिरेक्युदाहरणे दण्डाज्जातत्वाभावरूपसाध्याविषयकज्ञानजनकेऽतिव्याप्तिवारणाय हेतुविभक्तिमत्त्वनिवेशः। न च तन्निवेशेऽपि उक्तव्यतिरेक्युदाहरणे दण्डादिति पञ्चमीरूपहेतुविभक्तिमत्त्वसत्त्वादतिव्याप्तिर्दुवरिति वाच्यम्। प्रकृतसाध्यान्वितस्वार्थबोधनक्षमार्थोपस्थितिजनकविभक्तिमत्त्वस्य तदर्थत्वात्। उक्तव्यतिरेक्युदाहरणान्तर्गतदण्डपदोत्तरपञ्चम्याः जातशब्दार्थान्विता-र्थोपस्थितिजनकत्वेऽपि दण्डहेतुकोत्पत्तिमत्त्वाभावरूपप्रकृतसाध्यान्विता-र्थोपस्थितिजनकत्वाभावान्नातिव्याप्तिः।

**ततः अन्यान्यपि हेतुलक्षणानि मणावुक्तानि। तानि यथा–**

(1) हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम्। हेतुत्वप्रतिपादक-विभक्तिः पञ्चमी, तद्वत्त्वे सति न्यायावयवत्वं धूमादिति वाक्येऽस्तीति लक्षणसमन्वयः। एवमपि निगमनेऽतिव्याप्तिः। अतः विभक्त्यर्थहेतुत्वमुख्यविशेष्यकान्वयबोधजनकन्यायावयवत्वमिति

परिष्कार्यम्।

(2) उदाहरणप्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकन्यायावयवत्वम्। उदाहरणप्रयोगहेतुभूता या आकाङ्क्षा "कथमस्य गमकत्वम्" इत्याकारिका तज्जनकः यः शाब्दबोधः तज्जनक न्यायावयवत्वं धूमादिति वाक्येऽस्तीति समन्वयः। हेतुवाक्यजन्यशाब्दबोधानन्तरं कथमस्य गमकत्वमित्याकाङ्क्षायामुदाहरणप्रयोगात्।

(3) साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा लक्षणम्। अयं न दण्डात् इति प्रतिज्ञायामतिव्याप्तिवारणाय साध्याविषयकेति। "पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्" इत्यत्र इतरत्वव्यापकीभूता-भावप्रतियोगिमदिदम्" इत्याकारकोपनये साध्याविषयकबोधजनकेऽ-तिव्याप्तिवारणाय हेतुपञ्चम्यन्तेति।

(4) प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्तकज्ञानजनकहेतु-विभक्तिमद्वाक्यत्वं वा। प्रतिज्ञावाक्यजन्येन शाब्दबोधेन कुत इति कारणाकाङ्क्षा जायते। तन्निवर्तकस्य शाब्दबोधस्य जनकं धूमादिति वाक्यमिति लक्षणसमन्वयः।

(5) पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा हेतुलक्षणम्। पञ्चम्यन्तं लाक्षणिकं च पदं धूमपदम्, तस्य धूमज्ञाने लाक्षणिकत्वात्। तद्विशिष्टम् अनुमितितात्पर्यकं वाक्यं धूमादिति वाक्यमिति लक्षणसमन्वयः। अनुमितिपरवाक्यमित्यस्य न्यायावयव इति पर्यवसितोऽर्थः। ततो जातिघटितं हेतुलक्षणं दूषितम्।

ततः अन्वयिहेतु - व्यतिरेकिहेतु - अन्वयव्यतिरेकिहेतुवाक्यानां लक्षणान्युक्तानि। यथा - अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजक-ज्ञानजनकहेतुत्वप्रतिपादक विभक्तिमन्न्यायावयवत्वमन्वयिहेतुत्वम्। व्यतिरेकव्याप्त्यभिधायकावयवाभिधानप्रयोजकहेतुत्वप्रतिपादकवि-भक्तिमन्न्यायावयववत्वं व्यतिरेकिहेतुत्वम्। अन्वयव्यतिरेकोदाहरणाकाङ्-क्षाप्रयोजकतथाभूतावयवत्वमन्वयव्यतिरेकिहेतुत्वमिति।

ततः कथायां धूमादित्येव प्रयोक्तव्यम्, न तु धूमवत्त्वात् इति। मतुपो व्यर्थत्वात् इत्युक्तम्। अत्र प्रसङ्गात् सतिसप्तमीघटितहेतुस्थले विशेषणविशेष्ययोः क्वचित् समानाधिकरणकत्वं क्वचित् समानकालिकत्वं च प्रत्याय्यत इति प्रतिपादितम्।

## उदाहरणलक्षणम्

हेतावुक्ते कथमस्य साध्यगमकत्वम् इत्याकाङ्क्षायां गमकतौपयिकयोः व्याप्तिपक्षधर्मतयोः उपदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् व्याप्तिप्रतिपादनाय उदाहरणप्रयोगः। अनुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्य-ज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनक-शब्दत्वमुदाहरणत्वम्। जनकान्तं न्यायावयवार्थकम्। नियतेति संबन्धेऽन्वेति।

तदनन्तरम् उदाहरणे यो यो धूमवान् इति वीप्सा आवश्यकी न वेत्याशङ्क्य अनावश्यकत्वं वीप्सायाः स्वमतेनोक्त्वा वीप्सायाः आवश्यकतायामपि यत्पदे एव वीप्सा न तु तत्पदेऽपि। अतः 'यो यो धूमवान् स वह्निमान्' इत्येवोदाहरणम् इति न्यरूपि। अत एव

**"यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे"**

इति मालतीमाधवीयप्रयोगः संगच्छते इति मणिकाराशयः। गदाधरभट्टाचार्यैस्तु – "द्विरुक्तिनियमोऽपि कदाचित् यत्पद एव न तु तत्पदेऽपि इत्यर्थः। सर्वत्रैव तत्पदे न द्विरुक्तिरिति नार्थः। 'विवर्णभावं स स भूमिपालः' इत्यादौ छन्दोऽनुरोधादिना तत्पदेऽपि द्विरुक्तिदर्शनात्"- इत्यभ्यधायि।

तत उदाहरणाभासाः निर्दिष्टाः मणौ।

## उपनयलक्षणम्

उदाहरणानन्तरं "भवतु हेतौ साध्यव्याप्तिः, तथापि व्याप्तं लिङ्गं किं पक्षे वर्तते न वा" इत्याकाङ्क्षायां व्याप्तस्य पक्षवृत्तित्व-प्रदर्शनायोपनयवाक्यं प्रयुज्यते। अनुमितिकारणतृतीयलिङ्गपरामर्शजनका

–वयवत्वमुपनयस्य लक्षणम्। उपनयवाक्यात् साध्यव्याप्यहेतुमान् पक्ष इति परामर्शात्मकबोधस्य जननात् समन्वयः।

ततः उदाहरणान्त एव न्यायप्रयोगः इदि मतमनूद्य खण्डितम्। अनुमितिचरमकारणस्य लिङ्गपरामर्शस्य उदाहरणपर्यन्तावयवेभ्यः अलाभात् तल्लाभाय उपनयः आवश्यकः। व्याप्तेः उदाहरणात् लाभेऽपि पक्षधर्मतायाः अलाभात्। न च हेतुवाक्यात् तल्लाभ इति वाच्यम्। तस्य को हेतुः इत्याकाङ्क्षायां प्रवृत्तस्य हेतुस्वरूपमात्रोपस्थापकतया पक्षधर्मतातात्पर्यकत्वाभावात्।

## निगमनलक्षणम्

उपनयानन्तरं निगमनम्। अनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञान–कारणव्याप्तिपक्षधर्मताधीप्रयुक्तसाध्यधीजनकवाक्यत्वं निगमनलक्षणम्। कारणान्तं न्यायावयवार्थकम्। प्रयुक्तान्तं निगमनघटकतस्मादिति भागार्थः। यद्यपि व्याप्तिपक्षधर्मतयोश्चतुर्भिरवयवैरेव लाभात् निगमनं किमर्थमिति शङ्का जायते। तथापि अभाधितत्वासत्प्रतिपक्षितत्वयोः अवयवान्तैररलाभात् तद्बोधकतया निगमनस्य सार्थक्यम्। ततः संशयप्रयोजनादीनामवयवलक्षणा–भावादेव नावयवत्वम् इति दशावयवपक्षः दूषितः। परं तु तेषां न्यायाङ्गतया उपयोगोऽस्तीत्युक्तम्।

तदनन्तरं पञ्चावयववाक्यप्रयोगानन्तरं "नायमत्र आभासः तल्लक्षणरहितत्वात्" इति कण्टकोद्धारवाक्यस्य प्रयुज्यमानतया तस्याप्यवयवत्वमावश्यकम्, कथं पञ्चैव अवयवा इत्याशङ्कां मनसि निधाय समाहितम्–

**"कण्टकोद्धारस्य न सार्वत्रिकत्वम्। समयविशेषोपयोगित्वात्"** इति। एतत्तत्त्वं विस्तरेणास्मभिर्व्याख्यातम्, तत एवावगन्तव्यम्।

एवंरीत्या मणिकारप्रदर्शितानि प्रतिज्ञाद्यवयवलक्षणानि परिष्कृतानि चेत् अतिगुरूणि भवन्तीत्यालोच्य लघुभूतानि प्रतिज्ञादिलक्षणानि

दीधितिकारैः प्रदर्शितानि। तथा हि–

(1) इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यत् अन्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति न्यायावयवत्वम् इत्येकं प्रतिज्ञालक्षणम्। प्रतिज्ञायां हेत्वर्थान्वितस्वार्थबोधजनकत्वमस्ति। तथा स्वीयं = स्वघटकं यत् अन्त्यभिन्नं पदं पर्वतपदं तदर्थविशेष्यकान्वयबोधजनकत्वं न्यायावयवत्वं च तत्रास्तीति लक्षणसमन्वयः।

(2) इतरान्वितस्वार्थबोधजनकत्वे सति अन्त्यपदवत्त्वे सति स्वीयानन्त्यपदार्थविशेष्यकबोधजनकं यत् तदन्यत्वे सति वा न्यायावयवत्वम् इति द्वितीयं प्रतिज्ञालक्षणम्। अत्र द्वितीयतृतीयसत्यन्ते प्रथमलक्षणस्थद्वितीयसत्यन्तस्थाने वैकल्पिकतया निवेशिते।

प्रथमलक्षणे सत्यन्तानुपादाने उदाहरणेऽतिव्याप्तिः। "यो यो धूमवान् स वह्निमान्" इत्युदाहरणे अन्त्यभिन्नयत्पदार्थविशेष्यकबोधजनकत्वरूपस्य विशेष्यदलस्य सद्भावात्। सत्यन्तोपादाने तूदाहरणस्यावयवान्तरघटक-पदार्थान्वितस्वार्थबोधकत्वविरहान्नातिव्याप्तिः। हेतौ निगमने चातिव्याप्तिवारणाय विशेष्यदलम्।

द्वितीयलक्षणे अन्त्यपदवत्त्वं च स्वघटकपदोत्तरपदाघटकं यत् स्वं तदन्यत्वम्। तदनुपादाने धूमादिति हेतौ विभक्त्यन्तस्य अन्त्यपदस्याप्रसिद्ध्या स्वपदेन तादृशहेतुवाक्यस्य ग्रहीतुम् अशक्यतया अनेकपदघटितहेतुवाक्यमुपनयादिवाक्यं वा स्वपदेन ग्राह्यम्। तदीयानन्त्यपदार्थविशेष्यकबोधाजनकं यत् तदन्यत्वं धूमादिति एकपदात्मके हेतावस्तीति तत्रातिव्याप्तिः। तदुपादाने स्वपदेन धूमादित्यस्योपादाने स्वघटकं पदं तदेव। तदुत्तरं पदमुदाहरणघटकं पदं, तद्घटकमेव धूमादिति वाक्यं भवति। तदन्यत्वं तत्र नास्तीति नातिव्याप्तिः। स्वीयानन्त्यपदार्थेत्यादिविशेषणानुपादाने स्वभिन्नावयवार्थान्वितस्वार्थबोधकत्वे सति अन्त्यपदवत्त्वे सति

–वयवत्वमुपनयस्य लक्षणम्। उपनयवाक्यात् साध्यव्याप्यहेतुमान् पक्ष इति परामर्शात्मकबोधस्य जननात् समन्वयः।

ततः उदाहरणान्त एव न्यायप्रयोगः इदि मतमनूद्य खण्डितम्। अनुमितिचरमकारणस्य लिङ्गपरामर्शस्य उदाहरणपर्यन्तावयवेभ्यः अलाभात् तल्लाभाय उपनयः आवश्यकः। व्याप्तेः उदाहरणात् लाभेऽपि पक्षधर्मतायाः अलाभात्। न च हेतुवाक्यात् तल्लाभ इति वाच्यम्। तस्य को हेतुः इत्याकाङ्क्षायां प्रवृत्तस्य हेतुस्वरूपमात्रोपस्थापकतया पक्षधर्मतातात्पर्यकत्वाभावात्।

## निगमनलक्षणम्

उपनयानन्तरं निगमनम्। अनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञान–कारणव्याप्तिपक्षधर्मताधीप्रयुक्तसाध्यधीजनकवाक्यत्वं निगमनलक्षणम्। कारणान्तं न्यायावयवार्थकम्। प्रयुक्तान्तं निगमनघटकतस्मादिति भागार्थः। यद्यपि व्याप्तिपक्षधर्मतयोश्चतुर्भिरवयवैरेव लाभात् निगमनं किमर्थमिति शङ्का जायते। तथापि अभाधितत्वासत्प्रतिपक्षितत्वयोः अवयवान्तरैरलाभात् तद्बोधकतया निगमनस्य सार्थक्यम्। ततः संशयप्रयोजनादीनामवयवलक्षणा–भावादेव नावयवत्वम् इति दशावयवपक्षः दूषितः। परं तु तेषां न्यायाङ्गतया उपयोगोऽस्तीत्युक्तम्।

तदनन्तरं पञ्चावयववाक्यप्रयोगानन्तरं "नायमत्र आभासः तल्लक्षणरहितत्वात्" इति कण्टकोद्धारवाक्यस्य प्रयुज्यमानतया तस्याप्यवयवत्वमावश्यकम्, कथं पञ्चैव अवयवा इत्याशङ्कां मनसि निधाय समाहितम्–

**"कण्टकोद्धारस्य न सार्वत्रिकत्वम्। समयविशेषोपयोगित्वात्"** इति।

एतत्तत्त्वं विस्तरेणास्मभिर्व्याख्यातम्, तत एवावगन्तव्यम्।

एवंरीत्या मणिकारप्रदर्शितानि प्रतिज्ञाद्यवयवलक्षणानि परिष्कृतानि चेत् अतिगुरूणि भवन्तीत्यालोच्य लघुभूतानि प्रतिज्ञादिलक्षणानि

दीधितिकारैः प्रदर्शितानि। तथा हि-

(1) इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यत् अन्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति न्यायावयवत्वम् इत्येकं प्रतिज्ञालक्षणम्। प्रतिज्ञायां हेत्वर्थान्वितस्वार्थबोधजनकत्वमस्ति। तथा स्वीयं = स्वघटकं यत् अन्त्यभिन्नं पदं पर्वतपदं तदर्थविशेष्यकान्वयबोधजनकत्वं न्यायावयवत्वं च तत्रास्तीति लक्षणसमन्वयः।

(2) इतरान्वितस्वार्थबोधजनकत्वे सति अन्त्यपदवत्त्वे सति स्वीयानन्त्यपदार्थविशेष्यकबोधजनकं यत् तदन्यत्वे सति वा न्यायावयवत्वम् इति द्वितीयं प्रतिज्ञालक्षणम्। अत्र द्वितीयतृतीयसत्यन्ते प्रथमलक्षणस्थद्वितीयसत्यन्तस्थाने वैकल्पिकतया निवेशिते।

प्रथमलक्षणे सत्यन्तानुपादाने उदाहरणेऽतिव्याप्तिः। "यो यो धूमवान् स वह्निमान्" इत्युदाहरणे अन्त्यभिन्नयत्पदार्थविशेष्यकबोधजनकत्वरूपस्य विशेष्यदलस्य सद्भावात्। सत्यन्तोपादाने तूदाहरणस्यावयवान्तरघटक-पदार्थान्वितस्वार्थबोधकत्वविरहान्नातिव्याप्तिः। हेतौ निगमने चातिव्याप्तिवारणाय विशेष्यदलम्।

द्वितीयलक्षणे अन्त्यपदवत्त्वं च स्वघटकपदोत्तरपदाघटकं यत् स्वं तदन्यत्वम्। तदनुपादाने धूमादिति हेतौ विभक्त्यन्तस्य अन्त्यपदस्याप्रसिद्ध्या स्वपदेन तादृशहेतुवाक्यस्य ग्रहीतुम् अशक्यतया अनेकपदघटितहेतुवाक्यमुपनयादिवाक्यं वा स्वपदेन ग्राह्यम्। तदीयानन्त्यपदार्थविशेष्यकबोधाजनकं यत् तदन्यत्वं धूमादिति एकपदात्मके हेतावस्तीति तत्रातिव्याप्तिः। तदुपादाने स्वपदेन धूमादित्यस्योपादाने स्वघटकं पदं तदेव। तदुत्तरं पदमुदाहरणघटकं पदं, तद्घटकमेव धूमादिति वाक्यं भवति। तदन्यत्वं तत्र नास्तीति नातिव्याप्तिः। स्वीयानन्त्यपदार्थेत्यादिविशेषणानुपादाने स्वभिन्नावयवार्थान्वितस्वार्थबोधकत्वे सति अन्त्यपदवत्त्वे सति

न्यायावयवत्वं प्रतिज्ञात्वमित्युक्तौ "इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्" इत्यादौ विभक्त्यन्तपदद्वयवति हेतुवाक्ये अन्त्यपदवत्त्वसत्त्वात् प्रतिज्ञास्थपदार्थान्वितस्वार्थबोधकत्वसत्त्वाच्चातिव्याप्तिः। एवं पदद्वयवति उपनये निगमने चान्त्यपदवत्त्वसत्त्वात् अतिव्याप्तिः। तदुपादाने तु पदद्वयघटितहेतौ स्वघटकं यत् अन्त्यभिन्नं पदं तदर्थविशेष्यकबोध–जनकत्वासत्त्वेन, निगमने स्वघटकं यत् अन्त्यपदभिन्नं पदं तदर्थविशेष्यकबोधजनकत्वासत्त्वेन तादृशबोधाजनकत्वनियमात् तादृशबोधाजनकं यद् तदन्यत्वविरहान्नातिव्याप्तिरिति।

प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्याया–वयवत्वं हेतुवाक्यस्य लक्षणम्। प्रकृतपक्षः पर्वतः तदन्वितः स्वार्थः वह्निमत्पदार्थः, तद्बोधकं पदं वह्निमत्पदम्। तदुपस्थापितार्थे वह्नौ अन्वितः स्वार्थः धूमज्ञानज्ञाप्यत्वरूपः हेतुवाक्यार्थः। तद्बोधकत्वे सति न्यायावयवत्वं धूमादिति हेतुवाक्येऽस्तीति लक्षणसमन्वयः। अत्र उपस्थापितान्तानिवेशे किंचिदर्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वमित्युक्तौ 'तथा चायम्' इत्युपनयार्थे वह्निव्याप्यधूमवत्पर्वते अन्वितः यः स्वार्थः 'तस्माद्वह्निमान्' इति निगमनार्थस्तद्बोधकत्वं निगमनेऽस्तीति अतिव्याप्तिः। तद्वारणाय उपस्थापितान्तम्। निगमनार्थस्य उपनयार्थपक्षान्वितत्वेऽपि पक्षान्वितार्थान्वितत्वं नास्तीति नातिव्याप्तिः।

इतरान्वितस्वार्थाबोधकन्यायावयवत्वमुदाहरणलक्षणम्। प्रतिज्ञाहेत्वोः उपनयनिगमनयोश्च परस्परार्थान्वितार्थबोधकत्वमस्ति, उदाहरणस्य तु अवयवान्तरार्थान्वितस्वार्थबोधकत्वं नास्तीति एवं लक्षणमुक्तम्।

इतरोपस्थापितार्थविशेषणकस्वार्थबोधजनकन्यायावयवत्वम्, स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वं चोपनयस्य लक्षणम्। निगमनार्थस्य उपनयघटकेदम्पदार्थविशेषणतयान्वयात् लक्षणसमन्वयः। इतरोपस्थापितेत्यस्य स्वाघटकपदोपस्थापितेत्यर्थः।

अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनस्य

लक्षणम्। अवयवजन्यप्रतीतिविशेष्यविशेष्यकस्वार्थप्रकारक-बोधजनकावयवत्वमिति यावत्। अवयवः अत्र उपनयः तज्जन्यप्रतीतिविशेष्यः पक्षः पर्वतादिः तद्विशेष्यकः यः स्वार्थप्रकारकः निगमनार्थप्रकारको बोधः तज्जनकत्वं निगमनेऽस्तीति लक्षणसमन्वयः।

एवंरीत्या न्याय-तदवयवनिरूपणपरेऽस्मिन् ग्रन्थे शाब्दबोधसंबन्धिनो बहवो विषयाः अनुषङ्गतो निरूपिताः। उदाहरणार्थं कतिपयविषयाः निर्दिश्यन्ते-

1. उद्देश्यतावच्छेदकविधेययोरैक्येऽपि विधेयांशेऽधिकावगाही शाब्दबोधः दण्डवान् रक्तदण्डवानित्यादाविव स्वीक्रियते।

2. उद्देश्यतावच्छेदकपदस्य उद्देश्यवाचकपदपूर्ववर्तिता अपेक्षिता। अन्यथा "घटो नीलः सुन्दरः" इति वाक्यात् नीलविशिष्टघटोद्देश्यकसुन्दरविधेयकबोधापत्तेः।

3. जलं न द्रव्यं गन्धवदित्यादौ जलभिन्नद्रव्यं गन्धवत् इत्यन्वयबोधस्यानुभवविरुद्धतया नञर्थोद्देश्यतावच्छेदकबोधस्याव्युत्पन्नता।

4. अयं न पचति पुरुषः इत्यत्र इदंपदार्थे पाककर्तृपुरुषभेदबोधस्यानुभवविरुद्धतया अभावप्रतियोगितावच्छेदकत्वेन आख्यातार्थ-भानमव्युत्पन्नम्।

5. पचति चैत्र इवायम् इत्यादितः पाककर्तृचैत्रादिसादृश्य-बोधस्याननुभवेन इतरविशेषणविशेषणतया आख्यातार्थभानमव्युत्पन्नम्।

6. संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेषणत्वेनैवान्वयः। प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च साक्षात् भेदेनान्वयस्याव्युत्पत्तेः।

7. चैत्रस्येदं न मैत्रस्य, मैत्रस्येदं न चैत्रस्य, द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादिसंबन्धाभावबोधस्य विभक्त्यर्थविशेष्यतां विनानुपपत्तेः।

8. चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुपयोगिनि सप्तमीं

सुबर्थस्याप्यभावान्वयात्।

9. पञ्चम्याः ज्ञानज्ञाप्यत्वे लक्षणा। आकाङ्क्षावैचित्र्याच्च पदार्थैकदेशेऽपि ज्ञाने प्रातिपदिकार्थो विषयित्वेनान्वेति। कर्तृकृतीव कृतौ धात्वर्थः।

10. वीप्सा च यत्पदे, न तु तत्पदेऽपि।

अस्मिन् ग्रन्थे कुशाग्रबुद्धिग्राह्याः गदाधरभट्टाचार्यकृताः उचितानुपूर्वकित्वम्, न्यायान्तर्गतत्वम्, प्रतिज्ञाद्यन्यतमत्वम्, प्रतिज्ञाद्यघटकत्वम्, उभयघटकभगद्वयाघटितत्वम्, अन्यूनविषयकत्वम्, अनतिरिक्तविषयकत्वम्, साध्यतावच्छेदकावच्छिन्नगमकतौपयिकत्वम्, इत्यादीनां परिष्काराः सावधानमध्येतव्याः। यथाबुद्धिशक्ति सुगमतया मया विवृताश्च ते।

अनल्पकल्पनाजटिलस्य व्युत्पादकस्य गदाधरीयव्याख्यानस्य गुरूपदेशानुसारिणी **भावदीपिका** नाम्नी व्याख्या दशवर्षेभ्यः प्रागेव लिखितुमारब्धा पञ्चवर्षेभ्यः प्राक् समाप्तिं गता। लेखनकार्यं सर्वमपि प्रायः अस्मत्तः न्यायशास्त्रम् अधीयानैः मद्रास्विश्वविद्यालये संस्कृतविभागाध्यक्षपदं वहद्भिः **डा. वीलिनाथन्** महोदयैः **डा. रेवती** महोदया – **डा. कृष्णन्** महोदययोः स्वशिष्ययोः साहाय्येन निर्व्यूढमिति तेभ्यः कृतज्ञतानिवेदनपूर्वकं मङ्गलाशासनं करोमि।

अस्य समुचितम् आमुखं लेखनीयम् इति न्यायवेदान्तादि-शास्त्रार्णवपारदृश्वनां बाल्यात् प्रभृति सुस्निग्धानां पूना–संस्कृतकोशनिर्माणविभागे बहुवर्षाणि कार्यं कृतवतां राष्ट्रपतिसंमानितानां **टि. एस्. श्रीनिवासशास्त्रिणां** सविधे प्रार्थनामकरवम्। तेऽपि कृपया नूतनविषयगर्भम् आमुखं विलिख्यानुगृहीतवन्त इति तेभ्यः सनमोवाकं कृतज्ञतां प्रकटयामि।

शृङ्गेरी जगद्गुरुशङ्कराचार्य दक्षिणाम्नायशारदापीठमलंकुर्वाणानां वेद–तदङ्ग न्यायमीमांसावेदान्दादिशास्त्रनदीष्णानां विशिष्य

न्यायशास्त्रेऽप्रतिमवैदुष्यवतां मयि वात्सल्यपूर्वानुकम्पावतां **श्रीभारतीतीर्थश्रीचरणानामाशासनपत्रेण** व्याख्यानमिदम् अलंकरणीयम् इति मनोरथः उदभूत्। तं मनोरथं निवेद्य तेषां चरणारविन्दयोः प्रार्थनामकरवम्। तेऽपि ग्रन्थमिमं पूर्वलिखितप्रकाशितपञ्चलक्षणीपक्षताव्यख्यानग्रन्थौ चावलोक्य संतुष्टान्तरङ्गाः पत्रमन्वग्रहीषुः। तेषां संनिधौ भूयो भूयः प्रणामपूर्वकं कृतज्ञतां प्रकाशयन् धन्यो भवामि।

एवम् अस्मत्पितृचरणसकाशादधिगतन्यायशास्त्राः अप्रतिमप्रतिभा–संपन्नाः **श्रीरङ्गं बृहदाश्रम आण्डवन् श्रीरङ्गरामानुजयतीश्वराः** मत्प्रार्थनया अनुग्रहपत्रं प्रादुरिति तेषां चरणनलिनयोः प्रणतिपूर्वकं कृतज्ञो भवामि।

तया अस्य ग्रन्थस्य समुचितायाः प्रस्तावनाया लेखनेन ग्रन्थमेनं महीकृतवतां सांप्रतं कुलपतिपदमलंकुर्वतां न्यायमीमांसा वेदान्तादिशास्त्रनदीष्णानां प्राच्यप्रतीच्यविद्यावतां **श्रीरघुनाथाचार्याणां** सविधे कृतज्ञतामावेदयामि, तेषां समये विद्यापीठस्य सर्वतोमुखीमभिवृद्धिमाशासे।

कम्प्यूटर्मुद्रणालये नूतनरीत्यास्य मुद्रणे क्लेशाः बहवः आपतिताः। यतो हि मूलं तद्व्याख्यानं तद्व्याख्यानम् इत्यादीनां तत्तत्पृष्ठे संगततया मुद्रणमावश्यकं भवति पठितृसौकर्याय। इदं कार्यं मासचतुष्टयात् प्रतिदिनं महान्तं शारीरादिश्रमं सोढ्वा यन्त्रालये स्थित्वा M.A., M.Phil, इत्युपाधिधारिणा अस्मत्तः अधीतवेदान्तेन **चि. चक्रवर्ति राघवेण** संपादितम्। अतस्तस्मै निरवधीराशिषः प्रयुनज्मि।

मुद्रणालयाधिकृतोऽपि क्षमामवलम्बमानः अस्मन्मनोरथानुसारेण मुद्रणं संपादितवान्। अतस्तस्य मङ्गलानि आशासे।

4–6–96

तिरुपतिः

**एन्. एस्. रामानुजताताचार्यः**

कुलपतिचरः

तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठस्य

## विषयानुक्रमणिका

| विषयः | पृष्ठसंख्या |
|---|---|

contradicted and also not counter-balancd could arisee only from the nigamana-vakya and not from the other four members of the syllogism. Hence the nigamana-vakya is absolutely essential.

The above presentation is only an outline treatment of the main points of Avayava-Gadadhari. A detailed clear and jedicious account of the members of a syllogism which constitute the subject-matter of the present text, has been seet forth with ease and lucidity by **Prof Tatacarya** in his prsent excellent commentary. His presentation of cognent insights into thee influence which this text exerts upon thee principles in volved in the rise of verbal cognition is significant. This work is unexcelled as a teachrs' manual. **Prof Tatacarya's** commentaries on other works of Gaddhara were justly accleimed for their erudition and their objectivity. And the present commentary to the series has the same merit.

**N.Veezhinathan.**

श्रीरस्तु।

**श्रीमते हयग्रीवाय नमः।**

तत्त्वचिन्तामणाववयवग्रन्थः

**तच्चानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयननिगमनानि निरूप्यन्ते।**

---

## गदाधरीयम्

अनुमानं निरूप्य न्यायतदवयवनिरूपणं प्रतिजानीते मूले ***तच्चेति।*** ***तत्***-निरुक्तमनुमानम्। ***परार्थम्-*** विचारदशायां मध्यस्थस्य विवादविषयसाध्यनिश्चय-रूपप्रयोजनसाधनम्। ***न्यायसाध्यमिति।*** न्यायप्रयोज्यमित्यर्थः। वादिप्रयुक्तन्यायजन्यशाब्दबोधेन मध्यस्थस्य अनुमितिचरमकारणलिंगपरामर्शरूपानुमानजननादिति भावः। ज्ञायमानलिङ्गस्यानुमानत्वे तु तद्विशेषणस्य परामर्शस्य न्यायाधीनत्वेन तद्विशिष्टस्य तथात्वमित्यवधेयम्। अथवा अनुमानम् अनुमितिः। परार्थं मध्यस्थस्य साध्यसंशयनिवृत्तिरूपप्रयोजनसाधनम्, ***परस्य***-प्रतिवादिनः, अर्थो निवृत्तिर्यस्मात्तादृशानुमितिर्वा। एतेन निरूपणप्रयोजनमुपदर्शितम्, न्यायप्रयोगद्वारा मध्यस्थानुमितेरेव न्यायज्ञानप्रयोजनत्वात्। कारणत्वं, स्मरणप्रयोजकसम्बन्धकथनेन प्रसङ्गो वा सङ्गतिरपि दर्शिता। ***समस्तरूपेति।*** पक्षसत्त्वादिपञ्चरूपेत्यर्थः। उपनयेन

---

भावदीपिका

श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्री गुरुभ्यो नमः

श्रीनिवासं वेङ्कटेशमाश्रितार्थितवर्षुकम्।
दयानिधिं दैवतानां दैवतं प्रणमाम्यहम्॥

श्रीशैलवंशनवमौक्तिकतुल्यभासं
वेदान्तलक्ष्मणमुनीन्द्रपदाब्जभृङ्गम्।
सत्तर्कतन्त्रनिगमान्तनितान्ततान्तं
**श्रीमन्नृसिंह**गुरुवर्यमहं नमामि॥

नृत्यत्कलं सकलदिक्षु विभातकीर्ति
शास्त्रेषु निष्ठितधियं बहुशिष्ययुक्तम्।

आचारपूतमनवद्यगुणाभिरामं
**श्रीदेवनाथ**गुरुमन्वहमानतोऽस्मि॥
न्यायादिशास्त्रविदमात्मगुणोज्ज्वलं तं
संभावनादिपरिपन्थिनमात्मवन्तम्॥
मत्तातपादमनघं क्षमया समेतं
**श्रीकृष्णतात**गुरुवर्यमहं प्रपद्ये॥
गुरुत्रयकृपावाप्तशास्त्रविज्ञानभूषितः।
**रामानुज** इति ख्यातः कृष्णतातसुतः सुधीः॥
चिन्तामणिस्थावयवदीधितेर्या प्रकाशिका।
गदाधरकृता तस्या व्याख्यां कर्तुं समारभे॥

तच्चानुमानं परार्थमिति मणिग्रन्थमवतारयति – ***अनुमानं निरूप्येति।*** अनुमानविषयकलक्षणप्रामाण्यादिप्रकारकज्ञानजनकशब्दप्रयोगोत्तरकालीन न्यायतदवयवविषयकज्ञानजनकशब्दप्रयोगविशेष्यककरिष्यमाणत्वप्रकारक ज्ञानजनकतच्चेत्याद्यानुपूर्वीकशब्दप्रयोगानुकूलकृतिमान् **मणिकार** इति शाब्दबोधः। एतावता प्रबन्धेनानुमानं निरूपितम्। तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम्। तत्र परार्थानुमानं न्यायसाध्यमिति पञ्चावयवको न्याय इदानीं निरूप्यत इत्यर्थः। ***विचारदशायामिति।*** विपरीतोद्भावकपरजिगीषया न्यायप्रयोगो विचारः। परस्यार्थः प्रयोजनं यस्मात्तत् परार्थम्। परशब्दो मध्यस्थपरः। निश्चयः अर्थशब्देन विवक्षितः। तथा च मध्यस्थस्य साध्यनिश्चयरूपप्रयोजनसाधनमनुमानं परार्थमित्युक्तं भवति। परार्थानुमानस्य न्यायप्रयोज्यत्वमुपपादयति – ***वादिप्रयुक्तेति।*** साध्यसंशयवतः मध्यस्थस्य साध्यनिश्चयोत्पादनार्थं वादिभ्यां न्यायः प्रयुज्यते। वादिप्रयुक्तन्यायवाक्येन पञ्चावयवार्थविषयकः शाब्दबोधो जायते। तेन परामर्शः जायते। तेन चानुमितिरुत्पद्यते। एवं च साध्यनिश्चयरूपप्रयोजनसाधनत्वं परामर्शस्य वक्तव्यम्। स परामर्श एव परार्थानुमानमित्युच्यते। तच्च न्यायजन्यशाब्दज्ञानजन्यत्वात् न्यायप्रयोज्यं भवति। एवञ्च परार्थानुमानस्य न्यायप्रयोज्यत्वरूपं न्यायसाध्यत्वमुपपन्नमिति भावः।

ननु लिङ्गपरामर्शस्य अनुमितिजनकत्वमते उक्तरीत्या परामर्शरूपस्य अनुमानस्य न्यायप्रयोज्यत्वेऽपि परामृश्यमानं लिङ्गमनुमितिकरणमिति मते

पक्षसत्त्वस्योदाहरणेन व्याप्तिघटकसपक्षसत्त्वविपक्षासत्त्वयोर्निगमनेन चाबाधितत्वा-सत्प्रतिपक्षितत्वयोः प्रतिपादनाल्लक्षणसमन्वयः। अत्रैवेति। समस्तरूपोपपन्नलिङ्गमित्यत्रैवेत्यर्थः।

---

विषयतासंबन्धेन परामर्शविशिष्टस्य लिङ्गस्यैव मध्यस्थानुमितिजनकत्वात् परार्थानुमानशब्दवाच्यत्वम्। तस्य च न्यायप्रयोज्यत्वाभावात् न्यायसाध्यत्वोक्तिः कथमित्यत्राह – ***ज्ञायमानलिङ्गस्येति।*** ***अनुमानत्वेऽपीति।*** अनुमिति-करणत्वेऽपीत्यर्थः। ***तद्विशेषणस्येति।*** लिङ्गविशेषणस्येत्यर्थः। तथा च परमर्शविशिष्टस्य लिङ्गस्य अनुमितिजनकत्वेऽपि विशेषणीभूतस्य परमर्शस्य न्यायप्रयोज्यत्वेन विशिष्टस्य न्यायप्रयोज्यत्वम् इत्याशयेन मणिकारोक्तिरिति भावः।

ननु 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः' इति न्यायेन विशेष्ये लिङ्गे न्यायप्रयोज्यत्वाभावात् विशेषणस्य परामर्शस्य न्यायप्रयोज्यत्वमादाय परामर्शविशिष्टस्य लिङ्गस्य न्यायप्रयोज्यत्वोक्तेः समर्थनेऽपि वस्तुतः न्यायप्रयोज्यत्वं नोपपादितं भवति, विशेषणनिष्ठस्य प्रयोज्यत्वस्य विशिष्टे आरोपणात् इत्यनुशयेनाह –***अथ वेति।*** मूले अनुमानशब्दः भावल्युडन्तः अनुमितिपरः। **परस्य**–मध्यस्थस्य अर्थः – साध्यसंशयनिवृत्तिरूपं प्रयोजनं यस्मादनुमानाद्भवति तत् परार्थानुमानम्। न्यायवाक्यश्रवणजन्यशाब्धबोधेन परामर्शः जायते। ततः अनुमितिर्जायते। ततः साध्यसंशयो निवर्तते। तथा च मध्यस्थनिष्ठा अनुमितिः साध्यसंशयनिवृत्तिरूपप्रयोजनसाधनत्वात् परार्थानुमानशब्देन उच्यते। सा च अनुमितिः परंपरया न्यायजन्येति परार्थानुमानं न्यायसाध्यमित्युक्तेः न काचिदनुपपत्तिरिति भावः।

एतावता पूर्वनिरूपितस्य अनुमानस्य इदानीं निरूप्यमाणस्य न्यायस्य च प्रयोज्यप्रयोजकभावोपपादनेन अनुमाननिरूपणानन्तरं न्यायनिरूपणे हेतुताख्या सङ्गतिरुक्ता भवति। एवं सङ्गतस्य परार्थानुमानस्य न्यायस्य च विजयप्रयोजकत्वमपि उपपादयति– ***परस्य प्रतिवादिन*** इत्यादिना। **परस्य**–प्रतिवादिनः **अर्थः** – निवृत्तिः यस्मात् तत् परार्थम्। निवृत्तिशब्देन पराजय उच्यते। तथा च परम्परया वादिप्रयुक्तन्यायजन्यया अनुमित्या प्रतिवादिनः स्वपक्षनिरासेन पराजयो भवति इति परार्थानुमानशब्देन विवक्षितम्। एवञ्च तच्चानुमानं परार्थं न्यायसाध्यमिति मणिग्रन्थः न्यायनिरूपणस्य प्रयोजनप्रदर्शकः सङ्गतिप्रदर्शकश्च। मध्यस्थस्य

**तत्र न समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः अत्रैव वाक्येऽतिव्याप्तेः,**

---

साध्यनिश्चयः साध्यसंशयनिवृत्तिः प्रतिवादिनः पराजयश्च न्यायप्रयोजनानि। यद्यपि गादाधर्यां 'न्यायप्रयोगद्वारा मध्यस्थानुमितेरेव न्यायज्ञानप्रयोजनत्वात्' इत्युक्तम्, तेन च साध्यनिश्चयस्यैव प्रयोजनत्वं लभ्यते, तथापि 'एव' कारेण परार्थानुमानशब्दवाच्यायाः मध्यस्थानुमितेः अन्या या स्वार्थानुमितिः तस्याः प्रयोजनत्वं व्यवच्छिद्यते; न तु साध्यसंशयनिवृत्तिप्रतिवादिपराजययोः प्रयोजनत्वम्। अन्यथा 'अथवा' इत्यादिव्याख्यानासङ्गतेरिति ध्येयम्।

***कारणत्वमिति।*** अस्य सङ्गतिरित्यत्र अन्वयः। ***स्मरणप्रयोजक-संबन्धकथनेनेति।*** अनुमानस्य न्यायस्य च प्रयोज्यप्रयोजकभावरूपसंबन्धः मणिग्रन्थेन कथितः। तेन अनुमाननिरूपणजन्यानुमानज्ञानेन 'एकसंबन्धि-ज्ञानमपरसंबन्धिस्मारकम्' इति रीत्या न्यायस्य स्मरणं भवति। स्मृतस्य न्यायस्य उपेक्षानर्हत्वरूपया प्रसङ्गसङ्गत्या अनुमाननिरूपणानन्तरं न्यायनिरूपणमिति प्रसङ्गरूपा सङ्गतिरपि मणिग्रन्थेन प्रदर्शिता भवति इत्याशयः।

न्यायस्य प्रतिज्ञाद्यवयवपञ्चकवाक्यरूपतया अवयवेषु अनिरूपितेषु तत्समुदायरूपः न्यायः न निरूपयितुं शक्यत इत्याशयेन न्यायस्तदवयवाश्च निरूप्यन्त इति मूले उक्तम्। निरूपणस्य च लक्षणप्रामाण्यविभागाद्यन्यतम-प्रकारकज्ञानजनकशब्दात्मकतया आदौ न्यायलक्षणं वक्तुमारभते मणौ–*तत्र न* ***समस्तेत्यादिना।*** समस्तैः सकलैः पञ्चभिः रूपैः पक्षसत्त्व–सपक्षसत्त्व–विपक्षासत्त्व–अबाधितत्व–असत्प्रतिपक्षत्वरूपधर्मैः उपपन्नं युक्तं यत् लिङ्गं तस्य प्रतिपादकं बोधकं वाक्यमित्यर्थः। तदाह गादाधर्याम्– ***पक्षसत्त्वादिपञ्चरूपेत्यर्थ*** इति। कथं न्यायवाक्येन समस्तरूपोपपन्नलिङ्गप्रतिपादनमितिशङ्कायामाह – ***उपनयेनेत्यादिना।*** पक्षसत्त्वं नाम हेतोः पक्षसंबन्धः। 'तथा चायम्' इति उपनयवाक्येन ' धूमवान् पर्वतः' इत्याकारकं धूमे पक्षसंबन्धावगाहिज्ञानं जायते। अतः उपनयस्य पक्षसत्त्वविशिष्टलिङ्गप्रतिपादकत्वम्। उदाहरणवाक्येन व्याप्तिविशिष्टस्य लिङ्गस्य प्रतिपादनात् व्याप्तेश्च प्राचीनमते साध्यवदन्यावृत्तित्वे सति साध्यसामानाधिकरण्यरूपतया विपक्षावृत्तित्वस्य, सपक्षसत्त्वस्य च

**किन्त्वनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यं न्यायः।**

---

प्रतिपादनात् तस्य व्याप्तिघटकविपक्षासत्त्वसपक्षसत्त्वविशिष्टलिङ्गप्रतिपादकत्वम्। 'तस्मात् तथा' इति निगमनवाक्यस्थतच्छब्दस्य अबाधितत्वअसत्प्रतिपक्षितत्व-विशिष्टलिङ्गमर्थः। अतः निगमनस्य तादृशलिङ्गप्रतिपादकत्वम् इति भावः। इदं न्यायलक्षणं दूषयति मूले–***अत्रैव वाक्येऽतिव्याप्तेरिति।*** भवदुक्तन्यायलक्षणप्रतिपादकं यद्वाक्यं 'समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यम्' इति तद्घटकीभूते 'समस्तरूपोपपन्नलिङ्गे' ति वाक्ये अतिव्याप्तेरित्यर्थः। 'समस्तरूपोपपन्नलिङ्ग' इत्यनेन हि समस्तरूपविशिष्टं लिङ्गमिति बोधो जायते। तस्मात् समस्तरूपोपपन्नलिङ्गप्रतिपादकत्वं समस्तरूपोपपन्नलिङ्गशब्दरूपे वाक्येऽस्तीति न्यायानात्मके तत्र न्यायलक्षणस्यातिव्याप्तिरिति भावः। ***इदमुपलक्षणमिति।*** उक्तवाक्ये अतिव्याप्तिरूपदोषकथनं वक्ष्यमाणायाः उदाहरणादित्रिके न्यायलक्षणातिव्याप्तेः प्रदर्शकमित्यर्थः। प्रतिज्ञादिपञ्चावयवसमूहस्यैव न्यायशब्दवाच्यतया उदाहरणादि त्र्यवयवकसमुदायस्य न न्यायलक्षणलक्ष्यत्वम्। परन्तु अलक्ष्ये तत्र समस्तरूपोपपन्नलिङ्गप्रतिपादकत्वरूपं लक्षणमस्तीति अतिव्याप्तिः। उपनयेन पक्षसत्त्वस्य उदाहरणेन सपक्षसत्त्व–विपक्षासत्त्वयोः निगमनेन अबाधितत्व–असत्प्रतिपक्षितत्त्वयोः प्रतिपादनात् रूपपञ्चकविशिष्टलिङ्ग-प्रतिपादकत्वस्य उदाहरणादित्रिके विश्रान्तेः तत्रातिव्याप्तिरिति भावः। यद्यपि प्रतिज्ञाहेत्वोः पक्षसत्त्वाद्यबोधकतया प्रतिज्ञाहेतुघटितपञ्चावयवात्मकन्याये लक्षणागमनेन असम्भवोऽपि वक्तुं शक्यः, तथापि पञ्चरूपोपपन्नलिङ्गविषयकज्ञान-जनकयत्किञ्चिज्ज्ञानविषयत्वं न्यायलक्षणमत्र विवक्षितम्। पञ्चावयवक-वाक्यविषयकज्ञानस्यापि 'अधिकं तु प्रविष्टं चेत् न तद्धान्यै' इति न्यायेन पञ्चरूपोपपन्नलिङ्गज्ञानजनकत्वमस्तीति तद्विषये पञ्चावयवसमूहरूपे न्याये लक्षणसमन्वय इत्याशयेन असम्भवो नोक्त इति ध्येयम्।

मणिकारः स्वसम्मतं न्यायलक्षणमाह– ***किन्त्वनुमितिचरमकारणेति।*** अनुमितिं प्रति चरमकारणभूतः यः लिङ्गपरामर्शः तस्य प्रयोजकं यत् शाब्दबोधात्मकं ज्ञानं तज्जनकं वाक्यं न्याय इत्यर्थः। कारणे चरमत्वं च

अतिव्याप्तेरिति। इदमुपलक्षणम्। उदाहरणादित्रिकस्यापि न्यायत्वापत्तिः द्रष्टव्या। अनुमितीति। अनुमितिचरमकरणं यो लिङ्गपरमर्शो व्याप्तिप्रकारेण पक्षे यल्लिंगज्ञानं तत्प्रयोजकं यच्छाब्दज्ञानं तज्जनकवाक्यमित्यर्थः।

अत्र च प्रयोजकान्तं प्रतिज्ञादिसकलावयवजन्यमहावाक्यार्थबोधस्य

---

अनुमित्युत्पादने स्वोत्तरभाविज्ञानानपेक्षत्वम्। अथवा अनुमित्यव्यवहितपूर्ववर्तित्वम्। लिङ्गपरामर्शो नाम साध्यनिष्ठप्रकारतानिरूपित–व्याप्यत्वनिष्ठप्रकारतानिरूपित–लिङ्गनिष्ठप्रकारताशाली 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकः मानसप्रत्यक्षविशेषः। तदाह गादाधर्याम् – ***अनुमितिचरमकारणमित्यादिना।***

न्यायश्रवणानन्तरं पञ्चावयवार्थविषयकः समूहालम्बनात्मकः विशिष्टैकार्थविषयको वा शाब्दबोधो जायते। तादृशशाब्दबोधरूपसहकारियुक्तेन मनसा परामर्शः जायते। ततः अनुमितिः जायते। एवञ्च अनुमितिकारणीभूतपरामर्शजनकमनस्सहकारिशाब्दज्ञानजनकत्वं न्यायवाक्येऽस्तीति लक्षणसमन्वयः।

अत्र लक्षणे प्रयोजकान्तं सकलावयवार्थविषयकस्य महावाक्यार्थबोधस्य समूहालम्बनबोधस्य वा परिचायकमात्रम्, न तु प्रयोजकान्तस्य लक्षणे निवेशः। 'धूमवान् पर्वतः' इत्याकारकस्य उपनयजन्यशाब्दबोधस्यापि ज्ञानलक्षणाप्रत्यासत्तिविधया 'वह्निव्याप्यधूमवान्पर्वत' इति परामर्शप्रयोजकतया शाब्दबोधजनके उपनयवाक्येऽतिव्याप्तेः इत्याशयेनाह – ***अत्र च प्रयोजकान्तमिति। महावाक्यार्थबोधस्येति।*** निगमनवाक्य उपनयवाक्यस्थस्य 'अयं' पदस्य अनुषङ्ग इति पक्षे धूमज्ञानज्ञाप्यवह्निमत्पर्वताभिन्न–धूमव्यापकवह्निमदभिन्न–धूमवदभिन्न–वह्निव्याप्यधूमवदभिन्नः पर्वतः अबाधितासत्प्रतिपक्षित–धूमज्ञानज्ञाप्यवह्निमत्पर्वताभिन्नः इत्याकारकः महावाक्यार्थबोधः। अननुषङ्गपक्षे धूमव्यापकवह्निमदभिन्न–धूमवदभिन्न–धूमज्ञानज्ञाप्यवह्निमान् पर्वतः अबाधित – असत्प्रतिपक्षित "धूमज्ञानज्ञाप्यवह्निमदभिन्न–वह्निव्याप्यधूमवदभिन्नपर्वताभिन्न इति बोधः विवक्षितः। एतादृशमहावाक्यार्थबोधे प्रतिज्ञादिपञ्चकस्यैव कारणत्वम्। न तु तदेकदेशस्य उपनयस्येति न तत्रातिव्याप्तिः। ***समूहालम्बनबोधस्येति।*** 'वह्निमदभिन्नः पर्वतः, धूमज्ञाननिष्ठं ज्ञापकत्वम्, धूमव्यापकवह्निमदभिन्नः

तावदर्थगोचरसमूहालम्बनबोधस्य वा परिचायकमात्रं न तु परामर्शप्रयोजकत्वेन शाब्दज्ञानस्य लक्षणघटकता; किन्तु तावदर्थविषयकबोधत्वेनैव, अतो धूमवान्पर्वतइत्यादिवाक्यमात्रजन्याया अपि बुद्धेरुपनायकज्ञानादिविधया मानसपरामर्शप्रयोजकतया तत्रातिव्याप्तिरिति निरस्तम्। तादृशयत्किंचिच्छाब्दबोधं प्रति यादृशयादृशधर्मप्रकारकज्ञानत्वेन

---

धूमवान्, वह्निव्याप्यधूमवदभिन्नः पर्वतः, अबाधित–असत्प्रतिपक्षितधूमज्ञान–ज्ञाप्यवह्निमदभिन्नः पर्वतः' इत्याकारकस्य तत्तदवयवार्थविषयकस्य समूहालम्बनबोधस्येत्यर्थः। महावाक्यार्थबोधे अवयवार्थानां परस्परमन्वितत्वात् परस्परान्वितैकवाक्यार्थविषयकत्वम्। समूहालम्बनबोधे तु अवयवार्थानां परस्परमन्वयः न भासते। तत्तदवयवार्थाः पृथक् पृथक् भासन्त इति विशेषः। ***परिचायकमात्रमिति।*** लक्षणाघटकत्वे सति लक्षणघटकपदार्थज्ञापकत्वं परिचायकत्वम्। ***किन्तु तावदर्थविषयकबोधत्वेनैवेति।*** तथा च प्रतिज्ञादियावदवयवार्थविषयकशाब्दज्ञानत्वावच्छिन्नजन्यतानिरूपितजनक–ताशालिवाक्यत्वं न्यायत्वमिति पर्यवसितम्। प्रयोजकान्तस्य लक्षणे प्रवेशे दोषमाह – ***अतो धूमवान्*** इत्यादिना।

ननु मूलोक्तस्य न्यायलक्षणस्य असंभवः। तादृशशाब्दज्ञानजनकत्वस्य वाक्यरूपे न्याये असत्त्वात्। वाक्यविषयकज्ञानस्यैव शाब्दज्ञानजनकत्वात्। न च तादृशशाब्दज्ञानजनकज्ञानविषयत्वं विवक्षणीयम्। शाब्दज्ञानजनकं यज्ज्ञानं–न्यायरूपवाक्यविषयकं ज्ञानं तद्विषयत्वस्य न्याये सत्त्वात् न असम्भव इति वाच्यम्। तथापि न्यायैकदेशे प्रतिज्ञादावतिव्याप्तेर्दुर्वारत्वात्। न्यायो हि प्रतिज्ञादिवाक्यसमुदायः। तज्ज्ञानस्य शाब्दबोधजनकत्वे समुदायघटकप्रतिज्ञादीनामपि शाब्दज्ञानजनकत्वस्य आवश्यकत्वात्, समुदायस्य प्रत्येकानतिरिक्तत्वात् इत्यतः मूलोक्तलक्षणं परिष्करोति – ***तादृशयत्किञ्चिच्छाब्दबोधं प्रतीत्यादिना।*** प्रतिज्ञाद्यर्थविषयकशाब्दबोधं प्रतीत्यर्थः। 'यादृशयादृशधर्मप्रकारकत्वेन' इत्यत्रतृतीयायाः अवच्छिन्नत्वमर्थः। तस्य कारणतायामन्वयः। यत्किञ्चिच्छाब्दबोधपदेन प्रतिज्ञादिपञ्चावयवार्थविषयकः समूहालम्बनबोधः महावाक्यार्थबोधो वा विवक्षितः। तथा च प्रतिज्ञाद्यर्थविषयकयत्किञ्चिच्छाब्दबोधनिष्ठजन्यतानिरूपित–शब्दज्ञाननिष्ठकारणता यादृशयादृशधर्म प्रकारकत्वावच्छिन्ना तादृशतादृश–

शब्दज्ञानस्य कारणता प्रत्येकं तत्तद्धर्मावच्छिन्नवाक्यसमुदायत्वस्य तादृश यत्किँचिच्छाब्दबोधनिरूपिता शब्दज्ञाननिष्ठा या या कारणता तदवच्छेदक- कोटिप्रविष्टयत्किंचित्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वपर्यवसितस्य विवक्षिततत्वात्

---

धर्मावच्छिन्नवाक्यसमुदायत्वं न्यायलक्षणम्। प्रतिज्ञाद्यर्थविषयकशाब्दबोधं प्रति प्रतिज्ञादिवृत्तिः या आनुपूर्वी पकारोत्तर – अकारोत्तर – रेफोत्तर– वकारोत्तर– अकारोत्तर – तकारोत्तरेत्यादि नत्वादिरूपा तत्प्रकारकज्ञानत्वेन रूपेण प्रतिज्ञादिविशेष्यकज्ञानस्य कारणत्वमस्ति, प्रत्येकं तादृशतादृशआनुपूर्व्यवच्छिन्नानि यानि प्रतिज्ञादीनि वाक्यानि तत्समुदायत्वस्य प्रतिज्ञादिपञ्चकसमुदायरूपे न्याये सत्त्वात्लक्षणसमन्वयः।

अत्र शाब्दबोधे प्रतिज्ञाद्यर्थविषयकत्वरूपस्य तादृशत्वस्य अनिवेशे यत्किञ्चिच्छाब्दबोधपदेन घटकर्मकानयनविषयक शाब्दबोधस्यापि ग्रहणसंभवात् तन्निष्ठजन्यतानिरूपिता घटमानयेति वाक्यज्ञाननिष्ठा या कारणता आनुपूर्वीविशेषावच्छिन्ना तदवच्छिन्नवाक्यसमुदायत्वस्य घटमानयेति वाक्यघटितसमुदाये सत्त्वात् अतिव्याप्तिः स्यात्। तद्वारणाय शाब्दबोधे तादृशत्वनिवेशः। घटमानयेति वाक्यजन्यशाब्दबोधस्य प्रतिज्ञाद्यर्थविषयकत्व- रूपतादृशत्वविरहात् न तमादाय पूर्वोक्तातिव्याप्तिः।

यादृशयादृशेति वीप्सायाः अनुपादाने प्रतिज्ञात्वहेतुत्वादिद्वित्रधर्मप्रकारकत्वा- वच्छिन्नशब्दज्ञाननिष्ठां कारणतां गृहीत्वा तादृशधर्मावच्छिन्नवाक्यसमुदायत्वस्य प्रतिज्ञाहेत्वादिद्वित्रावयवकसमुदाये न्यायैकदेशे सत्त्वात् तत्रातिव्याप्तिः। वीप्सायाः उपादाने तु प्रतिज्ञात्वहेतुत्वादीनां पञ्चानामपि धर्माणां ग्राह्यतया तादृशपञ्चानुपूर्व्यवच्छिन्नवाक्यसमुदायत्वस्य द्वित्रावयवसमुदाये असत्त्वात् नातिव्याप्तिः।

कारणतायां शब्दज्ञाननिष्ठत्वानिवेशे योग्यताज्ञानादिनिष्ठायाः शाब्दबोधनिरूपितकारणतायाः प्रतिज्ञात्वादिरूपानुपूर्वीप्रकारकत्वावच्छिन्नत्वविरहात् लक्षणस्य असंभवःस्यात्। तद्वारणाय कारणतायां शब्दज्ञाननिष्ठत्वनिवेशः। तन्निवेशे तु शब्दज्ञाननिष्ठायाः शाब्दबोधकारणतायाः प्रतिज्ञात्वादि- आनुपूर्वीप्रकारकत्वेनैव अवच्छिन्नत्वात् न असम्भवः। तादृशयत्किंचिच्छाब्दबोधं

न अस्माकं न्यायैकदेशेऽतिव्याप्तिः। तादृशधर्माश्च प्रतिज्ञादीनामानुपूर्वीविशेषा एव। पर्वतो वह्निमानित्याकारकबोधे पर्वतो वह्निमान् पर्वतो दहनवानित्याकारक-विविधानुपूर्वीप्रकारकज्ञानानामेव हेतुतया तथाविधैकैकानुपूर्व्यवच्छिन्नवाक्यपञ्चकस्य न्यायत्वानुपपत्तिरतो यत्किंचिच्छाब्दबोधनिवेशः। समानानुपूर्वीकनानावाक्य विषयतानामेवानु-

---

प्रति प्रतिज्ञात्वहेतुत्वादि धर्मप्रकारकत्वेन शब्दज्ञानस्य कारणतया तादृशपञ्चधर्मावच्छिन्नस्य एकस्य वाक्यस्य अप्रसिद्ध्या प्रत्येकमिति तत्तद्धर्मविशेषणम्।

नन्वेवं परिष्कारे कृतेऽपि प्रतिज्ञाद्यर्थविषयकसमूहालम्बनबोधं प्रति प्रतिज्ञादिवाक्यविषयकज्ञानस्य तत्तदानुपूर्वीप्रकारकत्वेन कारणतया तादृशानुपूर्व्यवच्छिन्नत्वस्य प्रतिज्ञादिघटकेषु अन्तिमवर्णेष्वेव सत्त्वात् अन्तिमपञ्चवर्णसमुदायस्यैव न्यायत्वं स्यात्। तथा च विवक्षिते न्यायवाक्ये लक्षणस्य असम्भवः इत्यतः पर्यवसितं लक्षणमाह – *तादृशयत्किञ्चि-च्छाब्दबोधनिरूपितेत्यादिना।* प्रतिज्ञाद्यर्थविषयकयत्किञ्चिच्छाब्दबोधनिष्ठ-जन्यतानिरूपिता प्रतिज्ञादिशब्दज्ञाननिष्ठा या या कारणता तत्तदवच्छेदककोटिप्रविष्टा यत्किञ्चिज्ज्ञानीया या या विषयता तदाश्रयवर्णत्वव्यापकसमुदायत्वं न्यायलक्षणम्। प्रतिज्ञादिविषयकज्ञानानां प्रतिज्ञाद्यर्थविषयकसमूहालम्बनबोधं प्रति प्रतिज्ञादिघटकाः यावन्तो वर्णाः तावद्वर्णविषयकज्ञानत्वेन कारणत्वात् प्रतिज्ञादिघटकतावद्वर्णनिष्ठाः विषयताः शब्दज्ञाननिष्ठकारणतावच्छेदककोटिप्रविष्टाः। तादृशविषयताश्रयवर्णत्वं यत्र यत्र वर्तते प्रतिज्ञादिघटकेषु वर्णेषु, तत्र न्यायत्वरूपस्य समुदायत्वस्य सत्त्वात् लक्षणसमन्वयः। समुदायत्वे वर्णत्वव्यापकत्वनिवेशात् न्यायैकदेशे नातिव्याप्तिः।

शाब्दबोधे यत्किञ्चित्वनिवेशस्य प्रयोजनमाह – ***पर्वतो वह्निमान् इत्याकारकबोध*** इति। तथा च यत्किञ्चित्त्वानिवेशे 'पर्वतो वह्निमान्' इत्याकारकशाब्दबोधं प्रति 'पर्वतो वह्निमान्' 'पर्वतो दहनवान्' 'गिरिः अग्निमान्' इत्यादिविविधानुपूर्वीप्रकारकज्ञानानां हेतुतया तादृशहेतुतावच्छेदक-विषयताश्रयवर्णत्वस्य गकार–हकारादिष्वपि सत्त्वात् तत्र च 'पर्वतो वह्निमान्' इति एकविधानुपूर्व्यवच्छिन्नसमुदायत्वरूपन्यायत्वविरहात् तादृशन्यायत्वे वर्णत्वव्यापकत्वमसंभवि। अतः शाब्दबोधे यत्किंचित्त्वनिवेशः। तन्निवेशे च यत्किंचित्पदेन पर्वतो वह्निमान् इति एकविधवाक्यघटितज्ञानाव्यवहितोत्तरं

–गतरूपेणैकैककारणतायामवच्छेदकत्वात् पर्वतो वह्निमानित्याद्येकैकवाक्यव्यक्तिघटित वाक्यपञ्चकवृत्तिसमुदायत्वस्य न तादृशकारणतावच्छेदकविषयताश्रयवर्णत्वव्यापकत्वमिति यत्किँचिज्ज्ञानीयविषयतानिवेशः। न च वाक्यान्तरसाधारणसमुदायत्वमादाय

---

जायमानस्य शाब्दबोधस्यैव विवक्षिततया तत्र 'पर्वतो दहनवान्' इत्यादि शब्दज्ञानस्य कारणत्वाभावात् न पूर्वोक्तदोषः। शाब्दबोधस्थाने तादृशयत्किंचिज्ज्ञानेति निवेशे वह्निमदभिन्नपर्वतरूपप्रतिज्ञार्थविषयिणी या अनुमितिः वह्निमदभिन्नपर्वतविषयकज्ञानं प्रतिज्ञार्थविषयकम्, प्रतिज्ञाप्रतिपाद्यत्वात् इत्याकारिका तादृशानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयताश्रयवर्णत्वव्यापकत्वस्य पर्वतधूमवह्निपदघटितसमुदायत्वे सत्त्वात् तादृशसमुदायेऽतिव्याप्तिः। तद्वारणाय शब्दबोधप्रवेशः। तन्निवेशे च अनुमितेः शाब्दबोधरूपत्वाभावात् तन्निष्ठजनकतामादाय न दोषः।

द्वित्रावयवकसमुदायेऽतिव्याप्तिवारणाय या या कारणतेति वीप्सायाः उपादानम्। या या कारणता तावन्निरूपितावच्छेदकतायाः एकस्यामपि विषयतायां असत्त्वात् असम्भववारणाय प्रत्येकं तत्तदवच्छेदकेत्युक्तम्। आनुपूर्वीप्रकारकत्व–विशिष्टज्ञानत्वस्यैव कारणतावच्छेदकत्वात् वर्णानुपूर्वीनिष्ठविषयतायां कारणतावच्छेदकत्वाभावात् असंभववारणाय कारणतावच्छेदककोटि–प्रविष्टेत्युक्तम्। तेन साक्षात्परंपरासाधारणम् अवच्छेदकत्वं लक्षणे प्रविष्टमिति सूचितम्।

यत्किञ्चिज्ज्ञानीयविषयतेत्यत्र शब्दज्ञाने यत्किञ्चित्त्वनिवेशस्य प्रयोजनमाह – ***समानानुपूर्वीकेति।*** 'पर्वतो वह्निमान्' इत्याकारकाणि पुरुषभेदेन कालभेदेन च भिन्नानि वाक्यानि समानानुपूर्वीकाणि बहूनि सन्ति। तद्वाक्यघटकाः वर्णाश्च सजातीया अपि प्रत्येकं भिन्नाः। तथा च 'पर्वतो वह्निमान्' इत्यादिशाब्दबोधं प्रति शब्दज्ञाननिष्ठा या या कारणता तदवच्छेदकविषयताश्रयवर्णत्वस्य समानानुपूर्वीकनानावाक्यघटकेषु वर्णेषु सत्त्वात् तत्र 'पर्वतो वह्निमान्' इत्यादि एकैकवाक्यव्यक्तिघटितवाक्यपञ्चकसमुदायत्वस्याभावात् तादृशसमुदायत्वस्य पूर्वोक्तकारणतावच्छेदकविषयताश्रयवर्णत्वव्यापकत्वं नास्तीति असंभवः। तद्वारणाय यत्किञ्चिज्ज्ञानीयविषयतेत्युक्तम्। तदुपादाने च 'पर्वतो वह्निमान्' इत्यादि

वाक्यान्तरघटितसमुदायेऽतिव्याप्तिरिति वाच्यम् । तादृशसमुदायत्व निष्ठन्यूनवृत्तित्वानिरूपकत्वेन निरुक्तसमुदायत्वस्य विवक्षणीयत्वात् नचैवमपि व्युत्क्रमप्रयुक्तप्रतिज्ञादिपञ्चकसमुदायेऽति–

---

एकैकवाक्यविषयकज्ञानीयविषयताया एव ग्राह्यतया तदाश्रयवर्णत्वव्यापकत्वस्य विवक्षितसमुदायत्वे सत्त्वात् न असम्भवः। तादृशी या या कारणता प्रत्येकं तत्तदवच्छेदककोटिप्रविष्टविषयताश्रयवर्णत्वसमानाधिकरणसमुदायत्वमित्येतावन्मात्रोक्तौ अन्तिमपञ्चवर्णवृत्तिसमुदायत्वमादाय अन्तिमपञ्चवर्णेषु अतिव्याप्तिः स्यात्। अतो वर्णत्वव्यापकत्वनिवेशः।

ननु घटवद्भूतलरूपोदासीनवाक्यघटिते 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञादिसमुदायरूपे न्याये अतिव्याप्तिः। प्रतिज्ञादिपञ्चार्थविषयक–यत्किंचिच्छाब्दबोधनिरूपित–प्रतिज्ञादिपञ्चवाक्यविषयकज्ञाननिष्ठ–कारणतावच्छेदक विषयताश्रयवर्णत्वव्यापकत्वस्य अधिकवाक्यघटितसमुदायत्वे अक्षतत्वात् इत्याशयेन शङ्कते – ***न च वाक्यान्तरेति***। 'घटवद्भूतलम्' इति वाक्यसाधारणं यत् समुदायत्वं 'पर्वतो वह्निमान्' इत्यादि पञ्चावयवघटवद्भूतल–वाक्यघटितसमुदायत्वम् तदाश्रयत्वस्य घटवद्भूतलवाक्यघटितसमुदायत्वे सत्त्वादतिव्याप्तिरित्यर्थः। समाधत्ते–***तादृशसमुदायत्वनिष्ठेति***। तादृश–यत्किञ्चिच्छाब्दबोधनिरूपितशब्दज्ञाननिष्ठयावत्कारणतावच्छेदक–विषयताश्रयवर्णत्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकं यत् समुदायत्वम्, तदेव न्यायलक्षणम्। उदासीनवाक्यघटितसमुदायत्वापेक्षया तदघटितप्रतिज्ञादि–समुदायत्वस्य न्यूनवृत्तित्वात् प्रतिज्ञादिसमुदायत्वनिष्ठन्यूनवृत्तित्वनिरूपकमेव उदासीनवाक्यघटितं समुदायत्वमिति तादृशन्यूनवृत्तित्वानिरूपकसमुदायत्वपदेन उदासीनवाक्यघटितसमुदायत्वस्य ग्रहीतुमशक्यतया न तदाश्रये समुदायेऽतिव्याप्तिः। तादृशसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वं च तादृशसमुदायत्वसमानाधिकरण–भेदप्रतियोगितानवच्छेदकत्वे सति तदन्यत्वम्। ***न चैवमपीति***। तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वनिवेशेपीत्यर्थः। प्रतिज्ञानन्तरं हेतुः, ततः उदाहरणम्, ततः उपनयः, ततो निगमनं चेति क्रमेण प्रयुक्तानां प्रतिज्ञादीनां समुदाय एव न्यायः न तु प्रतिज्ञानन्तरम् उदाहरणम्, ततो हेतुः इति व्युत्क्रमेण प्रयुक्तानां प्रतिज्ञादीनां समुदायः। पूर्वोक्तं न्यायलक्षणं तु

**प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते। तेन च विशिष्टवैशिष्ट्यावगाहि मानान्तरमुत्थाप्यते। तेन चरमः परामर्श उत्पाद्यत इति न्यायजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता।**

**इति तत्त्वचिन्तामणौ न्यायलक्षणम्।**

---

व्याप्तिस्तदवस्थैवेति वाच्यम्। व्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्ति यद्यत्समुदायत्वं तावद्भेदकूटेन निरुक्तसमुदायत्वस्य विशेषणीयत्वात्। न चैवमपि एकैकन्यायघटकं यत्प्रतिज्ञादिवाक्यं तत्समुदायेऽतिव्याप्तिरिति वाच्यम्। स्वाश्रयीभूतयत्किंचित्प्रतिज्ञाद्यव्यवहितोत्तरत्वादि-शून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं तदन्यत्वस्य समुदायत्वे विशेषणीयत्वादिति दिक्। न्यायजन्यबोधस्य परामर्शप्रयोजकतां सङ्गमयति ***प्रतिज्ञादीति। एकवाक्यतयेति।*** विशेषणे तृतीया। तथा चैकवाक्यतापन्नैरित्यर्थः। एकवाक्यत्वं च विशिष्टैकार्थप्रतिपादकत्वं तदुत्थाप्याकांक्षानिवर्तकत्वतन्निवर्तनीयाकांक्षोत्थापकत्वान्यतरवत्त्वं वा, तेन पञ्चवाक्य-

---

व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदायेऽप्यस्तीति तत्रातिव्याप्तिः। तथा हि – क्रमप्रयुक्तप्रतिज्ञादिसमुदाये यावन्तो वर्णाः घटकाः तावन्त एव वर्णाः व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदायेऽपि घटकाः। तथा च व्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्ति समुदायत्वे प्रतिज्ञाद्यर्थविषयकशाब्दबोधत्वावच्छिन्नकार्यतानिरूपितशब्दज्ञाननिष्ठ यावत्कारणतावच्छेदकविषयताश्रयवर्णत्वव्यापकत्वसत्त्वात् अतिव्याप्तिरिति भावः। एतद्दोषवारणाय व्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्ति यद्यत्समुदायत्वं तत्तद्भिन्नत्वं लक्षणघटके समुदायत्वे निवेशनीयम्। तदाह – ***व्युत्क्रमप्रयुक्तेति।***

नन्वेवमपि यत्र चैत्रादयः पञ्च पुरुषाः 'पर्वतो वह्निमान्' इत्यादिक्रमेण समानानुपूर्वीकप्रतिज्ञादिपञ्चकं प्रयुञ्जते तत्र एकपुरुषीयन्यायघटकप्रतिज्ञा-न्यायान्तरघटकहेत्वादिसमुदायस्यापि पूर्वोक्तन्यायलक्षणाक्रान्ततया अतिव्याप्तिरिति शङ्कते – ***न चैवमपीति।*** समाधत्ते – ***स्वाश्रयीभूतेति। स्वं*** – समुदायत्वम्। स्वाश्रयीभूतयत्किञ्चित्प्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं एकैकन्यायघटकप्रतिज्ञादिवाक्यवृत्तिसमुदायत्वम्। तदन्यत्वं तु तत्र नास्तीति नातिव्याप्तिः। एवञ्च प्रतिज्ञाद्यर्थविषयकयत्किञ्चिच्छाब्दबोधत्वावच्छिन्न-जन्यतानिरूपितशब्दज्ञाननिष्ठा या या कारणता प्रत्येकं तत्तदवच्छेदककोटि-प्रविष्टयत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकत्वे सति तादृशवर्णत्वव्यापक-

जन्यमहावाक्यार्थबोधासम्भवेपि न क्षतिः। ***स्वार्थविशिष्टज्ञानम्***–तत्तद्वाक्यार्थविषयकज्ञानम्। तच्च समूहालम्बनमन्यथा वेत्यन्यदेतत्। ***विशिष्टवैशिष्ट्यावगाहि मानान्तरम्***–विशिष्टवैशिष्ट्यबोधात्मकपरामर्शजनकं मनः। उत्थाप्यते स्वात्मकसहकारिसम्पन्नीक्रियते। तेन तथाविधेन मनसा परामर्श उत्पाद्यत इत्युपाध्यायः। अत्र च तदेव ज्ञानं परामर्शरूपं उपनयार्थविषयकत्वादित्याक्षिप्य उपनयस्य व्याप्त्यंशे न तात्पर्यम्; तथा सति न्यायजन्य–बुद्धावुदाहरणार्थतया उपनयार्थतया च व्याप्तिभाने पौनरुक्त्यं स्यात्। किंतु पक्षधर्मत्वमेवोपनयेन विवक्षितम्। तथा च उदाहरणार्थतया व्याप्तेरुपनयार्थपक्षधर्मतायाश्च विश्रृंखलमेव भानमिति न्यायजन्यबोधस्य न व्याप्तिविशिष्टवैशिष्ट्यावगाहिता, व्याप्यः

---

समुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वे सति व्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्ति यद्यत्समुदायत्वं तत्तदन्यत्वे सति स्वाश्रयीभूतयत्किञ्चित्प्रतिज्ञाद्यव्य–वहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत् समुदायत्वं तदन्यत्वविशिष्टं समुदायत्वं न्यायलक्षणमिति पर्यवसितम्।

मणौ प्रतिज्ञादिपञ्चवाक्यैरित्यादि। एकवाक्यतापन्नैः प्रतिज्ञादिभिः पञ्चभिर्वाक्यैः तत्तद्वाक्यार्थविषयकं ज्ञानं जायते। तेन विशिष्टवैशिष्ट्यावगाहि–बोधात्मकपरामर्शजनकं मनः पञ्चवाक्यजन्यशाब्दबोधात्मकसहकारिसंपन्नं भवति। तादृशेन मनसा चरमः परामर्शः उत्पाद्यते। 'मानान्तरम्' इत्यस्य मीयते अनेन इति मानम्; अन्यत् मानं मानान्तरम् इति विग्रहः। 'विशिष्टवैशिष्ट्यावगाहि' इत्यस्य 'मा' धात्वर्थ मितौ अन्वयः। परामर्शरूपमितिं प्रति न्यायजन्यशाब्दबोधः मनश्च कारणम्। तादृशशाब्दबोधापेक्षया मनसः अन्यत्वात् मानान्तरशब्देन व्यपदेशः। एतावता न्यायजन्यशाब्दबोधस्य परामर्शप्रयोजकत्वं व्युत्पादितम्। गादाधर्या ***एकवाक्यत्वं चेति।*** पञ्चानामपि वाक्यानामेकमहावाक्यार्थप्रतिपादकत्वात् एकवाक्यत्वम्। एतच्च पूर्वमुपपादितम्। ***तदुत्थाप्येति।*** प्रतिज्ञावाक्येन जनिता या आकाङ्क्षा 'कुतो वह्निमान्' इत्याकारिका तन्निवर्तकत्वं हेतुवाक्यस्य। हेतुवाक्येन निवर्तनीया या आकाङ्क्षा 'कुतो वह्निमान्' इत्याकारिका तदुत्थापकत्वं प्रतिज्ञायाः इति प्रतिज्ञाहेत्वोः एकवाक्यत्वम्। एवम् अवयवान्तरेष्वपि द्रष्टव्यम्। पञ्चभिः वाक्यैः समूहालम्बनबोधो जायते। न तु विशिष्टैकार्थबोध इति पक्षमनुसृत्य द्वितीयः एकवाक्यत्वपरिष्कारः आदृतः। तदाह – ***तेन पञ्चवाक्येति–*** *अन्यथा* वेति। विशिष्टैकार्थबोध इत्यर्थः।

पक्षे वर्तते न वेत्याकांक्षानिवर्तकत्वानुरोधेनैव वह्निव्याप्त्यादिपदघटितमुपनयवाक्यं प्रयुज्यत इति स एव समाहितवान्। अत्रेदं चिन्त्यते–यदि व्याप्तिविशिष्टे पक्षधर्मत्व–

---

***अत्र चेत्यादि।*** प्रतिज्ञादिपञ्चवाक्यैः समूहालम्बनशाब्दबोधे जाते तत्सहकृतेन मनसा पुनः परामर्शोत्पत्त्या अनुमितिरिति उपाध्यायसंमत व्याख्यानाश्रयणे समूहालम्बनशाब्दबोधे वह्निव्याप्यधूमवत्पर्वतात्मकस्य उपनयार्थस्यापि भानात् समूहालम्बनबोध एव परामर्शात्मक इति पुनः परामर्शान्तरोत्पत्तिः व्यर्था इत्याक्षेपः। अस्य समाधानं तु उपाध्यायैः एवमुक्तम्– उपनयवाक्यात् 'धूमवान् पर्वतः' इत्येव बोधः। न तु धूमांशे वह्निव्याप्तिः प्रकारतया भासते। व्याप्तेः उदाहरणार्थतया भानात् न्यायजन्यशाब्दबोधे द्विः व्याप्तिभानेन पौनरुक्त्यं स्यात्। अतः उपनयस्य व्याप्त्यंशे न तात्पर्यम्। किन्तु हेतोः पक्षवृत्तित्व एव तात्पर्यम्। तथा च उदाहरणार्थव्याप्तेः उपनयार्थपक्षधर्मतायाश्च पृथक् पृथगेव भानम्। अतः न्यायजन्यशाब्दबोधस्य न व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिपरामर्शरूपता। व्याप्यो हेतुः पक्षे वर्तते न वा इत्याकाङ्क्षानिवर्तनार्थं हि उपनयवाक्यं प्रयुज्यते। तस्मात् पृथक् परामर्शोत्पत्तिः आवश्यिकीति। ***तदेव ज्ञानमिति।*** समूहालम्बनशाब्दबोधात्मकं ज्ञानमित्यर्थः। 'एव'कारेण पृथक्परामर्शव्यवच्छेदः। ***विश्रृङ्खलमिति।*** परस्परविशेषणविशेष्यभावानवगाहि इत्यर्थः।

उपाध्यायोक्तसमाधाने अरुचिं आवेदयति–***अत्रेदं चिन्त्यते*** इत्यादिना। उदाहरणेन व्याप्तिविशिष्टस्य हेतोः बोधनात् तदनन्तरं व्याप्तिविशिष्टः पक्षे वर्तते न वा इत्याकाङ्क्षायां तन्निवर्तनाय प्रयुज्यमानम् उपनयवाक्यं व्याप्तिविशिष्टे पक्षधर्मतां यदि न बोधयेत्, अपि तु धूमत्वविशिष्टे पक्षधर्मतां बोधयेत् तदा कथं वा 'धूमवान् पर्वतः' इति बोधमात्रेण व्याप्तिविशिष्टो धूमः, पर्वतवृत्तिर्नवेति आकाङ्क्षा निवर्तेत। तस्मात् व्याप्तिविशिष्टधूमवत्पर्वतबोध एव उपनयवाक्यस्य तात्पर्यम्। तथा च समूहालम्बनशाब्दबोधस्य व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहितया परामर्शरूपत्वं आवश्यकमिति पुनः परामर्शान्तरस्वीकारः विफलः इत्याक्षेपः तदवस्थः।

न च प्रथमतः तत्तद्वाक्यार्थविषयकाः पञ्च बोधाः जायन्ते। तदनन्तरं

मेवाकांक्षितं तदा व्याप्तिविशिष्टविषयक एव बोधस्तादृशाकांक्षां निवर्तयिष्यतीति तथाविधबोध एव उपनयतात्पर्यमावश्यकम्। न चैवमप्याकांक्षानिवृत्तये अवान्तरवाक्यार्थबोधस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वोपगमेपि न्यायजन्यमहावाक्यार्थबोधे उपनयाद्व्याप्तिभानं नोपेयते; उदाहरणादेव तद्भानात्, अवान्तरवाक्यार्थधियः परामर्शरूपत्वेपि निगमनजन्याबाधितत्वादिप्रतिपत्तेरनुमितावपेक्षितत्वात्तावत्पर्यन्तं तदसत्वेन परामर्शान्तरस्यापेक्षेति वाच्यम्;

---

पञ्चावयवार्थविषयकः समूहालम्बनबोधो जायते। तदनन्तरं परामर्शः ततः अनुमितिरिति क्रमः। तत्र आकाङ्क्षानिवृत्त्यर्थम् उपनयजन्यस्य अवान्तरवाक्यार्थबोधस्य व्याप्तिविशिष्ट– हेतुवैशिष्ट्यावगाहित्वेऽपि न्यायजन्यस्य समूहालम्बनरूपस्य महावाक्यार्थबोधस्य उपनयार्थतया हेत्वंशे व्याप्तिभानं विना हेतुवैशिष्ट्यमात्रावगाहित्वम् अङ्गीक्रियते। उपनयजन्यस्य अवान्तरवाक्यार्थबोधस्य परामर्शरूपत्वेऽपि तदनन्तरोत्पन्ननिगमनवाक्यश्रवणतज्जन्यशाब्दबोधाभ्यां व्यवधानात् अनुमितिप्राक्क्षणे परामर्शसम्पत्तये परामर्शान्तरमपेक्षितम् इति वाच्यम्। अवान्तरवाक्यार्थबोधे व्याप्तिभानानुसारेण तदंशेऽपि उपनयवाक्यतात्पर्यकल्पनायाः आवश्यकत्वे महावाक्यार्थबोधेऽपि व्याप्तिभाने बाधकाभावात्। तथा च महावाक्यार्थबोधस्य परामर्शरूपतया तदनन्तरं परामर्शान्तरकल्पनम् अनावश्यकमिति प्रघट्टकार्थः।

***तथाविधबोध*** इति। व्याप्तिविशिष्टविषयकबोध इत्यर्थः। ***आकाङ्क्षानिवृत्तय*** इति। व्याप्तिविशिष्टः पक्षे वर्तते न वा इत्याकाङ्क्षायाः निवृत्तये इत्यर्थः। ***अवान्तरवाक्यार्थबोधस्य–*** उपनयजन्यस्य बोधस्येत्यर्थः। ***बाधकाभावात्*** इति। अवान्तरवाक्यार्थबोध एव तात्पर्यादिघटिता सामग्री अपेक्षिता। महावाक्यार्थबोधस्तु अवान्तरवाक्यार्थबोधाधीन इति पुनर्व्याप्तिभाने तात्पर्यापेक्षाशङ्काया नावकाश इति भावः।

अस्मिन्नाक्षेपे मिश्राणां समाधानमाह– ***न्यायजन्यज्ञानस्येति।*** न्यायजन्यस्य शाब्दबोधस्य वादिवाक्यजन्यत्वेन अप्रामाण्यशङ्कास्कन्दिततया अप्रामाण्यशङ्कानास्कन्दितस्य परामर्शस्यैव अनुमितिजनकतया तादृशपरामर्शान्तरस्वीकारः आवश्यक इति मिश्राणामाशयः। ***वादिवाक्यजन्यत्वेनेति।*** वादिनि अनाप्तत्वशङ्कया वादिवाक्यजन्ये शाब्दबोधे अप्रामाण्यशङ्कायाः प्रसक्तिः। एवमपि यस्य वादिनि

अवान्तरवाक्यार्थबोधे व्याप्तिभानानुरोधेन तदंशेप्युपनयतात्पर्यकल्पनाया आवश्यकत्वे महावाक्यार्थबोधे तद्भानेपि बाधकाभावादिति। न्यायजन्यज्ञानस्य वादिवाक्यजन्यत्वेना-प्रामाण्यशङ्काकलंकिततया अनुमितिजननायोग्यतया परामर्शान्तरस्वीकार इति **मिश्राः।** नव्यास्तु पक्षांशे व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानमेव अनुमितिहेतुः; न तु व्याप्या-भिन्नहेतुमदभेदज्ञानम्, तादृशवैशिष्ट्यावगाहिता च न न्यायजन्यशाब्दबुद्धेः; नामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्। अतो व्याप्यत्वावच्छिन्नहेतुनिष्ठप्रकारताकबोधहेतु-हेतुविशेष्यकव्याप्तिरूपविशेषणतावच्छेदकप्रकारकमानसज्ञानान्मानस एव तादृश-

---

अनाप्तत्वशङ्का नास्ति तस्य पुरुषस्य वादिवाक्यजन्यः शाब्दबोधः अप्रामाण्यशङ्कानास्कन्दित एव भविष्यति। तस्य तु परामर्शान्तरवैयर्थ्यं दुर्वारमिति मिश्रोक्तसमाधाने अस्वारस्यं मनसि निधाय स्वमतेन समाधानमाह-**नव्यास्त्वित्यादिना।** अयमत्र विवक्षितार्थः- 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकात् उपनयवाक्यात् वह्निव्याप्याभिन्नधूमवदभिन्नः पर्वतः इत्याकारकः शाब्दबोध एव जायते। न तु हेतौ व्याप्तेः आश्रयतासंबन्धेन हेतोर्वा पक्षे तेन संबन्धेन भानम्। नामार्थयोः भेदसंबन्धेन अन्वयबोधस्य अव्युत्पन्नत्वात्। व्याप्यपदस्य धूमपदस्य च नामत्वात्। तथा च उपनयजन्यस्य शाब्दबोधस्य न परामर्शरूपत्वम्। परामर्शे हि धूमे व्याप्तिः आश्रयतासंबन्धेन प्रकारतया भासते, न तु व्याप्तिविशिष्टं अभेदसंबन्धेन प्रकारतया भासते। तथा च उपनयजन्यः शाब्दबोधः व्याप्यनिष्ठाभेदसंबन्धावच्छिन्नप्रकारतानिरूपित-हेतुनिष्ठविशेष्यताशाली। परामर्शस्तु व्याप्तिनिष्ठभेदसंबन्धावच्छिन्नप्रकारता निरूपितहेतुनिष्ठविशेष्यताशाली। एवञ्च अवान्तरवाक्यार्थबोधस्य वा महावाक्यार्थबोधस्य वा परामर्शरूपत्वासंभवात् पश्चात् अनुमित्युत्पत्तये परामर्शान्तरस्वीकार आवश्यकः। किञ्च व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहि-ज्ञानरूपपरामर्शं प्रति विशेषणतावच्छेदकप्रकारकज्ञानविधया 'वह्निव्याप्यो धूमः' इत्याकारकज्ञानमपि अपेक्षितम्। अतः प्रतिज्ञादिभिः पञ्चभिर्वाक्यैः महावाक्यार्थबोधे जाते तदनन्तरं 'वह्निव्याप्यो धूमः' इत्याकारकं मानसं विशेषणतावच्छेदकप्रकारकज्ञानं जायते। तदनन्तरं 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकः व्याप्तिविशिष्ट-हेतुवैशिष्ट्यावगाही मानसः परामर्शो जायते। तदनन्तरम् अनुमितिरिति क्रमः।

परामर्शोऽवश्यमङ्गीकर्तव्य इत्यभिप्रायेण ***तेनचे***त्याद्यभिहितं, ***विशिष्टवैशिष्ट्यावगाहिमानान्तरम्*** – विशिष्टवैशिष्ट्यबोधजनकं विशेषणतावच्छेदकीभूतव्याप्तिप्रकारकधूमत्वावच्छिन्न-विशेष्यकज्ञानम्, उत्थाप्यते, जन्यते। तेन, तादृशविशेषणतावच्छेदकप्रकारकज्ञानेन, परामर्शो जन्यत इत्यर्थः, न चैवं तेन परामर्शस्य जननादिति ग्रन्थासङ्गतिः, तत्र

---

एतदनुसारेण मणिग्रन्थो व्याख्यातव्यः। ***स्वार्थविशिष्टज्ञान*** मित्यनेन महावाक्यार्थबोधो विवक्षितः। **तेन** – महावाक्यार्थबोधेन। **विशिष्टवैशिष्ट्यावगाहि मानान्तरम्** – विशिष्टवैशिष्ट्यावगाहिपरामर्शजनकं विशेषणतावच्छेदकीभूतव्याप्तिप्रकारक-धूमविशेष्यकज्ञानं 'वह्निव्याप्यो धूमः' इत्याकारकम्। ***उत्थाप्यते*** – जन्यते। **तेन च** – विशेषणतावच्छेदकप्रकारक ज्ञानेन। ***चरमः परामर्शः*** – अन्तिमः मानसपरामर्शः इति। व्याप्यत्वावच्छिन्नहेतुनिष्ठेति। व्याप्तिनिष्ठावच्छेदकताक-हेतुनिष्ठप्रकारतानिरूपित-पक्षनिष्ठविशेष्यताशालिपरामर्शहेतुभूतात् हेतुविशेष्यक-व्याप्तिप्रकारकमानसज्ञानादित्यर्थः। व्याप्तेः विशेषणतावच्छेदकत्वस्फोरणाय व्याप्यत्वावच्छिन्नेत्युक्तम्।

***न चैवमिति।*** अवयवलक्षणसन्दर्भे 'तेन परामर्शस्य तदवयवेन च परामर्शजनकस्य जननात्' इति मणिग्रन्थः। तत्र तच्छब्देन उपनयवाक्यं विवक्षितम्। तथा च उपनयवाक्यजन्यत्वं परामर्शस्य तस्मात् ग्रन्थात् लभ्यते। इदानीं तु भवद्भिः उपनयजन्यशाब्दबोधस्य परामर्शरूपत्वं नास्तीति उपपादितम्। तथा च तेन परामर्शस्य जननादिति उपरितनः मणिग्रन्थः न सङ्गच्छत इति प्रष्टुः आशयः। समाधत्ते– ***तत्र परामर्शपदस्येति।*** उपरितनमणिग्रन्थे विद्यमानः परामर्शशब्दः 'व्याप्याभिन्नहेतुमदभिन्नः पर्वतः' इत्याकारकं शाब्दबोधमेव परामृशति, न तु व्याप्तिनिष्ठप्रकारतानिरूपित-हेतुनिष्ठप्रकारताकज्ञानमिति न तद्ग्रन्थासङ्गतिरिति भावः।

पूर्वोक्ताक्षेपे इतरेषां समाधानम् अनुवदति–***शुद्धहेतुतावच्छेदकावच्छिन्न*** इति। व्याप्तिविशिष्टे धूमे पक्षधर्मत्वाकाङ्क्षया नोपनयवाक्यं प्रयुज्यते। किन्तु शुद्धधूमत्वावच्छिन्ने धूमे पक्षधर्मत्वाकाङ्क्षयैव प्रयुज्यते। तथा च व्याप्त्यर्थकपदाघटितं 'धूमवान् पर्वतः' इत्येव उपनयवाक्यशरीरम्। न तु 'वह्निव्याप्यधूमवान् पर्वत' इति प्राचीनानां मतम्। तदनुसारेण मणिग्रन्थोऽयं

परामर्शपदस्य व्याप्याभिन्नहेतुमदभेदबोधपरत्वादित्याहुः। शुद्धहेतुतावच्छेदकावच्छिन्ने पक्षधर्मत्वाकांक्षया तत्र पक्षधर्मत्वबोधमात्रतात्पर्यकं व्याप्त्यर्थकपदाघटितमेवोपनयवाक्यं प्रयुज्यत इति प्राचीनमताभिप्रायकमिदम्; अत एव दीधितिकृता तन्मताभिप्रायेणैव **'उदाहरणोपनययोरेव तत्पर्यवस्यती'** त्यत्रोदाहरणान्तर्भाविणैव परामर्शप्रयोजकत्वपर्यवसानमुक्तं नतूपनयमात्रस्येतीत्यपि वदन्ति। अत्र परामर्शप्रयोजकत्वेन शाब्दज्ञानस्य लक्षणघटकत्वे

---

प्रवृत्तः। तथा च उपनयजन्यशाब्दबोधे धूमविशिष्टपर्वत एव भासते, न तु व्याप्तिविशिष्टधूमविशिष्टपर्वतः। अतः न्यायजन्यशाब्दबोधस्य कथमपि परामर्शरूपत्वं न संभवतीति परामर्शान्तरस्वीकारः आवश्यकः इति भावः। शुद्धेति पदेन व्याप्तेः अवच्छेदकत्वं व्यवच्छिद्यते। अस्य मणिग्रन्थस्य उक्तार्थतात्पर्यकत्वे दीधितिकृताम् उक्तिम् उपष्टम्भकतया प्रदर्शयति – ***अत एव दीधितिकृतेति।*** तादृशपरामर्शप्रयोजकत्वं च 'यदि तद्विषयतत्तत्पदार्थो-पस्थापकतया तदा उदाहरणोपनययोरेव तत्पर्यवस्यतीति' दीधितिग्रन्थः। परामर्शविषययोः व्याप्तिपक्षधर्मतयोः उपस्थापकत्वम् उदाहरणोपनययोः द्वयोरस्तीति तेन ग्रन्थेन लभ्यते। यदि व्याप्त्यर्थकपदघटितं 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकम् उपनयवाक्यं स्यात्, तदा उपनयमात्रस्य परामर्शविषयपदार्थोपस्थापकत्वेन 'उदाहरणोपनययोः' इत्युक्तिः असङ्गता स्यात् इति भावः। ***वदन्तीति*** अस्वरसोद्भावनम्। तद्बीजं तु उपनयप्रकरणे मणिकारैः 'तथापि व्याप्तं किं पक्षे वर्तते न वेत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनाय उपनयः' इति वक्ष्यमाणत्वात्, तन्मतानुसारेणैव प्रकृतमणिग्रन्थस्यापि व्याख्यानसंभवे प्राचीनमताभिप्रायेण व्याख्यानमनुचितमिति।

दीधितिकारीयं न्यायलक्षणमवतारयति– ***अत्र परामर्शप्रयोजकत्वेनेत्यादिना।*** मणिकारीये न्यायलक्षणे अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकत्वेन रूपेण शाब्दबोधस्य न निवेशः। तथा सति उदाहरणोपनयवाक्यजन्यशाब्दबोधयोरेव परामर्शविषयव्याप्तिपक्षधर्मताविषयकत्वेन परामर्शप्रयोजकतया परामर्शप्रयोजक-शाब्दज्ञानजनकत्वस्य उदाहरणोपनययोरेव पर्यवसानेन तद्द्वयस्य न्यायत्वापत्तेः। अतः शाब्दज्ञानपदं प्रतिज्ञादिप्रतिपाद्यवह्निमत्पर्वतादितत्तद्विशिष्टार्थविषयकज्ञान-पञ्चकपरम्। जनकवाक्यपदं च प्रत्येकं तत्तद्बोधजनकानि यानि पञ्च

## दीधितिः

**उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम्।**

---

स्वयमनुपपत्तेर्वक्ष्यमाणतया शाब्दज्ञानपदं प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थज्ञानपञ्चकपरं, जनकवाक्यपदं च प्रत्येकं तत्तद्बोधजनकवाक्यपञ्चकपरम्, अतः प्रतिज्ञादिवाक्यपञ्चकलाभः। प्रयोजकान्तं च बोधविशेषाणां परिचायकमात्रम्। यद्यप्येवं प्रतिज्ञादिपञ्चवाक्यैरेक-ज्ञानाजननेप्येतादृशलक्षणानिर्वाहविरहः; तथापि प्रतिज्ञादिजन्यबोधानां परामर्शप्रयोजकतालाभायैव सम्भवाभिप्रायेण तावदर्थविषयकमेकमेव ज्ञानं परामर्शप्रयोजकत्वेनाभिहितमित्यभिप्रेत्य दीधितिकृत्पर्यवसितन्यायलक्षणमाह – ***उचितेति।*** उचितानुपूर्वीकाणि प्रतिज्ञादीनि पञ्च यत्र समुदाये तत्त्वमेतादृशपञ्चपर्याप्तसमुदायत्वमिति यावत्। पञ्चपदं निगमनान्तानां विशिष्य

---

वाक्यानि तत्समुदायपरम्। प्रयोजकत्वं च पञ्चानां बोधविशेषाणां परिचायकम्। अन्यथा घटवद्भूतलादिविषयकबोधजनकघटवद्भूतलादिवाक्येऽतिव्याप्तेः। एवं च बोधविशेषजनकवाक्यमित्यनेन प्रतिज्ञादिवाक्यपञ्चकमिति लभ्यते। एतल्लाभायैव परामर्शजनकशाब्दज्ञानजनकेत्युक्तिरिति यावत्। व्युत्क्रमप्रयुक्तप्रतिज्ञादि-पञ्चकेऽतिव्याप्तिवारणाय उचितानुपूर्वीकत्वं वाक्यपञ्चके विशेषणं दत्त्वा मणिग्रन्थात् पर्यवसितमेव लघुलक्षणं दीधितिकारः प्रदर्शयति इति भावः। **वक्ष्यमाणतयेति।** उदाहरणोपनययोरेव तत् पर्यवस्यतीत्यादिनेति शेषः। ***तत्तद्विशिष्टार्थाः*** – साध्यवत्पक्षहेतुज्ञानज्ञाप्यत्वादयः पञ्च अवयवार्थाः। बोधपञ्चकजनकत्वस्यैकस्मिन् प्रतिज्ञादिवाक्येऽसम्भवात् – प्रत्येकं तत्तद्बोध-जनकेत्युक्तं वाक्यविशेषणम्। ***पञ्चकलाभः*** – पञ्चावयवकसमूहलाभः।

ननु प्रयोजकान्तं यदि पञ्चानां बोधानां परिचायकं तर्हि पञ्चावयवार्थ-विषयकमहावाक्यार्थबोधोत्पत्तिं विनापि न्यायलक्षणनिर्वाहात् 'प्रतिज्ञादिपञ्च-वाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यत' इति मूलासंगतिरित्याशङ्क्य तत् मूलमपि पञ्चानां बोधानां परामर्शप्रयोजकत्वस्यैवोपपादकम्। पञ्चार्थविषयकैकबोधे परामर्शप्रयोजकत्वोपपादनेऽर्थात् पञ्चानां बोधानां तत्प्रयोजकत्वस्योपपादितत्वात्। यत्र समूहालम्बनरूप एको बोधः तत्स्थलाभिप्रयोण मूलोक्तिः। तावता बोधस्यैकत्वं न विवक्षितमिति समाधत्ते –***यद्यप्येवमित्यादिना।*** एतादृशलक्षणनिर्वाह इति वक्तव्ये एतादृशलक्षणानिर्वाहविरह इति कथनस्यायमाशयः –

निवेशलाभाय, न तु पञ्चत्वेनापि तेषां निवेशः प्रयोजनाभावात्। व्युत्क्रमप्रयुक्तप्रतिज्ञादि-पञ्चकेऽतिव्याप्तिवारणाय **उचितानुपूर्वीकेति।** उचितानुपूर्वी प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपा।

ननु किमिदमुचितानुपूर्वीकत्वम्? नतावत्तादृशानुपूर्व्याश्रयत्वम्, दर्शितानुपूर्व्या निगमन एव विश्रान्तेः, नापि तादृशानुपूर्वीघटकत्वम्; घटकतायाः दुर्निर्वचत्वात्, तद्धि

---

प्रतिज्ञादिपञ्चवाक्यैरेक ज्ञानाजनने लक्षणनिर्वाहवत् एकज्ञानजननेऽपि लक्षणनिर्वाहात् मूलासंगतिर्नोपपद्यते। अत एतादृशलक्षणनिर्वाह इति नोक्तम्। एकज्ञानाजनने यदि लक्षणानिर्वाहः तदैव मूलं संगच्छते। लक्षणानिर्वाहस्तु नास्ति। अतो मूलासांगत्यमिति। ***उचितानुपूर्वीकाणीति।*** उचिता आनुपूर्वी येषां तानि उचितानुपूर्वीकाणि। तथा च प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वाश्रय-प्रतिज्ञादिनिगमनान्तवाक्यपर्याप्तसमुदायत्वं न्यायलक्षणमित्युक्तं भवति।

उचितानुपूर्वीकत्वं परिष्कर्तुं शङ्कते- **ननु किमिदमुचितानुपूर्वीकत्वमिति।** ***न तावदिति।*** प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपानुपूर्व्याश्रयत्वं निगमन एवास्ति न तु पञ्चसु, निगमनपर्याप्तसमुदायत्वं न्याये नास्तीत्यसंभवो निगमनेऽतिव्याप्तिर्वेति भावः। **तद्धीत्यादि।** प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तर-निगमनत्वरूपानुपूर्वीघटकप्रतिज्ञादिपर्याप्तसमुदायत्वं न्यायलक्षणमित्युक्तौ किं नाम घटकत्वमिति प्रश्नः भवति। यदि तादृशानुपूर्वीघटकत्वं स्वाविषयकप्रतीत्यविषयतादृशानुपूर्वीकत्वं तदा स्वाविषयकप्रतीत्य-विषयतादृशानुपूर्वीकप्रतिज्ञादिसमुदायत्वं न्यायत्वमिति पर्यवस्यति। स्वपदं घटकत्वेनाभिमतप्रतिज्ञादिपरम्। प्रतिज्ञोत्तरेत्यादिनिगमनत्वरूपानुपूर्वीविषयिण्यां प्रतीतौ नियमेन प्रतिज्ञादीनां विषयत्वात् प्रतिज्ञाद्यविषयिणी प्रतीतिः उदासीनघटवद्भूतलादिवाक्यविषयिणी प्रतीतिरेव। तदविषयत्वं चानुपूर्व्यामस्तीति तादृशानुपूर्वीकप्रतिज्ञादिसमुदाये लक्षणसमन्वयः।

एतादृशं घटकत्वं दूषयति-***प्रतिज्ञाद्यविषयकप्रतीत्येति।*** निगमनत्वमित्याकारिका प्रतीतिः प्रतिज्ञादिनिगमनान्तं न विषयीकरोति। तथा च प्रतिज्ञाद्यविषयकप्रतीतिः निगमनत्वविषयप्रतीतिः, तद्विषयत्वं निगमनत्वेऽस्ति। आनुपूर्वी च प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरत्वविशिष्टनिगमनत्वरूपा। तत्र विशेष्यभूते निगमनत्वे प्रतिज्ञाद्यविषयकप्रतीतिविषयत्वमस्ति चेत्

न स्वाविषयकप्रतीत्यविषयतादृशानुपूर्वीकत्वम् , प्रतिज्ञाद्यविषयकप्रतीत्या शुद्धनिगमनत्वस्य विषयीकरणाद्विशिष्टनिगमनत्वे तादृशप्रतीत्यविषयत्वानुपपत्तेः, विशेष्यवृत्तेर्विशिष्टानुयोगिका-भावानभ्युपगमात्, नापि तादृशानुपूर्वीविषयिताव्यापकविषयिताकत्वम् ; शब्दव्यक्तिभेदेन प्रतिज्ञादेर्भिन्नतया कस्याश्चिदपि प्रतिज्ञाव्यक्तेर्विषयितायास्तादृशानुपूर्वीविषयितासामान्य-व्यापकत्वासम्भवात्, प्रतिज्ञादिव्यक्त्यन्तरघटितन्यायविषयकज्ञानेऽपि तादृशानुपूर्वीविषयितासत्त्वात्,

---

विशिष्टनिगमनत्वेऽपि तदस्ति, न तु तदभावः। विशेष्यवृत्तिधर्मप्रतियोगिक-विशिष्टानुयोगिकाभावानभ्युपगमात्। विशेष्यं निगमनत्वं तद्वृत्तिधर्मः प्रतिज्ञाद्यविषयकप्रतीतिविषयत्वं तत्प्रतियोगिकोऽभावः विशिष्टनिगमनत्वे न सम्भवतीति यावत्। एवं च विशिष्टनिगमनत्वरूपानुपूर्व्यां प्रतिज्ञाद्यविषकप्रतीति-विषयत्वाभावरूपस्य तादृशप्रतीत्यविषयत्वस्यासंभवेन तद्घटितं लक्षणमप्यसंभवीति भावः। ***विशेष्यवृत्तेरिति।*** विशेष्यवृत्तिधर्मस्येत्यर्थः। षष्ठ्यर्थः प्रतियोगित्वं निरूपकत्वसम्बन्धेनाभावान्वयि।

***नापीति।*** तथा चोचितानुपूर्वीघटकत्वं नाम उचितानुपूर्वीविषयिता-व्यापकविषयिताकत्वम्। प्रतिज्ञोत्तरेत्यादिनिगमनत्वविषयिताव्यापकविषयिताक-प्रतिज्ञादिसमुदायत्वं न्यायत्वम्। तादृशानुपूर्वीविषयकप्रतीतौ सर्वत्र प्रतिज्ञादिविषयकत्वसद्भावात् प्रतिज्ञादिनिरूपितविषयितानां तादृशानुपूर्वी-निरूपितविषयिताव्यापकत्वमिति लक्षणसमन्वयः। यद्यपि उक्तानुपूर्वीविषयिण्यां प्रतीतौ प्रतिज्ञादीनां चतुर्णां निगमनत्वस्य च विषयत्वेऽपि निगमनस्याविषयतया निगमननिरूपितविषयितायाः आनुपूर्वीविषयिताव्यापकत्वं कथमिति शङ्कावतरति; तथापि उपनयोत्तरत्वविशिष्टनिगमनत्वमिति प्रतीतौ सामानाधिकरण्यरूप-वैशिष्ट्यघटकतया निगमनभानमस्तीति तात्पर्यम्।

एतल्लक्षणं दूषयति- ***शब्दव्यक्तिभेदेनेति।*** पर्वतो वह्निमानितिशब्दः उच्चारयितृपुरुषभेदेन कालभेदेन च भिन्नः। आनुपूर्वीघटकतया प्रतिज्ञादीनां प्रतिज्ञात्वादिना सामान्यरूपेण निवेशे सति प्रतिज्ञोत्तरेत्याद्यानुपूर्वीविषयिता चैत्रमैत्राद्युच्चारितप्रतिज्ञादिविषयकप्रतीतिषु सर्वास्वस्ति। तत्र च सर्वत्र एकप्रतिज्ञादिव्यक्तिविषयिता नास्तीति कस्यांचिदपि प्रतिज्ञादिव्यक्तिविषयितायां आनुपूर्वीविषयिताव्यापकत्वं दुर्घटम्। चालिनीन्यायेन प्रतिज्ञादितत्तद्व्यक्तिविषयिता-

यत्किंचिदानुपूर्वीविषयिताव्यापकत्वस्य व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयतासाधारणत्वात् तादृशप्रतिज्ञादिविषयकन्यायविषयकज्ञानीयतयाविधानुपूर्वीविषयिताया एव तादृशप्रतिज्ञा-विषयताव्याप्यत्वात्। न च ज्ञानभेदेन विषयिताभेदानभ्युपगमान्नैवमिति वाच्यम्, तादृशप्रतिज्ञादिव्यक्तिसमानाधिकरणत्वादिना आनुपूर्वीविशेषावच्छिन्नन्यायविषयकज्ञानीयानुपूर्वी-विशेषविषयितायास्तादृशप्रतिज्ञादिव्यक्तिविषयिताशून्यावृत्तित्वात् तस्यास्तद्व्याप्यत्वानपायात्। अथ निगमनपूर्वोपनयपूर्वोदाहरणपूर्वहेतुपूर्वत्वरूपानुपूर्व्याश्रयत्वेन प्रतिज्ञायास्तादृशोदाहरण-

---

नामानुपूर्वीविषयितासमानाधिकरणात्यन्ताभावप्रतियोगित्वात् इति भावः। प्रतिज्ञादेरैक्ये ज्ञानभेदेन विषयिताभेदेऽपि प्रतिज्ञाविषयितात्वेन आनुपूर्वीविषयिताव्यापकत्वं संभवतीत्यतः शब्दव्यक्तिभेदेन भिन्नत्वकथनम्।

ननु तादृशानुपूर्वीविषयितासामान्यव्यापकत्वं न विवक्षितम् येनोक्तदोषः स्यात्। किं तु तादृशानुपूर्वीनिरूपितयत्किंचिद्विषयिताव्यापकत्वम्। यत्किंचित्पदेन यादृशप्रतिज्ञादिव्यक्तिविषयितासु व्यापकत्वमुपपादनीयम् तादृशप्रतिज्ञाद्युत्तरनिगमनत्व-विषयकप्रतीतिनिष्ठविषयिता ग्राह्या। तद्व्यापकत्वं च प्रतिज्ञादिव्यक्ति-विशेषविषयितास्वस्तीति नासम्भव इत्याशङ्क्याह–***यत्किंचित्तादृशानुपूर्वी-विषयिताव्यापकत्वस्येति। व्युत्क्रमप्रयुक्तेत्यादि।*** तथा च यत्किंचित्तादृशानु-पूर्वीविषयिताव्यापकविषयिताकप्रतिज्ञादिसमुदायत्वं न्यायत्वमित्युक्तावपि क्रमप्रयुक्तव्युत्क्रमप्रयुक्तप्रतिज्ञादिपञ्चकद्वयविषयकसमूहालम्बननिष्ठायाः आनुपूर्वीविषयितायाः यत्किञ्चिद्विषयितापदेन ग्रहणात् तद्व्यापकत्वं व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयितानामस्तीति तद्व्यापकविषयिताकप्रतिज्ञादिसमुदायत्वस्य व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदायेऽपि सत्त्वात् तत्रातिव्याप्तिरित्यर्थः। ***तादृशप्रतिज्ञादिविषयकेति।*** व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयकं यत् क्रमप्रयुक्तप्रतिज्ञादि-विषयकं समूहालम्बनज्ञानं तन्निष्ठायाः प्रतिज्ञोत्तरहेतूत्तरेत्याद्यानुपूर्वीविषयिताया इत्यर्थः। ***तादृशप्रतिज्ञादिविषयिताव्याप्यत्वादिति।*** व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयिता-व्याप्यत्वादित्यर्थः।। समूहालम्बनज्ञाननिष्ठायाः आनुपूर्वीविषयितायाः व्याप्यत्वकथनेन आनुपूर्वीविषयिताव्यापकत्वं व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयितायामुक्तं भवति।

***न च ज्ञानभेदेनेति।*** तथा च ज्ञानभेदेन विषयिताभेदानङ्गीकारात् समूहालम्बनज्ञानीया असमूहालम्बनज्ञानीया च आनुपूर्वीविषयिता एकैवेति यत्किञ्चिद्विषयितापदेन समूहालम्बनज्ञानीयानुपूर्वीविषयिताया ग्रहणेऽपि तस्याः

पूर्वत्वे सति प्रतिज्ञोत्तरत्वादिरूपानुपूर्व्याश्रयत्वेन च हेत्ववयवादीनां निवेशान्नानुपपत्तिः। अथवा तादृशैकविधानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वमेव तादृशानुपूर्वीघटकत्वमिति चेत्; एवमप्यैकैकन्यायघटकं यत्प्रतिज्ञाद्येकैकवाक्यं तत्समुदायेऽतिप्रसङ्गो दुर्वार एवेति

---

क्रमप्रयुक्तन्यायविषयकेऽसमूहालम्बनज्ञानेऽपि सत्त्वेन तत्र च व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयितानामभावात् तासां यत्किंचित्तादृशानुपूर्वी-विषयिताव्यापकत्वं नास्तीति न व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदायेऽतिव्याप्तिरिति भावः। ***तादृशप्रतिज्ञादिव्यक्तीति।*** व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमानाधिकरण-प्रतिज्ञोत्तरेत्याद्यानुपूर्व्यवच्छिन्नो न्यायः इत्याकारकज्ञाननिष्ठा या आनुपूर्वीविषयिता सा सामानाधिकरण्याविषयके न्यायज्ञाने नास्ति। तथा च तस्मिन् ज्ञाने व्युत्क्रमप्रयुक्तप्रतिज्ञादिव्यक्तीनां विषयत्वात् तज्ज्ञानीयानुपूर्वीविषयिताव्यापकत्वस्य तासु सत्त्वात् अतिव्याप्तिर्दुर्वारित्याशयः। ***तादृशप्रतिज्ञादीति।*** व्युत्क्रमप्रयुक्त-प्रतिज्ञादीत्यर्थः। ***तस्याः*** – आनुपूर्वीविषयितायाः। ***तद्व्याप्यत्वानपायादिति।*** व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयिताव्याप्यत्वानपायादित्यर्थः।

ननु उचितानुपूर्वीकत्वं नाम उचितानुपूर्व्याश्रयत्वमेव। आनुपूर्वी च विशिष्टनिगमनत्वरूपा एकैव न लक्षणप्रविष्टा। किं तु प्रतिज्ञादिषु पञ्चसु प्रत्येकं या आनुपूर्व्यः पञ्च ताः निविष्टाः। तदाश्रयत्वं च पञ्चसु वाक्येषु तत्समुदायत्वं न्यायत्वमिति विवक्षणान्नानुपपत्तिरिति शङ्कते– ***अथ निगमनपूर्वेत्यादिना।*** निगमनपूर्वोपनयपूर्वोदाहरणपूर्वहेतुपूर्वत्व–निगमनपूर्वोपनयपूर्वोदाहरणपूर्वत्वे सति प्रतिज्ञोत्तरत्व–निगमनपूर्वोपनयपूर्वत्वे सति प्रतिज्ञोत्तरहेतूत्तरत्वनिगमनपूर्वत्वे सति प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरत्व–प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तर-निगमनत्वाश्रयप्रतिज्ञादिपर्याप्तसमुदायत्वं न्यायलक्षणमित्युक्तौ न दोष इति भावः।

***अथ वेति।*** प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वनिष्ठा-वच्छेदकताक प्रतियोगिताको यो भेदः तादृशनिगमनत्ववान्नेति प्रतीतिसाक्षिको भेदः तत्प्रतियोगितानिरूपितसाक्षात्परम्परासाधारणावच्छेदकत्वमेव उचितानुपूर्वीकत्वम्। तदाश्रयप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम्। यद्यपि निगमनत्वस्य भेदप्रतियोगितावच्छेदकत्वेऽपि निगमनस्य भेदप्रतियोगितावच्छेदकत्वं

चेत् मैवम्, स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदयत्वं तत्तदन्यत्वस्य समुदायत्वविशेषणत्वे तात्पर्यात्। व्युत्क्रमप्रयुक्तप्रतिज्ञादिनिष्ठस्य नानान्यायान्तर्गतप्रतिज्ञादि-पञ्चकनिष्ठस्य च समुदायत्वस्य तत्तदन्यत्वविरहान्नातिप्रसङ्गः। एवञ्च घटमानयेत्यादि-वाक्यवृत्तिसमुदायत्ववारणाय प्रतिज्ञादिवृत्तित्वविशेषणमपि सार्थकमित्यवधेयम्, प्रतिज्ञादिवृत्तित्वं च (प्रतिज्ञात्वाद्यवच्छिन्नवृत्तित्वम्) प्रतिज्ञात्वादिपर्याप्त्यवच्छेदक(यत्किंचि)द्धर्म-पञ्चकव्यापकत्वम्, अतः प्रतिज्ञादिपञ्चकैकदेशसमुदाये नातिप्रसङ्गः। प्रतिज्ञात्वादे

---

नायाति, तथापि विशिष्टनिगमनत्वरूपानुपूर्व्याः स्वाश्रयनिगमन-वृत्तित्वसंबन्धेनावच्छेदकत्वात् सम्बन्धघटकतया निगमनस्यावच्छेदकत्वमित्याहुः। यद्वा उपनयोत्तरनिगमनत्वं सामानाधिकरण्यसंबन्धेन उपनयोत्तरत्वविशिष्टं निगमनत्वम्। तत्राधिकरणं निगमनमिति वैशिष्ट्यघटकतया निगमनस्या-वच्छेदकत्वमित्यवधेयम्।

***एवमपीति।*** यत्र एककाले पञ्चभिः पुरुषैः पञ्च समानाकाराणि प्रतिज्ञादीनि पञ्च वाक्यानि प्रयुक्तानि तत्र एकैकन्यायघटकम् एकैकं प्रतिज्ञादिकमादाय तत्समुदायेऽतिव्याप्तिः। चैत्रीयप्रतिज्ञामैत्रीयहेतु-इति रीत्या आदायेति यावत्। एवं च उचितानुपूर्वीकत्वनिर्वचनासंभवात् तद्घटितं न्यायलक्षणं न युक्तमिति आक्षेपः तिष्ठति।

तत्समाधानमाह- ***मैवमित्यादिना। स्वं-*** समुदायत्वम्। व्युत्क्रमप्रयुक्त-प्रतिज्ञादिसमुदायत्वे स्वाश्रयीभूतप्रतिज्ञाव्यवहितोत्तरत्वशून्यहेतुवृत्ति-समुदायत्वरूपतया तदन्यत्वविरहान्नातिव्याप्तिः। एकैकन्यायघटकप्रतिज्ञाद्येकैक-वाक्यसमुदायत्वमपि स्वाश्रयीभूतमैत्रीयप्रतिज्ञाव्यवहितोत्तरत्वशून्यचैत्रीयहेतुवृत्तीति तदन्यत्वविरहान्नातिव्याप्तिः। ***तात्पर्यादिति।*** उचितानुपूर्वीकेत्यस्येत्यादिः। तथा च स्वाश्रयीभूतप्रतिज्ञाव्यवहितोत्तरत्वशून्यहेतुवृत्तित्वस्वाश्रयीभूत हेत्वव्यवहितोत्तरत्व-शून्योदाहरणवृत्तित्वस्वाश्रयीभूतोदाहरणाव्यवहितोत्तरत्वशून्योपनयवृत्तित्व-स्वाश्रयीभूतोपनयाव्यवहितोत्तरत्वशून्यनिगमनवृत्तित्वान्यतमसंबन्धेन समुदायत्व-विशिष्टान्यत्वं प्रतिज्ञादिपञ्चकसमुदायत्वे निवेशनीयमिति फलितम्।

न च स्वाश्रयीभूतप्रतिज्ञादिपदं व्यर्थम्। तथा सति स्वाश्रयीभूतयत्किंचिदव्यवहितोत्तरत्वशून्यत्वादेर्विवक्षणीयतया असंभवापत्तेः। स्वाश्रयीभूतयत्किंचित्पदेन निगमनमादाय तदव्यवहितोत्तरत्वशून्यत्वस्य प्रतिज्ञादौ

सत्वात् तद्वृत्तित्वस्यैव प्रतिज्ञादिसमुदायत्वे सत्वात्। नूनक्तसमुदायत्वान्यसमुदायत्वं न्यायत्वमित्येवोच्यताम्, किमन्यत्वाश्रयसमुदायत्वे प्रतिज्ञादि-पञ्चपर्याप्तत्वनिवेशेनेत्यत आह- **एवं चेति।** घटमानयेति वाक्यवृत्तिसमुदायत्वस्यापि उक्तसमुदात्वान्यत्वात् तदाश्रये घटमानयेति वाक्येऽतिव्याप्तिवारणाय समुदायत्वे प्रतिज्ञादिवृत्तित्वनिवेश इति भावः। विशेषणमपि सार्थकमित्यपिना अथवेत्यादिपूर्वकल्पे तत्सार्थक्यं नास्तीति सूचितम्। अधिकमन्यत्र।

ननु समुदायत्वे प्रतिज्ञादिवृत्तित्वनिवेशेऽपि प्रतिज्ञादिपञ्चकैकदेशे प्रतिज्ञाद्यवयवसमुदायेऽतिव्याप्तिः। प्रतिज्ञादिवृत्ति यत् समुदायत्वं तदाश्रयत्वस्य तत्रापि सत्त्वादित्यत आह-**प्रतिज्ञादिवृत्तित्वं चेति।** प्रतिज्ञात्वादि-पर्याप्त्यनुयोगितावच्छेदका ये पञ्च प्रतिज्ञाघटकयावद्वर्णसमुदायत्व-हेतुघटकयावद्वर्णसमुदायत्वादिरूपाः तद्व्यापकसमुदायत्वं न्यायत्वम्। धर्मपञ्चकव्यापकत्वं च प्रतिज्ञाद्येकदेशगतसमुदायत्वे नास्तीति प्रतिज्ञाद्येकदेशभूत-समुदायेऽतिव्याप्तिरिति भावः। धर्मे यत्किंचित्त्वानिवेशेऽसंभवः। तथाहि-प्रतिज्ञात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य समानानुपूर्वीकन्यायान्तर-घटकसमुदायत्वेऽपि सत्त्वेन तद्व्यापकत्वस्य एतद्प्रतिज्ञाघटितन्यायगतसमुदायत्वे विरहात्। तदुपादाने तु यत्किंचित्प्रतिज्ञागतसमुदायत्वव्यापकत्वस्य यत्किंचिन्न्यायगतसमुदायत्वे सत्त्वाल्लक्षणसमन्वयः। ***प्रतिज्ञादिपञ्चकैकदेशसमुदाय*** इति। प्रतिज्ञादीनाम् पञ्चानां एकदेशभूते पर्वतः वह्निमान् इत्यादिरूपे समुदाये इत्यर्थः। प्रतिज्ञात्वपर्याप्तेः अनुयोगितावच्छेदकं पर्वतपदत्वम् गृहीत्वा तद्व्यापकत्वस्य पर्वतपदनिष्ठे समुदायत्वे सत्त्वात् तदाश्रये पर्वतपदे कुतो नातिव्याप्तिः इति शङ्कायामाह - **प्रतिज्ञात्वादेरिति।** प्रतिज्ञात्वं पर्वतपदे वह्निमत्पदे च व्यासज्यवृत्ति। अतः प्रतिज्ञात्वपर्याप्त्यनुयोगितावच्छेदकं पकारादिनकारान्तयावद्वर्णगतं समुदायत्वमेव। न तु पर्वतपदत्वं, तादृशसमुदायत्वव्यापकत्वञ्च पर्वतपदनिष्ठे समुदायत्वे नास्तीति प्रतिज्ञैकदेशे नातिव्याप्तिरिति भावः। ननु धर्मपञ्चकव्यापकसमुदायत्वं न्यायत्वमित्युक्तावपि तादृशसमुदायत्वाश्रयत्वस्य न्यायैकदेशे सत्त्वात् न्यायैकदेशे न्यायव्यवहारापत्तिः इत्यत आह - **समुदायत्वं चेति।** पर्याप्तिसंबन्धेन पूर्वोक्तसमुदायत्ववत्त्वं न्यायव्यवहारनिमित्तम्। तेन संबन्धेन न्यायैकदेशे समुदायत्वाभावात् न न्यायव्यवहारापत्तिः इति भावः।

**प्रतिज्ञात्वादिकं पुनरुदासीनवाक्यवारकन्यायान्तर्गतत्वादिविशेषणशून्यमेवोपादेयमिति नान्योन्याश्रयः।**

---

व्यासज्यवृत्तित्वात्तदाश्रयैकदेशमात्रवृत्तेस्तत्पर्याप्त्यनवच्छेदकत्वात्। समुदायत्वं चानेकपर्याप्तो धर्मः तस्य पर्याप्तिसम्बन्धेन न्यायपदप्रवृत्तिनिमित्तत्वान्नैकदेशे न्यायत्वव्यवहारप्रसङ्ग इति तु विभावनीयम्। ननु प्रतिज्ञादिलक्षणे न्यायान्तर्गतत्वविशेषणस्य प्रवेशनीयतया अन्योन्याश्रयप्रसङ्ग इत्यत आह– ***प्रतिज्ञात्वादिकमिति। उदासीनवाक्यवारकेति।*** न्यायानन्तर्गत. वाक्यवारणमात्रप्रयोजनकेत्यर्थः। एतेन न्यायानन्तर्गतप्रतिज्ञादिपञ्चकसमुदायस्य उचितानुपूर्वीकत्वविरहादेव न्यायत्वाप्रसक्तेर्न्यायघटकप्रतिज्ञादिशरीरे तादृशविशेषणानुपादानेपि न क्षतिरिति सूचितम्। (अत्र केचित् – असाधकतास्थलीयन्यायेऽव्याप्तिः, तत्रा–

---

ननु उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वमिति दीधितिकारोक्तन्यायलक्षणे प्रतिज्ञादीनां प्रवेशात् प्रतिज्ञादिलक्षणे च न्यायबहिर्भूतप्रतिज्ञादौ अतिव्याप्तिवारणाय न्यायान्तर्गतत्वरूपविशेषणस्य प्रवेशनीयतया अन्योन्याश्रयः। न्यायलक्षणे ज्ञाते न्यायान्तर्गतत्वघटितप्रतिज्ञादिलक्षणज्ञानम्। प्रतिज्ञादिलक्षणे ज्ञाते प्रतिज्ञादिघटितन्यायलक्षणज्ञानमिति इत्याशङ्क्य न्यायलक्षणप्रविष्टप्रतिज्ञादिपदार्थे न्यायान्तर्गतत्वं न निविष्टम्। न्यायानन्तर्गतप्रतिज्ञादिसमुदाये उचितानुपूर्वीकत्वविरहादेव न्यायलक्षणातिव्याप्तेः वारणसंभवात् इत्याशयेन ***प्रतिज्ञात्वादिकं पुनः*** इति दीधितिग्रन्थः प्रवृत्तः। ***अत्रोपादेयमिति*** – न्यायलक्षणे उपादेयमित्यर्थः। तथा च प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाह्यनुमित्यन्यूनातिरिक्तविषयकशाब्द–ज्ञानजनकत्वं न्यायलक्षणप्रविष्टं प्रतिज्ञात्वम्। अतो नान्योन्याश्रयः।

गादाधर्या–***अत्र केचिदिति।*** "असाधकतास्थलीयन्याये–अर्थात् यः हेतुः साध्यसाधको न भवति तत्स्थलीयन्यायेप्रतिज्ञादिपञ्चकसमुदायत्वं नास्ति। तत्रत्यहेतोः साध्यनिरूपितव्याप्तिशून्यत्वेन व्याप्तिप्रदर्शकस्य उदाहरण–वाक्यस्याभावात्। उदाहरणव्यतिरिक्तानां चतुर्णामेव अवयवानां प्रयोगात्" इति केचिदाहुः। तन्मतमयुक्तम्। साध्यसाधनभेदेन न्यायभेदात् असाधकतास्थले चतुरवयवस्यैव न्यायस्य ग्राह्यत्वात्। यदि तु समयबन्धस्थले सर्वत्रैव पञ्चावयवप्रयोगः इति मन्यते, तदा तत्रापि पञ्चावयवप्रयोग एव स्वीकरणीय इति। समयबन्धो नाम 'त्वया एतादृशं साध्यमवलम्ब्य न्यायः प्रयोक्तव्यः मया तु एतादृशम्' इति वादिनोः सङ्केतः। ***तत्राव्याप्तेरिति।***

**साध्यादिविशेषनियन्त्रिताश्च प्रतिज्ञादयो वाच्या इति न विभिन्नसाध्यादिकप्रतिज्ञादिसमुदायेऽतिव्याप्तिः।**

**व्याप्त्यादेरिव साध्याद्यननुगमादननुगमो न्यायादेरपीष्यत एव। एतेन प्रतिज्ञानिगमनयोः उदाहरणावयवान्तरयोश्च न सम्भूयैकार्थप्रतिपादकत्वम् ।**

---

व्याप्तेरुभयवादिसिद्धत्वेनोदाहरणाभावेन पञ्चावयवाभावादिति; तन्न। साध्यसाधनभेदेन न्यायभेदात् चतुरवयवस्यैव ग्राह्यत्वादिति। यदि च सर्वत्रैव समयबन्धस्थले पञ्चावयवप्रयोग इति मन्यते, तदाभिमतनिर्वाहाय समयबन्धं विनापि सर्वत्रैव पञ्चावयवप्रयोग इति मतं स्वीकरणीयमिति।) क्रमप्रयुक्तविभिन्नपक्षसाध्यहेतुक-प्रतिज्ञादिपञ्चकेऽतिव्याप्तिशङ्कां निरस्यति **साध्यादीति।** तत्साध्यपक्षहेतुकन्यायलक्षणे तत्साध्यपक्षकप्रतिज्ञातत्साधनकहेतुतत्साध्यसाधनकोदाहरणतत्साध्यपक्षसाधन-कोपनयतत्साध्य- साधनकनिगमनानि निवेशनीयानीत्यर्थः। नन्वेवं न्यायपदार्थस्याननुगततया

---

व्याप्त्यभावस्येत्यर्थः।*क्रमप्रयुक्तविभिन्नपक्षसाध्यहेतुकप्रतिज्ञादिपञ्चक* इति। 'पर्वतो वह्निमान् पृथिवीत्वात्; यो यो रसवान् स रूपवान् यथा घटः; सत्ताव्याप्यद्रव्यत्ववानयम्; तस्माद्गुणवान्' इत्यादौ उचितानुपूर्वीकप्रतिज्ञादि-समुदायत्वरूपन्यायलक्षणसत्वात् अतिव्याप्तिशङ्का। तत्परिहारस्तु तत्साध्यपक्षहेतुक-न्यायलक्षणे तत्साध्यपक्षकप्रतिज्ञा – तत्साधनकहेतु – तत्सध्यसाधनकोदाहरण-तत्साध्यपक्षसाधनकोपनयतत्साध्यसाधनकनिगमनानि निवेश्य तत्समुदायत्वं लक्षणमिति वक्तव्यम्। अतः नोक्तातिव्याप्तिरिति। साध्यसाधनभेदेन न्यायपदार्थभेदस्तु इष्ट एवेति।

मणिकारोक्तयथाश्रुतन्यायलक्षणे दोषमाह दीधितौ **एतेनेत्यादिना।** अनुमितिचरमकारण लिङ्गपरामर्शप्रयोजकशाब्दज्ञानपदेन एकवाक्यतापन्नैःपञ्चभिः वाक्यैः जायमानस्य एकविशिष्टार्थबोधस्य ग्रहणेन न्याये लक्षणसमन्वयः कर्तु न शक्यते। न्यायघटकयोः द्वयोः अवयवयोरेव मिलित्वा एकार्थप्रतिपादकत्वाभावेन पञ्चानां वाक्यानां संभूय एकार्थप्रतिपादकतायाः सुतरामसंभवात्। तथा हि – प्रतिज्ञानिगमनयोस्तावत् न संभूय एकार्थप्रतिपादकत्वम् 'वह्निमान् पर्वतः अबाधितत्वादिविशिष्टधूमज्ञानज्ञाप्यवह्निमान्' इत्याकारकविशिष्टार्थबोध-जनकत्वस्य वह्निमत्त्वांशमादाय पौनरुक्त्यप्रसङ्गेन असंभवात्। एवं उदाहरणस्य अवयवान्तरस्य च न एकविशिष्टार्थबोधकत्वम्। उदाहरणघटकयोः

न्यायपदस्य नानार्थकतापत्तिरित्यत्रेष्टापत्तिमाह ***व्याप्त्यादेरिवेति।*** व्याप्त्यादिपदार्थस्येवेत्यर्थः। ***साध्याद्यननुगमात्।*** स्वघटकसाध्यादीनां भिन्नभिन्नरूपेण निवेशनीयत्वात्। ***अननुगमः*** अनुगतप्रवृत्तिनिमित्तविरहः। ***न्यायादेः*** – न्यायादिपदार्थस्य। आदिपदादवयवादिपरिग्रहः। ***इष्यत एवेति।*** गत्यन्तराभावादिति भावः। यथाश्रुतमूलस्वरससिद्धवाक्यपञ्चकजन्य-महावाक्यार्थबोधमादाय लक्षणसमन्वयं निराचिकीर्षुः वाक्यपञ्चकस्यैकविशिष्टार्थवोधकतां खण्डयति ***प्रतिज्ञानिगमनयोरिति।*** न सम्भूयैकार्थप्रतिपादकत्वमित्यग्रेतनेनान्वयः। प्रतिज्ञार्थे वह्निमति पर्वते निगमनार्थस्य विशिष्टहेतुज्ञानज्ञाप्यसाध्यवत्त्वस्यान्वयबोधोपगमे साध्यवत्त्वांशमादाय

---

यत्तत्पदघटितभागयोरपि एकविशिष्टार्थबोधकत्वाभावेन उदाहरणावयवान्तरयोः सुतरां तदभावात्। परन्तु प्रतिज्ञाहेत्वोः एकविशिष्टार्थबोधकत्वं वक्तुं शक्यते। प्रतिज्ञाहेतुभ्यां संभूय धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतः' इति बोधस्य उत्पादनसंभवात्। एवं निगमने उपनयस्थस्य 'अयं' पदस्य अननुषङ्ग इति पक्षे उपनयनिगमनाभ्यां 'धूमज्ञानज्ञाप्यवह्निमदभिन्नः वह्निव्याप्यधूमवत्पर्वतः' इति विशिष्टार्थबोधस्य जननात् उपनयनिगमनयोः एकविशिष्टार्थबोधकत्वं वक्तुं शक्यते। परन्तु पञ्चानामवयवानां एकविशिष्टार्थबोधकत्वं न संभवत्येवेति मणिकारलक्षणे असंभवरूपो दोषः। तर्हि प्रतिज्ञादीनां पञ्चानामेकवाक्यताव्यवहारः कथं इति शङ्कायां मानसविशिष्टपरामर्शतात्पर्येण प्रयुक्तत्वात् एकवाक्यताव्यवहारः इति समाधेयम्। किञ्च मणिकृल्लक्षणे न्यायजन्यशाब्दबोधस्य परामर्शप्रयोजकत्वं यदुक्तं तत्किं परामर्शविषयपदार्थोपस्थापकतया उत परामर्शानुकूलत्वमात्रेण। आद्ये परामर्शविषयव्याप्त्याद्युपस्थापकत्वम् उदाहरणोपनययोरेवास्तीति परामर्शप्रयोजकशाब्दज्ञानजनकत्वं तयोरेव पर्यवस्येत्, न तु पञ्चसु वाक्येषु। द्वितीये 'को वह्निमान्? कुतः?' इत्यादिवाक्यानामपि जिज्ञासाज्ञापनद्वारा अवयवप्रयोगहेतुत्वेन तद्द्वारा परामर्शानुकूलत्वम् अस्तीति तेषु वाक्येषु न्यायलक्षणातिव्याप्तिः। अतः मणिकारीययथाश्रुतं न्यायलक्षणं न युक्तमिति दीधितिग्रन्थसारार्थः।

प्रतिज्ञानिगमनयोः संभूय एकार्थप्रतिपादकत्वाभावम् उपपादयति गादाधर्याम् ***प्रतिज्ञार्थे वह्निमत्पर्वत*** इत्यादिना। 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्यार्थः वह्निविशिष्टपर्वतः। 'तस्मात् तथा' इति निगमनार्थः अबाधितत्वादि-विशिष्टधूमज्ञानज्ञाप्यवह्निमत्त्वम्। तत्र प्रतिज्ञार्थे निगमनार्थान्वयं स्वीकृत्य

पौनरुक्त्यप्रसङ्गात्। दण्डवान् रक्तदण्डवानित्यादाविव विधेयांशे अधिकावगाहि- नस्तादृशान्वयबोधस्य सम्भवेपि शुद्धपक्षतावच्छेदकविशिष्टेऽबाधितत्वादिविशिष्ट- साध्यवत्तावगाहिन्याः प्रतीतेरेवोपयोगित्वेन साध्यविशिष्टपक्षे तादृशसाध्य- वत्तान्वयबोधस्यानाकांक्षिततया वादितात्पर्याविषयत्वाच्च। यत्तु वह्निविशिष्टपर्वतोद्देश्यकबोधे वह्निमत्पदोत्तरपर्वतपदोपस्थितिरपेक्षिता, नीलो घटस्सुन्दर इत्यादाविव घटो नीलस्सुन्दर इत्यादौ नीलान्वितघटाद्यंशे विधेयाभानादुद्देश्यतावच्छेदकवाचकपदस्य

---

'वह्निमान् पर्वतः धूमज्ञानज्ञाप्यवह्निमान्' इत्याकारकः एकविशिष्टार्थबोधः प्रतिज्ञानिगमनाभ्यां जायत इति स्वीकारे वह्निमत्त्वस्य द्विधा भानेन पौनरुक्त्यम् इति भावः।

ननु 'दण्डवान् रक्तदण्डवान्' इति वाक्यात् दण्डवत्त्वावच्छिन्नो- द्देश्यतानिरूपितरक्तदण्डवत्त्वावच्छिन्नविधेयताको बोधो जायते। तत्र दण्डवत्त्वस्य उद्देश्यतावच्छेदकतया विधेयतया च द्विःभानेऽपि, विधेयांशे रक्तत्वस्य अधिकस्य भानेन यथा न पौनरुक्त्यम्, तथा प्रतिज्ञानिगमनजन्यशाब्दबोधे वह्निमत्त्वांशस्य द्विधा भानेऽपि विधेयांशे धूमज्ञानज्ञाप्यत्वस्य अधिकस्य भानात् न पौनरुक्त्यप्रसङ्गः इत्याशङ्क्य दोषान्तरमाह–**दण्डवान् रक्तदण्डवानिति।** शुद्धपर्वतत्वावच्छिन्ने अबाधितत्वादिविशिष्टसाध्यवत्ताविषयिण्याः एव प्रतीतेः आकाङ्क्षितत्वेन वह्निविशिष्टपर्वते तदवगाहिप्रतीतेः अनाकाङ्क्षिततया वादितात्पर्याविषयतया तादृशशाब्दबोधस्य न प्रकृतोपयोग इति भावः।

केचित्तु – वह्निविशिष्टपर्वतोद्देश्यक–अबाधितत्त्वादिविशिष्ट–धूमज्ञान– ज्ञाप्यवह्निमत्त्वावच्छिन्नविधेयताकशाब्दबोधः प्रतिज्ञानिगमनाभ्यां उत्पादयितुं न शक्यते। उद्देश्यतावच्छेदकवाचकपदस्य उद्देश्यवाचकपदात् पूर्वं प्रयोग इति नियमात् 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्ये उद्देश्यवाचकपर्वतपदात् अनन्तरमेव उद्देश्यतावच्छेदकवाचकवह्निमत्पदस्य प्रयोगात् वह्निविशिष्टपर्वतोद्देश्यकबोधस्य उक्तप्रतिज्ञावाक्यात् असम्भवात्। उक्तनियमानङ्गीकारे 'नीलो घटः सुन्दरः' इत्यत्र यथा नीलत्वविशिष्टघटोद्देश्यकसुन्दरत्वविधेयकबोधो जायते, तथा 'घटो नीलस्सुन्दरः' इत्यादावपि नीलत्वविशिष्टघटे सुन्दरत्वरूपविधेयभानं स्यात् इति रीत्या प्रतिज्ञानिगमनयोः एकार्थप्रतिपादकत्वाभावं उपपादयन्ति,

उद्देश्यवाचकपदपूर्ववर्तिताया अपेक्षणीयत्वात्, अतो नैतादृशान्वयबोधसम्भवः, न च शुद्धपर्वतत्वावाच्छिन्न एव शुद्धवह्निमत्त्वनिगमनोपस्थाप्यविशिष्टवह्निमत्त्वयोर्युगपद्विधेयतया अन्वयोपगमेनैकवाक्यत्वं निर्वहतीति वाच्यम्, गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति न्यायेनविधेयतया भासमानयोः शुद्धवह्निमत्त्वविशिष्टवह्निमत्त्वयोरवच्छेद्यावच्छेदक-भावापन्नविषयिताकत्वरूपसम्बन्धाभावेनैकवाक्यत्वानिर्वाहात्, अत एव विधेयभेदे सर्वत्र वाक्यभेदः, केवलोपनयजन्यबोधे पक्षे साध्यव्याप्यहेतुमत्त्वस्य विधेयत्वेपि उपनय-

---

तन्मतमनुवदति–***यत्तु*** इत्यादिना। न ***तादृशान्वयबोधसंभव*** इति। वह्निमत्पर्वतत्वावच्छिन्नोद्देश्यकनिगमनार्थविधेयताकान्वयबोधो न संभवतीत्यर्थः।

ननु 'पर्वतो वह्निमान्' इति प्रतिज्ञया 'तस्मात् तथा' इति निगमनेन च 'पर्वतः वह्निमान्, अबाधितत्वविशिष्टधूमज्ञानज्ञाप्यवह्निमाँश्च' इत्याकारकः शुद्धपर्वतत्वावच्छिन्नोद्देश्यताकः शुद्धवह्निमत्त्वविशिष्टवह्निमत्त्वोभयविधेयकः शाब्दबोधो जायते। तथा च तादृशविशिष्टार्थबोधजनकतया प्रतिज्ञानिगमनयोः एकवाक्यत्वमस्तु इति शङ्कते – ***न च शुद्धपर्वतत्वावच्छिन्ने*** इति। समाधत्ते–***गुणानां चेति।*** 'गुणानां च परार्थत्वात् असंबन्धः समत्वात् स्यात्' इति जैमिनिसूत्रम्। तदर्थश्च– गुणानां– विधेयानां परार्थत्वात्–उद्देश्यमात्रसाकाङ्क्षत्वात् परस्परं संबन्धाभावः। उभयोः विधेयत्वेन तुल्यत्वात् इति। एतावता किमुक्तं भवति इति चेत्–उच्यते। शुद्धपर्वतत्वावच्छिन्नमुद्दिश्य शुद्धवह्निमत्त्वविशिष्टवह्निमत्त्वयोः द्वयोः विधेयत्वाङ्गीकारे विधेयभेदेन वाक्यभेदस्य प्रसङ्गः। तत्परिहाराय द्वयोः विधेययोः अवच्छेद्यावच्छेदकभावेन भानं तु न वक्तुं शक्यते। द्वयोः परस्परं संबन्धाभावात्। अतः वह्निविशिष्टं पर्वतमुद्दिश्य अबाधितत्वादिविशिष्टवह्निमत्त्वस्य विधेयत्वमङ्गीकरणीयम्। तत्र तु पूर्वोक्त एव दोषः इति।

ननु प्रतिज्ञानिगमनयोः उक्तरीत्या विशिष्टैकार्थबोधकत्वनिराकरणे कथञ्चिदुपनयनिगमनयोरिति वक्ष्यमाणदीधितिग्रन्थेन उपनयनिगमनयोः एकवाक्यतोक्तिः कथं सङ्गच्छताम्? तत्रापि वह्निव्याप्यधूमवत्त्ववह्निमत्त्वयोः द्वयोः विधेयतया भानेन वाक्यभेदस्यावश्यकत्वात् इत्यत्राह–***केवलोपनयजन्यबोधे*** इति। 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकात् उपनयवाक्यात् यद्यपि पर्वतत्वावच्छिन्नोद्देश्यकवह्निव्याप्यधूमवत्त्वविधेयकबोधः जायते, तथापि

निगमनाधीनबोधे उद्देश्यपदपूर्वनिर्दिष्टव्याप्यवत्पदार्थस्य उद्देश्यतावच्छेदकतयैव भानेन तद्विषयकत्वनिगमनार्थविषयकत्वयोरवच्छेद्यावच्छेदकभावात्तदुभयैकवाक्यतेति, तन्न – तात्पर्यसत्त्वे योजनयापि तादृशबोधसम्भवात्, उद्देश्यवाचकपदस्य विधेयवाचकपदपूर्वत्वेन प्रतिसन्धानस्यापेक्षणीयतया योजनयैवोपनयेन पक्षे अयंपदार्थे साध्यव्याप्यवत्त्वबोधनात् तात्पर्यसत्त्वे वादिवाक्ये योजनायाः दूषणानर्हत्वात्, तात्पर्यविरहस्यैव तत्र बीजत्वात्। इदमुपलक्षणम्, उपनयेनापि समं प्रतिज्ञायाः न विशिष्टैकार्थप्रतिपादकत्वं वह्निमति पर्वते

---

उपनयनिगमनाभ्यां जायमाने शाब्दबोधे वह्निव्याप्यधूमवत्त्वं न विधेयतया भासते। किन्तु उद्देश्यतावच्छेदकतया। निगमनार्थ एव विधेयतया भासते। 'वह्निव्याप्यधूमवान् पर्वतः अबाधितत्वादिविशिष्टधूमज्ञानज्ञाप्यवह्निमान्' इत्याकारकबोधस्य स्वीकारात्। उद्देश्यवाचकपर्वतपदात् पूर्वं उद्देश्यतावच्छेदकवाचकस्य वह्निव्याप्यधूमवत्पदस्य प्रयोगात् पूर्वोक्तनियम-भङ्गविरहात्। अतः उपनयनिगमनयोः एकविशिष्टार्थबोधकत्वरूपा एकवाक्यता सङ्गच्छते। प्रतिज्ञानिगमनयोस्तु नैवम्। उद्देश्यतावच्छेदकवाचकपदस्य पूर्वं प्रयोगाभावात् इति **'यत्तुकारणामाशयः।'**

तन्मतं निराकरोति–***तन्नेत्यादिना।*** सति तात्पर्ये पूर्वं प्रयुक्तस्य पदस्य पश्चात् योजनयापि वह्निमत्पर्वतोद्देश्यकबोधस्य संभवात्। अत्र योजना नाम पूर्वं प्रयुक्तस्य पश्चात्प्रयुक्तत्वेनानुसन्धानम्। यथा हि 'वह्निव्याप्यधूमवानयम्' इति केवलात् उपनयात् अयंपदार्थोद्देश्यक–वह्निव्याप्यधूमवत्त्वविधेयकबोधः कथं संभवति। 'उद्देश्यवचनं पूर्वं विधेयस्य ततः परम्' इति नियमविरोधात् इति प्रश्ने पश्चात्प्रवृत्तस्य अयंपदस्य पूर्वं स्थितत्वेन अनुसन्धानरूपया योजनया तादृशबोधनिर्वाहः इति समाधीयते, तथा प्रकृतेऽपि। ***तत्र बीजत्वादिति।*** वादिवाक्ये योजनायाः दूषणार्हतायां तात्पर्यविरहस्यैव प्रयोजकत्वात् इत्यर्थः। एवञ्च प्रतिज्ञानिगमनयोः एकविशिष्टार्थप्रतिपादकत्वाभावः दीधितिकारोक्तः। तत्र उद्देश्यतावच्छेदकवाचकपदस्य पूर्वप्रयोगाभावः न निमित्तम्। किन्तु पूर्वोक्तरीत्या पौनरुक्त्यप्रसङ्गो वा वादितात्पर्याविषयत्वं वा निमित्तमिति सिद्धम्।

***इदमुपलक्षणमिति।*** प्रतिज्ञानिगमनयोः विशिष्टैकार्थप्रतिपादकत्वाभावकथनं प्रतिज्ञोपनययोः विशिष्टैकार्थप्रतिपादकत्वाभावस्य प्रदर्शकम् इत्यर्थः। तदुपपादयति

उपनयार्थस्य साध्यव्याप्यहेतुमत्पक्षस्याप्राप्ततादृशहेतुमत्त्वांशघटिततया विधेयत्वसम्भवेपि अनुमित्युपयोगिनः पक्षतावच्छेदकविशिष्टे हेतुमत्त्वस्याकांक्षयैवोपनयप्रतिदनादनाकांक्षितस्य पर्वते पर्वताभेदबोधस्य तात्पर्याविषयत्वात्। ***उदाहरणावयवान्तरयोरिति।*** उदाहरणघटकयोर्यत्तत्पदघटितभागयोरपि नैकविशिष्टार्थबोधकत्वं तत्र द्विरुक्तयत्पदेन महानसत्वमहानसान्यत्वादिनोद्देश्योपस्थापनात् तत्तत्पदेनापि तत्तद्रूपावच्छिन्नपरामर्शान्महानसं धूमवद्वह्निमच्च महानसान्यद्धूमवद्वह्निमच्चेति वाक्यार्थचतुष्टयविषयकसमूहालम्बन-बोधस्यैवोदयात्। न च वीप्सया व्यापकत्वबोधनाद्धूमवान्धूमव्यापकवह्निमानित्याकारक

---

– ***उपनयेनापि सममित्यादिना।*** प्रतिज्ञार्थं वह्निमत्पर्वतमुद्दिश्य उपनयार्थस्य वह्निव्याप्यधूमवत्पर्वतस्य अभेदसंबन्धेन विधेयत्वमवगाहमानः 'वह्निमत्पर्वतः वह्निव्याप्यधूमवत्पर्वताभिन्नः' इत्याकारकशाब्दबोधः प्रतिज्ञोपनयाभ्यां यद्यपि संभवति, विधेयपर्वतांशे, अप्राप्तस्य वह्निव्याप्यधूमवत्त्वस्य अधिकस्य विशेषणतया भानात्, तथापि उपनयवाक्येन पर्वते वह्निव्याप्यधूमवत्त्वमेव आकाङ्क्षितत्वात् बोधनीयम्। न तु पर्वते पर्वताभिन्नत्वमपि। तस्य तात्पर्याविषयत्वात्। तथा च प्रतिज्ञोपनययोः उक्तविशिष्टार्थबोधजनकत्वं न संभवतीति भावः।

उदाहरणावयवान्तरयोः एकविशिष्टार्थबोधकत्वाभावमुपपादयति– ***उदाहरणघटकयोरिति।*** यो यो धूमवान् स वह्निमान् इति उदाहरणवाक्यम्। तत्र प्रथमयच्छब्दस्य महानसमर्थः। द्वितीययत्पदस्य महानसान्यत् इत्यर्थः। तत्पदेन महानसत्त्वावच्छिन्नं महानसान्यत्वावच्छिन्नं च परामृश्यते। तथा च उदाहरणवाक्यात् 'महानसं धूमवत्, वह्निमच्च', 'महानसान्यत् धूमवत्, वह्निमच्च' इति वाक्यार्थचतुष्टयविषयकः नानामुख्यविशेष्यकः समूहालम्बनबोध एव जायते। न तु एकविशिष्टार्थबोधः। एवञ्च उदाहरणस्यैव एकविशिष्टार्थबोधकत्वाभावे उदाहरणावयवान्तरयोः सुतरां स इति भावः।

***न च वीप्सयेति।*** 'यो यः' इति वीप्सया व्यापकत्वं बोध्यते। तथा च 'धूमवान् धूमव्यापकवह्निमान्' इत्याकारकः एकविशिष्टार्थबोध एव उदाहरणवाक्यात् जायत इति शङ्का। समाधानमाह – ***यो य इत्यादेरिति।*** 'धूमवान् धूमव्यापकवह्निमान्' इति बोधे द्विरुक्तयत्पदार्थस्य संसर्गः न भासत इति द्विरुक्तस्य यत्पदस्य अनन्वितार्थकत्वप्रसङ्गादित्यर्थः। ***न च द्विरुक्तयत्पदस्यैवेति।***

एकविशिष्टार्थबोध एव तत्रोत्पद्यत इति वाच्यम्; यो य इत्यादेरनन्वितार्थकत्वप्रसंगात्। न च द्विरुक्तयत्पदस्यैव व्यापकत्वमर्थः स च साध्यांशे अन्वेतीति वाच्यम्, नामार्थयोर्भेदान्वयबोधस्याव्युत्पन्नत्वात्। व्यापकत्वावच्छिन्नस्य तदर्थस्याभेदेनान्वय इत्यपि न सम्भवति। सुन्दरो दण्डीत्यादौ दण्डाद्यंशे सुन्दराद्यभेदानन्वयवत्समानविभक्तिकत्वाभावेन मत्वर्थीयप्रकृत्युपस्थाप्ये अर्थे असमस्तनामार्थभेदान्वयस्यासम्भवात्अभेदान्वयप्रतियोगिसापेक्षतया असामर्थ्येन साध्यवाचकपदोत्तरं तद्धितासम्भवाच्च, तत्पदस्य तावतापि सार्थक्यासम्भवाच्च। तस्माद्यत्पदार्थे हेतोः तत्पदार्थे च तस्मिन् साध्यस्य विधेयतया भानमेव समूहालम्बनरूपं तत्र जायते, तदुत्तरं व्यापकताबोधो मानसः, स एव वा शाब्दबोधः, साध्यवाचकपदस्य

---

यो यः इत्यस्य व्यापकत्वमर्थः। स च साध्येऽन्वेति इति वक्तुं न शक्यते। नामार्थयोः अभेदातिरिक्तसंबन्धेन अन्वयस्य अव्युत्पन्नत्वात्। नामभूतयत्पदार्थस्य व्यापकत्वस्य नामभूतवह्निपदार्थे आश्रयत्वसंबन्धेन अन्वयस्य असंभवात्। यत्तु द्विरुक्तयत्पदस्य व्यापकत्वविशिष्टमर्थः। तस्य अभेदसंबन्धेन वह्निपदार्थे वह्नौ अन्वय इति। तन्न। समानविभक्तिकपदोपस्थाप्ययोः अर्थयोरेव परस्परं अभेदान्वयस्य व्युत्पत्तेः वह्निपद-यत्पदयोः वह्निपदोत्तरं विभक्त्यभावेन समानविभक्तिकत्वाभावात् तदर्थयोः परस्परमभेदान्वयस्य असंभवात्। यथा 'सुन्दरो दण्डी' इत्यत्र दण्डिपदस्य सुन्दरपदसमानविभक्तिकत्वेन दण्डिपदार्थे दण्डवति सुन्दराभेदस्य अन्वयेऽपि मत्वर्थीय'इनि'प्रत्ययप्रकृतिदण्डपदोपस्थाप्येऽर्थे सुन्दराभेदः नान्वेति। दण्डपदस्य सुन्दरपदसमानविभक्तिकत्वाभावात्, तथा 'यो यो धूमवान् स वह्निमान्' इत्यत्र मतुप्प्रकृतिभूतस्य वह्निपदस्य द्विरुक्तयत्पदसमानविभकत्वाभावात् वह्निपदार्थे वह्नौ यत्पदार्थस्य व्यापकस्य अभेदेनान्वयः न संभवति। किञ्च वृत्त्येकदेशपदार्थस्य वृत्त्यघटकपदार्थेन साकं अन्वयस्वीकारे सामर्थ्यविरहेण 'वह्निमान्' इति तद्धितान्तवृत्तिरेव न सङ्गच्छते। सामर्थ्ये सत्येव समासतद्धितादीनां वृत्तीनां अनुशासनात्। तस्मात् यत्पदार्थे हेतोः, तत्पदपरामृष्टे यत्पदार्थे साध्यस्य विधेयतया भानरूपः समूहालम्बनबोध एव उदाहरणवाक्यात् जायते। साध्ये हेतुव्यापकताबोधस्तु मानस इति भावः। ***असमस्तनामार्थेति।*** समासाघटकप्रातिपदिकार्थेत्यर्थः। ***सापेक्षतयेति।*** समासाघटकपदार्थान्वितस्वार्थबोधकत्वं सापेक्षत्वम्। सापेक्षमसमर्थं भवतीति वैयाकरणाः। असामर्थ्ये च 'समर्थः पदविधिः' इत्याधिकारोक्तानि समासतद्धितादीनि

प्रकृतसाधनव्यापकताविशिष्टसाध्ये लाक्षणिकतया तत्पदार्थे व्यापकताविशिष्टसाध्यवत्तामवगाहत इत्युपेयम्। वीप्सासमभिव्याहारस्थले व्यापकत्वतात्पर्यस्यानादितया तादृशलक्षणाया निरूढलक्षणात्वेन वादिवाक्ये तत्स्वीकारे क्षतिविरहात्। न च व्यापकताबोधस्यावश्यकत्वे नानाहेत्वधिकरणे वह्न्यादिमत्त्वबोधनस्याप्रयोजकतया धूमादिकमुद्देश्यतावच्छेदकीकृत्य समूहालम्बनानात्मक एव व्यापकताविशिष्टसाध्यबोध उपेयतां यत्तत्पदन्तु तादृशलक्ष्यार्थ-तात्पर्यग्राहकमेवास्त्विति वाच्यम्; **अर्थबोधकत्वसम्भवे** तत्परित्यागायोगात्। यो यो न वह्निमान् स न धूमवानित्यादौ व्यतिरेक्युदाहरणे वह्निमद्भेदादिहेतुके धूमवद्भेदादिसाध्यके

---

न भवन्ति इति तात्पर्यम्। वृत्तिशब्देन कृत्तद्धितसमासैकशेषसनाद्यन्तधातवः वैयाकरणैः परिभाषिताः।

***स एव वा शाब्दबोध*** इति। व्यापकतावगाही समूहालम्बनशाब्दबोधः उदाहरणजन्य इत्यर्थः। शाब्दबोधाकारस्तु 'महानसं धूमवत्, धूमव्यापकवह्निमच्च, 'महानसान्यत् धूमवत्, धूमव्यापकवह्निमच्च' इति। साध्यवाचकपदस्य प्रकृतसाधनव्यापकताविशिष्टसाध्ये लक्षणां स्वीकृत्य उक्तबोध उपपादनीयः। वादिवाक्ये स्वारसिकलक्षणाया असंभवेऽपि निरूढलक्षणायाः संभवात्। वीप्सासमभिव्याहारस्थले व्यापकतायां तात्पर्यस्य अनादितया व्यापकतालक्षणायाः निरूढलक्षणात्वात् तत्स्वीकारे न कापि क्षतिरिति भावः। ***तत्पदार्थे*** इति। तत्पदपरामृष्टे महानसत्वावच्छिन्ने महानसान्यत्वावच्छिन्ने चेत्यर्थः।

***न च व्यापकताबोधस्येति।*** उदाहरणवाक्यात् साध्यपदे निरूढलक्षणया व्यापकत्वबोध इति स्वीकारे यत्पदं तत्पदं च लक्षणातात्पर्यग्राहकमिति स्वीकृत्य 'धूमवान् धूमव्यापकवह्निमान्' इत्याकारकधूमवत्त्वावच्छिन्नोद्देश्यताकः विशिष्टार्थबोध एव उदाहरणाज्जायत इति स्वीक्रियताम्। तथा चोदाहरणस्य एकवाक्यत्वमस्त्येव इति शङ्कितुराशयः। ***नानाहेत्वधिकरण*** इति। महानसत्वावच्छिन्ने महानसान्यत्वावच्छिन्ने चेत्यर्थः। ***अर्थबोधकत्वसंभवे*** इत्यादि। यत्तत्पदयोः अर्थबोधकत्वं स्वीकृत्य समूहालम्बनात्मके शाब्दबोधे संभवति अर्थबोधकत्वपरित्यागस्य अयुक्तत्वात् इति समाधातुराशयः। यत्तत्पदार्थयोः अवश्यं विवक्षा कार्येति उपपादयति – ***यो यो न वह्निमान्*** इत्यादिना। 'पर्वतो वह्निमान्' इत्यादिन्यायप्रयोगस्थले 'यो यो धूमवान् स वह्निमान्' इति अन्वय्युदाहरणम्। 'यो यो न वह्निमान् न स धूमवान्' इति व्यतिरेक्युदाहरणम्।

तादृशान्वय्युदाहरणे वा यत्तत्पदार्थाविवक्षायां प्रतियोगिवाचकपदसमानविभक्तिक-पदोपस्थाप्यस्यानुयोगिनोऽप्रवेशेन नञा तत्रान्योन्याभाववोधनासम्भवाच्च। एवं चैत्रो जानाति कर्तृत्वादित्यादौ न्यायान्तर्गते यो यः करोति स स जानातीत्युदाहरणे यत्तत्पदार्थाविवक्षायां धर्मिणोऽलाभेन साध्याद्याश्रयविकलतयोदाहरणाभासताप्रसङ्गाच्चेति। एवं चोदाहरण-समुदायस्यावयवान्तरेण समं विशिष्टार्थप्रतिपादकत्वं सुतरामेव न सम्भवतीति भावः। एतेन हेतूदाहरणयोर्धूमवान्धूमाद्वह्निमानित्येतादृशविशिष्टार्थबोधजनकत्वसम्भवादुदाहरणावयवान्तरयो-रित्यनुपपन्नमित्यपि निरस्तम्।

*द्रागेव* – सुतरामेव। न सम्भूयैकार्थप्रतिपादकत्वमित्यनुषज्यते। प्रतिज्ञाहेत्वोरित्यात्रापि

---

तत्र व्यतिरेक्युदाहरणे नञा वह्निमद्भेदः धूमवद्भेदश्च बोधनीयः। यदि यत्तत्पदार्थयोः विवक्षा स्यात् तर्हि यत्पदार्थे वह्निमद्भेदः तत्पदार्थे धूमवद्भेदश्च बोध्यत इति वक्तुं शक्यते। यदि यत्तत्पदार्थयोः अविवक्षा तर्हि अनुयोग्युपस्थापकपदाभावेन कुत्र नञा भेदो बोधनीयः। प्रतियोगिवाचक-पदसमानविभक्तिकपदोपस्थाप्यार्थानुयोगिकभेदबोधकत्वं नञ इति व्युत्पत्तेः। एवं ह्रदः धूमवद्भिन्नः वह्निमद्भेदात्' इत्यादौ 'यो यो न वह्निमान् स न धूमवान्' इति 'नञ्'घटिते अन्वयय्युदाहरणे यत्तत्पदार्थयोरविवक्षायां अनुयोगिनः अभावेन नञा भेदबोधनं न संभवति। एवं 'चैत्रो जानाति कर्तृत्वात्' इत्यादिन्यायान्तर्गते 'यो यः करोति स जानाति' इति उदाहरणे यत्तत्पदार्थयोः अविवक्षायां आख्यातार्थस्य आश्रयत्वस्य यःधर्मी तस्य अलाभेन उदाहरणस्य साध्याश्रयविकलता हेत्वाश्रयविकलता इति दोषः स्यात्। साध्यं ज्ञानाश्रयत्वम्, हेतुः कृत्याश्रयत्वम्। तथा च उदाहरणात् समूहालम्बनात्मकः विशिष्टैकार्थाविषयकः शाब्दबोध एव जायत इति उदाहरणात्मकसमुदायस्य विशिष्टार्थाबोधकत्वे सति अवयवान्तरेण समं तस्य विशिष्टार्थबोधकत्वं सुतरां न सम्भवतीति सिद्धम्। **एतेन** इति। उदाहरणरूपसमुदायस्य एकविशिष्टार्थाबोधकत्वसमर्थनेनेत्यर्थः। *हेतूदाहरणयोरित्यादि।* 'धूमात्' इति हेतुवाक्यार्थस्य धूमज्ञानज्ञाप्यत्वस्य उदाहरणघटकसाध्यवाचकपदार्थे साध्येऽन्वयं स्वीकृत्य यत्तत्पदार्थयोः अविवक्षया व्यापकतायां अनादितात्पर्यग्राहकत्वं स्वीकृत्य 'धूमवान् धूमज्ञानज्ञाप्य-धूमव्यापकवह्निमान्' इत्याकारकस्य विशिष्टैकार्थबोधस्य हेतूदाहरणाभ्यां सम्भवात् उदाहरणावयवान्तरयोः एकवाक्यता न सम्भवतीत्येतत् अनुपपन्नम् इति कैश्चिदुक्तं निरस्तम्। यत्तत्पदयोः अर्थबोधकत्वसम्भवे तत्परित्यागायोगात्

द्रागेव तु पञ्चानामवयवानाम् । परन्तु प्रतिज्ञाहेत्वोः कथंचिदुपनयनिगमनयोः।

---

नकारं विहाय ताभ्यां पर्वतो धूमज्ञानज्ञाप्यवह्निमानितत्येतादृशविशिष्टज्ञानजननादिति भावः। अथ प्रतिज्ञाजन्यबोधानन्तरं कुत इति साध्यज्ञापकाकांक्षायां तन्निवर्तकं हेतुवाक्यं प्रयुज्यते, तन्निवर्तकता च पक्षविशेषणतानापन्नसाध्यांशे हेतुज्ञानज्ञाप्यत्वबोधनेनापि निर्वहतीति पक्षांशे हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवैशिष्ट्यावगाहिबोधस्यानुपयोगितया न तात्पर्यविषयत्वमिति चेन्न, पर्वते वह्निबोधानन्तरं पर्वते यद्वह्निज्ञापकं तत्रैवाकांक्षा जायते, तन्निवृत्तिश्च साध्ये धूमादिज्ञानजन्यपर्वतविशेष्यकज्ञानविषयत्वप्रतिपादनेनैव, धूमाद्वह्निमन्महानसमित्यादिवाक्यस्य

---

उदाहरणवाक्येन 'महानसं धूमवत्, वह्निमच्च', 'महानसान्यत् धूमवत् वह्निमच्च' इत्याकारकसमूहालम्बनबोधस्यैव वक्तव्यतया उदाहरणस्यैव एकवाक्यताविरहे हेतुवाक्येन समं एकवाक्यतायाः तस्य सुतरामसंभवात् इति भावः।

***नकारं विहायेति।*** 'प्रतिज्ञाहेत्वोः' इति दीधितौ 'नञं विहाय संभूय एकार्थप्रतिपादकत्वं इत्यनुषज्यत' इत्यन्वयः। प्रतिज्ञाहेत्वोः संभूय विशिष्टार्थ–प्रतिपादकत्वमुपपादयति – ***ताभ्यामिति।*** हेतुवाक्यार्थस्य धूमज्ञानज्ञाप्यत्वस्य प्रतिज्ञाघटकवह्निपदार्थे अन्वयात् प्रतिज्ञाहेतुभ्यां 'पर्वतः धूमज्ञानज्ञाप्यवह्निमान्' इत्याकारकः विशिष्टार्थबोधः जायते। अतः तयोः संभूय एकार्थप्रतिपादकत्वमिति भावः।

प्रतिज्ञाहेत्वोर्यत् विशिष्टार्थबोधकत्वमुक्तं तदाक्षिपति–***अथेति।*** पर्वतो वह्निमानिति प्रतिज्ञावाक्यजन्यबोधानन्तंर कुत इति ज्ञापकहेत्वर्थकपञ्चम्यन्त किं शब्देन साध्यज्ञापकं किमिति जिज्ञासायां तादृशजिज्ञासानिवर्तकं हेतुवाक्यं प्रयुज्यते। तस्या जिज्ञासाया निवृत्तिःसाध्ये धूमज्ञानज्ञाप्यत्वबोधेनापि निवर्तत इति पक्षे पर्वते धूमज्ञानज्ञाप्यसाध्यवैशिष्टचपर्यन्तबोधः नोपयोगीति तावत्पर्यन्तं तात्पर्याभावात् तात्पर्यविषयीभूतविशिषष्टार्थबोधकत्वं प्रतिज्ञाहेत्वोर्नास्तीति आक्षेपः।

समाधत्ते – ***पर्वते वह्निबोधानन्तर***मिति। प्रतिज्ञावाक्यात् पर्वते वह्निबोधानन्तरं पर्वते वह्नेर्ज्ञापकं किमित्येवाकाङ्क्षा उदेति। न तु वह्नेर्ज्ञापकं किमिति। तादृशाकाङ्क्षा च वह्निः धूमज्ञानजन्यपर्वतविशेष्यकज्ञानविषयः इति बोधेनैव निवर्तते। धूमादिति पञ्चम्याः ज्ञानजन्यविषयत्वमर्थः। ज्ञाने धूमपदार्थस्य

पर्वते वह्निमत्त्वं कुत इत्याकांक्षानिवर्तकत्वाभावात्, पञ्चमीतस्तादृशपर्वतविशेष्यक-ज्ञाननिषयत्वभानं च तद्विशेषणतापन्नसाध्यांश एवोक्तवाक्यान्महानसादिविशेषणतयोपस्थिते तदप्रतीतेः। एकधर्मविशेषणतापन्ने अन्यविशेष्यकहेतुज्ञानाधीनज्ञानविषयत्वबोधकतायाः पञ्चम्या अव्युत्पन्नत्वादिति धूमाद्वह्निमान्पर्वत इति विशिष्टवैशिष्ट्यबोधस्यावश्यकत्वात्। ***कथंचिदिति।*** निगमनेऽयंपदाननुषङ्गपक्षे वह्निव्याप्यधूमवत्पर्वतादिरूपोपनयार्थे निगमनार्थधूमज्ञानज्ञाप्यवह्निमत्त्वाद्यन्वयसम्भवादिति भावः। अनुषङ्गपक्षे तु तादृशवह्न्यादिमत्पक्षरूपनिगमनार्थमात्रबोधेनैवाकांक्षानिवृत्तेरुपनयार्थे विशिष्टपक्षे निगमनर्थीभूतविशिष्टपक्षबोधस्यानुपयुक्तस्य न तात्पर्यविषयतेति कथंचिदित्युक्तम्। इदं त्ववधेयम् – अननुषङ्गपक्षेपि उपनयैकदेशेऽयंपदार्थपक्षमात्रे निगमनार्थान्वयमात्रेणैव कृतकृत्यतया तत्समुदायार्थविशिष्टपक्षे निगमनार्थविषयकबोधेऽपि तात्पर्यमप्रामाणिकमिति।

---

विषयितासंबन्धेनान्वयः। तथा च धूमविषयकज्ञानजन्यज्ञानविषयत्वं पञ्चम्यन्तार्थः। धूमज्ञानजन्यज्ञाने पर्वतविशेष्यकत्वं च पर्वतविशेषणतापन्नवह्नौ पञ्चम्यर्थान्वये एव भासत इति व्युत्पत्तिः। तद्बलात् पक्षे हेतुज्ञानज्ञाप्यसाध्यवैशिष्ट्यबोधे तात्पर्यस्यावश्यकत्वात् पर्वतो धूमज्ञानजन्यज्ञानविषयवह्निमानिति विशिष्टबोधजनकत्वं प्रतिज्ञाहेत्वोः सिध्यति। पूर्वोक्तव्युत्पत्त्यनङ्गीकारे 'धूमात् महानसं वह्निमत्' इति वाक्यादपि वह्नौ धूमज्ञानजन्यपर्वतविशेष्यकज्ञानविषयो वह्निरिति बोधापत्तिः। एवं धूमज्ञानजन्यज्ञानविषयो वह्निरिति ज्ञानमात्रेण पर्वते वह्निज्ञापकं किमित्याकाङ्क्षाया निवृत्त्यङ्गीकारे धूमाद्वह्निमन्महानसमिति वाक्यजन्यतादृशज्ञानादपि तदाकाङ्क्षानिवृत्त्यापत्तिः। तथा च एकधर्मिविशेषणतापन्नसाध्ये अन्यविशेष्यकहेतुज्ञानजन्यज्ञानविषयत्वबोधकत्वं पञ्चम्याः अव्युत्पन्नमिति पर्यवसितम्।

कथंचिदुपनयनिगमनयोरिति दीधितिग्रन्थतात्पर्यमाह– ***कथंचिदितीति।*** 'वह्निव्याप्यधूमवानयम्' इत्युपनयः 'तस्मात्तथा' इति निगमनम्। उपनयस्थस्य 'अयम्' इति पदस्य निगमनवाक्ये अनुषङ्गः अननुषङ्ग इति पक्षद्वयमस्ति। अनुषङ्गो नाम वाक्यन्तरस्थितस्य पदस्य वाक्यान्तरस्थतया अनुसन्धानम्। तत्राननुषङ्गपक्षे उपनयार्थोद्देश्यकः निगमनार्थविधेयकः 'वह्निव्याप्यधूमवत्पर्वतः धूमज्ञानज्ञाप्यवह्निमान्' इत्याकारकः विशिष्टार्थबोधः उपनयनिगमनाभ्यां संभवति। अनुषङ्गपक्षे तु 'वह्निव्याप्यधूमवत्पर्वतः धूमज्ञानज्ञाप्यवह्निमत्पर्वताभिन्न'

**एकवाक्यताव्यवहारस्तु विशिष्टैकार्थप्रतिपत्तिपरतामात्रेण। तादृशपरामर्शप्रयोजकत्वञ्च यदि तद्विषयतत्तत्पदार्थसार्थोपस्थापकतया (तत्तत्पदार्थोपस्थापकतया) तदा उदाहरणोपनययोरेव तत्पर्यवस्यति। अथ तदानुकूल्यमात्रेण, तदा को वह्निमान् पर्वतो वह्निमान् कुतो धूमवत्त्वादित्यादेरपि तथात्वमित्यादि समाहितम्।**

**इति दीधितौ न्यायलक्षणम्।**

---

नन्वेवं प्रतिज्ञादीनां पञ्चानां कथमेकवाक्यताव्यवहार इत्यत आह – ***एकेति। विशिष्टैकेति।*** विशिष्टैकार्थप्रतीतीच्छाप्रयोज्यत्वमात्रेणेत्यर्थः। मात्रपदेन तादृश-प्रतीतिजनकत्वव्यवच्छेदः। तादृशी च प्रतिपत्तिर्निगमनरूपचरमवाक्यार्थबुद्धिरुदीच्यो वा मानसः परामर्शः। तत्परता च तामजनयतोप्युत्तरोत्तरवाक्यप्रयोजिकामाकांक्षामुत्थापयतः

---

इति बोधो वक्तव्यः। स चानाकाङ्क्षततया न तात्पर्यविषयः। अयंपदार्थे शुद्धपर्वतत्वावच्छिन्ने धूमज्ञानज्ञाप्यवह्निमत्त्वमात्रं ह्याकाङ्क्षतम्। न तु उपनयार्थे विशिष्टपर्वते निगमनार्थविशिष्टपर्वताभेदः आकाङ्क्षतः। तस्मात् अनुषङ्गपक्षे संभाव्यमानस्य बोधस्य तात्पर्यविषयतया तज्जनकयोरपि उपनयनिगमनयोः न उपर्युक्तविशिष्टार्थबोधकत्वमस्ति। एतदभिप्रायेणैव कथंचिदित्युक्तमिति भावः।

अननुषङ्गपक्षेऽपि तात्पर्यविषयीभूतविशिष्टार्थबोधकत्वं नास्तीत्याह–***इदं त्ववधेयमित्यादिना।*** उपनयैकदेशभूतायंपदार्थे पर्वते निगमनार्थस्य धूमज्ञानज्ञाप्यवह्निमत्त्वस्यान्वयमात्रेण आकाङ्क्षायाः शान्ततया उपनयरूपसमुदयार्थे वह्निव्याप्यधूमविशिष्टपर्वते निगमनार्थविधेयकबोधस्य तात्पर्यविषयत्वं नास्तीति तादृशबोधजनकयोरप्युपनयनिगमनयोः न तात्पर्यविषयीभूतविशिष्टार्थ-बोधजनकत्वमस्तीति भावः। ***पक्षमात्र*** इति। शुद्धपर्वत इत्यर्थः। मात्रशब्देन वह्निव्याप्यधूमविशिष्टपर्वतव्यवच्छेदः। ***तत्समुदायार्थे विशिष्टपक्षे*** – उपनयसमुदायार्थे वह्निव्याप्यधूमविशिष्टपर्वते इत्यर्थः। शिष्टं स्पष्टम्।

**इति भावदीपिकायां न्यायलक्षणम्**

प्रतिज्ञादेरिह धूमइत्यादिवचसामानुमानिकवह्न्यादिधीपरतावन्निर्वहत्येव – तत्प्रयोजकतयैव। ननु तावद्भिरवयवैः सम्भूयैकमहावाक्यार्थबोधाजननेपि परामर्शप्रयोजकीभूत–स्वीयस्वीयतत्तद्विशिष्टार्थधीजनकतायाः सर्वावयवेष्वेव सत्त्वेन निरुक्तलक्षणसमन्वयो नानुपपन्न इत्यत आह – ***परामर्शप्रयोजकत्वं चेति।*** परामर्शप्रयोजकज्ञानजनकत्वं चेत्यर्थः। ***तद्विषयेति।*** परामर्शविषयेत्यर्थः। ***तत्तत्पदार्थसार्थोपस्थापकतयेति।*** अभेदे तृतीया। तथा च तदुपस्थापकत्वरूपमित्यर्थः। विवक्षितमिति शेषः। तथा च यादृशयादृशवाक्यैः परामर्शविषयसकलपदार्थाः उपस्थाप्यन्ते तावत्समुदायत्वं विवक्षितमिति पर्यवसितोर्थः। ***उदाहरणोपनययोरेवेति।*** उपनयस्य व्याप्त्यबोधकत्वमताभिप्रायेणोदाहरणान्तार्भावः। ***तत्*** – न्यायत्वम्। ***पर्यवस्यतीति।*** ताभ्यामेव परामर्शविषयसकलपदार्थोपस्थापनादिति भावः।

अथ यथाकथंचित्परामर्शनुकूलत्वं यादृशयादृशवाक्यानां तादृशतादृशवाक्यसमुदायत्वं विवक्षितमतो नोदाहरणोपनयमात्रेऽतिव्याप्तिरित्याशङ्कते ***अथेति। तदानुकूल्यमात्रेणेति।*** पूर्ववदभेदे तृतीया। परामर्शप्रयोजकत्वमित्यनुषज्यते। ***इत्यादेः*** – इत्यादिसमुदायस्य। ***तथात्वम्***– न्यायत्वम्। स्यादिति शेषः। को वह्निमानित्यादिवाक्यानामपि जिज्ञासाज्ञापनद्वारा अवयवयप्रयोजकत्वेन यथाकथंचित्परामर्शानुकूलत्वसम्भवादिति भावः। इत्यादीत्यादिपदात् व्युत्क्रमप्रयुक्तप्रतिज्ञादावतिव्याप्त्यादेः परिग्रहः।

*इति गदाधरीये न्यायलक्षणम्।*

---

## अथ अवयवलक्षणम्

अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्द–ज्ञानजनकवाक्यत्वम् अवयवत्वमिति मणिकारोक्तमवयवलक्षणम्। अनुमितेः चरमकारणभूतः यः लिङ्गपरामर्शः तत्प्रयोजकं यत् शाब्दज्ञानम्, तस्य जनकं यत् शाब्दज्ञानं तज्जनकत्वे सति वाक्यत्वम् अवयवलक्षणम्। प्रतिज्ञादिभिः अवयवैः तत्तदवयवार्थविषयकाः पञ्च शाब्दबोधाः जायन्ते। तैः शाब्दबोधैः पञ्चावयवार्थविषयकः महावाक्यार्थबोधः जायते। तेन लिङ्गपरामर्शः तेन अनुमितिरिति क्रममनुसृत्य इदमवयवलक्षणं मणिकारैरुक्तम्।

अत्र लक्षणे अवयवजन्यस्य शाब्दबोधस्य अनुमितिचरमकारणलिङ्ग–परामर्शप्रयोजकशाब्दज्ञानजनकत्वाभिधानं पञ्चानां वाक्यानां सम्भूय एकमहावाक्यार्थधीजनकत्वाभिप्रायेण। वस्तुतस्तु तेन रूपेण शाब्दज्ञानस्य लक्षणे न निवेशः। किन्तु तत्तदर्थविषयकशाब्दबुद्धित्वेन विशिष्यैव शाब्दबुद्धीनां निवेशः। तादृशाब्दबोधानां विशिष्य निवेशज्ञापनायैव परामशर्प्रयोजकशाब्दज्ञानजनकत्वकथनमिति यावत्। यदि लिङ्गपरामर्श–प्रयोजकशाब्दज्ञानजनकत्वेन तत्तदवयवार्थविषयकशाब्दबुद्धेः लक्षणे निवेशःस्यात्,

मूलोक्तावयवलक्षणे शाब्दज्ञानस्यानुमितिचरमकारणलिङ्गपरामर्शप्रयोजक-शाब्दज्ञानजनकत्वाभिधानं पञ्चवाक्यानामेकमहावाक्यार्थधीजनकत्वाभिमानेन प्रतिज्ञादि-प्रतिपाद्यतत्तद्विशिष्टार्थगोचरशाब्दधीविशेषणां परिचायायैव, तेषां निवेशस्तु विशिष्य तत्तदर्थविषयकशाब्दबुद्धित्वेन; न तु तादृशशाब्दधीजनकत्वेन, तथा सत्यैकैकावयवजन्यशाब्दबुद्धेरपि परामर्शप्रयोजकतया तज्जनकावान्तरवाक्यार्थ-

---

तदा महावाक्यार्थबोधजनकावयवार्थविषयकबोधजनकत्वस्य अवयवावयवेऽपि सत्त्वात् तत्र अतिव्याप्तिः स्यात्।

ननु एकैकबोधजनकत्वं यदि लक्षणे निवेश्यते, तर्हि साध्यविशिष्टपक्षविषयकबोधजनकत्वस्य हेत्वादावभावात् अव्याप्तिः। बोधपञ्चकजनकत्वं यदि निवेश्यते तदा एकस्यापि प्रतिज्ञादिरूपस्य अवयवस्य पञ्चबोधजनकत्वं नास्तीत्यसंभवः इति चेत्, न। तत्तदवयवार्थबोधजनकान्यतमत्वावच्छिन्नवाक्यत्वम् अवयवत्वमिति विवक्षितत्वात्। न चैवं सति न्यायानन्तर्गते 'पर्वतो वह्निमान्' इत्यादिवाक्ये अतिव्याप्तिरिति वाच्यम्। वाक्यपदस्य न्यायान्तर्गतपरत्वात्। तथा च साध्यविशिष्टपक्षविधेयक-बोधजनकहेतुज्ञानज्ञाप्यत्वविषयकबोधजनकाद्यन्यतमत्वावच्छिन्नत्वे सति न्यायान्तर्गतत्वम् अवयवलक्षणं पर्यवसितमित्याशयेन दीधितौ 'अवयवत्वं तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्' इत्युक्तम्। तदाह—***मूलोक्तावयवलक्षणे*** इत्यादिना। न्यायेऽतिव्याप्तिवारणाय द्वितीयं शाब्दज्ञानजनकेति मूले उक्तम्। ***शाब्दज्ञानस्येति।*** मूललक्षणस्थस्य द्वितीयशाब्दज्ञानस्येत्यर्थः। ***अभिमानेनेति।*** प्रत्येकावयवार्थविषयकशाब्दबोधस्य यावदवयवार्थविषयकशाब्दबुद्धित्वावच्छिन्न-जन्यतानिरूपितजनकत्वविरहात् अभिमानेनेत्युक्तम्। ***तेषां निवेशस्तु*** इति। अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानानां लक्षणे निवेशस्तु इत्यर्थः। विशिष्य इत्यस्यैव विवरणं ***तत्तदर्थविषयकशाब्दबुद्धित्वेनेति।*** न तु तादृशशाब्दधीजनकत्वेनेति। परामर्शप्रयोजकशाब्दज्ञानजनकत्वेन न लक्षणे निवेश इत्यर्थः। ***तथा सतीति।*** तादृशशाब्दधीजनकत्वेन लक्षणे निवेशे सतीत्यर्थः। यथा अवयवार्थविषयकज्ञानस्य महावाक्यार्थबोधद्वारा परामर्शप्रयोजकत्वम्, तथा अवयवावयवार्थविषयकज्ञानस्यापि अवयवार्थविषयकज्ञानद्वारा परामर्शप्रयोजकत्वमस्तीति परामर्शप्रयोजकशाब्दज्ञानजनक शाब्दज्ञानजनकत्वम् अवयवावयवे पर्वतादिपदेऽपि अस्तीति तत्र अवयवलक्षणस्य अतिव्याप्तिरित्यर्थः।

**अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनक-वाक्यत्वमवयवत्वम्। अत एव वह्निव्याप्यधूमवानयमिति वाक्ये तदवयवे च न न्यायतदवयवलक्षणातिव्याप्तिः।**

---

**अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्,**

---

ज्ञानजनकावयवावयवेतिप्रसङ्गस्य दुर्वारत्वात्; न च साध्यविशिष्टपक्षादिविषयकशाब्दबुद्धित्वेन बोधपञ्चकनिवेशेऽननुगमः, जनकान्तस्य तत्तद्बोधजनकान्यतमत्वादिरूपानुगत-धर्मावच्छिन्नपरत्वात्। न चैवं सति न्यायानन्तर्गते पर्वतो वह्निमानित्यादिवाक्येऽतिव्याप्तिः। वाक्यपदस्य न्यायान्तर्गतत्वार्थकत्वादित्यभिप्रेत्य पर्यवसितं लक्षणार्थमाह - ***न्यायेति।*** (यद्यप्युदासीने न्यायान्तर्गतत्वघटितप्रतिज्ञाद्यन्यतमत्वमेव नास्ति, तथापि तदघटितप्रतिज्ञाद्युपादानाभिप्रायेणेदम्।) अथ किमिदं न्यायान्तर्गतत्वं; न तावत्स्वाविषयकप्रतीत्यविषयन्यायकत्वम्; प्रतिज्ञाद्यविषयकप्रतीत्यापि हेत्वादिरूपन्यायैकदेशस्य

---

***तज्जनकेति।*** एकैकावयवजन्यशाब्दबोधजनकं यत् अवान्तरवाक्यार्थज्ञानं तज्जनकेत्यर्थः। ***अननुगम*** इति। तादृशैकैकविषयकबोधजनकत्वस्य लक्षणत्वे तदजनकेऽवयवे अव्याप्तिः। तादृशबोधपञ्चकजनकत्वस्य लक्षणत्वेऽसम्भव इति भावः। ***जनकान्तस्येति।*** द्वितीयजनकान्तस्येत्यर्थः।

ननु न्यायान्तर्गतत्वविशेषणं मास्तु। प्रतिज्ञादिलक्षणे न्यायान्तर्गतत्वविशेषणसद्भावात् न्यायान्तर्गतत्वघटितप्रतिज्ञाद्यन्यतमत्वस्य न्यायबहिर्भूतप्रतिज्ञादौ विरहादेवातिव्याप्तिवारणसम्भवात् इत्याशङ्क्य अवयवलक्षणघटकं दीधितिस्थं प्रतिज्ञादिपदं न्यायान्तर्गतत्वाविशेषितप्रतिज्ञादिपरम्। तदन्यतमत्वस्य उदासीनप्रतिज्ञादावपि सत्त्वात् तत्र अतिव्याप्तिवारणाय न्यायान्तर्गतत्वे सतीति प्रकृतावयवलक्षणे विशेषणं दत्तमिति समाधत्ते-***यद्यपीत्यादिना।***

अथ अवयवलक्षणान्तर्गतं न्यायान्तर्गतत्वं परिष्कर्तुं प्रश्नमुत्थापयति : ***अथ किमिदं न्यायान्तर्गतत्वमिति।*** इदं अवयवलक्षणघटकमित्यर्थः। ***न तावदिति।*** स्वाविषयकप्रतीत्यविषयन्यायकत्वं न्यायान्तर्गतत्वम्। **स्वं** - प्रतिज्ञादि। ***तदविषयकप्रतीतिः*** - न्यायविषयकप्रतीतिः न भवति। प्रतिज्ञादिसमुदाय-रूपन्यायविषयकप्रतीतौ प्रतिज्ञादीनां विषयत्वात् स्वाविषयकत्वासम्भवात्। अतः प्रतिज्ञाद्यविषयकप्रतीतिः'घटमानय' इत्यादि वाक्यविषयकप्रतीतिः। ***तदविषयः*** -

विषयीकरणात्तद्घटितसमुदायात्मकन्याये प्रतिज्ञाद्यविषकप्रतीत्यविषयत्वस्य दुर्घटत्वात्, एकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानङ्गीकारात्, नापि न्यायविषयता-व्यापकविषयिताकत्वम्; उच्चारणभेदेनैकानुपूर्व्यवच्छिन्नवाक्यानामपि भेदात् कस्याश्चिदपि प्रतिज्ञाव्यक्तेर्विषयिताया एकविधमपि न्यायमवगाहमानेषु सर्वेषु ज्ञानेषु वृत्त्यसम्भवात्, मैवम्; स्वाविषयकप्रतीत्यविषयन्यायकत्वमेव तत्। न्यायत्वसामानाधिकरण्यमात्रेण तादृशप्रतीत्यविषयत्वं

---

न्यायः। तत्कत्वं प्रतिज्ञादिष्वस्तीति लक्षणसमन्वयः। एतद्दूषयति-
***प्रतिज्ञाद्यविषयकप्रतीत्यापीति। स्वं*** प्रतिज्ञा। ***तदविषयकप्रतीतिः*** – हेतुवाक्य-विषयकप्रतीतिः तद्विषयत्वं हेतुवाक्ये वर्तते। तद्विषयत्वाभावः न्याये वक्तुं न शक्यते। न्यायो हि नाम प्रतिज्ञाहेत्वादिपञ्चवाक्यसमुदायः। तदेकदेशस्य हेतुवाक्यस्य प्रतिज्ञाअविषयकप्रतीति विषयत्वसत्त्वे हेतुवाक्यघटितसमुदायरूपे न्यायेऽपि तद्विषयत्वमेवास्ति, न तु तदभावः। एकदेशवृत्तिधर्मप्रतियोगिक-व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिकाभावानङ्गीकारात्। घटपटयोः न घटत्वमिति प्रतीतिर्नास्ति। घटपटोभयैकदेशे घटे वर्तमानस्य घटत्वस्य अभावः उभयत्वावच्छिन्ने न संभवति। एवमेव न्यायैकदेशे हेतौ विद्यमानस्य प्रतिज्ञा-अविषयकप्रतीतिविषयत्वस्य अभावः न्यायरूपे समुदाये न संभवति। तथा च स्वाविषयकप्रतीत्यविषयत्वस्य न्याये अभावात् तदविषयन्यायकत्वरूपं न्यायान्तर्गतत्वं प्रतिज्ञादौ असंभवीति भावः। ***एकदेशवृत्तेरिति।*** षष्ठ्यर्थः प्रतियोगित्वम्। तस्य निरूपकतासंबन्धेन अभावेऽन्वयः।

***नापीति।*** न्यायविषयिताव्यापकविषयिताकत्वं न्यायान्तर्गतत्वम्। न्यायनिरूपिता विषयिता यत्र यत्र वर्तते तत्र तत्र यन्निरूपितविषयिता अस्ति तदेव न्यायान्तर्गतमित्युच्यते। न्यायनिरूपिता विषयिता प्रतिज्ञादिपञ्चकसमुदायविषयके ज्ञानेऽस्ति। तत्र प्रतिज्ञादिनिरूपिता विषयिता अस्ति। अतः न्यायविषयिताव्यापकविषयिताकत्वस्य प्रतिज्ञादिषु सद्भावात् तेषां न्यायान्तर्गतत्वम्। इदमपि दूषयति – ***उच्चारणभेदेनेति।*** 'पर्वतो वह्निमान्' इत्याकारकं वाक्यं समानानुपूर्वीकमपि उच्चारणभेदेन भिन्नम्। न्यायत्वावच्छिन्ननिरूपितविषयिता उच्चारणभेदेन भिन्नसकलप्रतिज्ञादिघटितन्यायविषयकज्ञानेषु वर्तते। तत्र सर्वत्र एकैकप्रतिज्ञानिरूपितविषयितायाः वृत्त्यसंभवात् इदं न्यायान्तर्गतत्वं तत्तत्प्रतिज्ञाव्यक्तिरूपेषु अवयवेषु असंभवग्रस्तमिति भावः। प्रतिज्ञाव्यक्तेः इत्यत्र

विवक्षणीयम्, एकैकप्रतिज्ञादिव्यक्त्यविषयकप्रतीत्या व्यक्त्यन्तरघटितन्यायस्य तन्यायैकदेशहेत्वादेश्चावगाहनेऽपि न्यायत्वाधिकरणे तत्प्रतिज्ञाव्यक्तौ तत्प्रतिज्ञादिव्यक्त्यविषयक-प्रतीत्यविषयत्वसत्त्वेन तासां तथात्वमव्याहतमेव। अथवा न्यायत्वाश्रयत्वमेव तथा;

---

षष्ठ्याः निरूपितत्वमर्थः। तस्य विषयितायामन्वयः। ***एकविधमपीति।*** समानानुपूर्वीकनानाप्रतिज्ञावाक्यघटितमित्यर्थः। अपिना वाक्यसाम्येऽपि व्यक्तिभेदात् न्यायविषयकसर्वज्ञानवृत्तित्वम् एकप्रतिज्ञाव्यक्तिविषयितायाः न संभवतीति सूच्यते।

प्राथमिकं परिष्कारमेव सिद्धान्तत्वेन प्रदर्शयति–***मैवमित्यादिना।*** स्वाविषयकप्रतीत्यविषयन्यायकत्वमेव न्यायान्तर्गतत्वम्। न्यायत्वावच्छिन्ने स्वाविषयकप्रतीतिविषयत्वाभावः न विवक्षितः। किन्तु न्यायत्वाधिकरणवृत्तित्वमात्रं स्वाविषकप्रतीतिविषयत्वाभावे विवक्षितम्। एकैकप्रतिज्ञाव्यक्त्यविषयकप्रतीतौ प्रतिज्ञाव्यक्त्यन्तरघटितस्य न्यायस्य न्यायैकदेशस्य हेतुवाक्यस्य च विषयत्वेन न्यायत्वावच्छिन्ने तत्प्रतिज्ञाव्यक्त्यविषयकप्रतीतिविषयत्वाभावस्य 'एकदेशवृत्तेः' इति न्यायेन दुर्घटत्वेऽपि न्यायत्वाधिकरणे तत्प्रतिज्ञाव्यक्तौ तत्प्रतिज्ञा-व्यक्त्यविषयकप्रतीतिविषयत्वाभावस्य सद्भावात् न्यायत्वाधिकरणवृत्तिस्वा-विषयकप्रतीतिविषयत्वाभावकत्वरूपं न्यायान्तर्गतत्वं तत्तत्प्रतिज्ञादिव्यक्तिरूपेषु अवयवेषु सुघटमेवेति भावः। ***तासां*** –तत्प्रतिज्ञाव्यक्तीनाम्। **तथात्वम्** तादृशप्रतीत्यविषयत्वम्।

***अथ वेति।*** न्यायत्वाश्रयत्वमेव न्यायान्तर्गतत्वम्। प्रतिज्ञादिषु अवयवेषु समुदायत्वरूपन्यायत्वाश्रयत्वमस्तीति लक्षणसमन्वयः। यद्यपि पर्याप्तिसंबन्धेन न्यायत्वाश्रयत्वं पञ्चावयवसमुदायस्यैव न त्ववयवानाम्, तथाप्यत्र पर्याप्तेः न विवक्षा। अतः अवयवेष्वपि न्यायत्वाश्रयत्वमस्तीति समन्वयः। न्यायान्तर्गतत्वमात्रं अवयवलक्षणं चेत् अवयवावयवे अवयवद्वयात्मकसमुदाये च न्यायान्तर्गतत्वसत्त्वात् अवयवलक्षणातिव्याप्तिःस्यात्। तद्वारणाय प्रतिज्ञाद्यन्यतमत्वनिवेशः। प्रतिज्ञाद्यन्य-तमत्वस्य न्यायबहिर्भूतप्रतिज्ञादिषु सद्भावात् तत्र अतिव्याप्तिवारणाय न्यायान्तर्गतत्वनिवेशः। तच्च न्यायान्तर्गतत्वं स्वाविषयकप्रतीत्यविषयन्यायकत्वम्, न्यायत्वाश्रयत्वं वा इति एतावता सिद्धम्।

पर्याप्त्यविवक्षया एकदेशस्यापि तथात्वोपपत्तेः। वस्तुतो न्यायत्वघटकस्य समुदायत्वांशस्यात्र निष्प्रयोजनकत्वेनानिवेशादुचितानुपूर्वीकत्वमात्रं विवक्षितम्, तदेव च न्यायान्तर्गतत्वमेकदेश-साधारणम्। उचितानुपूर्वीकत्वं च प्रतिज्ञोत्तरहेत्वादिघटितवाक्यपञ्चकानुपूर्वी-विशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वम्, विशिष्टधर्मावच्छिन्नप्रतियोगितावच्छेदकतायाः तद्घटकसमुदायपर्याप्ततया एकदेशस्यापि तदाश्रयत्वात् प्रतिज्ञादेः तथात्वमक्षतम्। उपनयविशेषोत्तरत्वविशिष्टनिगमनत्वशरीरे च वैशिष्ट्यघटकतया निगमनस्याप्यन्त-

---

न्यायत्वाश्रयत्वमित्यत्र न्यायत्वपदेन उचितानुपूर्वीकप्रतिज्ञादिपञ्चक-समुदायत्वरूपं यत् न्यायत्वं पूर्वमुक्तम् तद्घटकम् उचितानुपूर्वीकत्वमात्रं प्रकृते विवक्षितम्। प्रतिज्ञादिपञ्चकसमुदायत्वांशः प्रयोजनविरहात् अत्र न निवेश्यते। तथा च उचितानुपूर्वीकत्वमेव न्यायान्तर्गतत्वम् इत्याह – ***वस्तुत*** इत्यादिना। ***एकदेशसाधारणमिति।*** अवयवावयवसाधारणमित्यर्थः। ***उचितानुपूर्वीकत्वं चेति।*** प्रतिज्ञोत्तर – हेतूत्तर – उदाहरणोत्तर– उपनयोत्तरत्वविशिष्ट–निगमनत्वरूपानु-पूर्वीविशेषनिष्ठावच्छेदकताकप्रतियोगिताको यो भेदः 'तादृशानुपूर्वीमान् न' इति प्रतीतिसिद्धो भेदः तत्प्रतियोगितावच्छेदकत्वं उचितानुपूर्वीकत्वम्। तत्तु प्रतिज्ञादिषु अवयवेषु वर्तते। पूर्वोक्तानुपूर्व्याः भेदप्रतियोगितावच्छेदकत्वे तद्घटकेषु प्रतिज्ञादिष्वपि तादृशभेदप्रतियोगितावच्छेदकत्वात् अवच्छेदककोटि-प्रविष्टानामपि अवच्छेदकत्वस्वीकारात्। ननु उक्तानुपूर्वीघटकत्वं प्रतिज्ञादीनां चतुर्णां निगमनत्वस्य च वर्तते। निगमनस्य नास्ति। कथं तस्य उक्तभेदप्रतियोगितावच्छेदकत्वरूपं न्यायान्तर्गतत्वमिति शङ्कायामाह – ***उपनयविशेषेति।*** उपनयोत्तरत्वविशिष्टनिगमनत्वं हि उपनयोत्तरत्व-समानाधिकरणनिगमनत्वम्। उपनयोत्तरत्वाधिकरणवृत्तिनिगमनत्वमिति यावत्। तत्र अधिकरणतया निगमनस्य घटकत्वात् निगमनस्यापि भेदप्रतियोगिता-वच्छेदकत्वमिति भावः। ***वैशिष्ट्यघटकतयेति।*** वैशिष्ट्यं नाम सामानाधिकरण्यम्। ***विशिष्टस्य अवच्छेदकतास्थल*** इति। यत्र विशिष्टधर्मः अवच्छेदकः तत्र साक्षात् विशेषणमेव अवच्छेदकम्। अवच्छेदके यद्विशेषणम् तत् अवच्छेदकनिष्ठ–अवच्छेदकतावच्छेदकम्। न तु विशिष्टघटकेषु सर्वेषु अवच्छेदकत्वम् पर्याप्तम् इति मते अवच्छेदककोटिप्रविष्टानां प्रतिज्ञादीनां पूर्वोक्तभेदप्रतियोगितावच्छेदकत्वं दुर्वचमित्यालोच्य उचितानुपूर्वीकत्वरूपं

र्भावात्तत्साधारण्यमक्षतमेवोक्तधर्मस्य। विशिष्टस्यावच्छेदकतास्थले एकमवच्छेदकमपरं च तद्विशेषणं तन्निष्ठस्यावच्छेदकत्वस्यावच्छेदकम्, न तु समुदायेऽवच्छेदकत्वं पर्याप्तमित्युपगमे च तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयताकत्वं विवक्षणीयम्। तादृशी च तादृशविशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणता, तदवच्छेदकत्वं च हेत्वादिनिष्ठानन्तर्यप्रकारतापन्नप्रतिज्ञादिविषयतानामप्यव्याहतम्। विनिगमनाविरहादितरविषयतानिरूपितत्वेन निश्चयत्वविशिष्टत्वेन च कारणीभूतज्ञान-विषयसकलनिरूपितविषयितानां कारणतावच्छेदकत्वात्। प्रतिज्ञोत्तरहेतुत्वादिविशिष्ट-

---

न्यायान्तर्गतत्वं प्रकारान्तरेण परिष्करणीयम्। तथा हि – प्रतिज्ञोत्तर – हेतूत्तर – उदाहरणोत्तर–उपनयोत्तर–निगमनत्वरूपानुपूर्वीप्रकारकनिश्चयत्व–समनियतकारणतावच्छेदकविषयितानिरूपकत्वम् उचितानुपूर्वीकत्वम्। तादृशानुपूर्वीप्रकारकनिश्चयः 'तादृशानुपूर्वीविशिष्टं वाक्यम्' इत्याकारकनिश्चयः तादृशनिश्चयनिष्ठा कारणता 'तादृशानुपूर्व्यवच्छिन्नवाक्यवद्गगनम्' इत्याकारकविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपिता कारणता। तदवच्छेदकीभूता विषयिता प्रतिज्ञादिनिरूपिता विषयिता तन्निरूपकत्वं प्रतिज्ञादिष्वस्तीति समन्वयः कार्यः।

ननु तादृशानुपूर्वीप्रकारकनिश्चयस्य विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति तादृशानुपूर्वी विषयकत्वविशिष्टनिश्चयत्वेन कारणत्वात् कारणतावच्छेदकत्वं निश्चयत्वे भवितुमर्हति। अथवा निश्चयत्वविशिष्टानुपूर्वीविषयकत्वेन कारणत्वे आनुपूर्वीनिरूपितविषयितायामेव कारणतावच्छेदकत्वं भवेत्। प्रतिज्ञादिविषयितानां कारणतावच्छेदकत्वं कथं? इति चेत्, उच्यते–प्रतिज्ञात्वावच्छिन्नविषयिता–निरूपितेत्यादिक्रमेण निगमनत्वावच्छिन्नविषयिताया इव विनिगमनाविरहात् निगमनत्वावच्छिन्नविषयितानिरूपितेत्यारभ्य प्रतिज्ञात्वावच्छिन्नविषयितायाः, एवं हेत्वादिविषयितायाश्च कारणतावच्छेदकत्वात् इति भावः। ***तद्विशेषणमिति।*** अवच्छेदकविशेषणमित्यर्थः। ***समुदाय*** इति। अवच्छेदककोटिप्रविष्टेषु सर्वेषु इत्यर्थः। ***हेत्वादि निष्ठेति।*** हेतुनिष्ठं यत् प्रतिज्ञोत्तरत्वं एवम् उदाहरणनिष्ठं यत् हेतूत्तरत्वं तत्प्रकारतापन्नानां प्रतिज्ञादीनां याः विषयिताः तासामपीत्यर्थः।

कारणतायां आनुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतत्वं निवेशितम्। समनियतत्वं च व्याप्यत्वे सति व्यापकत्वम्। तयोः निवेशस्य

वैशिष्ट्यबुद्धित्वावच्छिन्नकार्यतानिरूपितां प्रतिज्ञोत्तरहेतुरित्यादिज्ञानसाधारणीं तादृशानुपूर्व्यवच्छिन्न-भिन्नवाक्यत्वविशिष्टवैशिष्ट्यावच्छिन्नकार्यतानिरूपिततादृशवाक्यत्वादिप्रकारकज्ञानकारणतां चादायोदासीनातिप्रसङ्गवारणाय कारणतायां तादृशधर्मव्याप्यत्वव्यापकत्वयोर्निवेशनम्। न च

---

प्रयोजनमाह–***प्रतिज्ञोत्तरहेत्वादीति।*** व्याप्यत्वदळानुपादाने तादृशानुपूर्वीप्रकारक-निश्चयत्वव्यापक- कारणतावच्छेदक- विषयिताकत्वम् न्यायान्तर्गतत्वमित्युक्तौ उदासीनप्रतिज्ञाहेतुवाक्ययोरतिव्याप्तिः। तथा हि- 'प्रतिज्ञोत्तर–हेतूत्तर–उदाहरणोत्तर –उपनयोत्तरनिगमनत्ववत् वाक्यम्' इत्याकारकनिश्चयस्य 'तादृशनिगमनत्व-विशिष्टवाक्यवद्गगनम्' इत्याकारकविशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति यथा कारणत्वमस्ति तथा 'प्रतिज्ञोत्तरहेतुमद्गगनम्' इत्याकारक विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति कारणत्वमस्ति। प्रतिज्ञोत्तरत्वविशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति प्रतिज्ञोत्तरत्वप्रकारकनिश्चयस्य विशेषणतावच्छेदकप्रकारकनिश्चयविधया हेतुत्वात् पूर्वोक्तानुपूर्वीप्रकारकनिश्चये प्रतिज्ञोत्तरत्वस्यापि प्रकारतया भानात्। एवञ्च निश्चयत्वव्यापककारणतावच्छेदकविषयिता प्रतिज्ञाविषयिता- हेतुविषयिता च तन्निरूपकत्वं उदासीनप्रतिज्ञायां हेतौ चास्तीति तत्रातिव्याप्तिः। तद्वारणाय व्याप्यत्वनिवेशः। तन्निवेशे तु पूर्वोक्तानुपूर्वीप्रकारकनिश्चयत्वशून्ये 'प्रतिज्ञोत्तरो हेतुः' इति निश्चयेपि प्रतिज्ञोत्तरत्वविशिष्टहेतुवैशिष्ट्यावगाहि-बुद्धित्वावच्छिन्नकार्यतानिरूपितकारणतायाः सत्त्वात् तस्याः पूर्वोक्तनिश्चयत्वव्याप्यत्वं नास्तीति तस्याःकारणतायाः उपादातुमशक्यतया नोक्तदोषः। व्यापकत्वानिवेशे प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वावच्छिन्नभिन्नं वाक्यमिति निश्चयनिष्ठा या तादृशनिगमनत्वावच्छिन्नभिन्नवाक्यत्वावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वा-वच्छिन्नकार्यतानिरूपिता कारणता तस्याः तादृशनिगमनत्वरूपानुपूर्वीप्रकारक-निश्चयत्वव्याप्यत्वमस्ति। कारणताश्रये तादृशनिश्चये नियमेन तस्या आनुपूर्व्याः प्रकारत्वात्। तथा च तादृशानुपूर्वीप्रकारकनिश्चयत्वव्याप्या या कारणता तादृशानुपूर्व्यवच्छिन्नभिन्नं वाक्यमिति निश्चयनिष्ठा कारणता तदवच्छेदकत्वं उदासीनवाक्यनिरूपितविषयितायामप्यस्ति। तन्निरूपकत्वमुदासीनवाक्येऽप्यस्तीति तत्रातिव्याप्तिः। तद्वरणाय व्यापकत्वनिवेशः। तन्निवेशे च तादृशनुपूर्वीप्रकारकनिश्चयत्वं तादृशानुपूर्व्यवच्छिन्नं वाक्यमिति निश्चयेऽपि, तत्रोदासीनवाक्यविषयिता नास्ति।

तादृशानुपूर्वी विशेषावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणताया अपि न तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनैयत्यसम्भवः; प्रतिज्ञात्वादिना पदार्थान्तरावगाहि-तादृशानुपूर्वीप्रकारकज्ञानसमानाकारकज्ञानसाधारणत्वात्, तादृशज्ञानस्य वास्तवप्रतिज्ञाद्य-विषयकत्वेन तद्घटितानुपूर्व्यप्रकारकत्वादिति वाच्यम्। प्रतिज्ञात्वावच्छिन्नप्रकारतानिरूपितेतिक्रमेण निगमनत्वावच्छिन्नविषयतापर्यन्तं निवेश्य तच्छालिनिश्चयत्वसमनियतत्वस्यैव

---

उदासीनवाक्यस्य तादृशानुपूर्व्यवच्छिन्नभिन्नत्वेऽपि तादृशानुपूर्व्यवच्छिन्नत्वाभावात्। अत उदासीनवाक्यनिरूपितविषयितायाः तादृशपूर्वीप्रकारकनिश्चयत्व-व्यापकत्वविरहात् न तन्निरूपके उदासीनवाक्ये अतिव्याप्तिः। तथा च प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वप्रकारकनिश्चयत्वव्यापिका तादृशनिश्चयत्वव्याप्या च या कारणता तदवच्छेदकविषयितानिरूपकत्वे सति प्रतिज्ञाद्यन्यतमत्वमवयवलक्षणं पर्यवसन्नम्।

**न च *तादृशानुपूर्वीति।*** वास्तवप्रतिज्ञादिघटित-प्रतिज्ञोत्तरेत्यादिनिगमनरूपानु-पूर्वीप्रकारकनिश्चयत्वशून्ये प्रतिज्ञात्वेन रूपेण प्रतिज्ञातिरिक्तपदार्थावगाहिभ्रमात्मके प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वावच्छिन्नं वाक्यमिति निश्चयेपि तादृशानुपूर्व्यवच्छिन्नवाक्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणता अस्ति। अत उक्तकारणतायाः आनुपूर्वीप्रकारकनिश्चयत्वव्याप्यत्वाभावेन तादृशनिश्चयत्वसमनियतत्वविरहात् न तामादाय लक्षणसमन्वयः कर्तुं शक्यत इति शङ्का। प्रतिज्ञात्वादिना पदार्थान्तरावगाहीत्येतत् द्वितीयज्ञानेऽन्वेति। वास्तवप्रतिज्ञादिघटितानुपूर्वीप्रकारकज्ञानसमानाकारकं यत् प्रतिज्ञात्वादिना पदार्थान्तरावगाहिज्ञानं तत्रापि विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्न-कार्यतानिरूपितकारणतायाः सत्त्वात् इत्यर्थः। प्रतिज्ञात्वाश्रयोत्तरेत्यादिक्रमेण आनुपूर्वीप्रकारकनिश्चयत्वस्य न निवेश इत्याशयेन समाधत्ते-***प्रतिज्ञात्वावच्छिन्न प्रकारतानिरूपितेति।*** तथा च अव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रतिज्ञात्वा-वच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नतादृशसंबन्धावच्छिन्नहेतुत्वावच्छिन्नप्रकारता-निरूपितविशेष्यत्वावच्छिन्नतादृशसंबन्धावच्छिन्नोदाहरणत्वावच्छिन्न-प्रकारतानिरूपितविशेष्यत्वावच्छिन्न तादृशसंबन्धावच्छिन्नोपनयत्वावच्छिन्नप्रकारता-निरूपितनिगमनत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वसमनियतकारणतावच्छेदकविषयितानिरूपकत्वं न्यायान्तर्गतत्वम्। प्रतिज्ञात्वेन पदार्थान्तरावगाहिनिश्चयेऽपि प्रतिज्ञात्वावच्छिन्नप्रकारता-

विवक्षितत्वात्तादृशनिश्चयत्वस्योक्तभ्रमसाधारण्येन क्षतिविरहात्। न चैवमुदासीनप्रतिज्ञाद्यानन्तर्य हेत्वाद्यंशेऽवगाहते यो भ्रमस्तन्निष्ठतादृशप्रतिज्ञादिविषयिताया अपि निरुक्तकारणता-वच्छेदकतयाऽतिप्रसङ्गो दुर्वार इति वाच्यम्, भ्रमावृत्तिविषयिताया एव निवेशनीयत्वादिति कृतं विस्तरेण।

अवयवैकदेशस्यावयवद्वयात्मकसमुदायस्य च वारणाय ***प्रतिज्ञाद्यन्यतमत्वमिति।***

अथ धूमादालोकवान्पर्वतो वह्निमान् धूमादित्यादिन्यायान्तर्गतप्रतिज्ञैकदेशे धूमादित्यादि-भागेऽतिव्याप्तिः; तस्यापि हेतुप्रतिपाद्यो यादृशविशिष्टार्थस्तन्मात्रबोधकत्वेन हेतुलक्षणाक्रान्ततया प्रतिज्ञाद्यन्यतमत्वाक्रान्तत्वात्, न च तद्घटकपञ्चम्याः, प्रकृतसाध्यान्वितस्वार्थबोधकत्वाभावान्न

---

घटितानुपूर्वीप्रकारकनिश्चयत्वसत्त्वात् निश्चयत्वसमनियतत्वं कारणतायामक्षतमिति नोक्तदोष इति भावः।

***न चैवमिति।*** न्यायानन्तर्गतप्रतिज्ञानन्तर्य हेत्वंशेऽवगाहमानः भ्रमात्मकः यः उक्तानुपूर्वीप्रकारकनिश्चयः तस्यापि विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति कारणत्वात् तदवच्छेदकविषयितानिरूपकत्वस्य न्यायानन्तर्गतप्रतिज्ञायां सत्त्वात् तत्रातिव्याप्तिरिति शङ्का। समाधानं तु भ्रमावृत्तित्वं कारणतावच्छेदकविषयितायां निवेशनीयम्। अतो भ्रमवृत्तिविषयितामादाय नोक्तदोष इति। न च विषयितायां भ्रमावृत्तित्वनिवेशेऽसंभवः। तादृशविषयितायाः भ्रमप्रमासाधारणत्वेन भ्रमावृत्तित्वविरहादिति वाच्यम्। भ्रमान्यवृत्तित्वस्य तदर्थत्वात्।

एतावता अवयवलक्षणघटकस्य न्यायान्तर्गतत्वस्य परिष्कृतं स्वरूपमुक्तम्। अथ तद्घटकस्य प्रतिज्ञाद्यन्यतमत्वस्य प्रयोजनमाह–***अवयवैकदेशस्येति।*** प्रतिज्ञाद्येकदेशस्य पर्वतपदादेः 'पर्वतो वह्निमान् धूमात्' इति प्रतिज्ञाहेतुसमुदायस्य च न्यायान्तर्गतत्वमस्ति इति तत्रातिव्याप्तिवारणाय प्रतिज्ञाद्यन्यतमत्वनिवेशः। ***अथेति।*** 'धूमादालोकवान् पर्वतः वह्निमान् धूमात्' इत्यादिन्यायान्तर्गतप्रतिज्ञा 'धूमादालोकवान् पर्वतः वह्निमान्' इति। तदेकदेशे 'धूमात्' इति भागे न्यायान्तर्गतत्वमस्ति। धूमनिष्ठज्ञापकत्वरूपार्थप्रतिपादकत्वेन हेतुलक्षणाक्रान्ततया हेतुत्वमस्ति। तथा च प्रतिज्ञाद्यन्यतमहेतुवाक्यत्वस्य न्यायान्तर्गतत्वस्य च सद्भावात् प्रतिज्ञैकदेशे 'धूमात्' इति भागे अवयवलक्षणातिव्याप्तिरिति शङ्का। तत्र समाधानं शङ्कते – ***न च तद्घटकेति।*** प्रकृतसाध्यान्वितार्थबोधक-पञ्चमीविभक्त्यन्तत्वमेव हेतुवाक्यस्य लक्षणम्। पूर्वोक्तप्रतिज्ञाघटकपञ्चम्याः

वक्ष्यमाणहेतुलक्षणाक्रान्तत्वं तस्येति वाच्यम्; एवमपि धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमानित्यादिप्रतिज्ञाघटकतादृशभागेऽतिप्रसङ्गस्य दुर्वारत्वादिति चेन्न; प्रकृतपक्षतावच्छेदकावच्छिन्नविशेषणतापन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नान्वितस्वार्थ- बोधकत्वे सति प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भूतविषयिताशून्य -बोधजनकवाक्यत्वरूपहेतुत्वस्यैव निवेशनीयतयानतिप्रसङ्गात्। निगमनघटकस्य तस्मादिति भागस्य वारणाय विशेष्यदळम्, तज्जन्यबोधे तादृशविशिष्टविषयिताबहिर्भूतव्याप्त्यादि-विषयतासत्त्वेन तद्वारणात्।

ननु प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिभिन्नभिन्नत्वरूपं प्रतिज्ञाद्येकदेशसाधरणमपि,

---

आलोकान्वितार्थबोधकत्वेऽपि प्रकृतसाध्यवह्न्यन्वितार्थबोधकत्वाभावात् 'धूमात्' इति प्रतिज्ञाघटकभागस्य हेतुवाक्यलक्षणानाक्रान्ततया प्रतिज्ञाद्यन्यतमत्वं नास्तीति नातिव्याप्तिरिति भावः। ***एवमपीति।*** 'धूमाद्वह्निमतः सधर्मा पर्वतः वह्निमान् धूमात्' इत्यादिन्यायान्तर्गतप्रतिज्ञैकदेशस्य धूमादिति भागस्य प्रकृतसाध्यवह्न्यन्वितार्थ-बोधकपञ्चम्यन्तत्वरूपहेतुलक्षणसद्भावेन प्रतिज्ञाद्यन्यतमत्वमस्तीति तत्रातिव्याप्तिरिति भावः। ***तादृशभागे*** इति। 'धूमात्' इति भागे इत्यर्थः। समाधत्ते- ***प्रकृतपक्षतावच्छेदकेत्यादि।*** प्रकृतपक्षतावच्छेदकावच्छिन्नविशेषणतापन्न-प्रकृतसाध्यतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकत्वे सति प्रकृतहेतुता-वच्छेदकावच्छिन्न हेतुविशिष्टहेतुत्वविषयिताबहिर्भूतविषयिताशून्यबोधजनकत्वे सति वाक्यत्वं हेतुवाक्यस्य लक्षणम्। पूर्वोक्तप्रतिज्ञैकदेशे 'धूमात्' इति भागे इदं लक्षणं नास्ति। तद्भागार्थस्य धूमज्ञानज्ञाप्यत्वस्य पर्वतत्वावच्छिन्नविशेषणतापन्न-साधर्म्यविशेषणतापन्नवह्निविशेषणतापन्नस्वार्थबोधकत्वेऽपि तत्र यत् पक्षतावच्छेदकं धूमज्ञानज्ञाप्यवह्निमत्साधर्म्यविशिष्टपर्वतत्वं तदवच्छिन्नविशेषणतापन्न-वह्निविशेषणतापन्नस्वार्थबोधकत्वं नास्ति। तत्तु पृथक्भूतस्य 'धूमात्' इति वाक्यस्यैव अस्ति। अतः प्रतिज्ञैकदेशे 'धूमात्' इति भागे नातिव्याप्तिः।

अत्रत्यहेतुलक्षणे विशेष्यदळानुपादाने 'तस्मात् वह्निमान्' इति निगमनघटके 'तस्मात्' इति भागे हेतुलक्षणस्यातिव्याप्तिःस्यात्। तदर्थं विशेष्यदळोपादानम्। तदुपादाने च हेतुविशिष्टहेतुत्वविषयिताबहिर्भूता या विषयिता व्याप्तिविषयिता वा अबाधितत्वादिविषयिता वा तच्छून्यत्वं निगमनघटक 'तस्मात्' इति भागजन्ये बोधे नास्तीति नातिव्याप्तिः। विशेष्य-

भेदस्याव्यासज्यवृत्तितया समुदायवृत्तित्वे एकदेशवृत्तिताया अपि दुर्वारत्वात्; अथ प्रतिज्ञादिभिन्नभेदानुयोगितावच्छेदकरूपवत्त्वं तत् तादृशं च रूपं प्रतिज्ञात्वादिकमेव न तु तदेकदेशपर्याप्तपर्वतपदत्वादिकम्, तदवच्छिन्ने व्यासज्यवृत्तिप्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वादिति चेन्न, प्रतिज्ञाद्येकदेशे प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वे तादृशभेदावच्छिन्नभेदस्य प्रतिज्ञात्वाद्यवच्छिन्नेपि सत्त्वासम्भवात् प्रतिज्ञात्वपर्याप्त्यधिकरणसमुदायस्यैकदेशानतिरिक्तत्वात्, न हि

---

दळे हेतुत्वे हेतुवैशिष्टचं च आधेयतासंबन्धेन। हेतुत्वं च ज्ञापकत्वम्। अत्रत्य-पक्षतावच्छेदकावच्छिन्नेत्यादिविशेषणानां प्रयोजनं हेतुलक्षणावसरे स्फुटीभविष्यति।

प्रतिज्ञाद्यघटकत्वे सतीत्यादि दीधितौ उक्तं अवयवलक्षणान्तरमवतारयति – ***ननु प्रतिज्ञाद्यन्यतमत्वमित्यादिना।*** प्रथमलक्षणघटकस्य प्रतिज्ञाद्यन्यतमत्वस्य सम्भावितदोषनिरासकः परिष्कारः अतिगुरुभूतो भवतीति आलोच्य लघुलक्षणान्तरं दीधितिकारो वदति–प्रतिज्ञाद्यन्यतमत्वम् इत्यस्य प्रतिज्ञादिभिन्नभिन्नत्वम् इति यथाश्रुतार्थः। तस्य अवयवलक्षणे निवेशे सति प्रतिज्ञाद्येकदेशे पर्वतपदादौ अतिव्याप्तिः। प्रतिज्ञादिभिन्नं उदासीनवाक्यम्। तद्भिन्नत्वं वह्निमत्पर्वतपदसमुदाय-रूपप्रतिज्ञायामस्ति चेत् तदेकदेशे पर्वतपदेऽप्यस्त्येव तत्। समुदायस्य एकदेशानतिरिक्तत्वात्।

***अथेति।*** प्रतिज्ञाद्यन्यतमत्वं नाम प्रतिज्ञादिभिन्नप्रतियोगिकभेदानुयोगिता-वच्छेदकरूपवत्त्वम्। तञ्च रूपं प्रतिज्ञात्वादिकमेव। न तु प्रतिज्ञाद्येकदेश-वृत्तिपर्वतपदत्वादिकम्। तथा हि – प्रतिज्ञादिभिन्नत्वं नाम प्रतिज्ञात्वाद्यवच्छिन्न-प्रतियोगिताकभेदवत्त्वम्। एवञ्च प्रतिज्ञात्वाद्यवच्छिन्नप्रतियोगिताक-भेदावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकरूपवत्त्वं प्रतिज्ञाद्यन्यतमत्त्वम्, इति पर्यवसितम्। पर्वतपदत्वावच्छिन्ने पर्वतपदवह्निमत्पदसमुदायत्व-रूपप्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदस्य सद्भावात् तादृशभेदावच्छिन्नप्रतियोगिताकः भेदः 'प्रतिज्ञात्वाद्यवच्छिन्नभिन्नं न' इत्याकारकप्रतीतिसाक्षिकः पर्वतपदत्वावच्छिन्ने न संभवति। अतः पर्वतपदत्वं नोक्तभेदानुयोगितावच्छेदकम् इति न तदवच्छिन्ने अतिव्याप्तिः इति भावः। उक्तपरिष्कारे दोषमाह–***प्रतिज्ञाद्येकदेशे*** इति।

एवंरीत्या अन्यतमत्वपरिष्कारे सति प्रतिज्ञात्वादिकमपि उक्तभेदानुयोगितावच्छेदकं न भवति। तथाहि– प्रतिज्ञैकदेशे पर्वतपदे प्रतिज्ञात्वावच्छिन्नभेदसत्त्वेन प्रतिज्ञात्वावच्छिन्नभिन्नं पर्वतपदम्। तत्प्रतियोगिकभेदस्तु

व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदः प्रामाणिकः, घटपटौ न घट इत्यादिप्रतीतेरसिद्धेः। प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगिता-वच्छेदकधर्मवत्त्वविवक्षणे च प्रतिज्ञाहेत्वादिसमुदायेऽतिव्याप्तिः, तादृशसमुदायत्वावच्छिन्ने प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वात्तादृशसमुदायत्वस्य निरुक्तरूपानन्तर्गतत्वेन तादृशसकलधर्मा-वच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वात्, प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकप्रतियोगिता-वच्छेदकं यद्यत् तदवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वेनापि तादृशधर्मविशेषणे

---

पर्वतपद–वह्निमत्पद–समुदायत्वरूपप्रतिज्ञात्वाद्यवच्छिन्ने न संभवति। 'उभयं नैकम्' अथ वा 'घटपटौ न घटः' इति प्रतीतिविरहेण व्यासज्यवृत्ति-धर्मावच्छिन्नानुयोगिताकस्य एकदेशवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य भेदस्य अनभ्युपगमात्। एकदेशे पर्वतपदे विद्यमानः यः धर्मः प्रतिज्ञात्वावच्छिन्नभेदरूपः तदवच्छिन्नप्रतियोगिताकभेदः व्यासज्यवृत्तिसमुदायत्वरूपप्रतिज्ञात्वाद्यवच्छिन्ने न सम्भवति। अतः प्रतिज्ञात्वादीनां प्रतिज्ञादिभिन्नभेदानुयोगितावच्छेदकत्वविरहेण तदाश्रये प्रतिज्ञादौ प्रतिज्ञाद्यन्यतमत्वं नास्तीति असंभव इति भावः। उक्तदोषवारणाय प्रकारान्तरेण प्रतिज्ञाद्यन्यतमत्वपरिष्कारमाशङ्क्य दोषान्तरेण तं निराकरोति–***प्रतिज्ञादिभेदपञ्चकेति।*** प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकधर्मवत्त्वं प्रतिज्ञाद्यन्यतमत्वम्। यद्यद्रूपपदेन पर्वतपदत्व–वह्निमत्पदत्वादिरूपं प्रतिज्ञाद्येकदेशवृत्तिरूपं ग्राह्यम्। तदवच्छिन्ने प्रतिज्ञादिभेदपञ्चकं वर्तते। 'एकं नोभयम्' इति प्रतीत्या पर्वतपदे पर्वतपद–वह्निमत्पदसमुदायरूपप्रतिज्ञाभेदोऽस्ति, सुतरां हेत्वादिभेदः। तथा च प्रतिज्ञाभेदहेतुभेदादिपञ्चकस्य अनुयोगितावच्छेदकं पर्वतपदत्वम्। तदवच्छिन्नानुयोगिताकः यः भेदः 'पर्वतपदं प्रतिज्ञा न' 'हेतुर्न' इत्यादिप्रतीतिसिद्धो भेदः तत्प्रतियोगितावच्छेदकं प्रतिज्ञात्वहेतुत्वादिकम्। तद्वत्त्वं प्रतिज्ञादावस्ति इति लक्षणसमन्वयः। एवं विवक्षणेऽपि असम्भवस्य अव्याप्तेर्वा अभावेऽपि प्रतिज्ञाहेतुसमुदाये अतिव्याप्तिः। यद्यद्रूपमिति पदेन प्रतिज्ञाहेतुसमुदायत्वं ग्रहीतुं न शक्यते। तदवच्छिन्ने प्रतिज्ञाहेतुसमुदाये प्रतिज्ञाभेदस्य वा हेतुभेदस्य वा विरहेण प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकत्वस्य प्रतिज्ञाहेतुसमुदायत्वे विरहात्। किन्तु यद्यद्रूपपदेन पूर्वोक्तं एकदेशवृत्तिपर्वतपदत्वादिकमेव ग्राह्यम्। तदवच्छिन्नानुयोगिताकभेदः प्रतिज्ञाहेतुसमुदायभेदः। तत्प्रतियोगितावच्छेदकं

प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं वा वक्तव्यम्। उभयञ्च प्रतिज्ञाहेतू हेतूदाहरणे उदाहरणोपनयौ उपनयनिगमने इति विशिष्य वक्तव्यमिति।

---

चातिगौरवम्, अतो लघुलक्षणान्तरमाह-***प्रतिज्ञाद्यघटकत्व*** इति। अत्रापि न्यायान्तर्गतत्वे सतीत्यनुषज्यते। अतो न्यायबहिर्भूतवाक्यव्युदासः। प्रतिज्ञाद्येकदेशवारणाय

---

प्रतिज्ञाहेतुसमुदायत्वम्। तद्वत्त्वं प्रतिज्ञाहेतुसमुदायेऽस्तीति तत्रावयवलक्षणातिव्याप्तिरिति भावः।

ननु एतादृशातिव्याप्तिवारणाय उक्तपरिष्कारघटकधर्मे प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्न-प्रतियोगिताकभेदानुयोगितावच्छेदकमिति विशेषणान्तरं दातव्यम्। प्रतिज्ञाहेतुसमुदायत्वं तु न तादृशविशेषणाक्रान्तम्। प्रतिज्ञात्वावच्छिन्नानुयोगिताकः यः भेदः प्रतिज्ञाहेतुसमुदायभेदः 'प्रतिज्ञा प्रतिज्ञाहेतुसमुदायो न' इति प्रतीतिसिद्धः तत्प्रतियोगितावच्छेदकं यद्यद्रूपं प्रतिज्ञाहेतुसमुदायत्वम्। तदवच्छिन्नप्रतियोगिताक-भेदानुयोगितावच्छेदकत्वं प्रतिज्ञाहेतुसमुदायत्वे नास्ति। प्रतिज्ञाहेतुसमुदाये प्रतिज्ञाहेतुसमुदायभेदविरहात्। अतः तत्समुदाये नातिव्याप्तिः। एवञ्च प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेद-प्रतियोगितावच्छेदकत्वे सति प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यत् तदवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदको यो धर्मः तद्वत्त्वं प्रतिज्ञाद्यन्यतमत्वम्। प्रतिज्ञाहेतुसमुदाये अतिव्याप्तिवारणाय विशेष्यदलम्। प्रतिज्ञाद्येकदेशेऽतिव्याप्तिवारणाय सत्यन्तम्। एतादृशपरिष्कारे अतिगौरवमस्ति इति लक्षणान्तरमनुसृतमिति भावः।

प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं द्वितीयमवयवलक्षणम्। उभयपदेन प्रतिज्ञाहेतू-हेतूदाहरणे-उदाहरणोपनयौ-उपनयनिगमने च विशिष्य ग्राह्ये। तथा च प्रतिज्ञाहेतुघटकभागद्वयाघटितत्वं हेतूदाहरणघटकभागद्वयाघटितत्वमिति रीत्या निर्वचनीयम्। प्रतिज्ञाद्यघटकत्वमात्रोक्तौ प्रतिज्ञाघटकः यः भागः पर्वतपदं,

प्रतिज्ञाद्यघटकत्वनिवेशनम्। तदर्थश्च प्रतिज्ञादिघटकतानवच्छेदकधर्मवत्त्वम्। तेन प्रतिज्ञादिघटकतदेकदेशभेदस्य प्रतिज्ञात्वादिरूपव्यासज्यवृत्तिधर्मावच्छिन्नेऽनुपगमेपि न क्षतिः। प्रतिज्ञादिघटकतावच्छेदकत्वं च प्रतिज्ञात्वादिन्यूनवृत्तित्वम्। तच्च प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वादिसमानाधिकरणत्वम्। तथात्वं च तदेकदेशवृत्तिपर्वतपदत्वादेः, तदवच्छिन्ने प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वात्, न तु प्रतिज्ञात्वादेः। हेतुत्वादेः प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वात्तत्संग्रहाय विशेष्यदलम्।

---

हेतुघटकः यः भागः धूमपदं च तत्समुदाये प्रतिज्ञाद्यघटकत्वसत्त्वात् अतिव्याप्तिः स्यात्। तद्वारणाय उभयघटकभगद्वयाघटितत्वनिवेशः। तन्निवेशे च उक्तसमुदाये प्रतिज्ञाघटकभागहेतुघटकभागद्वयघटितत्वमेवास्ति इति नातिव्याप्तिः। सत्यन्तानुपादाने प्रतिज्ञाद्येकदेशपर्वतपदादौ अवयवद्वयघटकभागद्वयाघटितत्वसत्त्वात् अतिव्याप्तिः। सत्यन्तनिवेशे तु पर्वतपदादेः प्रतिज्ञादिघटकत्वमेवास्ति इति नातिव्याप्तिः। एवमपि न्यायानन्तर्गते प्रतिज्ञादौ अतिव्याप्तिवारणाय पूर्वलक्षणस्थं 'न्यायान्तर्गतत्वे सति' इत्येतत् अत्रापि अनुषञ्जनीयम्। तदाह *अत्रापीति।*

ननु प्रतिज्ञाद्यघटकत्वं यदि प्रतिज्ञादिघटकभिन्नत्वं तदा असंभवः। प्रतिज्ञादिघटकपर्वतपदादिभेदस्य प्रतिज्ञादौ असत्त्वात् व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकस्य एकदेशभेदस्य अप्रामाणिकत्वात् इत्यत आह – *तदर्थश्चेति।* प्रतिज्ञादिघटकतानवच्छेदकः यः धर्मः तद्वत्त्वम् प्रतिज्ञाद्यघटकत्वम्। प्रतिज्ञादिघटकतानवच्छेदकत्वं तु प्रतिज्ञात्वादिन्यूनवृत्तित्वम्। तदपि प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वादिसमानाधिकरणत्वम्। तथा च प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वादिसमानाधिकरणो यो धर्मः तद्भिन्नधर्मवत्त्वं प्रतिज्ञाद्यघटकत्वम् इति पर्यवसितम्।

प्रतिज्ञात्वाद्यवच्छिन्नभेदः पर्वतपदे अस्ति। अतः पर्वतपदं प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगि। अनुयोगितावच्छेदकं पर्वतपदत्वम्। तत् पर्वतपदत्वं प्रतिज्ञात्वसमानाधिकरणम्। प्रतिज्ञात्वाधिकरणे पर्वतपदे वर्तमानत्वात्। अतः प्रतिज्ञादिघटकतावच्छेदकं पर्वतपदत्वादिकम्। तद्भिन्नत्वं प्रतिज्ञात्वादौ वर्तते। प्रतिज्ञात्वाद्यवच्छिन्ने प्रतिज्ञात्वावच्छिन्नभेदासत्त्वात् प्रतिज्ञात्वावच्छिन्नभेदानुयोगितावच्छेदकत्वं प्रतिज्ञात्वादौ नास्ति। अपि तु एकदेशवृत्तिपर्वतपदत्वादावेव। तद्भिन्नप्रतिज्ञात्वादिमत्त्वस्य प्रतिज्ञादौ सत्त्वात् लक्षणसमन्वयः। घटकतावच्छेदकत्वशरीरे सत्यन्तानुपादाने प्रतिज्ञात्वादिसमानाधिकरणत्वस्य

**न च** मिलितभेदपञ्चकानुयोगितावच्छेदकभिन्नत्वनिवेशे **हेतुत्वादेः** हेतुत्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वविरहात्तादृशानुयोगितावच्छेदकभिन्नत्वमव्याहतमेवेति **विशेष्यदलमनर्थकमेवेति वाच्यम्; धूमादालोकवान्पर्वतो वह्निमानित्यादिप्रतिज्ञाघटकधूमादित्यादिभागसाधारणस्य हेतुत्वस्य निवेशे तत्रातिप्रसङ्गभयेन** मिलितभेदपञ्चकानुयोगितावच्छेदकत्वस्यैकत्र

---

प्रतिज्ञात्वादौ सद्भावात् प्रतिज्ञात्वादेः घटकतावच्छेदकत्वापत्तिः। अतः सत्यन्तमुपात्तम्। तत्र विशेष्यदलस्य प्रयोजनमाह- *हेतुत्वादेरिति*। हेतुवाक्ये प्रतिज्ञात्वावच्छिन्नभेदसद्भावात् हेतुत्वं प्रतिज्ञात्वावच्छिन्नभेदानुयोगितावच्छेदकम्। तद्भिन्नत्वं हेतुत्वे नास्तीति हेतुवाक्येऽतिव्याप्तिः स्यात्। तद्वारणाय प्रतिज्ञात्वसमानाधिकरणत्वरूपं विशेष्यदलम्। हेतुत्वस्य प्रतिज्ञात्वाधिकरण-वृत्तित्वाभावात् न तस्य प्रतिज्ञाघटकतावच्छेदकत्वप्रसङ्गः।

ननु प्रतिज्ञात्वावच्छिन्नभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वसमानाधिकरणः हेतुत्वावच्छिन्नभेदानुयोगितावच्छेदकत्वे सति हेतुत्वसमानाधिकरणः इत्यादिरीत्या प्रतिज्ञादिघटकतावच्छेदकधर्मान् निवेश्य तद्भिन्नधर्मवत्त्वमिति विवक्षणे हेतुत्वस्य प्रतिज्ञाघटकतावच्छेदकत्ववारणाय प्रतिज्ञाघटकतावच्छेदकशरीरे प्रतिज्ञात्व-सामानाधिरण्यनिवेश इति वक्तुं शक्यते। परन्तु तथा विवक्षा न क्रियते। प्रतिज्ञात्वाद्यवच्छिन्नभेदपञ्चकानुयोगितावच्छेदकभिन्नत्वं प्रतिज्ञादि-घटकतानवच्छेदकत्वमिति विवक्ष्यते। तत्र हेतुत्वादेः प्रतिज्ञादिभेदचतुष्टयानुयोगिता-वच्छेदकत्वसत्त्वेऽपि भेदपञ्चकानुयोगितावच्छेदकत्वं नास्ति, हेतुत्वावच्छिन्ने हेतुत्वावच्छिन्नभेदविरहात्। तथा च भेदपञ्चकानुयोगितावच्छेदकभिन्नत्वरूपस्य घटकतानवच्छेदकत्वस्य हेतुत्वादौ सुलभत्वात् प्रतिज्ञात्वसामानाधिरकरण्यरूपं विशेष्यदलम् अनर्थकम् इत्याशयेन शङ्कते - ***न च मिलितभेदेति***। तथा विवक्षणे दोषमाह-***धूमादालोकवानिति***। 'धूमदालोकवान् पर्वतो वह्निमान्, धूमात्' इत्यादिन्यायान्तर्गतप्रतिज्ञाघटकधूमादिति भागे हेतुत्वस्य सत्त्वेन तन्निष्ठं हेतुत्वं मिलितभेदपञ्चकानुयोगितावच्छेदकं न भवति। अतः भेदपञ्चकानु-योगितावच्छेदकभिन्नहेतुत्ववत्त्वस्य तस्मिन् भागे सत्त्वात् अतिव्याप्तिः। अतः भेदपञ्चकानुयोगितावच्छेदकत्वेन निवेशः कर्तुं न शक्यते। एवञ्च प्रतिज्ञात्वा-वच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वसमानाधिकरणं

निवेशासम्भवात्। वस्तुतस्तु तद्व्यावृत्तपूर्वोपदर्शितहेतुत्वनिवेशेनैव तादृशभागवारण-सम्भवान्मिलितभेदपञ्चकानुयोगितावच्छेदकभिन्नत्वस्यैव निवेशनीयतया नोपादेयमेव विशेष्यदलम्; मिलितभेदपञ्चकानुयोगितावच्छेदकत्वस्य प्रतिज्ञादिघटकतावच्छेदकत्वा-नात्मकत्वे विशेष्यदले उभयाघटितत्वनिवेशेनैवोपपत्त्या तद्घटकभागद्वयाघटितत्व-पर्यन्तनिवेशवैयर्थ्यात्। प्रतिज्ञादिघटकभागद्वयघटितवृत्तिसमुदायत्वस्य प्रतिज्ञात्वाद्यवच्छिन्न-

35

---

यत् तद्भिन्नत्वे सति, हेतुत्वावच्छिन्नभेदानुयोगितावच्छेदकत्वे सति हेतुत्वसमानाधिकरणं यत् तद्भिन्नत्वे सति, उदाहरणत्वावच्छिन्नभेदानुयोगितावच्छेदकत्वे सति उदाहरणत्वसमानाधिकरणं यत् तद्भिन्नत्वे सति, उपनयत्वावच्छिन्नभेदानु योगितावच्छेदकत्वे सति उपनयत्वसमानाधिकरणं यत् तद्भिन्नत्वे सति, निगमनत्वावच्छिन्नभेदानुयोगितावच्छेदकत्वे सति निगमनत्वसमानाधिकरणं यत् तद्भिन्नो यः प्रतिज्ञात्वादिरूपो धर्मः तद्वत्त्वं प्रतिज्ञाद्यघटकत्वमिति वक्तव्यम्। तत्र प्रत्येकं प्रतिज्ञात्वसामानाधिरण्यादेरनिवेशे हेतुत्वस्य प्रतिज्ञाघटकतावच्छेदकत्वं प्रतिज्ञात्वस्य हेतुघटकतावच्छेदकत्वम् इति रीत्या प्रतिज्ञात्वादयः घटकतावच्छेदकाः स्युः। तद्वारणाय घटकतावच्छेदकशरीरे तत्तत्सामानाधिकरण्यनिवेशः इति तत्त्वम्।

मिलितभेदपञ्चकानुयोगितावच्छेदकभिन्नत्वनिवेशक्रमस्तु प्रतिज्ञात्वा-वच्छिन्नभेद-हेतुत्वावच्छिन्नभेद-उदाहरणत्वावच्छिन्नभेद-उपनयत्वा-वच्छिन्नभेद-निगमनत्वावच्छिन्नभेद एतत्समुदायानुयोगितावच्छेदक-धर्मभिन्नधर्मवत्त्वमिति।

ननु पृथक् पृथक् निवेशापेक्षया मिलितभेदपञ्चकानुयोगितावच्छेदकत्वम् एकत्र निवेश्य तद्भिन्नधर्मवत्त्वं प्रतिज्ञाद्यघटकत्वमित्येव युक्तम् लाघवात्। न च 'धूमादालोकवान् पर्वतो वह्निमान्' इति प्रतिज्ञाघटकधूमात् इति भागेऽतिव्याप्तिरिति वाच्यम्। तस्य भागस्य प्रकृतपक्षविशेषणतापन्न-प्रकृतसाध्यविशेषणतापन्नस्वार्थबोधजनकपञ्चम्यन्तत्वरूपहेतुलक्षणविरहेण हेतुत्वाभावात् तस्मिन् भागे प्रतिज्ञादिभेदपञ्चकस्य सद्भावात् भेदपञ्चकानुयोतितावच्छेदकधर्मवत्त्वमेवास्ति, न तु तद्भिन्नधर्मवत्त्वम्। अतो न तत्रातिव्याप्तिः इत्याशयेनाह – ***वस्तुतस्त्विति। विशेष्यदलमिति।*** प्रतिज्ञात्वादि-सामानाधिकरण्यमित्यर्थः।

किञ्च मिलितभेदपञ्चकानुयोगितावच्छेदकत्वस्य प्रतिज्ञाघटकतावच्छेदकत्वरूपत्वे दीधितिग्रन्थानुकूल्यमप्यस्तीत्याह – ***मिलितेति।*** विशेष्यदले प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिवारणार्थमुपात्तेन उभयाघटितत्वमात्रेणैव तादृशातिव्याप्तेः वारणसम्भवात् उभयघटकभागद्वयाघटितत्वपर्यन्तनिवेशनं किमर्थमिति शङ्कायां प्रतिज्ञाघटकभागहेतुसमुदाये हेतुघटकभागप्रतिज्ञासमुदाये च प्रतिज्ञाहेतुरूपोभयाघटितत्वसत्त्वात् अतिव्याप्तिः स्यात्। तद्वारणाय उभयघटकभागद्वयाघटितत्वमिति निवेशितम्। उक्तसमुदायस्य प्रतिज्ञाघटकभागहेतुघटकभागद्वयघटितत्वात् नातिव्याप्तिरिति वक्तव्यम्। यदि सत्यन्तप्रविष्टं प्रतिज्ञाघटकतावच्छेदकत्वं प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वसमानाधिकरणत्वम् इत्यादिरूपेण विवक्षितं स्यात् तर्हि प्रतिज्ञाघटकभागहेतुवृत्तिसमुदायत्वे प्रतिज्ञात्वावच्छिन्नभेदानुयोगितावच्छेदकत्वसत्त्वेन प्रतिज्ञाघटकतावच्छेदकतया प्रतिज्ञाघटकतानवच्छेदकत्वविरहेण सत्यन्ताभावादेव तद्वारणसंभवात्, एवं हेतुघटकभागप्रतिज्ञासमुदायत्वे हेतुत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वेन हेतुघटकतावच्छेदकतया हेतुघटकतानवच्छेदकत्वविरहेण सत्यन्तदलाभावादेव तद्वारणसंभवात् प्रतिज्ञाहेतुसमुदाये च सत्यन्तदलसत्त्वेऽपि उभयाघटितत्वनिवेशेनैव तत्रातिव्याप्तिवारणसंभवात् उभयघटकभागद्वयाघटितत्वपर्यन्तनिवेशनं व्यर्थं स्यात्। मिलितभेदपञ्चकानुयोगितावच्छेदकत्वस्य प्रतिज्ञादिघटकतावच्छेदकत्वरूपत्वे तु प्रतिज्ञाघटकभागहेतुसमुदाये हेतुत्वावच्छिन्नप्रतियोगिताकभेदविरहेण हेतुघटकभागप्रतिज्ञासमुदाये प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदविरहेण भेदपञ्चकानुयोगितावच्छेदकत्वं हेत्वेकदेशप्रतिज्ञासमुदायत्वे प्रतिज्ञैकदेशहेतुसमुदायत्वे वा नास्तीति मिलितभेदपञ्चकानुयोगितानवच्छेदकतादृशसमुदायत्ववत्त्वस्य तयोः समुदाययोः सत्त्वात् सत्यन्तदलाक्रान्तयोः प्रतिज्ञाहेतूभयाघटितयोः तयोः अतिव्याप्तिवारणाय उभयघटकभागद्वयाघटितत्वपर्यन्तनिवेशस्य सार्थक्यमिति भावः। ***उपपत्ताविति।*** प्रतिज्ञाहेतुसमुदायादौ अतिव्याप्तिवारणसंभवे इत्यर्थः। ***प्रतिज्ञादिघटकभागेति।*** प्रतिज्ञाघटकभागे पर्वतपदे हेतुरूपे समुदाये च पर्याप्तं यत्समुदायत्वं तस्येत्यर्थः। ***प्रतिज्ञात्वाद्यवच्छिन्नेति।*** तादृशसमुदाये 'प्रतिज्ञा न' इति प्रतीतिसिद्धः भेदः

भेदानुयोगितावच्छेदकत्वेन प्रतिज्ञाघटकतानवच्छेदकत्वदलेनैव वारणसम्भवात्। मिलितभेदपञ्चकामुयोगितावच्छेदकत्वस्य प्रतिज्ञादिघटकतावच्छेदकत्वात्मकत्वे तु प्रतिज्ञात्वपर्याप्त्यधिकरणहेत्वेकदेशहेतुत्वपर्याप्त्यधिकरणप्रतिज्ञैकदेशवृत्तिसमुदायत्वस्य प्रतिज्ञात्वहेतुत्वाद्यवच्छिन्नभेदानुयोगितानवच्छेदकतया तत्समुदायत्वमादायातिप्रसङ्गस्य वारणाय भागद्वयपर्यन्तनिवेशसार्थक्यात्। न चैकप्रतिज्ञात्वव्यक्तेरपरप्रतिज्ञात्वव्यक्त्यवच्छिन्न-भेदानुयोगितावच्छेदकतया प्रतिज्ञादिघटकतावच्छेदकत्वं दुर्वारमेवेति वाच्यम्। स्वसमानाधिकरण-प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वस्य वा अनुगतरूपावच्छिन्नप्रतिज्ञात्वाद्यवच्छिन्न-भेदानुयोगितावच्छेदकत्वस्य वा विशेषणीयत्वात् घटकतानवच्छेदकधर्मश्च व्यासज्यवृत्तित्वेन

---

भवति। 'एकं नोभयम्' इतिवत् प्रतिज्ञैकदेशे प्रतिज्ञात्मकसमुदायभेदस्य सत्त्वात् हेतौ च सुतरां तत्सत्त्वात्। अतः तादृशभेदानुयोगी–प्रतिज्ञाघटकभागहेतु-समुदायः। अनुयोगितावच्छेदकं तत्समुदायत्वम्। ***प्रतिज्ञात्वपर्याप्त्यधिकरणेति***। प्रतिज्ञात्वपर्याप्त्यधिकरणं प्रतिज्ञारूपः समुदायः (पर्वतपदवह्निमत्पदसमुदायः)। हेत्वेकदेशः पञ्चमीरहितं धूमपदम्, तद्वृत्तिसमुदायत्वस्य, एवं हेतुत्वपर्याप्त्यधिकरणं 'धूमात्' इति प्रकृतिप्रत्ययसमुदायात्मकं पदम्। प्रतिज्ञैकदेशः पर्वतपदम्, तद्वृत्तिसमुदायत्वस्य चेत्यर्थः। ***प्रतिज्ञात्वहेतुत्वावच्छिन्नेति***। प्रतिज्ञात्वपर्याप्त्यधिकरणे प्रतिज्ञात्वावच्छिन्नभेदः नास्ति। अतः तद्घटितसमुदायेऽपि स भेदो नास्ति। एवं हेतुत्वपर्याप्त्यधिकरणे हेतुत्वावच्छिन्नभेदो नास्ति इति तद्घटितसमुदायेऽपि स नास्ति। तथा च तत्समुदायत्वस्य भेदचतुष्टयानुयोगितावच्छेदकत्वेऽपि भेदपञ्चकानुयोगितानवच्छेदकत्वसत्त्वात् तत्समुदायेऽतिव्याप्तिवारणाय भागद्वयपर्यन्तनिवेशस्य सार्थक्यात् इत्यर्थः।

***न चैकप्रतिज्ञात्वव्यक्तेरिति***। 'पर्वतो वह्निमान्' इति समानानुपूर्वीकनानाप्रतिज्ञाव्यक्तिसाधारणम् एकं प्रतिज्ञात्वम् दुर्वचम्। यतः अनेकपदसमुदायत्वं प्रतिज्ञात्वम्। समुदायत्वञ्च बुद्धिविशेषविषयत्वम्। तदपि विषयभेदेन भिन्नम्। एवञ्च तत्तत्प्रतिज्ञाव्यक्तिनिष्ठं प्रतिज्ञात्वमपि भिन्नमेव। एकसाध्यहेतुकसकल प्रतिज्ञाव्यक्तिसाधारणं समुदायत्वं प्रतिज्ञात्वमिति स्वीकारे एकस्यां प्रतिज्ञाव्यक्तौ प्रतिज्ञाव्यवहारस्य अनुपपत्तिः। तथा च एकप्रतिज्ञा-वृत्तिप्रतिज्ञात्वव्यक्तौ अपरप्रतिज्ञात्वावच्छिन्नभेदानुयोगितावच्छेदकत्वसत्त्वेन

हेतुत्वाद्यवच्छिन्नभेदानामपि सुतरां सत्त्वेन भेदपञ्चकानुयोगितावच्छेदकत्वमेव वर्तते। न तु तदनवच्छेदकत्वमिति प्रतिज्ञात्वादेः प्रतिज्ञादिघटकतानवच्छेदकत्वं भेदपञ्चकानुयोगितानवच्छेदकत्वरूपं दुर्घटमिति शङ्कितुराशयः।

***स्वसमानाधिकरणेति।*** 'प्रतिज्ञात्वावच्छिन्नभेदः' इत्यस्य स्थाने 'स्वसमानाधिकरणप्रतिज्ञात्वावच्छिन्नभेदः' इति निवेश्यते। 'स्व' पदेन यस्य धर्मस्य प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वम् उपपादनीयं स धर्मो ग्राह्यः। तत्र एकप्रतिज्ञाव्यक्तिवृत्तिप्रतिज्ञात्वस्य स्वपदेन ग्रहणे तस्य तत्प्रतिज्ञात्वव्यधिकरणप्रतिज्ञात्वान्तरावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वेऽपि तत्प्रतिज्ञात्वसमानाधिकरणं यत् तत्प्रतिज्ञात्वं तदवच्छिन्नभेदानुयोगितावच्छेदकत्वं नास्ति। तत्प्रतिज्ञात्वावच्छिन्ने तत्प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदासत्त्वात्। अतः 'स्व' पदेन तत्प्रतिज्ञात्वं नोपादातुं शक्यते। किन्तु तत्प्रतिज्ञाघटकपर्वत-पदवृत्तिपर्वतपदत्वं तत्समानाधिकरणं यत् तत्प्रतिज्ञात्वं तदवच्छिन्नप्रतियोगिताक-भेदानुयोगितावच्छेदकत्वं पर्वतपदत्वेऽस्ति। भेदानुयोगितानवच्छेदकत्वं तत्प्रतिज्ञात्वेऽस्तीति प्रतिज्ञात्वादेः प्रतिज्ञाघटकतानवच्छेदकत्वं निर्वहतीति भावः। ***अनुगतरूपावच्छिन्नेति।*** प्रतिज्ञात्वत्वाद्यवच्छिन्नप्रतिज्ञात्वाद्यवच्छिन्न-प्रतियोगिताकभेदानुयोगितावच्छेदकत्वस्येत्यर्थः। प्रतिज्ञात्वव्यक्तीनां भेदेऽपि तासां प्रतिज्ञात्वत्वेन अनुगमं कृत्वा तदवच्छिन्नभेदस्य निवेशात् एकस्यां प्रतिज्ञाव्यक्तौ प्रतिज्ञाव्यक्तयन्तरभेदसत्त्वेऽपि 'प्रतिज्ञात्ववत् न' इति सामान्यभेदासत्त्वात् तादृशानुगतरूपावच्छिन्नभेदानुयोगितानवच्छेदकत्वं प्रतिज्ञात्वव्यक्तिषु सुघटमिति भावः।

***घटकतानवच्छेदकधर्मश्चेति।*** प्रतिज्ञाघटकाः यावन्तो वर्णाः तदन्यतमत्वस्यापि प्रतिज्ञादिघटकतानवच्छेदकतया तद्वत्त्वस्य प्रतिज्ञैकदेशेषु कतिपयवर्णेषु सत्त्वात् तत्र अवयवलक्षणातिव्याप्तिः। तद्वारणाय धर्मे व्यासज्यवृत्तित्वं निवेशनीयम्। अन्यतमत्वं तु न व्यासज्यवृत्तीति नोक्तदोष इति भावः। एवञ्च प्रतिज्ञात्वत्वावच्छिन्नप्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगिता-वच्छेदकत्वे सति हेतुत्वत्वविशिष्टहेतुत्वावच्छिन्नप्रतियोगिताकभेदानु-योगितावच्छेदकत्वे सति उदाहरणत्वत्वविशिष्ट-उदाहरणत्वावच्छिन्न-प्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति उपनयत्वत्वविशिष्ट-

विशेषणीयः। तेन प्रतिज्ञादिघटकवर्णान्यतमत्वमादाय न तदेकदेशातिव्याप्तिः। केचित्तु प्रतिज्ञादिघटकतावच्छेदकत्वं स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञादिकत्वे सति प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वम्, सत्यन्तमनिवेश्य प्रतिज्ञादिविषयकत्वाभावकूटवत्प्रतीतिविषयतावच्छेदकत्वनिवेशे धूमाद्वह्निमतन्त्सधर्मा पर्वतो वह्निमान्धूमादित्यादिन्यायान्तर्गतप्रतिज्ञैकदेशे धूमादित्यादिभागेऽतिव्याप्तिः, तत्र प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकत्वरूपहेतुत्वसत्त्वेन तत्प्रतीतेर्हेत्वविषयकत्वघटिताभावकूटवत्त्वाभावात्,

---

उपनयत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति निगमनत्वविशिष्टनिगमनत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकः यः व्यासज्यवृत्तिधर्मः तद्वत्त्वं प्रतिज्ञाद्यघटकत्वम् इति पर्यवसितम्।

*केचित्तु* इत्यादि। स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञादिकत्वे सति प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वं प्रतिज्ञादिघटकतावच्छेदकत्वम्। तद्भिन्नत्वं घटकतानवच्छेदकत्वम् प्रतिज्ञादीत्यादिपदेन हेत्वादेः परिग्रहः। तथा च प्रतिज्ञाघटकतावच्छेदकत्वं स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञाकत्वे सति प्रतिज्ञाअविषयकप्रतीतिविषयतावच्छेदकत्वम्। स्वाश्रयाविषयकप्रतीत्यविषयहेतुकत्वे सति हेत्वविषयकप्रतीतिविषयतावच्छेदकत्वं हेतुघटकतावच्छेदकत्वम् इति रीत्या निरुच्य घटकतावच्छेदकतत्तद्धर्मभेदकूटवद्धर्मवत्त्वं प्रतिज्ञाद्यघटकत्वमिति निष्कर्षणीयम्। प्रतिज्ञैकदेशवृत्तिपर्वतपदत्वादिकं प्रतिज्ञाघटकतावच्छेदकम्। स्व –पर्वतपदत्वम्। स्वाश्रयः पर्वतपदम्। ***तदविषयकप्रतीतिः*** – 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्यविषयकप्रतीतिर्न भवति। तत्र पर्वतपदस्यापि विषयत्वात्। अपि तु उदासीन'घटमानये'ति वाक्यविषयकप्रतीतिरेव। तत्र प्रतिज्ञावाक्यम् अविषय इति स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञाकत्वं पर्वतपदत्वेऽस्ति। एवं प्रतिज्ञा–अविषयिणी प्रतीतिः पर्वतपदमात्रविषयिणी प्रतीतिः। तस्यां पर्वतवह्निमत्पद–समुदायरूपप्रतिज्ञाया अविषयत्वात् तद्विषयतावच्छेदकत्वं पर्वतपदत्वेऽस्तीति तस्य प्रतिज्ञाघटकतावच्छेदकत्वम्। तद्भिन्नो धर्मः प्रतिज्ञात्वम्। तद्वत्त्वं प्रतिज्ञायाम् इति समन्वयः।

तत्र सत्यन्तनिवेशस्य प्रयोजनमाह–***सत्यन्तमनिवेश्य*** इति। सत्यन्तानिवेशे विशेष्यदलेन प्रतिज्ञाविषयकत्वाभाव–हेतुविषयकत्वाभाव–उदाहरण–विषयकत्वाभाव–उपनयविषयकत्वाभावनिगमनविषयकत्वाभाव–

कूटवत्प्रतीतिविषयतावच्छेदकत्वं विवक्षितं चेत् 'धूमाद्वह्निमतः सधर्मा पर्वतः वह्निमान् धूमात्' इत्यादिन्यायान्तर्गतप्रतिज्ञैकदेशे 'धूमात्' इति भागेऽतिव्याप्तिः। तत्र हेतुनिष्ठहेतुत्वप्रतिपादकत्वरूपहेतुवाक्यलक्षणसत्त्वेन तादृशभागविषयिण्यां प्रतीतौ हेतुविषयकत्वसत्त्वात् हेतुविषयकत्वाभावघटितकूटवत्त्वाभावात् तादृशकूटवती प्रतीतिः उदासीनवाक्यविषयकप्रतीतिः। तद्विषयतावच्छेदकत्वं धूमादिति भागवृत्तिसमुदायत्वे नास्तीति प्रतिज्ञादिघटकतानवच्छेदकधर्मवत्त्वस्य तस्मिन् भागे सत्त्वात्। अतः प्रतिज्ञाअविषयकप्रतीतिविषयतावच्छेदकभेद-हेत्वविषयकप्रतीतिविषयतावच्छेदकभेदउदाहरणाविषयकप्रतीतिविषयता-वच्छेदकभेदउपनयाविषयकप्रतीतिविषयतावच्छेदकभेदनिगमनाविषयकप्रतीति-विषयतावच्छेदकभेदकूटवद्धर्मवत्त्वमेव प्रतिज्ञाद्यघटकत्वम् इत्यनेन विवक्षणीयम्। तथा विवक्षणे च प्रतिज्ञाघटक 'धूमात्' इति भागवृत्तिसमुदायत्वे हेत्वविषयकप्रतीतिविषयतावच्छेदकभेदसत्त्वेऽपि इतरे भेदाः न सन्तीति भेदकूटवत्त्वविरहात् न तं धर्ममादाय अतिव्याप्तिः। एवञ्च उक्तातिव्यप्तिवारणाय भेदकूटवद्धर्मवत्त्वविवक्षणे असम्भवः भवति। प्रतिज्ञात्वादौ प्रतिज्ञा-अविषयक-प्रतीतिविषयतावच्छेदकभेदसत्त्वेऽपि इतरेषां चतुर्णां भेदानामभावात्। अतः असम्भववारणाय सत्यन्तं अवच्छेदकविशेषणं उपात्तम्। तथा च स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञाकत्वे सति प्रतिज्ञाऽविषयक-प्रतीतिविषयतावच्छेदकं यत् यत् तद्भेदकूटवत्त्वे सति स्वाश्रयविषयक-प्रतीत्यविषयहेतुकत्वे सति हेत्वविषयकप्रतीतिविषयतावच्छेदकं यद्यत् तद्भेदकूटवत्त्वे सति इति रीत्या उपनयपर्यन्तं निवेश्य स्वाश्रयाविषयकप्रतीत्यविषयनिगमनकत्वे सति निगमनाविषयकप्रतीति- विषयतावच्छेदकं यद्यत् तद्भेदकूटवान् यो धर्मः तद्वत्त्वं प्रतिज्ञाद्यघटकत्वम् इति निर्वचनीयम्। तत्र चावच्छेदकपदेन प्रतिज्ञाद्येकदेशवृत्तिधर्मा एव ग्रहीतुं शक्याः तद्भेदकूटवान् धर्मः प्रतिज्ञात्वादिः तद्वत्त्वस्य प्रतिज्ञादौ सत्त्वाल्लक्षणसमन्वय इति भावः।

ननु प्रतिज्ञाघटकतावच्छेदकं पर्वतपदत्वादिकं न भवितुमर्हति। पर्वतपदत्वाश्रयपर्वतपदाविषयकप्रतीतौ वह्निमत्पदविषयिण्यां वह्निमत्पदस्य विषयत्वेन वह्निमत्पदघटितसमुदायात्मकप्रतिज्ञायां पर्वतपदत्वाश्रयाविषयकप्रतीति-

अतः प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वहेत्वविषयकप्रतीतिविषयतावच्छेदक-त्वाद्यवच्छिन्नभेदकूटवद्धर्मवत्त्वमेव प्रतिज्ञाद्यघटकत्वमित्यनेन विवक्षणीयम्, तथा चासम्भव-वारणाय सत्यन्तमवच्छेदकविशेषणम्, प्रतिज्ञाद्येकदेशाविषयकप्रतीतिविषयत्वस्य प्रतिज्ञात्वाद्याश्रयतदेकदेशान्तरे सत्त्वेन तदाश्रयसमुदायस्य तादृशप्रतीत्यविषयत्वासम्भवेपि प्रदिज्ञात्वाद्याश्रयतत्तदेकदेशस्य तत्तदेकदेशाविषयप्रतीत्यविषयतयैव तत्तदेकदेशवृत्तिधर्मे सत्यन्तनिर्वाहः, प्रतिज्ञादिपदस्य पर्याप्त्यतिरिक्तस्वरूपसम्बन्धेन प्रतिज्ञात्वाद्याश्रयपरत्वात्,

---

विषयत्वाभावस्यासंभवात् एकदेशवृत्तिधर्मप्रतियोगिकव्यासज्यवृत्तिधर्मा-वच्छिन्नानुयोगिताकाभावानभ्युपगमात्। तथा च सत्यन्तविरहात् इत्याशङ्क्य स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञाकत्वमित्यत्र प्रतिज्ञापदेन प्रतिज्ञात्वपर्याप्त्यधिकरणं न विवक्षितम्, अपि तु स्वरूपसंबन्धेन प्रतिज्ञात्वाश्रयमात्रम्। प्रतिज्ञात्वाश्रये वह्निमत्पदे पर्वतपदत्वाश्रयाविषयकप्रतीतिविषयत्वसत्त्वेऽपि प्रतिज्ञात्वाश्रये पर्वतपदे तदविषयत्वसत्त्वेन स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञात्वाश्रयकत्वस्य पर्वतपदत्वे सत्त्वात् तस्य प्रतिज्ञाघटकतावच्छेदकत्वनिर्वाह इति समाधत्ते–***प्रतिज्ञाद्येकदेशेति।*** प्रतिज्ञाद्येकदेशपदेन पर्वतपदं ग्राह्यम्। ***तदेकदेशान्तरे***– वह्निमत्पदे। ***तदाश्रयसमुदायस्य***– प्रतिज्ञात्वपर्याप्त्यधिकरणस्य पर्वतपदवह्निमत्पदसमुदायस्य। ***असम्भवेऽपीति।*** समुदाये तदेकदेशवृत्तिधर्माभावानङ्गीकारादिति शेषः। ***तत्तदेकदेशस्य*** –पर्वपदस्य। ***तत्तदेकदेशाविषयकेति।*** पर्वतपदाविषयकेत्यर्थः। ***तत्तदेकदेशवृत्तिधर्मे*** – पर्वतपदत्वे।

विशेष्यदलस्य प्रयोजनमाह–***सत्यन्तस्थस्वपदेनेति।*** ***स्वं*** –प्रतिज्ञात्वं तदाश्रयः पर्वतपदं तदविषयकप्रतीतिः घटपटादिप्रतीतिः तदविषयः प्रतिज्ञात्वाश्रयः पर्वतपदं तत्कत्वस्य प्रतिज्ञात्वे सत्त्वेन तस्य प्रतिज्ञाघटकतावच्छेदकत्वापत्तिः तथा च असंभवः। तद्वारणाय प्रतिज्ञाऽविषयकप्रतीतिविषयतावच्छेदकत्वरूपं विशेष्यदलम्। तन्निवेशे च प्रतिज्ञारूपसमुदायाविषयिणी या प्रतीतिः तद्विषयतावच्छेदकत्वं पर्वतपदत्व एव न तु प्रतिज्ञात्वे, प्रतिज्ञात्वावच्छिन्नस्य समुदायस्य तत्प्रतीतिविषयत्वाभावात्। तत्प्रतीतिविषयताशून्ये वह्निमत्पदेऽपि प्रतिज्ञात्वस्य सत्त्वेन तस्यातिप्रसक्ततया विषयतावच्छेदकत्वविरहात्। तथा च प्रतिज्ञाघटकतावच्छेदकभिन्नत्वं प्रतिज्ञात्वेऽस्तीति नानुपपत्तिरिति भावः। ***तच्चेति।*** विशेष्यदलं चेत्यर्थः।

सत्यन्तस्थस्वपदेन प्रतिज्ञात्वादेरप्युपादातुं शक्यतया असम्भव इति विशेष्यदलम्, तच्च प्रतिज्ञाद्येकदेशमात्रवृत्तिपर्वतपदत्वादेरेव, तदाश्रयमात्रविषयकप्रतीतेस्तत्समुदायरूप-प्रतिज्ञाद्यविषयकत्वस्याव्याहतत्वात्, न तु प्रतिज्ञात्वादेः, एकदेशमात्रविषयकप्रतीति-विषयतायामतिप्रसक्तस्य तस्यावच्छेदकत्वासम्भवात्, नचैकदेशमात्रविषयिकाया अपि प्रतीतेः प्रतिज्ञात्वाद्याश्रयाविषयत्वसम्भवेन तदाश्रयसमुदायाविषयकत्वविवक्षणे एकैकप्रतिज्ञादिविषयिकाया अपि प्रतीतेः प्रतिज्ञात्वाद्याश्रयापरव्यक्त्यविषयकत्वेन तदाश्रयसमुदायाविषयकतया एकैकप्रतिज्ञादिव्यक्तिपर्याप्तप्रतिज्ञात्वादिकं तादृशप्रतीति-विषयतावच्छेदकमेव तदनतिप्रसक्तत्वादिति वाच्यम्; स्वाश्रयाविषयकप्रतीत्यविषयता यादृशप्रतिज्ञात्वाद्याश्रये तादृशप्रतिज्ञात्वाद्याश्रयवर्णसमुदायाविषयकप्रतीतिविषयतावच्छेदकत्वं-विवक्षया प्रतिज्ञादिविषयकसकलप्रत्ययानामेव तादृशसमुदायविषयकत्वेनादोषात्, अवच्छेदकत्वं चेहानातिरिक्तवृत्तित्वरूपमेव, नतु स्वरूपसम्बन्धविशेषः, तेन प्रतिज्ञात्वादिना तदेकदेशमात्रविषयकज्ञानविषयतायां प्रतिज्ञात्वादेस्तथाविधावच्छेदकत्वसत्त्वेपि न क्षतिः,

---

शङ्कते – ***न चैकदेशमात्रविषयिकाया*** इति। विशेष्यदले प्रतिज्ञाऽविषयकेत्यनेन प्रतिज्ञात्वाश्रयाविषयकेति विवक्षायां पर्वतपदत्वेऽपि प्रतिज्ञाघटकतावच्छेदकत्वं दुर्घटम्। प्रतिज्ञात्वाश्रयपर्वतपदविषयकत्वस्यैव पर्वतपदप्रतीतौ सत्त्वेन प्रतिज्ञात्वाश्रयाविषयकप्रतीतिः घटपदादिप्रतीतिरेव, तद्विषयतावच्छेदकत्वस्य पर्वतपदत्वे असत्त्वात्। प्रतिज्ञात्वाश्रयसमुदायाविषयकेति विवक्षायां एकैकप्रतिज्ञाविषयकप्रतीतेः प्रतिज्ञात्वाश्रयापरप्रतिज्ञाव्यक्त्यविषयकत्वेन प्रतिज्ञात्वाश्रयसमुदायाविषयकतया तद्विषयतावच्छेदकत्वमेव एकैकप्रतिज्ञाव्यक्ति-पर्याप्ते प्रतिज्ञात्वे अस्तीति प्रतिज्ञात्वादेरपि घटकतावच्छेदकत्वं स्यात्। तथा च घटकतानवच्छेदकधर्मपदेन प्रतिज्ञात्वादेः उपादातुमशक्यतया प्रतिज्ञाद्यघटकत्वं प्रतिज्ञादौ असंभवीति भावः।

समाधत्ते – ***स्वाश्रयाविषयकेति।*** यादृशप्रतिज्ञात्वाश्रये स्वाश्रयाविषयक-प्रतीत्यविषयता सत्यन्तदले इष्यते तादृशप्रतिज्ञात्वाश्रयवर्णसमुदाया-विषयकप्रतीतिविषयतावच्छेदकत्वं विशेष्यदलेन विवक्षितम्। तत्प्रतिज्ञात्वाश्रय-वर्णसमुदायाविषयकप्रतीतिः तत्प्रतिज्ञाविषयकप्रतीतिर्न भवति। किन्तु तदेकदेशविषयकप्रतीतिरेव। तद्विषयतावच्छेदकत्वं तदेकदेशवृत्तिधर्मस्यैव। तदनवच्छेदकत्वं तत्प्रतिज्ञात्वेऽस्तीति तदाश्रयत्वमादाय लक्षणगमनात् नासंभवः इति भावः।

तथाविधयत्किंचिदेकज्ञानविषयतात्वावच्छिन्नानतिरिक्तवृत्तित्वमिह निवेशनीयम्, तेन प्रतिज्ञादिघटकेषु सकलवर्णेष्वेव प्रतिज्ञाद्यविषयकप्रतीतिविषयत्वसत्त्वेन तादृशविषयता-सामान्यशून्याप्रसिद्धावपि स्वव्यापकतादृशविषयतात्वावच्छिन्नकत्वस्य प्रतिज्ञात्वादिसाधारणत्वेपि च न क्षतिरिति वदन्ति। तदसत्; एतदपेक्षयोक्तप्रतिज्ञाद्यन्यतमत्वस्यैव लाघवात्तत्रानिर्भरस्य निर्वीजतापातात्। एतेन प्रतिज्ञाघटकतावच्छेदकत्वं स्वसमानाधिकरणस्वानधिकरणवृत्ति-प्रतिज्ञात्वादिकत्वमित्यपि हेयम्। स्वत्वाननुगमेन तादृशं स्वं यद्यद्विशिष्य तावतामनन्तभेदानां निवेशनीयतया महागौरवात्।

---

ननु प्रतिज्ञात्वेन रूपेण प्रतिज्ञैकदेशविषयिणी या भ्रमात्मकप्रतीतिः तस्याः प्रतिज्ञात्वाश्रयवर्णसमुदायाविषयकत्वात् तद्विषयतावच्छेदकतया प्रतिज्ञात्वस्य घटकतावच्छेदकत्वापत्तिरित्यत आह- ***अवच्छेदकत्वं चेहेति।*** तथा च विषयतावच्छेदकत्वमिह न स्वरूपसंबन्धरूपम् अपि तु विषयत्वानतिरिक्त-वृत्तित्वरूपम्। तत्प्रतिज्ञात्वाश्रयवर्णसमुदायाविषयकप्रतीतिविषयताशून्येषु भ्रमात्मकप्रतीत्यविषयेषु तत्प्रतिज्ञाघटकवर्णेष्वपि प्रतिज्ञात्वस्य विद्यमानतया अतिरिक्तवृत्तित्वात् अनतिरिक्तवृत्तित्वरूपं अवच्छेदकत्वं प्रतिज्ञात्वे नास्तीति न दोषः।

ननु तत्प्रतिज्ञाघटकेषु वर्णेष्वपि एकदेशप्रतीतिमादाय तत्प्रतिज्ञात्वाश्रय-वर्णसमुदायाविषयकप्रतीतिविषयत्वसद्भावेन हेत्वादिघटकवर्णानां उदासीनवाक्यघटकवर्णानां च सुतरां तत्प्रतिज्ञात्वाश्रयसमुदायाविषयक-प्रतीतिविषयत्वसद्भावेन तत्प्रतीतिविषयताशून्यस्याप्रसिद्धया तच्छून्यावृत्तित्वरूपम् अनतिरिक्तवृत्तित्वं दुर्घटमित्याशङ्क्याह–***तथाविधेति।*** तत्प्रतिज्ञात्वाश्रय-वर्णसमुदायाविषयकयत्किञ्चिदेकज्ञानीयविषयतात्वावच्छिन्नानतिरिक्तवृत्तित्वम् **अत्र** विवक्षितम्। तादृशैकज्ञानाविषयेषु ज्ञानान्तरविषयेषु वर्णेषु तज्ज्ञानविषयताशून्यत्वं प्रसिद्धमिति न क्षतिः। एवञ्च स्वाश्रयाविषयकप्रतीत्यविषयतत्प्रतिज्ञात्वाश्रयकत्वे सति तत्प्रतिज्ञात्वाश्रयवर्णसमुदायाविषयकयत्किञ्चिदेकज्ञानीयविषयताशून्यावृत्तिः यो धर्मः तद्भिन्नधर्मवत्त्वं प्रतिज्ञा-अघटकत्वमित्युक्तं भवति इति 'केचित्तु' काराणां मतम्। तद्दूषयति –***तदसदिति।*** एतदपेक्षया प्रतिज्ञाद्यन्यतमत्वघटितलक्षणस्यैव लघुत्वात् तत्पक्षपरित्यागानुपपत्तेः इदं व्याख्यानं न युक्तमिति। ***एतेनेति।***

प्रतिज्ञाहेत्वादिसमुदायवारणाय **उभयेत्यादि।** उभयघटकभागद्वयावृत्तिधर्मवत्त्वार्थकम्। तथा च प्रतिज्ञादिघटकतानवच्छेदकत्वे सति उभयघटकभागद्वयावृत्तिर्यो धर्मस्तद्वत्त्वं दलद्वयार्थः। प्रतिज्ञाद्येकैकावयवघटकभागद्वयस्यापि यत्किंचिदुभयघटकत्वादसम्भव इत्यतः प्रतिज्ञाहेत्वाद्युभयचतुष्टयस्य विशिष्योभयपदार्थतामाह- **उभयंचेति।** इति विशिष्य

---

उक्तप्रतिज्ञाद्यन्यतमत्वस्य लघुत्वेन वक्ष्यमाणदूषणेन चेत्यर्थः। प्रतिज्ञादिघटकता- वच्छेदकत्वं स्वसमानाधिरकणस्वानधिकरणवृत्तिप्रतिज्ञात्वादिकत्वम्। यस्य घटकतावच्छेदकत्वम् उपपादनीयम्, तत् स्वपदार्थः। तथा च स्वं पर्वतपदत्वम्। तदधिकरण पर्वतपदवृत्तित्वं प्रतिज्ञात्वेऽस्ति। एवं पर्वतपदत्वानधिकरणवह्निमत्पदवृत्तित्वञ्च प्रतिज्ञात्वेऽस्ति। अतः स्वसमनाधिकरण- स्वानधिकरणवृत्तिप्रतिज्ञात्वकत्वात् पर्वतपदत्वं प्रतिज्ञाघटकतावच्छेदकम्। तद्भिन्नप्रतिज्ञात्ववत्त्वात् प्रतिज्ञायाः प्रतिज्ञाद्यघटकत्वम्। परन्तु स्वपदार्थस्य अननुगमेन यावन्तः घटकतावच्छेदकधर्माः तावद्भेदानां निवेशनीयतया प्रतिज्ञाद्यन्यतमत्वापेक्षया गुरुत्वेन च अयं परिष्कारोऽपि हेय इति भावः।

विशेष्यदलस्य प्रयोजनमाह-***प्रतिज्ञाहेत्वादिसमुदायवारणायेति।*** यद्यपि प्रतिज्ञाहेतुसमुदायस्य उभयाघटितत्वनिवेशेनापि वारणं संभवति, तथापि प्रतिज्ञैकदेशहेतुसमुदायादौ अतिव्याप्तिवारणाय घटकभागद्वयनिवेश इति पूर्वोक्तम[illegible] स्मर्तव्यम्। भागद्वयाघटितत्वञ्च भागद्वयावृत्तिधर्मवत्त्वम्। प्रतिज्ञाहेतूभयघटकभागद्वयावृत्तिः धर्मः प्रतिज्ञात्वं हेतुत्वम् च। तद्वत्त्वं प्रतिज्ञायां हेतौ च इति रीत्या समन्वयः कार्यः। तथा च प्रतिज्ञादिघटकतानवच्छेदकत्वे सति उभयघटकभागद्वयावृत्तिः यो धर्मः तद्वत्त्वमवयवलक्षणम्।

ननु सामान्यतः उभयघटकत्वनिवेशे पर्वतपदवह्निमत्पद-उभयघटकं यत् भागद्वयं पर्वतपदं वह्निमत्पदञ्च तद्घटितत्वात् प्रतिज्ञायाः भागद्वयाघटितत्वस्य प्रतिज्ञादिष्वसम्भवः इत्यतः प्रतिज्ञाहेत्वाद्युभयचतुष्टयं प्रतिज्ञाहेतूभयत्वादिना-- विशिष्य प्रवेशनीयम् इत्याशयेन उभयञ्चेत्यादि दीधितिग्रन्थः प्रवृत्त इत्याह-***प्रतिज्ञाद्येकैकेति।*** प्रतिज्ञाघटकं यद्भागद्वयं हेतुघटकं यद्भागद्वयं तस्यापि उभयघटकत्वात् तद्घटितत्वाच्च प्रतिज्ञादेः लक्षणासंभव इत्यर्थः।

ननु प्रतिज्ञाहेतूभयत्वादिना विशिष्य उभयपदार्थस्य निवेशेऽपि

**वक्तव्यमित्यग्रिमेणान्वयः**। इति। इतिरीत्या प्रतिज्ञाहेत्वाद्योरपि प्रतिज्ञाहेतूभयत्वादिना न घटकत्वांशे विशेषणता तादृशोभयघटकभागाप्रसिद्धेः, किन्तु प्रत्येकं प्रतिज्ञात्वहेतुत्वादिना, तथा च प्रतिज्ञाघटको यो भागः यश्च हेतुघटकः तदुभयाघटितत्वमिति क्रमेणाघटितत्वचतुष्टयं निवेशनीयम्, प्रतिज्ञाहेत्वाद्येकदेशघटितसमुदायवारणाय घटकभागनिवेशनम्। प्रतिज्ञादिघटकत्वं चैकदेशसाधारणं प्रतिज्ञात्वाद्याश्रयत्वम्। तथा च प्रतिज्ञात्वाश्रयहेतुत्वाश्रयोभयावृत्तित्वादिरूप-विशेषणचतुष्टयंधर्मविशेषणं पर्यवसितम्। न चैवं धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान् धूमादित्यादिन्यायघटकप्रतिज्ञायामव्याप्तिः; तस्य हेतुलक्षणाक्रान्तभागघटितत्वात्तद्व्यावृत्तस्य पूर्वोपदर्शितहेतुत्वस्य निवेशेपि निगमनेऽयंपदानुषङ्गपक्षे तत्रोपनये चाव्याप्तिर्दुर्वारैव। तस्योपनयघटकेनायंपदेनोपनयस्य च तद्घटकेन तेन घटितत्वादिति वाच्यम्; अनुषङ्गपक्षे उपनयघटकभागनिगमनघटकभागद्वयाघटितत्वशरीरे उपनयाघटकत्वेन निगमनघटकस्य निगमनाघटकत्वेन चोपनयघटकस्य भागस्य विशेष्यवाचकपदातिरिक्तत्वेन वा भागद्वयस्य

---

प्रतिज्ञाहेतूभयघटकस्य एकस्य भागस्य अप्रसिद्धेः पुनरसंभव इत्यत आह – ***प्रतिज्ञाहेत्वाद्योरपीति। किन्तु*** इति। तथा च प्रतिज्ञाघटको यो भागः यश्च हेतुघटकः तदुभयाघटितत्वे सति, हेतुघटको यो भागः यश्च उदाहरणघटकः तदुभयाघटितत्वे सति, उदाहरणघटको यो भागः यश्च उपनयघटकः तदुभयाघटितत्वे सति उपनयघटको यो भागः यश्च निगमनघटकः तदुभयाघटितत्वमित्येवं अघटितत्वचतुष्टयं निवेशनीयम्। प्रतिज्ञादिघटकत्वञ्च प्रतिज्ञात्वाद्याश्रयत्वम्। अघटितत्वञ्च तदवृत्तिधर्मवत्त्वम्। तथा च प्रतिज्ञात्वाश्रय–हेतुत्वाश्रय–उभयावृत्तिः, हेतुत्वाश्रय–उदाहरणत्वाश्रय–उभयावृत्तिः,उदाहरणत्वाश्रय–उपनयत्वाश्रय–उभयावृत्तिः, उपनयत्वाश्रय–निगमनत्वाश्रय–उभायावृत्तिः यः धर्मः तद्वत्त्वं विशेष्यदलं पर्यवसितम्।

शङ्कते – ***न चेयमिति।*** उक्तरीत्या उभयघटकभागद्वयाघटितत्वनिवेशेऽपि 'धूमाद्वह्निमतः सधर्मा पर्वतः वह्निमान् धूमात्' इत्यादिन्यायघटकप्रतिज्ञायां अव्याप्तिः। तस्यां प्रतिज्ञात्वाश्रयः यः भागः पर्वतपदादिः, हेतुत्वाश्रयश्च यः भागः पञ्चम्यन्तधूमपदम्, तदुभयघटितत्वात्। न च तत्प्रतिज्ञान्तर्गतपञ्चम्यन्त-धूमपदस्य प्रकृतपक्षविशेषणतापन्नसाध्यान्वितार्थबोधकत्वरूपहेतुलक्षणालाभात् हेतुत्वाश्रयत्वं नास्ति। अपि तु प्रतिज्ञा–अघटकस्य 'धूमात्' इत्यस्यैव। तदघटितत्वं प्रतिज्ञायामस्तीति नाव्याप्तिरिति वाच्यम्। एवमपि 'अयं'

पदानुषङ्गपक्षे निगमने, उपनये च अव्याप्तेर्दुर्वारत्वात्। उपनयत्वाश्रयः यः भागः 'अयं' पदम्, यश्च निगमनत्वाश्रयः भागः 'तस्मात्' इति पदम् तदुभयघटितत्वात् निगमनस्य। एवं निगमनत्वाश्रय 'अयं' पद–उपनयत्वाश्रय 'धूम' पद–उभयघटितत्वात् उपनयस्य इति शङ्काग्रन्थस्य तात्पर्यम्। ***तद्व्यावृत्तस्येति।*** प्रतिज्ञैकदेश 'धूमात्' इति भागावृत्तेरित्यर्थः। ***पूर्वोपदर्शितस्येति।*** पक्षविशेषणतापन्न–साध्यान्वितस्वार्थबोधकत्वे सति हेतुविशिष्टहेतुत्व–विषयताबहिर्भूतविषयताशून्यबोधजनकवाक्यत्वरूपस्येत्यर्थः। 'अयं' पदानुषङ्गपक्षे–उपनयस्थितस्य 'अयं' पदस्य निगमनस्थतया अनुसन्धानपक्षे। ***तत्र*** –निगमने। ***तस्य*** –निगमनस्य। ***तद्घटकेन*** – निगमनघटकेन। ***तेन*** – अयंपदेन।

समाधत्ते–***अनुषङ्गपक्ष*** इति। 'अयं' पदानुषङ्गपक्षे–निगमने उपनयस्थ 'अयं' पदस्यानुषङ्ग इति पक्षे उपनयघटकभाग–निगमनघटकभागद्वयाघटितत्वशरीरे उपनयघटकभागे निगमनाघटकत्वम्, निगमनघटकभागे उपनयाघटकत्वञ्च विशेषणं दातव्यम्। तथा च निगमनाघटकः उपनयघटकः यः भागःयश्च उपनयाघटकः निगमनघटकः भागः तदुभयाघटितत्वम् इति पर्यवसितम्। निगमनेऽनुषक्तस्य 'अयं' पदस्य उपनयघटकत्वात् उपनयस्थस्य च तस्य निगमनाघटकत्वात् उपनयघटकपदेन वा निगमनघटकपदेन वा 'अयं' पदं न ग्रहीतुं शक्यते। किन्तु उपनयघटकपदेन वह्निव्याप्यधूमवत्पदम्, निगमनघटकपदेन 'तस्मात्' इति पदं 'तथा' पदं वा गृहीत्वा तदुभयाघटितत्वम् उपनये निगमने चास्तीति लक्षणसमन्वयः कार्यः। लाघवादाह–***विशेष्यवाचकपदातिरिक्तत्वेन वा*** इति। तथा च विशेष्यवाचकपदातिरिक्तः यः उपनयघटकः निगमनघटकश्च भागः तद्द्वयाघटितत्वम् फलितम्। 'अयं' पदस्य उपनये निगमने च विशेष्यवाचकत्वात् तत्पदघटितत्वमादाय न दोष इति भावः।

नन्वेवमपि उपनयघटक 'अयं' पद–निगमनघटक 'तस्मात्' पदघटिते समुदाये 'अयं तस्मात्' इत्यस्मिन् अतिव्याप्तिः। 'अयं' पदस्य विशेष्यवाचकतया विशेष्यवाचकपदातिरिक्तउपनयघटकधूमादिपदाघटितत्वात् 'अयं तस्मात्' इति समुदायस्य, इत्याशङ्क्याह–***अयं तस्मादित्यादिभागस्य चेति। सत्यन्तेनैव***

विशेषणीयत्वात्। अयं तस्मादित्यादिभागस्य च सत्यन्तेनैव वारणात्। स्वानाश्रयान्तरितभागद्वयवृत्त्यन्यत्वेन च धर्मो विशेषणीयः। तेन हेत्वाद्यंशपरित्यागेन प्रतिज्ञोदाहरणादिसमुदाये न्यायान्तर्गते नातिप्रसङ्गः। वस्तुतस्तु प्रतिज्ञाहेतू इत्यादौ हेत्वादिपदं प्रतिज्ञाद्यतिरिक्तपरम्। तथा चोदाहरणादेः प्रतिज्ञाद्यतिरिक्तत्वान्न दोषः। प्रतिज्ञाद्यतिरिक्तघटकत्वं च प्रतिज्ञाद्येकदेशव्यावृत्तं प्रतिज्ञात्वाद्यनाश्रयत्वमेव पर्यवसितं बोध्यमिति दिक्।

---

***वारणादिति।*** प्रतिज्ञादिघटकतानवच्छेदकत्वरूपं सत्यन्तं 'अयं तस्मात्' इति समुदायत्वे नास्ति। उपनयत्वावच्छिन्नभेदानुयोगितावच्छेदकत्वे सति उपनयत्वसमानाधिकरणत्वरूपस्य उपनयघटकतावच्छेदकत्वस्यैव तत्र सत्त्वात् इति भावः।

ननु उक्तरीत्या विशेष्यदलनिष्कर्षेऽपि प्रतिज्ञोदाहरणद्वयसमुदायेऽतिव्याप्तिः। तस्य समुदायस्य प्रतिज्ञाहेत्वादि – उभयचतुष्टयानात्मकतया पूर्वपरिगणित– उभयचतुष्टय – घटकभागद्वयाघटितत्वात् इत्यत आह– ***स्वानाश्रयान्तरितेति।*** उभयघटकभागद्वयावृत्तिधर्मे स्वानाश्रयान्तरितभागद्वयवृत्तिभिन्नत्वरूपं विशेषणान्तरं निवेशनीयम्। **स्वं–** प्रतिज्ञोदाहरणसमुदायत्वम्। तदानाश्रयेण हेतुवाक्येन अन्तरितं व्यवहितं यत् प्रतिज्ञाघटकं उदाहरणघटकं च भागद्वयम् तद्वृत्तित्वात् प्रतिज्ञोदाहरणसमुदायत्वस्य तदाश्रये समुदाये नातिव्याप्तिरिति भावः। स्वानाश्रयान्तरितत्वं च स्वानाश्रयप्रतियोगिकप्रगभावध्वंस– एतदन्यतराधिकरण– कालवृत्तित्वम्। एतदपेक्षया लाघवादाह – ***वस्तुतस्त्विति।*** 'प्रतिज्ञाहेतू– हेतूदाहरणे' इत्यादि दीधितौ हेत्वादिपदं प्रतिज्ञाद्यतिरिक्तपरम्। तथा च प्रतिज्ञाघटकः तदतिरिक्तघटकश्च यो भागः तदवृत्तित्वे सति हेतुघटकः तदतिरिक्तघटकश्च यो भागः तदवृत्तित्वे सतीत्यादिरीत्या धर्मो विशेषणीयः। प्रतिज्ञोदाहरणसमुदायत्वे प्रतिज्ञातदतिरिक्तघटकभागद्वयवृत्तित्वात् न तदादाय अतिव्याप्तिरिति भावः। प्रतिज्ञाघटकत्वं प्रतिज्ञात्वाश्रयत्वम्। प्रतिज्ञातिरिक्तघटकत्वं प्रतिज्ञात्वानाश्रयत्वम्। तथा च प्रतिज्ञात्वाश्रयः यः यश्च प्रतिज्ञात्वानाश्रयः तदुभयावृत्तिः हेतुत्वाश्रयः यः यश्च हेतुत्वानाश्रयः तदुभयावृत्तिः इत्यादिरीत्या धर्मो विशेषणीय इति भावः।

प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वं तत्त्वमिति केचित् ।

---

मूलस्थं शाब्दज्ञानकारणशाब्दज्ञानान्तमन्यतमत्वेनानुगतरूपेणावयप्रतिपाद्य-तत्तद्विशिष्टार्थविषयकशाब्दबोधपरमतो नाननुगमः, तादृशबोधजनकानां वाक्यानामन्यतमत्वेनानुगमे व्यासज्यवृत्तिधर्मावाच्छिन्नानुयोगिताकान्योन्याभावानभ्युपगमे पूर्वोपदर्शितानुपपत्तिप्रसङ्गात्, शाब्दबोधानामन्यतमत्वेनोपादातुं युक्तत्वादित्यभिप्रायेण मूलोक्तावयवलक्षणमन्यथा व्याचक्षाणानां केषांचिन्मतमाह – ***प्रतिज्ञादिप्रतिपाद्येति।*** विशिष्य निवेश्यानां विशिष्टार्थविशेषाणां साध्यविशिष्टपक्षादीनां परिचायकमात्रमेतत्, नतु प्रतिज्ञादिप्रतिपाद्यत्वेन तेषां निवेशः,

---

दीधितिकृता मूलस्थस्य जनकान्तस्य परिचायकतया प्रतिज्ञादिजन्यबोधान् विशिष्य निवेश्य जनकानां वाक्यानां अनुगमकेन अन्यतमत्वेन निवेशं कृत्वा न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् अवयलक्षणं निष्कृष्टम्। केचित्तु बोधानां अन्यतमत्वेन निवेशं कृत्वा तज्जनकवाक्यत्वम् अवयवलक्षणं वदन्ति। वाक्यानाम् अन्यतमत्वेन निवेशे अनुपपत्तिम् आलोच्य बोधानां अन्यतमत्वेन निवेशनमुचितं मन्यन्ते। तन्मतमनूदितं दीधितौ ***प्रतिज्ञादिप्रतिपाद्येत्यादिना।*** दीधित्यनुसारेण वाक्यानाम् अन्यतमत्वेन अनुगमे अनुपपत्तिमाविष्करोति **गादाधर्याम्** ***तादृशबोधजनकानामिति।*** प्रतिज्ञाद्यन्यतमत्वं हि प्रतिज्ञादिभिन्नभिन्नत्वम्। प्रतिज्ञाभिन्नः प्रतिज्ञैकदेशः तद्भिन्नत्वं प्रतिज्ञायां नास्ति व्यासज्यवृत्ति-धर्मावच्छिन्नानुयोगिताक–एकदेशभेदस्य अनङ्गीकारादिति अनुपपत्तिः वाक्यानां अन्यतमत्वेन निवेशपक्षे इति भावः। तत्तदवयवार्थानां साध्यविशिष्टपक्षादीनां वह्निविशिष्टपर्वतत्वादिना विशिष्यैव निवेशः। न तु प्रतिज्ञादिप्रतिपाद्यत्वेन। प्रतिज्ञात्वस्यापि साध्यविशिष्टपक्षप्रतिपादकत्वरूपत्वात् साध्यविशिष्ट-पक्षप्रतिपादकवाक्यप्रतिपाद्यत्वेन साध्यविशिष्टपक्षनिवेशस्य वह्निविशिष्टपर्वतत्वेन निवेशापेक्षया शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात्। प्रतिज्ञाप्रतिपाद्येति पदं तु विशिष्य निवेशनीयानां साध्यविशिष्टपक्षादीनां परिचायकमात्रम्। न तु लक्षणप्रविष्टम्। तत्सूचनायैव तत्तदित्युक्तम्। तथा च वह्निविशिष्टपर्वत-विषयकबोध–धूमविशिष्टहेतुत्वविषयकबोधादिपञ्चकान्यतमबोधजनक-वाक्यत्वम् अवयवलक्षणमिति पर्यवसितम्। तदाह – ***विशिष्य निवेश्यानामि***त्यादिना।

विशिष्टार्थविशेषमनन्तर्भाव्य प्रतिज्ञात्वादीनां दुर्निर्वचतया तेषां विशिष्य निवेशस्यावश्यकत्वे तत्तद्विशिष्टार्थबोधजनकवाक्यप्रतिपाद्यत्वेन तत्तद्विशिष्टार्थनिवेशस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात्। एतत्सूचनायैव तत्तदित्युक्तम्। न चात्र नानावयवजन्यसमूहालम्बनबोध प्रतिज्ञाहेत्वादिजन्यविशिष्टार्थबोधं चादाय तज्जनकसमुदायेऽतिव्याप्तिः, तत्तद्विशिष्टार्थ-बोधनिष्ठतदेकदेशबुद्धित्वा वच्छिन्नजन्यतानिरूपितजनकताश्रयेऽवयवैकदेशे चातिव्याप्तिरिति वाच्यम्; तत्तद्विशिष्टार्थविषयकशाब्दबुद्धित्वावच्छिन्नजन्यत्वान्यन्यतमत्वेनोपादाय तन्निरूपितजनकतावच्छेदकधर्मपर्याप्त्यधिकरणताया निवेशनीयत्वात्। तादृशो धर्मः पर्वतो वह्निमानित्यादिवाक्यत्वमेव। वाक्यत्वस्य व्यासज्यवृत्तितया नैकदेशेऽतिव्याप्तिः।

---

ननु प्रतिज्ञादिनानावयवजन्यसमूहालम्बनबोधस्यापि प्रतिज्ञार्थविषयकज्ञानपदेन उपादानसंभवात् तज्जनके नानावयवसमूहेऽतिव्याप्तिः। एवं प्रतिज्ञाहेत्वात्मक-वाक्यद्वयजन्यः यः 'धूमज्ञानज्ञाप्यवह्निमान् पर्वत' इति शाब्दबोधः तस्यापि वह्निमत्पर्वतविषयकज्ञानत्वेन पञ्चबोधान्यतमत्वात् तज्जनके प्रतिज्ञाहेतुसमुदाये च अतिव्याप्तिः। एवं वह्निमत्पर्वतरूपविशिष्टार्थबोधं प्रति पर्वतपदस्यापि कारणत्वात् प्रतिज्ञैकदेशे पर्वतपदेऽतिव्याप्तिः इत्याशयेन शङ्कते ***न चात्रेति। अतिव्याप्तिरिति।*** नानावयवसमुदायजन्यबोधस्यापि तत्तदवयवार्थविषयकबोधत्वेन बोधपञ्चकान्यतममध्ये प्रवेशात् इत्यर्थः।

ननु केवलप्रतिज्ञादितत्तदवयवार्थविषयकज्ञानव्यक्तीः तद्व्यक्तित्वेनोपादाय तादृशज्ञानपञ्चकान्यतमज्ञानजनकत्वनिवेशात् नैष दोषः। समुदायजन्यबोधस्य एकैकावयवार्थमात्रविषयकत्वाभावात् इत्याशङ्क्य दोषान्तरमाह-***तत्तद्विशिष्टार्थेति।*** वह्निविशिष्टपर्वतविषयकबोधनिष्ठा या पर्वतविषयकबुद्धित्वावच्छिन्नजन्यता तन्निरूपितजनकताश्रये पर्वतपदे अतिव्याप्तिरित्यर्थः।

समाधत्ते-***तत्तद्विशिष्टार्थेति।*** साध्यविशिष्टपक्षादिरूपविशिष्टार्थविषयक-शाब्दबुद्धित्वावच्छिन्नाः पञ्च जन्यताः अन्यतमत्वेन अनुगमय्य तन्निरूपितजनकता-वच्छेदकधर्मपर्याप्त्यधिकरणत्वम् अवयवलक्षणं वक्तव्यम्। अवयवैकदेशे पर्वतपदे वह्निविशिष्टपर्वतविषयकबोधनिष्ठपर्वतविषयकबुद्धित्वावच्छिन्न-जन्यतानिरूपितजनकतावच्छेदकधर्मसद्भावेऽपि वह्निविशिष्टपर्वतविषयक-बुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्माभावात् नातिव्याप्तिः। तादृशो धर्मः 'पर्वतो वह्निमान्' इत्यादि वाक्यत्वम्। तदाश्रयत्वस्य एकदेशे सत्त्वेऽपि

तादृशशाब्दबुद्धित्वावच्छिन्नत्वं च तादृशशाब्दबुद्धित्वपर्याप्तावच्छेदकताकत्वम्, अतः प्रतिज्ञाहेतुसमुदायादेस्साध्यविशिष्टपक्षावगाहिशाब्दत्वघटितधर्मावच्छिन्नजनकत्वेपि नातिप्रसङ्गः। वाक्यज्ञानस्य जनकतामते तु तादृशजनकतायां विषयितासम्बन्धेन यादृशधर्मावच्छिन्नं यादृशधर्मावाच्छिन्नविषयकत्वं वा अवच्छेदकम्, तादृशधर्मपर्याप्त्याश्रयत्वं विवक्षणीयमिति नासम्भवः। तादृशोपि धर्मः पर्वतोवह्निमानित्यादिवाक्यत्वमेव। अथाकांक्षादिमत्पद-समूहत्वरूपवाक्यत्वमेव व्यासज्यवृत्ति तदवच्छिन्नविषकज्ञानत्वेन च न शाब्दबुद्धिजनकत्वं समूहत्वज्ञानस्यानुपयुक्तत्वात्। किंत्वानुपूर्वीविशेषात्मकाकाङ्क्षावच्छिन्नविषयकज्ञानत्वेनैव

---

तत्पर्याप्त्यधिकरणत्वस्य एकदेशेऽभावात् नातिव्याप्तिः। तत्तद्विशिष्टार्थविषयक-शाब्दबुद्धित्वावच्छिन्नत्वञ्च तादृशशाब्दबुद्धित्वपर्याप्तावच्छेदकताकत्वम्। अन्यथा प्रतिज्ञाहेतुसमुदायस्य धूमज्ञानज्ञाप्यवह्निमत्पर्वतविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति जनकतया जन्यतावच्छेदकशरीरे वह्निमत्पर्वतविषयकबुद्धित्वस्यापि प्रवेशात् तदवच्छिन्नजन्यतापदेन तद्घटितधर्मावच्छिन्नजन्यताया अपि ग्रहीतुं शक्यतया तन्निरूपितजनकतावच्छेदकसमुदायत्ववत्त्वस्य प्रतिज्ञाहेतुसमुदाये सत्त्वात् तत्रातिव्याप्तिः। अधिकवारकपर्याप्तिनिवेशाच्च धूमज्ञानज्ञाप्यत्वविषयकत्वेऽपि प्रतिज्ञाहेतुसमुदायजन्यतावच्छेदकतायाः पर्याप्ततया वह्निविशिष्टपर्वतविषयक-बुद्धित्वपर्याप्तावच्छेदकताकत्वं समुदायजन्यतायां नास्तीति तादृशजन्यता-निरूपितजनकतावच्छेदकत्वं प्रतिज्ञात्वहेतुत्वादावेव। न तु प्रतिज्ञाहेतुसमुदायत्वे इति न तत्समुदायेऽतिव्याप्तिरिति भावः।

***साध्यविशिष्टपक्षावगाहीति।*** वह्निविशिष्टपर्वतविषयकशाब्दबोधत्वघटितः धर्मः धूमज्ञानज्ञाप्यत्वविषयकत्वविशिष्टवह्निविशिष्टपर्वतविषयकशाब्दबुद्धित्वम्। तदवच्छिन्नजन्यतानिरूपितजनकत्वेऽपि इत्यर्थः।

ननु वाक्यज्ञानस्यैव शाब्दबोधजनकत्वम्, न तु वाक्यस्य इति मते प्रतिज्ञादिविषयकज्ञानत्वमेव जनकतावच्छेदकम्। तत्पर्याप्त्यधिकरणत्वस्य प्रतिज्ञादिवाक्येऽसत्त्वात् असंभव इत्यत आह–***वाक्यज्ञानस्य जनकतामते*** तु इति। तथा च तत्तद्विशिष्टार्थविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतान्यतम-निरूपितजनकतायां विषयितासंबन्धेन यद्धर्मावच्छिन्नम् अवच्छेदकम् अथ वा तादृशजनकतायां यद्धर्मावच्छिन्नविषयकत्वमवच्छेदकं तद्धर्मपर्याप्त्याश्रयत्वम्

तथात्वम्, आनुपूर्वीविशेषश्च एकवर्णनिष्ठापरवर्णानन्तर्यरूपो न व्यासज्यवृत्तिरित्येकदेशातिप्रसंगो दुर्वारः, न च तादृशजनकतावच्छेदकीभूतविषयितानिरूपकवर्णसमुदायत्वमेव विवक्षणीयमतो

---

अवयवलक्षणम्। प्रतिज्ञादिवाक्यज्ञानस्य जनकत्वे विषयितासंबन्धेन तादृशज्ञाने विद्यमानस्य प्रतिज्ञात्वावच्छिन्नस्य जनकतावच्छेदकत्वं सुलभम्। तथा च तत्तद्विशिष्टार्थविषयकशाब्दबुद्धित्वपर्याप्तावच्छेदकताकजन्यतान्यतमजन्यतानिरूपित-जनकतानिरूपिताविषयितासंबन्धावच्छिन्नावच्छेदकतानिरूपितअवच्छेदकताश्रयधर्मपर्याप्त्य-धिरणत्वम् अवयवत्वमिति विषयितासंबन्धेन यादृशधर्मावच्छिन्नम् अवच्छेदकमिति पक्षे परिष्कारः।

यादृशधर्मावच्छिन्नविषयकत्वं जनकतावच्छेदकमिति पक्षे तु तत्तद्विशिष्टार्थविषयकशाब्दबुद्धित्वपर्याप्तावच्छेदकताकजन्यतान्यतमजन्यतानिरूपितजनकता-वच्छेदकविषयितानिरूपकतावच्छेदकधर्मपर्याप्त्यधिकरणत्वम् अवयवत्वमिति निष्कर्षः।

***अथेत्यादि।*** आकाङ्क्षादिमत्पदसमूहत्वरूपं यद्वाक्यत्वं तदेव व्यासज्यवृत्ति। तदवच्छिन्नविषयकज्ञानत्वं च न शाब्दबोधजनकतावच्छेदकम्। समूहत्वज्ञानस्य शाब्दबोधजनने अनुपयोगात्। किन्तु आनुपूर्वीविशेषरूपआकाङ्क्षा-वच्छिन्नविषयकज्ञानत्वेनैव प्रतिज्ञादिविषयकज्ञानस्य शाब्दबोधजनकत्वम्। तथा च शाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकता-वच्छेदकधर्मः प्रतिज्ञादिनिष्ठाः आनुपूर्वीविशेषाः। ते च एकवर्णनिष्ठ-अपरवर्णानन्तर्यरूपाः न व्यासज्यवृत्तय इति आनुपूर्वीपर्याप्त्यधिकरणत्वस्य प्रतिज्ञादिघटके एकैकवर्णे सद्भावात् तत्र अवयवलक्षणातिव्याप्तिः इति शङ्का। ***न च तादृशेति।*** पूर्वोक्तजनकतावच्छेदकविषयितानिरूपकतावच्छेदक-धर्मपर्याप्त्यधिकरणत्वमिति न विवक्ष्यते, किन्तु तत्तदवयवार्थविषयकशाब्दबुद्धि**त्वा**-वच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्ववत्त्वम् इत्येव विवक्षणीयम्। तादृशवर्णसमुदायत्ववत्त्वं तु एकैकवर्णे नास्तीति नातिव्याप्तिरिति भावः। ***तत्तत्प्रतिज्ञादीति।*** उच्चारणभेदेन प्रतिज्ञादिव्यक्तीनां भिन्नत्वात् भिन्नासु प्रतिज्ञादिषु घटकाः यावन्तो वर्णाः तेषां सर्वेषामपि

नातिप्रसङ्ग इति वाच्यम्; तत्तत्प्रतिज्ञादिव्यक्तिभिन्नप्रतिज्ञादिघटकवर्णानामपि तादृशसमुदायघटकतया क्वचिदप्यवयवव्यक्तौ तादृशसमुदायत्वापर्याप्तेः प्रत्येकमवयवव्यवहारानुपपत्तेः; मैवम् – तादृशबोधजनकतावच्छेदकीभूतयत्किंचिज्ज्ञानीयविषयितानिरूपकवर्णसमुदायत्वस्य विवक्षणीयत्वात्। तादृशं च ज्ञानं तथाविधजनकताद्वयशून्यत्वेन विशेषणीयम्। तेन प्रतिज्ञाहेत्वादिसमुदाये नातिव्याप्तिः। नचैवं हेत्वर्थप्रतिपादकभागघटितप्रतिज्ञाविशेषेऽव्याप्तिः, तद्विषयकज्ञाने हेत्वर्थबोधकतानियमादिति वाच्यम्, व्याप्यव्यापकभावानापन्नजनकताद्वयशून्यताया

---

तत्तच्छाब्दबोधजनकतावच्छेदकविषयितानिरूपकत्वात् तावद्वर्णसमुदायत्व-पर्याप्त्यधिकरणत्वस्य एकैकप्रतिज्ञादिरूपावयवव्यक्तौ अभावेन तत्रावयवलक्षणासंभवः इति भावः।

उक्तमाक्षेपं समाधत्ते–***मैवमित्यादिना।*** तत्तद्विशिष्टार्थविषयकशाब्द-बुद्धित्वावच्छिन्नजन्यतान्यतमनिरूपितजनकतावच्छेदकीभूतयत्किञ्चिज्ज्ञानीयविषयिता-निरूपकवर्णसमुदायत्वपर्याप्त्यधिकरणत्वम् अवयवलक्षणम्। यत्किञ्चिज्ज्ञानपदेन यत्किञ्चित्प्रतिज्ञाव्यक्तिविषयकज्ञानं गृहीत्वा तदीयविषयितानिरूपकवर्णसमुदायत्वस्य तत्प्रतिज्ञाव्यक्तौ सत्त्वात् नासंभव इति समाधेयम् इति भावः।

नन्वेवमपि पर्वतो वह्निमानिति प्रतिज्ञा–धूमादितिहेत्वेतदुभयविषयक-समूहालम्बनज्ञाननिष्ठा या वह्निविशिष्टपर्वतविषयकबुद्धित्वा-वच्छिन्नजन्यतानिरूपितजनकता धूमज्ञानज्ञाप्यत्वविषयकशाब्दत्वावच्छिन्नजन्यता-निरूपितजनकता च तदवच्छेदकविषयितानिरूपकवर्णसमुदायत्वस्य सत्त्वात् प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिरित्यत आह– ***तादृशं च ज्ञानमिति।*** जनकतावच्छेदकविषयिताश्रययत्किंचिज्ज्ञानमित्यर्थः। ***तथाविधजनकताद्वय-शून्यत्वेनेति।*** तत्तद्विशिष्टार्थविषयकबुद्धित्वावच्छिन्नजन्यतान्यतमजन्यता-निरूपितजनकताद्वयशून्य–यत्किंचित्– ज्ञानीयविषयितानिरूपकवर्णसमुदायत्वमिति विवक्षणात् प्रतिज्ञाहेतुसमुदायविषयकज्ञाने जनकताद्वयसत्त्वेन जनकताद्वय-शून्यत्वविरहात् तदीयविषयितामादाय न प्रतिज्ञाहेतु– समुदायेऽतिव्याप्तिरित्यर्थः।

***नचैवमिति।*** तथाविधजनकताद्वयशून्यत्वनिवेशेऽपि। हेत्वर्थप्रतिपादक-भागघटिप्रतिज्ञाविशेषे धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमानित्यत्राव्याप्तिः। तादृशप्रतिज्ञाविषयकज्ञाने साध्यविशिष्टपक्षरूपप्रतिज्ञार्थविषयकशाब्दबुद्धित्वा-

निवेशनीयत्वात्।

वस्तुतस्तु स्वानवच्छेदकविषयिताविशिष्टजनकतानाश्रयत्वं ज्ञाने विशेषणं देयम्, स्वं जनकता, प्रतिज्ञाहेतूभयादिविषयकज्ञानं च, प्रतिज्ञाद्यर्थबोधजनकतानवच्छेदकीभूत-

---

वच्छिन्नजन्यतानिरूपितजनकतायाः हेतुविशिष्टहेतुत्वरूपहेत्वर्थविषयकबुद्धित्वा-वच्छिन्नजन्यतानिरूपितजनकतायाश्च सत्त्वेन जनकताद्वयशून्यत्वविरहात् तादृशज्ञानघटितावयवलक्षणविरहात् इति शङ्का। व्याप्यव्यापकभावा-नापन्नतथाविधजनकताद्वयशून्यत्वं ज्ञाने विशेषणम्। उक्तप्रतिज्ञाविषयकज्ञाने विद्यमानं जनकताद्वयं व्याप्यव्यापकभावापन्नं, प्रतिज्ञार्थविषयकबुद्धिनिरूपित-जनकतायाः हेत्वर्थविषयकबुद्धिजनकताव्याप्यत्वात्। तथा च व्याप्यव्यापकभावानापन्नजनकताद्वयशून्यमेव तत्प्रतिज्ञाज्ञानं तदीयविषयितानिरूपक-वर्णसमुदायत्वस्य तस्यां प्रतिज्ञायां सत्त्वान्नाव्याप्तिरिति समाधानम्।

तथा च तथाविधजनकताविशिष्टं यत् तदन्यत्वं ज्ञाने निवेशनीयम्। जनकतावैशिष्ट्यं च स्वाश्रयत्वस्वविशिष्टतथाविधजनकताश्रयत्वोभयसंबन्धेन। स्ववैशिष्ट्यं च स्वव्यभिचारित्वस्वाव्यापकत्वोभयसंबन्धेन। स्वं –जनकता। प्रतिज्ञाहेतुविषयकसमूहालम्बनज्ञाने निरुक्तोभयसंम्बन्धेन प्रतिज्ञाजनकता-विशिष्टहेतुजनकतायाः सत्त्वान्न निरुक्तोभयसंबधेन तथाविधजनकतावदन्यत्वम्। धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमानिति प्रतिज्ञाज्ञाने तथाविधप्रतिज्ञार्थज्ञानजनकतायाः सत्त्वेऽपि हेत्वर्थज्ञानजनकतायां तद्व्यभिचारित्वसत्त्वेऽपि तदव्यापकत्वविरहात् निरुक्तोभयसंबन्धेन तथाविधजनकताविशिष्टान्यत्वमक्षतमेव।

प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिवारणाय प्रकारान्तरमाह–***वस्तुतस्त्वित्यादिना।*** प्रकारान्तरानुसरणे बीजं स्वयमेव ***एतेनेत्यादिना*** वक्ष्यति। तथा च तत्तद्विशिष्टार्थ-विषयकबुद्धित्वावच्छिन्नजन्यतान्यतमजन्यतानिरूपितजनकतावच्छेदकीभूत-स्वानवच्छेदक-विषयिताविशिष्टतादृशजनकतानाश्रययत्किंचिज्ज्ञानीयविषयितानिरूपकवर्णसमुदायत्व-मवयवलक्षणम्। ***स्वं*** –जनकता। विषयितावैशिष्ट्यं च सामानाधिकरण्यसंबन्धेन। प्रतिज्ञाहेतूभयविषयकज्ञानं च प्रतिज्ञार्थविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपित-जनकतानवच्छेदकहेतुवाक्यनिरूपितविषयिताविशिष्टा या हेत्वर्थविषयकबुद्धित्वा-वच्छिन्नजन्यतानिरूपितजनकता तदाश्रय इति तदीयविषयितामादाय प्रतिज्ञाहेतुसमुदाये

हेत्वादिविषयताविशिष्टतादृशजनकताश्रय एव, धूमादालोकवान्पर्वतो वह्निमानित्यादि-प्रतिज्ञामात्रविषयकज्ञानं च न तादृशविशिष्टजनकताश्रयः, तन्निष्ठहेत्वर्थबोधजनकतावच्छेदक-विषयताया अपि विशिष्टप्रतिज्ञार्थबोधजनकतायामवच्छेदकत्वात्। एतेन व्याप्यव्यापकभावानापन्न तथाविधजनकताद्वयशून्यत्वप्रवेशे धूमादालोकवान्पर्वतो वह्निमान् धूमादित्यादिसमुदायेऽतिव्याप्तिः; तादृशसमुदायविषयकज्ञाननिष्ठप्रतिज्ञार्थबोधजनकताहेत्वर्थबोधजनकतयोर्व्याप्यव्यापकभावसत्त्वात्, व्याप्यव्यापकभावानापन्नतथाविधजनकताद्वयशून्यत्वादिति निरस्तम्। तादृशवाक्यविषयकज्ञानीय-प्रतिज्ञाघटकहेतुसमानाकारकवाक्यविषयताया विशिष्टप्रतिज्ञार्थबोधजनकतावच्छेदकत्वेपि

---

नातिव्याप्तिः। धूमादालोकवान् पर्वतो वह्निमान् इति प्रतिज्ञाविषयकज्ञाने प्रतिज्ञार्थविषयकबुद्धिजनकतायाः हेत्वर्थविषयकबुद्धिजनकतायाश्च सत्त्वेऽपि हेत्वर्थविषयकबुद्धिजनकतायामवच्छेदकीभूता या धूमादितिवाक्यविषयिता सा प्रतिज्ञार्थविषयकबुद्धिजनकतायामप्यवच्छेदिकैव। धूमादितिवाक्यघटितप्रतिज्ञा-विषयकज्ञानस्य जनकत्वे धूमादिति वाक्यविषयिताया अपि जनकतावच्छेदकत्वात्। अतः स्वानवच्छेदकविषयिताविशिष्टतादृशजनकतानाश्रयत्वस्य तत्प्रतिज्ञाज्ञाने सत्त्वात् तदीयविषयितानिरूपकवर्णसमुदायत्वस्य तत्प्रतिज्ञायां सत्त्वान्नाव्याप्तिरिति भावः। ***तादृशविशिष्टजनकताश्रय*** इति। स्वानवच्छेदकविषयिताविशिष्टजनकताश्रय इत्यर्थः।

***एतेनेति।*** वस्तुतस्तु इति कल्पान्तरानुसरणेनेत्यर्थः। धूमादालोकवान् पर्वतो वह्निमानिति प्रतिज्ञा–धूमादितिहेतूभयविषयकसमूहालम्बनज्ञाने प्रतिज्ञार्थविषयकबुद्धिजनकता हेत्वर्थबुद्धिजनकता चास्ति। प्रतिज्ञार्थज्ञानजनकतायाः हेत्वर्थज्ञानजनकताव्याप्यत्वात् तत् जनकताद्वयं व्याप्यव्यापकभावापन्नम्। अतो व्याप्यव्यापकभावानापन्नजनकताद्वयशून्यत्वस्य समूहालम्वनज्ञाने सत्त्वात् तदीयविषयितानिरूपकवर्णसमुदायत्वस्य प्रतिज्ञाहेतुसमुदाये सत्त्वात्तत्रातिव्याप्तिः पूर्वकल्पे। अस्मिन् कल्पे तु तादृशसमूहालम्बनज्ञाने प्रतिज्ञाघटकहेतुभाग-निरूपितविषयितायाः प्रतिज्ञार्थविषयकबुद्धिजनकतावच्छेदकत्वेऽपि प्रतिज्ञाऽघटकहेतुवाक्यनिरूपितविषयितायाः तज्जनकतावच्छेदकत्वं नास्ति। अतः प्रतिज्ञार्थविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदक-विषयिताविशिष्टजनकताश्रयत्वमेव समूहालम्बनेऽस्ति न तदनाश्रयत्वमिति तदीयविषयितामादाय नोक्तप्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिरिति भावः।

प्रतिज्ञावाक्यविषयतानन्तःपातिन्या हेतुविषयतायास्तादृशजनकतानवच्छेदकत्वात्। यदि चोदासीनपदार्थविषयितानियतविषयिताकावयवव्यक्तिः प्रामाणिकी; तदा स्वानवच्छेदकविषयिता तथाविधजनकतावच्छेदकत्वेन विशेषणीया, तादृशावयवव्यक्तिविषयकज्ञाने अवयवान्तर-विषयतानैयत्यस्य प्रामाणिकत्वे त्वगतिरेवेति ध्येयम्। समानाकारकप्रतिज्ञाद्वयाद्यात्मक-समुदायस्यावयवत्वपर्याप्त्याश्रयत्वमिष्टमेव, तस्यातथात्वे तद्वारणप्रकारोपि चिन्तनीयः।

---

***तादृशवाक्यविषयकेति।*** धूमादालोकवान् पर्वतो वह्निमान् धूमात् इति वाक्यद्वयविषयकं यत् समूहालम्बनज्ञानं तन्निरूपितायाः प्रतिज्ञायां घटकं यत् हेतुवाक्यसदृशं धूमादिति वाक्यं तन्निरूपितविषयिताया इत्यर्थः। ***विशिष्टप्रतिज्ञार्थेति*** साध्यविशिष्टपक्षरूपः यः प्रतिज्ञावाक्यार्थः तद्विषयकबोधजनकता-वच्छेदकत्वेऽपीत्यर्थः।

ननु यादृशप्रतिज्ञाविषयकं ज्ञानमुदासीनघटादिपदार्थविषयकमेव जायते तादृशप्रतिज्ञाव्यक्तावव्याप्तिः। तादृशज्ञाने प्रतिज्ञार्थविषयकबुद्धिजनकतान-वच्छेदकघटादिविषयितायाः सत्त्वेन तद्विशिष्टजनकतायाः एव सत्त्वेन तदनाश्रयत्वविरहात् इत्याशङ्क्य स्वानवच्छेदकविषयितायां तत्तद्विशिष्टार्थ-बोधजनकतावच्छेदकत्वमपि विशेषणं देयम्। तथा च तत्तद्विशिष्टार्थबुद्धित्वा-वच्छिन्नजन्यतान्यतमनिरूपितजनकतावच्छेदिका या स्वानवच्छेदकतत्तद्विशिष्टार्थ-विषयकबोधजनकतावच्छेदकविषियिताविशिष्टजनकतानाश्रययत्किंचिज्ज्ञानीय-विषयिता तन्निरूपकवर्णसमुदायत्वमवयवलक्षणम्। उदासीनपदार्थविषयकप्रतिज्ञा-ज्ञानीयोदासीनपदार्थविषयितायाः प्रतिज्ञाद्यर्थविषयकबोधजनकतावच्छेदकत्वाभावेन जनकतावच्छेदकविषयिता हेत्वादिविषयिता तच्छून्यत्वम् उदासीनविषयकप्रतिज्ञा-ज्ञानेऽस्तीति तदीयविषयितानिरूपकवर्णसमुदायत्वमादाय तत्प्रतिज्ञायां लक्षणगमनान्नाव्याप्तिरिति समाधत्ते–***यदि चेत्यादिना।***

नन्वेवमपि यादृशप्रतिज्ञाव्यक्तिविषयकं ज्ञानं नियमेनावयवान्तरविषयकमेव जायते तदीयप्रतिज्ञाविषयितायाः स्वानवच्छेदकावयवान्तरविषयिताविशिष्ट-जनकताश्रयज्ञानीयत्वात् तदनाश्रयज्ञानीयत्वाभावात् अव्याप्तिरित्याशङ्क्याह–***तादृशावयवव्यक्तिविषयकज्ञाने*** इति। ***अगतिरेवेति।*** तादृशप्रतिज्ञायामवयवत्वं नेष्यत इति भावः।

ननु तथापि समानानुपूर्वीकप्रतिज्ञाद्वयविषयितामादाय तादृशप्रतिज्ञाद्वयेऽति-

न्यायान्तर्गतत्वस्यापि निवेशनीयतया नोदासीनवाक्यसाधारण्यमित्यपि बोध्यम्। अत्र यत्किंचित्त्वनिवेशादननुगमो दुर्वारः। एवं प्रतिज्ञादिघटकहेत्वर्थप्रतिपादकभागेऽतिव्याप्तिः; एवमुदाहरणस्य वाक्यद्वयात्मकस्य संग्रहाय तत्प्रतिपाद्यसाध्यविशिष्टधर्मिविषयक-शाब्दबुद्धित्वावच्छिन्नजन्यता तथाविधहेतुविशिष्टधर्मिविषयकशाब्दबुद्धित्वावच्छिन्नजन्यता

---

व्याप्तिरित्याशङ्क्य तस्यावयवत्वमिष्टमिति समाधते–***समानाकारकेति।*** असमानाकारकप्रतिज्ञाद्वये जन्यताभेदस्वीकारे दोषाप्रसक्तेः समानाकारकेत्युक्तम्। एकप्रतिज्ञा प्रतिज्ञाद्वयं नेति प्रत्ययसम्भवेऽपि नावयव इति प्रत्ययाभावात् इष्टमेवेत्युक्तम्। ***तस्यातथात्वे–*** समानाकारकप्रतिज्ञाद्वयस्यावयवत्वास्वीकारे। ***चिन्तनीय*** इति। तत्पक्षे तादृशयत्किंचिज्ज्ञानीयविषयितानिरूपकवर्ण-समुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकसमुदायत्ववत्त्वं लक्षणं वक्तव्यमिति भावः। नन्वेतावतैव प्रतिज्ञाहेतुसमुदायातिव्याप्तिवारणे स्वानवच्छेदकेत्यादेर्वैयर्थ्य-प्रसङ्ग इति चेत्–न। एतत्कल्पे तद्वैयर्थ्यस्येष्टत्वात्।

एतावता ***केचित्तु***कारमतं परिष्कृत्योपन्यस्तम्। अथ तन्मते अस्वारस्यं वदति – ***अत्र चेत्यादिना।*** ननु यत्किंचित्त्वम् एकमात्रवृत्तिधर्मः। तथा च स्वाधिकरणैकमात्रवृत्तित्वसंबन्धेन ज्ञानत्वविशिष्टविषयिताया निवेशान्न दोष इत्यतो दोषान्तरम् आह–***एवमिति।*** धूमादालोकवान् पर्वतो वह्निमान् इति प्रतिज्ञान्तर्गते धूमादिति भागेऽतिव्याप्तिः। तादृशप्रतिज्ञाज्ञानीयतद्भाग-निरूपितविषयितायाः हेत्वर्थविषयकबुद्धिजनकतावच्छेदकत्वात् स्वानवच्छेदक-विषयिताशून्यज्ञानीयत्वाच्च तन्निरूपकवर्णसमुदायत्वस्य तत्र सत्त्वादित्यर्थः।

नन्वत्र साध्यवत्पक्षविषयिताद्यन्यतमनिष्ठप्रयोजयतानिरूपित-प्रयोजकतावच्छेदकयत्किंचिद्विषयितानिरूपकवर्णसमुदायत्वं वाच्यम्। तत्रान्यतममध्ये प्रकृतपक्षविशेषणतापन्नप्रकृतसाध्यान्वितहेतुविशिष्टहेतुत्वविषयितानिवेशान्न प्रतिज्ञाघटकहेत्वर्थबोधकभागेऽतिव्याप्तिः। हेतुविषयितायां व्याप्त्यादिविषयित्वा-निरूपितत्वं देयम्, तेन निगमनघटकतस्मात्पदे नातिव्याप्तिरित्यतो दोषान्तरमाह–***एवमुदाहरणस्येति। वाक्यद्वयात्मकस्येति।*** यो यो धूमवान् स स वह्निमान् इति वाक्यद्वयात्मकस्येत्यर्थः। उदाहरणवाक्यद्वयात् धूमविशिष्ट-धर्मिविषयकबोधः वह्निविशिष्टधर्मिविषयकबोधश्चेति बोधद्वयं जायते। अतः

चान्यतमजन्यतागर्भे निवेशनीया। तथा च तद्घटकप्रत्येकवाक्येऽतिव्याप्तिः, एतादृशार्थद्वय-विषयकबुद्धित्वं च न समुदायस्यापि जन्यतावच्छेदकमिति तदवच्छिन्नैकजन्यतानिवेशासम्भवात्। न च जनकता एवान्यतमत्वेन निवेशनीयाः, तच्छरीरे चोदाहरणप्रतिपाद्यतत्तद्विशिष्टार्थ-बुद्धित्वावच्छिन्ननिरूपितजनकताद्वयं द्वित्वेन निवेशनीयम्, अतः एकैकजनकताश्रयप्रत्येक-

---

पञ्चजन्यतामध्ये धूमविशिष्टविषयकबोधनिष्ठजन्यतायाः निवेशे तन्निरूपितजनकतावच्छेदकविषयित्वनिरूपके स स धूमवानिति उदाहरणैकदेशेऽतिव्याप्तिः। वह्निविशिष्टविषयकबुद्धित्वावच्छिन्नजन्यतायाः निवेशे स स वह्निमानितिभागेऽतिव्याप्तिः। न च तादृशार्थद्वयविषयकबुद्धित्वावच्छिन्न-जन्यतायाः अन्यतमगर्भे निवेशान्न दोषः एकैकभागस्य तादृशबुद्ध्यजनकत्वादिति वाच्यम्। तथा सति उदाहरणात्मकसमुदायेऽव्याप्तेः। तादृशार्थद्वय-विषयकैकबुद्धित्वावच्छिन्नं प्रति समुदायज्ञानस्याजनकत्वादिति भावः। ***तत्प्रतिपाद्येति।*** उदाहरणप्रतिपाद्येत्यर्थः। ***तथाविधेति।*** उदाहरणप्रतिपाद्येत्यर्थः। ***एतादृशार्थेति।*** साध्यविशिष्टधर्मिहेतुविशिष्टधर्मिरूपार्थद्वयविषयकबुद्धित्वमित्यर्थः।

***न च जनकता एवेति।*** जन्यतासु अन्यतमत्वेन निवेशितासु पूर्वोक्तरीत्या उदाहरणघटकप्रत्येकभागे अतिव्याप्तिः प्रसक्ता। तद्वारणाय जन्यतानां अन्यतमत्वेन निवेशं परित्यज्य जनकतानां अन्यतमत्वनिवेशः क्रियते। तत्र उदाहरणवाक्यज्ञाने जनकताद्वयसद्भवात् तन्निष्ठं जनकताद्वयं द्वित्वेन रूपेण अन्यतममध्ये निवेश्य लक्षणं परिष्करणीयम्। तथा च साध्यविशिष्टपक्ष-विषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकता-हेतुविशिष्ट-हेतुत्वविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकता-हेतुविशिष्टधर्मिविषयक-बुद्धित्वावच्छिन्नजन्यतानिरूपितजनकता-साध्यविशिष्टधर्मिविषयकबुद्धित्वावच्छिन्नजन्यता-निरूपितजनकताद्वय-साध्यव्याप्यहेतुविशिष्टबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकता-अबाधितत्वादिविशिष्टसाध्यविशिष्टविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतान्यत-मजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वं अवयवलक्षणम्। उदाहरणघटकप्रत्येकवाक्यद्वयनिरूपितविषयिताया एव जनकताद्वयावच्छेदकत्वात् तन्निरूपकवर्णत्वव्यापकसमुदायत्वस्य वाक्यद्वयरूपे समुदाय एव सत्त्वात् न प्रत्येकभागेऽतिव्याप्तिरिति भावः।

भागविषयकज्ञानमादाय न प्रत्येकभागेऽतिव्याप्तिरिति वाच्यम्; उभयभिन्नत्वस्य प्रत्येकमुभयोस्सत्त्वादुभयभिन्नभिन्नत्वस्योभयत्रासम्भवादन्यतमत्वेनोभयोपादानासम्भवात्। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदोपमे तु तादृशान्यतमत्वाश्रयप्रत्येक-जनकतामादायातिप्रसङ्गस्य दुर्वारत्वात्। पूर्वकल्पे तु प्रतिज्ञाद्यघटकत्वविशेषणेनैव नातिप्रसङ्गावकाशः, यो यो धूमवानित्यादिप्रत्येकवाक्यस्य वाक्य (समुदाया) द्वयात्मकोदाहरणघटकत्वात्।

---

***उभयभिन्नत्वस्येति।*** उदाहरणीयजनकताद्वयस्य अन्यतममध्ये निवेशे द्वयान्यतमत्वं द्वयभिन्नभिन्नत्वरूपं जनकताद्वये दुर्घटम्। जनकताद्वयभिन्नत्वस्य एकैकजनकतायां सत्त्वात् तद्भिन्नत्वस्य जनकताद्वयेऽसंभवात्। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकस्य एकदेशभेदस्यानङ्गीकारात्। यदि तु व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदमङ्गीकृत्य उक्तदोषः परिह्रियते, तदानीमपि अन्यतमत्वस्य अव्यासज्यवृत्तितया जनकताद्वयान्यतमत्वम् एकस्यां जनकतायामस्तीति तदवच्छेदकविषयितानिरूपकवर्णसमुदायात्मके उदाहरणघटके एकैकस्मिन् भागे अतिव्याप्तिर्दुर्वारा इति भावः।

ननु दीधितिकारलक्षणेऽपि उभयघटकभागद्वयाघटितत्वस्य उदाहरणैकदेशे भागे वर्तमानतया तत्रातिव्याप्तिरित्याशङ्क्य तत्र प्रतिज्ञाद्यघटकत्व-रूपसत्यन्तविरहान्नातिव्याप्तिः। 'यो यो धूमवान्' इति भागस्य 'यो यो धूमवान् स स वह्निमान्' इति वाक्यद्वयात्मकोदाहरणघटकत्वात् इति समाधत्ते–***पूर्वकल्पे तु*** इति। पूर्वोक्तदीधितिकारपक्ष इत्यर्थः।

***न च वाक्यद्वयपर्याप्तमिति।*** दुर्वचमिति न च वाच्यमित्यर्थः। ***स्वघटकेत्यादि। स्वं*** –उदाहरणरूपं वाक्यम्। तद्घटकेन यत्पदेन उपस्थाप्ये धर्मिणि हेतुमत्त्वबोधकं यद्वाक्यम् यच्च तदनन्तरप्रयुक्तेन स्वघटकेन तत्पदेनोपस्थाप्ये तादृशधर्मिणि साध्यवत्ताबोधकं वाक्यं तदुभयत्वस्यैव उदाहरणत्वादित्यर्थः।

ननु दीधितिकारपक्ष इव अस्मिन् पक्षेऽपि प्रतिज्ञाद्यघटकत्वं निवेश्य उदाहरणघटके भागेऽतिव्याप्तिः वारणीयेति शङ्कते***ऽत्रापीति।*** समाधत्ते–***तर्हीति।*** प्रतिज्ञाद्यघटकत्वविशिष्टस्य पूर्वोक्तविषयितानिरूपकवर्णसमुदायत्वस्य अतिगुरुशरीरतया तदपेक्षया लाघवात् दीधित्युक्तं प्रतिज्ञाद्यघटकत्वे सति

**तेन परामर्शस्य तदवयवेन परामर्शजनकस्य जननात्।**

न च वाक्यद्वयपर्याप्तमुदाहरणत्वं दुर्वचम्; स्वघटकयत्पदोपस्थाप्यधर्मिणि हेतुमत्ताबोधकं यद्वाक्यं यच्च तदनन्तरप्रयुक्तं स्वघटकतत्पदोपस्थाप्यतादृशधर्मिणि साध्यवत्ताबोधकं यद्वाक्यं तदुभयत्वस्यैव तथात्वात्। अथात्रापि प्रतिज्ञाद्यघटकत्वं निवेशनीयमिति चेत्; तर्हि गुरुशरीरस्य तादृशविषयतानिरूपकवर्णसमुदायत्वस्य निवेशापेक्षया निरुक्तोभयघटकभागद्वयाघटितत्वनिवेशनमेवोचितमित्यरुचिबीजमवसेयम्।

ननु न्यायजन्यज्ञानस्याप्युपनयार्थव्याप्यवत्पक्षावगाहितया परामर्शरूपत्वात्परामर्शजनक-वाक्यत्वमेव न्यायत्वं कुतो नोच्यते? एवं तादृशवाक्यघटकवाक्यत्वमेवावयवत्वमस्तु; किमुक्तगुरुतरन्यायतदवयवलक्षणानुसरणेनेति प्रतिज्ञादिपञ्चकस्य विशिष्टैकार्थ-प्रतिपादकत्वाभिमानिनामाशंकां मूलकृन्निराकरोति।- ***अतएवेति।*** तादृशलक्षणमुपेक्ष्य यथोक्तलक्षणानुसरणादेवेत्यर्थः। ***परामर्शस्य*** - परामर्शमात्रस्य। **परामर्शजनकस्य** परामर्शजनक- मात्रस्य। मात्रपदात्पूर्वोपवर्णितन्यायतदवयवलक्षणघटकशाब्दबोधविशेषौ

---

उभयघटकभागद्वयाघटितत्वरूपं लक्षणमेव युक्तमिति ***केचित्तु***कारमते अस्वारस्यमेवेति भावः।

**अत एवेति** मणिग्रन्थमवतारयति–***ननु न्यायजन्यज्ञानस्यापीति।*** अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यत्वं न्यायत्वम्। अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वं अवयवलक्षणं च पूर्वं मूले उक्तम्। तत्र अनुमितिचरमकारणपरामर्शजनकवाक्यत्वं न्यायत्वम्। तादृशपरामर्शजनकवाक्यघटकवाक्यत्वमवयवत्वमित्येव लाघवात् लक्षणमस्तु। न्यायस्य परामर्शजनकत्वं कथमिति चेत्? उच्यते –न्यायजन्यः यः महावाक्यार्थबोधः तस्मिन् उपनयार्थस्य साध्यव्याप्यवत्पक्षस्य विषयतया साध्यव्याप्यवत्पक्षविषयकपरामर्शरूपत्वं महावाक्यार्थबोधस्य वर्तते। तज्जनकत्वं न्यायेऽस्ति। तद्घटकवाक्यत्वमवयवेष्वस्तीति लक्षणसमन्वयसंभवात् प्रयोजकशाब्दज्ञानघटितं गुरुतरं लक्षणं किमर्थमाश्रितम् इत्याशङ्कानिराकरणार्थः ***अत एवेत्यादि मणिग्रन्थः***। यदि परमर्शजनकवाक्यत्वं न्यायलक्षणं स्यात् तदा 'वह्निव्याप्यधूमवानयम्' इति वाक्ये न्यायलक्षणातिव्याप्तिः। तज्जन्यबोधस्यापि परामर्शरूपत्वात्, एवं परामर्शजनक'वह्निव्याप्यधूमवानयम्' इति वाक्यघटके वह्निव्याप्यादिपदे परामर्शजनकवाक्यघटकत्वरूपावयवलक्षणस्य अतिव्याप्तिः

**यत्तु संक्षेपतः परामर्शप्रयोजकवाक्यत्वेन विशेषाभावात्सोपि न्याय एवेति।**

---

क्रमेण व्यवच्छेद्यौ। समुदायस्येव प्रत्येकवाक्यस्यापि न्यायत्वमिष्टमेव, परामर्शप्रयोजकवाक्य एव न्यायव्यवहारात्तत्वस्य समुदायवत्प्रत्येकमात्रेपि सत्त्वाच्च; एवं च परामर्शप्रयोजकवाक्यत्वमेव न्यायलक्षणमिति केचित्, तन्मतमुपन्यस्यति – ***यत्त्विति।*** **संक्षेपतः** – लाघवतः। सोपि न्याय एवेत्यनेनान्वयः। ***परामर्शप्रयोजकेति।*** वह्निव्याप्यधूमवानयमितिवाक्यस्यापीत्यादिः। ***विशेषेति।*** वाक्यपञ्चकात्मकसमुदायादित्यादिः।

---

स्यात्। अतः परामर्शजनकशाब्दज्ञानजनकेति न्यायलक्षणे परामर्शजनक–शाब्दज्ञानजनकशाब्दज्ञानजनकेति अवयवलक्षणे च विशेषणमुपात्तम्। तदुपादाने च 'वह्निव्याप्यधूमवानयम्' इति वाक्यस्य परामर्शरूपशाब्दज्ञानजनकत्वमेवास्ति, न तु तज्जनकशाब्दज्ञानजनकत्वमिति न तत्र न्यायलक्षणातिव्याप्तिः। एवं 'वह्निव्याप्यधूमवानयम्' इति वाक्यघटकभागस्य परामर्शरूपशाब्द–ज्ञानजनकशाब्दज्ञानजनकत्वेऽपि परामर्शजनकशाब्दज्ञानजनकशाब्दज्ञानजनकत्वं नास्ति इति नातिव्याप्तिः।

**गादाधर्यां** ***विशिष्टैकार्थप्रतिपादकत्वाभिमानिनामिति।*** वस्तुतः प्रतिज्ञादिपञ्चकस्य विशिष्टैकार्थप्रतिपादकत्वं नास्तीति पूर्वमुपपादितत्वात् अभिमानिनामित्युक्तम्।

ननु परामर्शात्मकबोधजनकत्वमादाय शङ्किताया अतिव्याप्तेः तेन परामर्शस्य तदवयवेन च परामर्शजनकस्य जननादिति कथनमात्रेण कथं निरासः? प्रत्युत अतिव्याप्तेरेव तेन उपपादनात् इत्यतो व्याचष्टे–***परामर्शस्य परामर्शमात्रस्येति।*** "वह्निव्याप्यधूमवान् अयं' इति वाक्येन परामर्श एव जायते, न तु परामर्शजनकशाब्दबोधः। अतः तद्घटितलक्षणविरहात् नातिव्याप्तिः। एवम् तादृशवाक्यावयवेन परामर्शजनकबोध एव जायते, न तु परामर्शजनकबोधजनकबोध इति न अवयवलक्षणातिव्याप्तिः इति भावः।

***समुदायवाक्यस्यैवेति।*** प्रतिज्ञादिपञ्चसमुदायरूपस्य वाक्यस्य परामर्शात्मक–बोधजनकतया न्यायत्ववत् 'वह्निव्याप्यधूमवानयम्' इति वाक्यस्यापि

**तन्न; कथायामाकांङ्क्षाक्रमेणैवाभिधानमिति प्रथमं विशिष्टवैशिष्ट्ये आकांङ्क्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते॥ अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः।**

---

यादृशवाक्यप्रयोगो नार्थान्तरादिनिबन्धननिग्रहप्रयोजकः। तदेव न्यायव्यवहारविषय इति नियमाभिप्रायेण दूषयति – ***तन्नेति। कथायाम्*** – विचारसमये आकांक्षाक्रमेणैवाभिधानं निग्रहप्रयोजकमिति शेषः। **इति** अतः **तदभिधाने निग्रहादित्य**ग्रिमेण अन्वयः। ***विशिष्टवैशिष्ट्ये*** – पक्षस्य व्याप्तिविशिष्टहेतुमत्वे। ***आकांक्षा*** – जिज्ञासा। **नास्तीति।** विप्रतिपत्तितः साध्यतदभावसशंयवतः तदेकतरकोटिकजिज्ञासा प्रथममुदेति; ततः प्रतिज्ञावाक्यात्तन्निश्चये तद्धेतौ तत्प्रतीतौ च तद्गमकतौपयिकव्याप्तौ तदनन्तरमेव च पक्षस्य तादृशहेतुमत्त्व इति भावः। ***तदभिधाने*** –विशिष्टवैशिष्ट्यप्रतिपादकवाक्योच्चारणे। अत्रापि प्रथममित्यनुषज्यते। ***अन्यथा*** – लाघवमात्रमादृत्य तस्य लक्षणत्वोपगमे। ***परामर्शजनकतयेति।*** लाघवाद्वाक्यत्वमप्यनन्तर्भाव्य परामर्शप्रयोजकत्वमात्रस्यलक्षणत्वौचित्यादिति भावः।

---

परामर्शजनकतया न्यायत्वम् इष्टमेव। परामर्शप्रयोजके वाक्ये एव न्यायत्वव्यवहारात् इति केचिदाहुः। तन्मतं 'यत्तु' इत्यादिना मूले उपन्यस्तमित्यर्थः। ***यादृशवाक्यप्रयोग*** इति। यादृशवाक्यस्य प्रयोगः अर्थान्तरादिमूलकनिग्रहस्थानप्रयोजकः न भवति तादृशवाक्यमेव न्यायपदव्यवहारविषय इति नियमं मनसिकृत्य तन्मतं दूषयति इत्यर्थः। अजिज्ञासितार्थकथनं अर्थान्तरम्। विप्रतिपत्तिवाक्यात् साध्यतदभावसंशयवतः मध्यस्थस्य प्रथमतः तदेकतरकोटिजिज्ञासा जायते। ततः वादिना प्रयुक्तात् प्रतिज्ञावाक्यात् साध्यतदभावान्यतरकोटिनिश्चये तदनन्तरं तद्धेतुजिज्ञासायां हेतुवाक्यात् हेतुनिश्चये तदनन्तरं कथमस्य गमकत्वमिति जिज्ञासायां उदाहरणवाक्येन व्याप्तिनिश्चयात् तादृशजिज्ञासानिवृत्तौ तदनन्तरं व्याप्यस्य पक्षवृत्तित्वमस्ति न वेति जिज्ञासायां 'वह्निव्याप्यधूमवानयम्' इति उपनयवाक्यं प्रयुज्यते इति जिज्ञासाक्रमेणैव कथायां वाक्यप्रयोगः कर्तव्यः। प्रथमत एव 'वह्निव्याप्यधूमवानयम्' इति उपनयात्मकवाक्यप्रयोगे अनाकाङ्क्षिताभिधानरूपं निग्रहस्थानं भवेत्। अतः उपनयवाक्यमात्रस्य न्यायत्वाभ्युपगमः नोचित इति दूषणरूपमणिग्रन्थस्य तात्पर्यम्। ***तद्धेतौ*** इति। जिज्ञासा उदेतीत्यन्वयः। एवं व्याप्तौ तादृशहेतुमत्त्वे इत्यनन्तरमपि जिज्ञासा उदेतीति पूरणीयम्। ***सा च***

**आकाङ्क्षाविरहस्तुल्य एव। अन्ये तु पञ्चावयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यत इति तद्धीजनकवाक्यत्वं न्यायत्वम्॥ एवं प्रतिज्ञाद्यवयववाक्यादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्धीजनकवाक्यत्वमेव तत्तल्लक्षणमिति।**

---

ननु मध्यस्थाकांक्षा यतो निवर्तते स एव न्यायः; सा च शाब्दत्वप्रकारिका विषयसिद्धिनिर्वाहकशब्दादेव निवर्तते, न तु प्रमाणान्तरादिति न चक्षुरादेर्न्यायत्वमित्यत आह– ***आकांक्षेति।*** आकांक्षानिवृत्तिविरह इत्यर्थः। ***तुल्य एवेति।*** व्याप्यवत्तावोधकवाक्यस्य प्रथमं प्रयोगेपि साध्यसन्देहाद्यधीनानां मध्यस्थाकांक्षाणामनिवृत्तेरिति भावः। **दुर्निरूपम्** असम्भवि। जनकताया अवच्छेदकनियतत्वात्तज्ज्ञानस्यावच्छेदकज्ञानधीनत्वादिति भावः।

---

***शाब्दत्वप्रकारिकेति।*** 'शाब्दज्ञानं जायताम्' इत्याकारिका शाब्दबोधत्वप्रकारिका जिज्ञासेत्यर्थः। ***विषयसिद्धीति।*** जिज्ञासाविषयस्य शाब्दबोधत्वावच्छिन्नस्य निष्पादकात् शब्दादेव इत्यर्थः।

मूले ***अन्ये तु*** इत्यादि। परमार्शात्मकबोधजनकत्वं न्यायत्वम् इत्युक्तौ उपनयरूपे 'वह्निव्याप्यधूमवानयम्' इति वाक्येऽतिव्याप्तिरिति दूषणं पूर्वमुक्तम्। तद्वारणाय केचिदेवं न्यायलक्षणं वदन्ति – विजातीयशाब्दज्ञानजनकवाक्यत्वमेव न्यायत्वम्। विलक्षणजातिविशिष्टत्वं विजातीयत्वम्। पञ्चावयववाक्यसमूहरूपात् न्यायात् विलक्षणजातिविशिष्टः शाब्दबोधो जायते। उपनयमात्रजन्ये शाब्दबोधे तादृशी जातिर्नास्ति। अतः न तत्रातिव्याप्तिः। एवं प्रतिज्ञादिरूपात् प्रत्येकावयवात् विलक्षणजातिविशिष्टं शाब्दज्ञानं पृथक् पृथक् जायते। अतः विलक्षणजातिविशिष्टतत्तच्छाब्दबोधजनकशब्दत्वमेव तत्तदवयवलक्षणमिति वदन्ति। तत् मतं न युक्तम्। न्यायस्यैव विजातीयशाब्दज्ञानजनकत्वमस्ति न अन्यस्य। एवं "प्रतिज्ञादीनामेव विजातीयतत्तद्धीजनकत्वमस्ति, नान्यस्य" इत्येतत् न्याये प्रतिज्ञादौ च अनतिप्रसक्तं अनुगतरूपमन्तरेण असम्भवि। अतः तत्रानतिप्रसक्तस्य अनुगतरूपस्य स्वीकारे तस्यैव न्यायलक्षणत्वम् अवयवलक्षणत्वं च अस्तु। किं शाब्दबोधे वैजात्यमङ्गीकृत्य तद्घटितलक्षणान्तरकथनेन इति।

गादाधर्यां **जनकताया** इति। **जनकत्वम्** अनतिप्रसक्तमनुगतं

**तन्न, ज्ञानविशेषजनकत्वं तज्जनकत्वज्ञानं वा (तत्तज्ज्ञानजनकत्वं वा) न्याये प्रतिज्ञादौ चानतिप्रसक्तमनुगतरूपमन्तरेण दुर्निरूपमिति तत्स्वीकारे तस्यैव लक्षणत्वात्। अन्यथा जातिसंकरप्रसंगात्॥**

***इति तत्त्वचिन्तामणाववयवलक्षणम्॥***

---

***तस्यैवेति।*** **तथा च तादृशजातौ साधकाभाव इति भावः। बाधकमप्याह *अन्यथेति।* न्यायजन्यज्ञाने पञ्चावयवजन्यत्वात्पञ्च, द्वित्रादिजन्ये च द्वित्राद्याः, एकैकजन्ये च एकैका जातय इति जातिसङ्कर इत्यर्थः। तत्र तत्र भिन्नभिन्नजातिकल्पने सुतरां मानाभावः।**

---

लक्षणान्तरसम्भवस्य लक्षणान्तरादूषकतया तस्यैव लक्षणत्वादिति मूलमसङ्गतमतो दीधितिकृत्तद्भावमाचष्टे– ***तथा चेति।*** तादृशानुगतरूपस्वीकारे चेत्यर्थः। ***साधकाभाव*** इति। तादृशधर्मस्यैव न्यायादिपदप्रवृत्तिनिमित्तत्वसम्भवेन तत्प्रवृत्तिनिमित्ततया ज्ञाननिष्ठ–जातिविशेषसिद्ध्यसम्भवात् युक्त्यन्तरस्य चासत्त्वादिति भावः।

---

अवच्छेदकमन्तरेण ज्ञातुमशक्यम्। अतः विजातीयशाब्दज्ञानजनकतावच्छेदकधर्मः न्याये अवयवे च पृथक् पृथक् वक्तव्यः। तथा च जनकतावच्छेदकत्वेन अभिमतस्य धर्मस्यैव लक्षणत्वमस्तु इति भावः। ***तादृशजातौ साधकाभाव*** इति। यत्किञ्चिद्धर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतयैव वैजात्यसिद्धेः वक्तव्यतया कारणतावच्छेदकधर्मस्य अभावे साधकाभावात् वैजात्यं न सिद्ध्यति। कारणतावच्छेदकधर्मसत्त्वे तु तस्यैव 'न्यायपद' प्रवृत्तिनिमित्तत्वसंभवेन तत्प्रवृत्तिनिमित्तकोटौ ज्ञाननिष्ठजातिविशेषसिद्ध्यसंभवात् तादृशजातौ साधकाभाव इति **दीधितेः** तात्पर्यम्। ***तथा च तत्रैवेति।*** न्यायजन्यज्ञाने एवेत्यर्थः। परस्परात्यन्ताभावसमानाधिकरणयोः धर्मयोः एकत्र सामानाधिकरण्यस्यैव साङ्कर्यरूपत्वात्, एकैकावयवजन्ये ज्ञाने एकैकाः जातयः इति कथनेन तासां जातीनां परस्परात्यन्ताभावसामानाधिकरण्यमुक्तम्। न्यायजन्यज्ञाने पञ्च द्वित्रादिजन्ये द्वित्राः इत्यनेन तादृशजातीनां एकत्र सामानाधिकरण्यमुक्तम्। अनेन साङ्कर्यरूपः दोषः उपपादितो भवति। यदि तु एकैकावयवजन्ये ज्ञाने विद्यमानाः

**बाधकमित्यस्य** प्रतिज्ञादिजन्यतावच्छेदकजातावित्यादिः, तेन वक्ष्यमाणसङ्करस्य न्यायजन्यतावच्छेदकजातावसम्भवेपि न क्षतिः।

**अन्यथेति** मूलस्य प्रतिज्ञादिजन्यतावच्छेदकजातिस्वीकारे संकीर्णजातिस्वीकारप्रसङ्ग इत्यर्थकत्वमभिप्रेत्य संकरं विवृणोति – **न्यायेति।** न्यायजन्यं च ज्ञानं विशिष्टैकार्थविषयकं तावद्वाक्यार्थविषयकसमूहालम्बनरूपं वेत्यन्यदेतत्। **पञ्चेति। जातय** इत्यग्रिमेणान्वयः।

तथा च तत्रैव प्रतिज्ञादिजन्यतावच्छेदकपञ्चजातीनां समावेश इति भावः। अन्यत्रापि सामानधिकरण्यमाह–**द्वित्रादीति।** मिथो व्यभिचारितामाह **एकैकेति।** नन्वेकैकजन्य–नानावयवजन्यबोधगततत्तदवयवजन्यतावच्छेदकजातीनां नानात्वोपगमान्न संकरावकाश इत्यत आह– **तत्र तत्रेति। सुतरां मानाभाव** इति। प्रतिज्ञाहेत्वादिनानावावयव–जन्यबोधनिष्ठप्रतिज्ञादिजन्यतावच्छेदकजातेर्हेत्वादिजन्यतावच्छेदकतया हेत्वादावपि प्रतिज्ञादिलक्षणातिव्याप्त्या तादृशजातिघटितलक्षणासम्भवेन तादृशजातौ लक्षणानुरोधरूप–युक्त्यनवकाशात्। एकैकावयवजन्यबोधवृत्तिजातीरुपादाय स्वरूपयोग्यताघटितलक्षणस्य

---

तत्तदवयवजन्यतावच्छेदकजातयः द्वित्रादिजन्यज्ञाननिष्ठतत्तदवयवजन्यता–वच्छेदकजात्यपेक्षया भिन्नाः। अतः एकत्र समावेशरूपं साङ्कर्यं नास्तीत्युच्यते, तदा दूषणमुक्तं दीधितौ–***तत्र तत्र भिन्न भिन्नजातिकल्पने सुतरां मानाभाव*** इति। अस्य तात्पर्यं स्पष्टयति गादाधर्याम् –***प्रतिज्ञाहेत्वादीति।*** विलक्षणजातिविशिष्ट–बोधजनकत्वरूपं अवयवलक्षणमनुसृत्य जातिसाङ्कर्यपरिहाराय भिन्नभिन्ना जातिः स्वीक्रियते। अतः लक्षणानुरोधरूपयुक्तिरेव प्रमाणम् इति वक्तुं न शक्यते। प्रतिज्ञाहेत्वादिनानावयवजन्यशाब्दबोधे विद्यमानायाः प्रतिज्ञाजन्यतावच्छेदकजातेः हेत्वादिजन्यतावच्छेदकरूपतया तादृशजात्यवच्छिन्नजन्यतानिरूपितजनकत्वरूपस्य प्रतिज्ञालक्षणस्य हेत्वादावपि सद्भावेन अतिव्याप्त्यापत्त्या जातिघटितलक्षणकरणस्य अशक्यत्वात्।

ननु एकैकावयवजन्यबोधवृत्तयः विलक्षणाः पञ्च जातयः सन्ति। तदवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत्त्वमेव प्रतिज्ञादीनां लक्षणम्। प्रतिज्ञाहेत्वादिनानावयवजन्यबोधे प्रतिज्ञाजन्यतावच्छेदकजातिर्न स्वीक्रियते। तत्र प्रतिबन्धकसद्भावात्। न च तत्र तादृशजात्यनङ्गीकारे तादृशबोधस्थले प्रतिज्ञायां लक्षणस्याव्याप्तिरिति वाच्यम्। तदानीं बोधे वैजात्यानुपगमेऽपि केवलप्रतिज्ञाजन्यबोधनिष्ठा या वैजात्यावच्छिन्नकार्यता तन्निरूपित–

निर्दोषत्वेपि उभयादिजन्यबोधे तज्जात्यभावनिर्वाहकप्रतिबध्यप्रतिबन्धकताकल्पने महागौरवात्। तत्तज्जात्यवच्छिन्नजनकतावच्छेदकत्वेनाभिमतानां गुरुशरीराणां यथोक्त धर्माणां प्रतिज्ञादिपद-प्रवृत्तिनिमित्तत्वौचित्येन तज्जातिकल्पने प्रवृत्तिनिमित्तलाघवरूपाया अपि युक्तेरनवकाशादिति भावः।

अननुगमेन तत्तज्जातिघटितलक्षणासम्भवात् लक्षणानुपपत्तिरूपयुक्तेस्तु दूरपराहतत्वादिति भाववर्णनमनुपादेयम्। एकैकजन्यबोधवृत्तिजातिमादायैव स्वरूपयोग्यता-घटितलक्षणसम्भवात्।

---

कारणतावच्छेदकधर्मवत्त्वरूपस्वरूपयोग्यताघटितलक्षणस्य तत्र सद्भावात् इत्याशङ्क्य कारणतावच्छेदकत्वेन अभिमतस्य धर्मस्यैव लाघवेन लक्षणत्वस्य प्रतिज्ञापदप्रवृत्तिनिमित्तत्वस्य च संभवेन उक्तवैजात्यावच्छिन्नजन्यतानिरूपित-जनकतावच्छेदकधर्मवत्त्वरूपस्य गुरुशरीरस्य लक्षणस्य असंभवात् प्रवृत्तिनिमित्तलाघवरूपा युक्तिरपि वैजात्ये न प्रमाणम् इत्याह- ***एकैकावयवजन्येत्यादिना। गुरुशरीराणामपि यथोक्तधर्माणामिति।*** मणिकृदुक्तानां दीधितिकृदुक्तानां च लक्षणानामेव वैजात्यावच्छिन्नशाब्दबोधजनकतावच्छेदकत्वात् तेषामेव प्रतिज्ञादिपदप्रवृत्तिनिमित्तत्वमस्तु। न तु तत्प्रवृत्तिनिमित्तशरीरे वैजात्यावच्छिन्नजनकतावच्छेदकत्वेन तेषां निवेशो युक्त इति भावः।

***बाधकमप्याह*** इति दीधितेः प्रकारान्तरेण भावं वर्णयतां मतं दूषयति - ***अननुगमेनेति।*** तत्र तत्र बोधे यदि भिन्नभिन्ना जातिर्न स्यात् तदा अवयवलक्षणं नोपपद्यते, तत्तज्जातिघटितस्यैव लक्षणस्य वक्तव्यत्वात्। अतः जातिं विना लक्षणस्यानुपपत्तिरेव जातिसद्भावे प्रमाणमित्याशङ्क्य जातिस्वीकारेऽपि तासामननुगतत्वात् अवयवैर्जायमानेषु पञ्चविधेषु बोधेषु एकस्या अपि जातेरभावात् तद्घटितलक्षणस्याप्यननुगमात् लक्षणानुपपत्तिर्न प्रमाणमित्याशयेन सुतरां मानाभाव इत्युक्तम् इति केचित् भावं वर्णयन्ति। तदनुपादेयम्। एकैकावयवजन्यबोधवृत्तिजातीनामन्यतमत्वेनानुगमं कृत्वा तदवच्छिन्न-जन्यतानिरूपितजनकतावच्छेदकधर्मवत्त्वरूपस्यानुगतलक्षणस्य कर्तुं शक्यत्वात् इति भावः।

केचित्तु, यदि चानुगतकारणमन्तरेणापि तादृशजातिमत्त्वसम्भवः, तदा हेत्वादिजन्ये च कदाचित्प्रतिज्ञादिजन्येऽपि हेत्वादिजन्यवृत्तिः प्रतिज्ञादिजन्यवृत्तिर्जातिस्स्यादिति सङ्कर इत्यर्थः; एवं सर्वेषां सर्वजातीयत्वमेकजातीयत्वं वा स्यादित्यपि द्रष्टव्यमित्याहुः।

इति दीधितावयवलक्षणम्॥

---

अन्यथेत्यादिमूलमन्यथाव्याचक्षाणानां मतमाह – **केचिदिति।** तदेत्यन्तमन्यथेत्यस्यार्थः। **कदाचिदिति।** हेत्वादिजन्य इत्यत्राप्यनुषज्यते; तेन परस्परव्यभिचारलाभः। **स्यादिति।** वर्तेतैवेत्यर्थः। नियामकाभावादिति भावः।

ननु नियमेन सर्वत्रैव प्रतिज्ञादिजन्यबोधे हेत्वादिजन्यव्यक्तिवृत्तिजातिमत्त्वसम्भवेन परस्परव्यभिचारिताया दुर्घटत्वान्न संकरावकाश इत्यत्र बाधकान्तरं पूरयति **सर्वेषामिति।** सर्वत्र सर्वजातिसत्त्वे जातीनां समनैयत्याद्भेद एव दुर्लभ इति सर्वजातीयत्वप्रसङ्गोऽसङ्गत इत्यत आह **एकेति।** इत्थं च विजातीयशाब्दबोधजनकत्वघटितप्रतिज्ञादिलक्षण-मसम्भवदुक्तिकमेवेति भावः।

अत्र चानुगतकारणाभावेप्यननुगतकारणघटितसामग्रीणां जातिविशेषनियामकत्वं सम्भवतीति नोक्तरीत्या जातिसंकराद्यवकाशः। अन्यथा अनुमितित्वादिजातेरप्यनियमेन प्रत्यक्षादिसाधारण्यापत्तेः। तत्रापि वह्निव्याप्यवत्तापरामर्शादीनामननुगतत्वात्। अनुगतस्य कस्यचित्कारणस्य सम्भवेऽपि तस्यातिप्रसक्तत्वात्तादृशस्य प्रकृतेपि सम्भवाच्च।

न च व्यभिचारेण तादृशजात्यवच्छिन्नशाब्दबोधं प्रति अननुगतस्य कारणत्वा-सम्भवात्तादृशजातीनां कारणनियाम्यत्वं न सम्भवतीत्येकस्यान्यजातीयताप्रसङ्गो दुर्वार इति वाच्यम्; अनुमितौ परामर्शस्येवाननुगतकारणस्य कार्यतावच्छेदकसंकोचेन व्यभिचारवारण-सम्भवादित्यस्वरसबीजमवसेयम्।

न चानुगतनियामकाभावस्याकिञ्चित्करत्वेऽनुगतानतिप्रसक्तरूपमन्तरेण दुर्निरूपमिति मूलासङ्गतिरिति वाच्यम्। स्वमतेऽनुगतनियामकाभावे, न निर्भरः अपि तु न्यायजन्यबोधादौ सङ्कररूपबाधक एवेति वक्तुं शक्यतया तादृशबाधकस्य विचारासहत्वेऽपि क्षतिविरहात्।

इदं पुनरिहावधेयम्। प्रतिज्ञाद्यवयववाक्यादित्यादिमूलं न जातिविशेषघटित-प्रतिज्ञालक्षणाभिप्रायकम्, तथा सति तादृशप्रतिज्ञादिलक्षणस्यात्रैव निराकृतत्वेन प्रतिज्ञादिग्रन्थे प्रतिज्ञादिजन्यं विजातीयं ज्ञानामित्यादिना जातिघटितप्रातिज्ञादिलक्षणमाशंक्यानेनैव दोषेण तन्निराकरणस्य पौनरुक्त्यापत्तेः।

किंत्ववयवसामान्यलक्षणपरं प्रत्येकमित्यस्यावयवान्तरासहकारेणेत्यर्थः। तेन न्यायजन्यबोधतो वाक्यैकवाक्यताधीनप्रतिज्ञाहेत्वादिजन्यबोधतश्च वैलक्षण्यलाभेन

तदात्मकसमुदायेऽतिव्याप्तिशंकानिरासः। विजातीयत्वं च प्रतिज्ञाद्येकदेशजन्यबोधावृत्ति-जातिमत्त्वम्। एतेनावयवैकदेशेऽतिव्याप्तिशङ्कानिरासः। मूले तज्जनकशब्दत्वं तल्लक्षणमिति पाठः। तल्लक्षणमित्यस्यावयवलक्षणमित्यर्थः।

एवं चान्यथेत्यादिमूलस्य प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां परस्परसंकरपरत्वं न घटत इति।

यदि लक्षणानुरोधमात्रेण जातिस्वीकारस्तदा तत्साध्यपक्षहेतुकन्यायादिलक्षणानुरोधेनापि विभिन्नसाध्यादिकन्यायजन्यबोधेषु विभिन्नानां प्रतिज्ञाद्येकदेशजन्यबोधावृत्तिनानाजातीनां स्वीकरणीयतया तासां च तथाविधद्वित्रादिन्यायजन्यबोधे समावेशेन संकीर्णजातिस्वीकारप्रसङ्ग इति तादृशमूलार्थः।

यदि च संकररूपबाधकभयेन जातिकल्पनासम्भवाज्जातिघटितन्यायविशेषादिलक्षणं न सम्भवतीत्यन्यथैव तत्साध्यपक्षहेतुकन्यायादयो निर्वचनीया इत्युच्यते, तदा व्याप्त्यादिपदवत् न्यायादिपदस्यापि नानार्थत्वे क्षतिविरहात्सर्वसाधारणन्यायत्वादिनिर्वचनानुरोधेन जाति-स्वीकारोऽप्यनुचित इति भावः।

दीधितिकारस्तु तत्तद्धीजनकवाक्यत्वं तत्तल्लक्षणमिति मूलपाठाभिप्रायेण प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां न्यायजन्यबोधादौ संकरपरतया जातिसंकरप्रसङ्ग इति मूलं व्याख्यातवान्। तादृशपाठे तद्ग्रन्थस्यावयवसामान्यलक्षणपरत्वानुपपत्तेः।

एवञ्च सति अगत्या भिन्नप्रस्तावे जातिघटितप्रतिज्ञालक्षणं विस्मृत्य प्रतिज्ञाग्रन्थे पुनस्तदाशङ्केति यथाकथंचिदग्रिमग्रन्थावतारो बोध्यः।

***इति गदाधरीये अवयवलक्षणम्॥***

---

***केचित्तु*** इत्यादि ***दीधिते***स्तद्व्याख्यानस्य ***गदाधरग्रन्थस्य*** चायं पिण्डितार्थः। विलक्षणजातिविशिष्टज्ञानजनकत्वमवयवलक्षणं नोपपद्यते। ज्ञाने जातिस्वीकारे अनुगतस्य सर्वप्रतिज्ञाजन्यबोधेषु साधारणस्य कारणस्याभावात्। यदि कारणाभावेऽपि जातिः स्वीक्रियते तदा कदाचित् प्रतिज्ञाजन्यबोधेऽपि हेतुजन्यबोधवृत्तिजातिः हेतुजन्यबोधेऽपि प्रतिज्ञाजन्यबोधवृत्तिजातिर्वर्तेत। तथा च संकरः, हेतुजन्यबोधगतजातिं विना प्रतिज्ञाजन्यबोधवृत्तिजातिः प्रतिज्ञाजन्यबोधे, प्रतिज्ञाजन्यबोधवृत्तिजातिं विना हेतुजन्यबोधवृत्तिजातिर्हेतुजन्यबोधे, उभयोः कदाचित् प्रतिज्ञाजन्यबोधे हेतुजन्यबोधे च समावेश इति। अतः संकराख्यदोषप्रसक्त्या सैव विलक्षणजातौ बाधिका।

ननु अनुगतकारणं विना जातिस्वीकारे नियामकाभावात् सर्वदैव

प्रतिज्ञाजन्यबोधे हेतुजन्यबोधवृत्तिः जातिः, हेतुजन्यबोधे प्रतिज्ञाजन्यबोधवृत्तिजातिश्च वर्तेत। तथा च न संकरावकाशः तयोर्जात्योः परस्परं विना कदापि वृत्त्यभावादिति चेत् - तर्हि प्रतिज्ञाजन्यबोधस्य तद्वृत्तिजातिवत् हेतुजन्यबोधवृत्तिजातिमत्त्वमपि स्यात्। तथा च पञ्चानामपि बोधानां प्रत्येकं पञ्चजातिमत्त्वं स्यात्। न च सर्वजातिमत्त्वे एकत्र समाविष्टानां समनियतानां तासां भेद एव न स्यात् तुल्यत्वरूपबाधकात् इति भेदगर्भसर्वत्वाश्रय-जातिमत्त्वप्रसङ्गोऽसङ्गत इति वाच्यम्। तर्हि सर्वेषां बोधानामेकजातिमत्त्वप्रसङ्गात्। न चेष्टापत्तिरिति वाच्यम्। विलक्षणजातिमच्छाब्दबोधजनकत्वरूपस्य तत्तदवयवलक्षणस्य असंभवदुक्तिकत्वप्रसङ्गात् इति केचित्कारव्याख्यानम्।

अत्र **भट्टाचार्यैः** प्रदर्शितमस्वारस्यं तावत् - अनुगतकारणाभावेऽपि अननुगतकारणघटितसामग्रीणामेव तत्तद्बोधगतजातिविशेषं प्रति नियामकत्वसंभवात् न जातीनां सांकर्यप्रसक्तिः। प्रतिज्ञाजन्यबोधे हेतुजन्यबोधगतजातिविशेष-नियामकसामग्रीविशेषाभावादेव हेतुजन्यबोधगतजातेर्वृत्त्यसंभवात्। अन्यथा अनुमितित्वजातेः प्रत्यक्षसाधारण्यं स्यात्। अननुगतां अनुमितित्वप्रयोजकसामग्रीं विनापि तज्जातेः संभवात्। प्रत्यक्षानुमित्युभयानुगतसामग्र्याश्चास्तु नानुमितित्वजातिनियामकत्वम्, प्रत्यक्षेऽपि तज्जातिप्रसङ्गादेव। न चाननुगतस्यापि कारणकलापस्य वैजात्यनियामकत्वं न संभवति। तादृशकारणं विनापि तत्तद्बोधे वैजात्यसत्त्वेन व्यतिरेकव्यभिचारात्। तथा च एकजातीयस्य बोधस्यान्यजातीयताप्रसङ्गो दुर्वार इति वाच्यम्। अननुगतकारणानां तत्तदव्यवहितोत्तरबोधवृत्तिवैजात्यं प्रति नियामकत्वस्वीकारेण व्यभिचारवारणसंभवात्। यथा तत्तल्लिङ्गकपरामर्शस्यैकविधानुमितिहेतुत्वे प्रसक्तस्य व्यतिरेकव्यभिचारस्य तत्तल्लिङ्गकपरामर्शाव्यवहितोत्तरानुमितिं प्रति तत्तल्लिङ्गकपरामर्शस्य हेतुत्वमिति स्वीकृत्य वारणं क्रियते ***तद्वत्*** इति।

**इदं *त्ववधेयमित्***यादिना भट्टाचार्यप्रदर्शितस्य मणिव्याख्यानस्य सारांशस्तावदयम्–विजातीयशाब्दज्ञानजनकत्वं प्रतिज्ञालक्षणमत्र मणिकृता दूष्यत इति न व्याख्येयं, तथा सति "प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकवाक्यं प्रतिज्ञेत्यपि न। तज्जनकत्वं जनकत्वज्ञानं वा नानुगतरूपमन्तरेण संभवति इत्युक्तस्यानुसरणीयत्वात्" इति प्रतिज्ञाग्रन्थस्थमणिवाक्येन पौनरुक्त्यप्रसङ्गात्।

अपि तु प्रकृतमणिग्रन्थः अवयवसामान्यलक्षणानुवादेन तद्दूषणपरः। प्रतिज्ञादिप्रत्येकवाक्यात् अवयवान्तरासहकृतात् विजातीयः शाब्दबोधो जायते। न्यायजन्यबोधस्तु परस्परसहकृतावयवजन्यः एतद्विलक्षणः। अतः न्यायरूपसमुदाये ईदृशविजातीयबोधजनकत्वाभावात् नावयवलक्षणातिव्याप्तिः। विजातीयत्वं च प्रतिज्ञाद्येकदेश (अवयवावयव) जन्यबोधावृत्तिजातिमत्त्वम्। तेनावयवावयवे नातिव्याप्तिः।

मूले तज्जनकशब्दत्वम् तल्लक्षणमित्येव पाठः। तस्य विजातीयज्ञानजनकत्वमवयवलक्षणमित्यर्थः। एवं चान्यथा जातिसंकरप्रसङ्गादिति मूलस्य प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां सांकर्यप्रसङ्ग इति भाववर्णन-मसंगतम्। न्यायजन्यबोधात् द्वित्रावयवजन्यबोधाच्च प्रत्येकजन्यबोधस्य वैलक्षण्यसूचनेन प्रत्येकजन्यबोधवृत्तिजातीनां तत्तद्बोधव्यवस्थितानामन्यत्र सद्भावाप्रसक्तेः। तस्मात् तस्य मूलस्यैवं तात्पर्यम् – यदि लक्षणानुरोधमात्रेण जातिस्वीकारः नानुगतनियामकवशेन तदा तत्साध्यपक्षहेतुकन्यायादिलक्षणानुरोधेनापि विभिन्नसाध्यादिकन्यायजन्यबोधेषु विभिन्नानां प्रतिज्ञाद्येकदेशावृत्तिजातीनां स्वीकरणीयतया तासां च द्वित्रादिन्यायजन्यबोधे समावेशप्रसङ्गः। तत्रासद्भावे नियामकाभावात्। तथा च सांकर्यदुष्टजातिस्वीकारप्रसङ्ग इति।

यदि च संकररूपदोषभयात् जातिमस्वीकृत्य जातिघटितं लक्षणं च परित्यज्य अन्यथैव न्यायादिलक्षणं वक्तव्यमित्युच्यते, तदा साध्यादिभेदेन व्याप्त्यादिभेदवत् न्यायपदार्थस्यापि भेदात् अननुगतमेव न्यायत्वादिकं निरुच्यताम्। किमनुगतन्यायत्वादिनिर्वचनप्रत्याशया विलक्षणजातिस्वीकारेण।

**दीधिति**कारस्तु तत्तद्धीजनकत्वं तत्तल्लक्षणमिति मूलपाठमनुसृत्य प्रतिज्ञादिप्रत्येकलक्षणपरतया व्याख्याय जातिसांकर्यमुपपादयामास। उपरितनमणिग्रन्थस्तु अवयवलक्षणोक्तं विस्मृत्य प्रवृत्त इति न पौनरुक्त्यमिति कथंचित् समाधेयम् इति।

**इति भावदीपिकायामवयवलक्षणम्**

# अथ प्रतिज्ञालक्षणम्

**तत्र प्रतिज्ञा, न साध्यनिर्देशः, साध्यपदेऽतिव्याप्तेः॥**

**साध्यनिर्देशः प्रतिज्ञेति सूत्रम्। साध्यो विधेयविशिष्टो धर्मी। तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवह्नित्वादिविशिष्ट-वैशिष्ट्यज्ञानजनको न्यायावयव इति पर्यवसितोऽर्थः।**

### अथ दीधितौ प्रतिज्ञालक्षणम्

साध्यपदमनुमितिविधेयवाचकमित्यभिप्रायेण मणिकारदूषितं सूत्रकारीयप्रतिज्ञालक्षणं साध्यपदस्य प्रकृतानुमितिविधेयविशिष्टार्थपरतां स्वीकृत्य परिष्कर्तुमारभते ***साध्येति।*** सामान्यतो विधेयत्वस्य धर्मित्वस्य च केवलान्वयितयाऽवयवान्तरे विधेयविशिष्टधर्मिबोधकत्व-मतिप्रसक्तम्। एवं प्रतिज्ञासमानाकारन्यायबहिर्भूतवाक्येपीत्यतः साध्यपदस्य तद्विशेषपरत्वं निर्देशपदस्य च बोधजनकन्यायावयवरूपवाक्यविशेषपरत्वमनुसृत्य पर्यवसितार्थमाह ***तथा***

### अथ भावदीपिकायां प्रतिज्ञालक्षणम्

'साध्यनिर्देशः प्रतिज्ञा' इति प्रतिज्ञायाः लक्षणमुक्तं सूत्रकृता। ***साध्यं*** –विधेयं, ***तस्य निर्देशः***–प्रतिपादकः शब्दः। तथा च विधेयप्रतिपादकः शब्दः प्रतिज्ञेति यथाश्रुतसूत्राल्लभ्यते। एवं सति वह्निपदे विधेयप्रतिपादकशब्दत्वमस्तीति प्रतिज्ञालक्षणस्य तत्रातिव्याप्तिरिति दूषणमुक्तं मणिकृता। सूत्रस्थसाध्यपदस्य लक्षणया अर्शआद्यचा वा विधेयविशिष्टपरत्वात् विधेयविशिष्टधर्मिप्रतिपादकशब्दत्वं प्रतिज्ञायाः लक्षणमिति निष्कर्षे वह्न्यादिपदे नातिव्याप्तिरित्याशयेन सूत्रकारीयं लक्षणमेव परिष्करोति शिरोमणिरित्याह–***साध्यपदमिति। तथा चेति*** दीधिति-मवतारयति–***सामान्यत*** इत्यादिना। विधेयविशिष्टधर्मिप्रतिपादकत्वं प्रतिज्ञालक्षणमित्युक्तावपि धूमादित्यादिषु हेतुवाक्यादिष्वतिव्याप्तिः। उद्देश्यत्वविधेयत्वयोः केवलान्वयितया आधेयतासंबन्धेन धूमविशिष्टं हेतुत्वमिति बोधस्य धूमरूपविधेयविशिष्टहेतुत्वरूपोद्देश्यविषयकतया तज्जनकस्य हेतुवाक्यादेरपि विधेयविशिष्टधर्मिप्रतिपत्तिजनकत्वात्। एवं पर्वतो वह्निमानिति प्रतिज्ञासमानाकारके न्यायानन्तर्गते वाक्येऽपि विधेयविशिष्टधर्मि-प्रतिपादकत्वादतिव्याप्तिः। तद्वारणाय सूत्रस्थं साध्यपदं प्रकृतसाध्यतावच्छेदका-

**चेति।** पक्षतावच्छेदकसाध्यतावच्छेदकयोर्न तत्त्वेन निवेशः।

अपि तु विशिष्यैवेति सूचनाय पर्वतत्वादीति वह्नित्वादीति च। तादृशविशिष्टवैशिष्ट्यावगाहिशाब्दबोधत्वावच्छिन्नजनकयत्किञ्चिज्ज्ञानीयवर्णसमुदायत्वमिह विवक्षणीयम्। अतो हेत्वर्थादिविषयकप्रतिज्ञार्थबोधजनकताया हेत्ववयवादिमात्रविषयक-बोधसाधारण्येऽपि न हेत्ववयवादावतिव्याप्तिः। न्यायान्तर्गतत्वमुपेक्ष्य न्यायावयवत्वनिवेशात् प्रतिज्ञार्थबोधजनकप्रतिज्ञाहेत्वादिविषयकज्ञानमादाय प्रतिज्ञाहेत्वादिसमुदाये नातिव्याप्तिः।

---

वच्छिन्नविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नपरम्। निर्देशपदं बोधजनकन्यायावयव-रूपवाक्यपरम्। तथा च प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदक-विशिष्टवैशिष्ट्यावगाहिबोधजनको न्यायावयवः प्रतिज्ञेति पर्यवसितम्। हेत्वादिवाक्यस्य हेतुत्वत्वविशिष्टे धूमवैशिष्ट्यबोधकस्य पर्वतत्वविशिष्टे वह्नित्वविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वाभावात् न्यायानन्तर्गतवाक्यस्य न्यायावयवत्वाभावात् च न तत्रातिव्याप्तिरिति भावः। ***अवयवान्तरे*** – प्रतिज्ञातिरिक्तधूमादित्यादिहेत्ववयवादौ। ***तद्विशेषपरत्वम्*** – साध्यतावच्छेदक-वह्नित्वाद्यवच्छिन्नविशिष्टपक्षतावच्छेदकपर्वतत्वादिविशिष्टपरत्वम्।

दीधितिस्थस्य पर्वतत्वादीत्यस्य वह्नित्वेत्यस्य च प्रयोजनमाह – ***पक्षतावच्छेदकेति।*** पक्षतावच्छेदकसाध्यतावच्छेदकयोर्यदि पक्षतावच्छेदकत्वेन साध्यतावच्छेदकत्वेन च लक्षणे निवेशः स्यात् तदा पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधजनकन्यायावयववाक्यत्वं प्रतिज्ञालक्षणं स्यात्। तथा सति पक्षतावच्छेदकत्वसाध्यतावच्छेदकत्वयोरपि केवलान्वयितया हेतुत्वत्वावच्छिन्नं पक्षीकृत्य आधेयतासंबन्धेन धूमत्वविशिष्टस्य विधेयत्वसंभवात् धूमादिति वाक्यस्यापि पक्षतावच्छेदकहेतुत्वत्वावच्छिन्ने साध्यतावच्छेदक-धूमत्वविशिष्टधूमवैशिष्ट्यावगाहिबोधजनकतया तत्रातिव्याप्तिः स्यात्। अपि तु पर्वतत्वत्ववह्नित्वत्वादिनैव तयोर्लक्षणे निवेशः इति सूचनायैव तथोक्तमिति भावः। तथा च प्रकृतपक्षतावच्छेदकपर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपित – प्रकृतसाध्यतावच्छेदकवह्नित्वाद्यवच्छिन्नप्रकारताशालिशाब्दबोधजनकन्याया-वयववाक्यत्वं प्रतिज्ञालक्षणम्।

नन्वेवं निष्कर्षेऽपि प्रतिज्ञार्थ – हेत्वर्थ – उभयविषयकः यः 'पर्वतो वह्निमान् धूमनिष्ठं हेतुत्वञ्च' इत्याकारकशाब्दबोधः तज्जनकत्वं

**उदाहरणाच्च न पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यज्ञानम्। उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदासः।**

---

पक्षतावच्छेदकविशिष्टत्वादिनिवेशनप्रयोजनमाह – ***उदाहरणाच्चेति।***

---

हेतुवाक्येऽप्यस्तीति अतिव्याप्तिः। एवं प्रतिज्ञावाक्यविषयकस्य ज्ञानस्यैव तादृशशाब्दबोधजनकत्वमते प्रतिज्ञावाक्ये जनकत्वाभावादव्याप्तिः इत्यत आह– ***तादृशविशिष्टेति।*** तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित–प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिशाब्दबुद्धित्वावच्छिन्नजन्यता–निरूपितजनकतावत् यत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णसमुदायत्वं प्रतिज्ञायाः लक्षणम्। हेतुवाक्यविषयकज्ञानस्य पूर्वोक्तसमूहालम्बनबोधनिष्ठ–हेतुविशिष्टहेतुत्वविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वसत्त्वेऽपि तादृशशाब्दबोधनिष्ठपर्वतविशेष्यकवह्निप्रकारकबुद्धित्वावच्छिन्नजन्यता–निरूपितजनकतावत्त्वविरहात् न हेतुवाक्यादौ अतिव्याप्तिः इत्यर्थः। न्यायान्तर्गतत्वमुपेक्ष्य न्यायावयवत्वप्रवेशस्य प्रयोजनमाह– ***न्यायान्तर्गतत्वमिति।*** तथा च पर्वतविशेष्यक – वह्निप्रकारक – शाब्दबोधत्वावच्छिन्नं प्रति प्रतिज्ञाहेतूभयविषयकसमूहालम्बन ज्ञानस्यापि जनकत्वात् तद्विषये प्रतिज्ञाहेतुसमुदाये न्यायान्तर्गतत्वसद्भावात् तत्रातिव्याप्तिवारणाय न्यायान्तर्गतत्वस्थाने न्यायावयवत्वप्रवेशः। तत्प्रवेशे तु उभयघटकभागद्वयाघटितत्वरूपस्य अवयवत्वस्य प्रतिज्ञाहेतुसमुदाये विरहात् नातिव्याप्तिरिति भावः।

'पर्वतो वह्निमान्' इति प्रतिज्ञैकदेशे पर्वतपदे पर्वतविशेष्यक–वह्निप्रकारकशाब्दबोधजनकज्ञानविषयत्वसत्त्वात् तत्रातिव्याप्तिः। तद्वारणाय तादृशशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावत् यत्किञ्चिज्ज्ञानीय–विषयितानिरूपकवर्णत्वव्यापकसमुदायत्वमिति विवक्षणीयम्। पर्वतपदवृत्ति–वर्णसमुदायत्वस्य 'पर्वतो वह्निमान्' इति शाब्दबोधजनकज्ञान–विषयवह्निमत्पदघटकेषु वर्णेषु अभावात् तादृशवर्णत्वव्यापकत्वं नास्तीति नातिव्याप्तिः। एवं सति 'पर्वतो वह्निमान्' इति एकैकप्रतिज्ञाया अपि न

यद्यपि साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानजनकत्वमात्रस्यैव निवेशे उपनयनिगमनयोरप्यतिव्याप्तिः। तथापि यत्किंचिद्धर्मविशिष्टे शुद्धसाध्यतावच्छेदकविशिष्ट-वैशिष्ट्यज्ञानजनकत्वनिवेशने, न तत्रातिप्रसङ्गः उपनयजन्यबोधे उपनयार्थ-व्याप्तिशरीरघटकसाध्यस्य धर्मितावच्छेदकाप्रवेशात्। निगमनजन्यबोधे च साध्यांशे हेतुज्ञानज्ञाप्यत्वस्याधिकस्य भानात्।

अन्यथा पक्षतावच्छेदकान्तर्भावेप्यनुषङ्गपक्षेऽनिस्तारादित्युदाहरणमात्रानुसरणम्।

---

तादृशज्ञानीयविषयितानिरूपकवर्णत्वव्यापकसमुदायत्ववत्त्वम्। तादृशवर्णत्वस्य तज्जातीयप्रतिज्ञान्तरेऽपि सत्त्वात्। अतः एकैकप्रतिज्ञायामसंभवः स्यात् इति तद्वारणाय ज्ञाने यत्किञ्चित्त्वनिवेशः। यद्यपि न्यायावयवत्वशरीरे प्रतिज्ञाद्यघटकत्वरूपविशेषणस्यापि सद्भावात् तेनैव प्रतिज्ञैकदेशे पर्वतपदे अतिव्याप्तिवारणसंभवात् वर्णत्वव्यापकत्वविशेषणं व्यर्थम्। तदभावे च यत्किञ्चित्वनिवेशनमपि ज्ञानेऽनावश्यकम्, तथापि प्रतिज्ञालक्षणघटक-न्यायावयवत्वशरीरे प्रतिज्ञाद्यघटकत्वविशेषणं न निवेश्यते गौरवात्। अत एव पश्चात् 'एतल्लक्षणे न्यायावयवत्वशरीरे प्रतिज्ञाद्यघटकत्वं न निविष्टम्; किन्तु 'उभयघटकभागद्वयाघटितत्वमात्रम्' इति वक्ष्यति। उभयघटकभागद्वयाघटितत्वं तु प्रतिज्ञाघटकप्रतिज्ञान्यघटकएतदुभयावृत्तिधर्मवत्त्वम्। अनेनैव प्रतिज्ञाहेतुसमुदाये अतिव्याप्तिवारणसंभवात् तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वमपि उक्तसमुदायत्वे न निवेशनीयम्। इत्थञ्च प्रतिज्ञाघटक – प्रतिज्ञान्यघटक – एतदुभयावृत्तिधर्मवत्त्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित-प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपित-जनकतावच्छेदकयत्किञ्चज्ज्ञानीयविषयितानिरूपकवर्णत्वव्यापकसमुदायत्वम् प्रतिज्ञालक्षणमिति पर्यवसितम्। तत्र पक्षतावच्छेदकावच्छिन्नत्वानिवेशे उदाहरणवाक्येऽतिव्याप्तिः। तद्धटकस्य 'स वह्निमान्' इति भागस्य पर्वतविशेष्यकवह्निप्रकारकशाब्दबोधजनकत्वात्। तन्निवेशे तु उदाहरणवाक्यात् 'महानसं वह्निमत्', 'महानसान्यत् वह्निमत्' इत्याकारकबोधस्यैव जननात् पर्वतत्वावच्छिन्नविशेष्यकबोधजनकत्वम् उदाहरणवाक्ये नास्तीति नातिव्याप्तिः। पक्षविशेष्यकत्वमपि परित्यज्य साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वमात्रनिवेशे उपनयनिगमनयोरपि अतिव्याप्तिः। उपनयवाक्यजन्यशाब्दबोधे व्याप्तेरपि

तदप्युदाहरणजन्यबोधे व्यापकत्वं न विधेयतावच्छेदकघटकतया भासते। अपि तु शुद्धवह्नित्वाद्यवच्छिन्नमेव सकलहेत्वधिकरणे भासत इति प्राचीनमतमनुसृत्य निगमने

---

विषयत्वात् व्याप्तिशरीरे साध्यसामानाधिकरण्यस्य प्रवेशात् साध्यप्रकारक-बोधजनकत्वं उपनये वर्तते। एवं निगमनेऽपि वह्निप्रकारकबोधजनकत्वमस्ति। परन्तु यत्किञ्चिद्धर्मीविशिष्टविशेष्यकशुद्धसाध्यतावच्छेदकावच्छिन्न-साध्यप्रकारकबोधजनकत्वं लक्षणमिति विवक्षणे उपनयवाक्यजन्यशाब्दबोधे व्याप्तिघटकतया वह्निरूपसाध्यस्य निर्धर्मितावच्छेदककमेव भानमिति यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकवह्निप्रकारकबोधजनकत्वाभावात् उपनये नातिव्याप्तिः। एवं निगमनजन्यशाब्दबोधे साध्यांशे वह्नित्वस्येव धूमज्ञानज्ञाप्यत्वस्यापि प्रकारत्वात् धूमज्ञानज्ञाप्यत्व–वह्नित्व–उभयावच्छिन्नप्रकारकत्वमेव अस्ति, न शुद्धवह्नित्वावच्छिन्नप्रकारकत्वमिति न निगमनेऽतिव्याप्तिः। उदाहरणवाक्यजन्यबोधे तु महानसत्व–तदन्यत्वरूपयत्किञ्चिद्धर्मावच्छिन्नविशेष्यक– शुद्धवह्नित्वावच्छिन्न-प्रकारकबोधजनकत्वसद्भावात् पूर्वोक्तविवक्षणेऽपि तत्रातिव्याप्तिः वारयितुमशक्या। अतः पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वस्य लक्षणे प्रवेशः। सर्वमिदं शङ्कासमाधानव्याजेन स्पष्टीकरोति–***साध्यतावच्छेदकविशिष्टेत्यादिना।*** 'मात्र' पदेन पक्षतावच्छेदकविशिष्ट–विशेष्यकत्वनिवेशव्यवच्छेदः। **उपनयनिगमनयोरपि** इत्य**पि**ना उदाहरणस्य समुच्चयः। ***तथापीत्यादि।*** यत्किञ्चिद्धर्मीविशिष्ट इत्यनेन उदाहरणेऽतिव्याप्तिनिरासः। 'शुद्ध' पदेन निगमनेऽतिव्याप्तिनिरासः। ***उपनयजन्यबोध*** इति। 'धूमव्यापकवह्निमद्वृत्तिधूमवान् पर्वतः' इत्याकारकबोधे इत्यर्थः। ***धर्मितावच्छेदकाप्रवेशादिति।*** धूमव्यापकवह्निमद्वृत्तित्वरूपव्याप्तौ वह्निधर्मिणः वह्निमत्त्वेन वा वह्निनैव वा भानम्। न तु धर्मान्तरेण। अतः किञ्चिद्धर्मा-वच्छिन्नविशेष्यकवह्निप्रकारकबोधः उपनयवाक्यान्न जायत इति भावः। ***अन्यथेति।*** निगमनजन्यबोधे हेतुज्ञानज्ञाप्यत्वस्य अधिकस्य अभाने इत्यर्थः। ***अनिस्तारादिति।*** उपनयस्थस्य 'अयं' पदस्य निगमनवाक्येऽनुषङ्ग इति पक्षे पर्वतत्वावच्छिन्नविशेष्यक–वह्नित्वावच्छिन्नप्रकारकबोधजनकत्वस्य निगमनवाक्ये सत्त्वात् पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वनिवेशेऽपि तत्रातिव्याप्तेः वारणासंभवात् इति भावः।

अयम्पदाननुषङ्गपक्षे शुद्धसाध्यतावच्छेदकविशिष्टत्वं न निविष्टं विशेषणान्तरा-वच्छिन्नवह्न्यादिसाध्यकन्यायान्तर्गतप्रतिज्ञायां शुद्धवह्नित्वावच्छिन्न साध्यकप्रतिज्ञालक्षणातिप्रसक्तेः प्रकृतन्यायान्तर्गतत्वाभावेनैव वारणादित्यभिप्रायकमिदम्। अतो व्यापकत्वस्याधिकस्यो-दाहरणजन्यबोधे भानेपि न क्षतिरिति केचित्। तन्मते निगमनोपेक्षाबीजं चिन्तनीयम्; यत्तत्पदस्योदाहरणस्थस्य न पक्षतावच्छेदकावच्छिन्नपरत्वम्।

---

ननु पक्षतावच्छेदकविशिष्टे इति निवेशस्य उदाहरणेऽतिव्याप्तिवारणरूपं प्रयोजनं यत् **दीधितौ** उक्तम्, तन्न सङ्गच्छते। निगमनेऽतिव्याप्तिवारणाय शुद्धसाध्यतावच्छेदकावच्छिन्नप्रकारकबोधजनकत्वस्यैव निवेशनीयतया उदाहरणवाक्यात् जायमानस्य 'धूमवान् धूमव्यापकवह्निमान्' इत्याकारकबोधस्य वह्न्यंशे अधिकव्यापकत्वप्रकारकस्य शुद्धवह्नित्वावच्छिन्नप्रकारकत्वविरहात् उदाहरणेऽतिव्याप्तिवारणसंभवात् इत्याशङ्क्य उदाहरणवाक्यात् विधेयतावच्छेदकघटकतया व्यापकत्वावगाही बोधो न जायते। किन्तु 'महानसं वह्निमत्', 'महानसान्यद्वह्निमत्' इत्याकारकबोध एव जायते इति प्राचीनमतमनुसृत्य **दीधिति**कृता उदाहरणातिव्याप्तिवारणरूपं प्रयोजनमुक्तमिति समाधत्ते – ***तदपीति।***

पक्षतावच्छेदकावच्छिन्नेत्यस्य अनिवेशे यत्किञ्चिद्धर्मावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वनिवेशे शुद्धत्वनिवेशनं विनापि निगमनेऽननुषङ्गपक्षे यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकबोधजनकत्वाभावादेव अतिव्याप्तिवारणं संभवति। अतः उदाहरणमात्रे अतिव्याप्तिकथनमिति केचिद्वदन्ति, तन्मतमाह– ***निगमन*** इति। ***न निविष्टमिति।*** शुद्धत्वं न निविष्टमिति यावत्। यत्किञ्चिद्धर्मावच्छिन्नेत्यनेनैव उपनयनिगमनयोः अतिव्याप्तिवारणसंभवात् इति भावः। ननु शुद्धवह्नित्वावच्छिन्नसाध्यक-न्यायान्तर्गतप्रतिज्ञालक्षणे शुद्धवह्नित्वावच्छिन्नप्रकारकत्वं बोधेऽवश्यं निवेशनीयम्। अन्यथा 'पर्वतः सुन्दरवह्निमान्' इति वाक्ये तत्प्रतिज्ञालक्षणस्यातिव्याप्तेः इत्याशङ्क्य प्रकृतन्यायान्तर्गतत्वविरहादेव तत्रातिव्याप्तिवारणसंभवात् शुद्धत्वं न निवेशनीयमिति समाधत्ते – ***विशेषणान्तरावच्छिन्नेति। इदमिति।*** उदारहणमात्रे अतिव्याप्तिकथनमित्यर्थः। ***न क्षतिरिति।*** उदाहरणजन्यबोधे साध्यांशे हेतुव्यापकत्वस्य

अपि तु पक्षान्यसाध्यवत्साधारणरूपावच्छिन्नपरत्वमेव पक्षतावच्छेदकावच्छिन्ने हेतुमत्त्वस्य ततो लाभे उपनयानुत्थानात्तदवच्छिन्ने साध्यवत्त्वस्य च प्रतिज्ञात एव लाभे-नानाकांक्षितत्वाच्चेति पक्षतावच्छेदकप्रवेशे नोदाहरणातिप्रसङ्गः। अत्र यत्किंचिद्धर्मावच्छिन्न-

---

अधिकस्य भानेऽपि साध्यतावच्छेदकावच्छिन्नप्रकारकत्वस्य अक्षततया तत्रातिव्याप्तिप्रसक्तया तद्वारणफलकत्वं पक्षतावच्छेदकविशिष्टेत्यस्य यत् दीधितिकारोक्तं तस्य नासङ्गतिरिति भावः। ***तन्मते*** इति। शुद्धत्वाघटितलक्षणाभिप्रायेण यद्ययं दीधितिग्रन्थः प्रवृत्तः स्यात् तर्हि निगमनवाक्यजन्यबोधेऽपि वह्नित्वावच्छिन्नप्रकारकत्वसत्त्वात् तज्जनके निगमने अतिव्याप्तिः कुतो नोक्ता? न च अननुषङ्गपक्षे यत्किञ्चिद्धर्मावच्छिन्नविशेष्यक-वह्नित्वावच्छिन्नप्रकारकबोधजनकत्वं निगमनवाक्ये नास्तीति कथं तत्रातिव्याप्तिरिति वाच्यम्। अननुषङ्गपक्षे केवलनिगमनात् शाब्दबोध एव न जायते। निर्धर्मितावच्छेदककबोधानङ्गीकारात्। किन्तु उपनयवाक्यसहितनिगमनादेव शाब्दबोधः। तस्य च यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकत्वसत्त्वात् तादृशबोधजनके निगमनेऽपि अतिव्याप्तिसंभवात् तदुपेक्षायां बीजं तन्मते चिन्तनीयमेव इति।

पक्षतावच्छेदकावच्छिन्नत्वनिवेशे सति उदाहरणेऽतिव्याप्तिवारणप्रकारं प्रदर्शयति– ***यत्तत्पदस्येति।*** उदाहरणे विद्यमानस्य यत्पदस्य तत्पदस्य च न पर्वतत्वावच्छिन्नपरत्वम्। तथा सति पर्वतत्वावच्छिन्ने धूमवत्त्वस्य उदाहरणादेव लाभेन उपनयवाक्यस्य वैयर्थ्यात्। एवं पर्वतत्वावच्छिन्ने वह्निमत्त्वस्य प्रतिज्ञात एव लाभेन 'स वह्निमान्' इति भागस्य वैयर्थ्याच्च। अतः महानसत्वतदन्यत्वावच्छिन्नपरत्वमेव यत्तत्पदयोः। तथा च महानसत्वत-दन्यत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकबोधजनकस्यापि उदाहरणस्य पर्वतत्वावच्छिन्नविशेष्यकबोधजनकत्वाभावात् नातिव्याप्तिरिति भावः। ***पक्षान्येति।*** पर्वतान्यः यः साध्यवान् वह्निमान् तत्साधारणं यद्रूपम् महानसत्वं महानसान्यत्वञ्च तदवच्छिन्नपरत्वमित्यर्थः। ***ततो लाभे उपनयानुत्थानादिति।*** उदाहरणादेव लाभे व्याप्यः 'पक्षे वर्तते न वा' इत्याकाङ्क्षाविरहात् उपनयवाक्यस्य वैयर्थ्यादित्यर्थः। ***तदवच्छिन्न*** इति। पक्षतावच्छेदकावच्छिन्ने इत्यर्थः। ***अनाकाङ्क्षितत्वादिति।*** 'को वह्निमान्' इत्याकाङ्क्षाविरहादित्यर्थः।

विशेष्यक साध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजनकत्वमुदाहरणैकदेशे स वह्निमानित्यादिवाक्य एव, न तु तस्य न्यायावयवत्वम्, तच्च समुदाय एव, न तत्र तादृशजनकत्वमिति विशिष्य पक्षतावच्छेदकानन्तर्भावेपि नोदाहरणातिप्रसङ्ग इति नाशङ्कनीयम्। जनकत्वस्य जनकयत्किंचिज्ज्ञानविषयवर्णसमुदायत्वरूपस्य विवक्षितत्वात् उदाहरणसमुदायविषयकज्ञानमादायोदाहरणसमुदाय एवातिप्रसक्तेः।

एवमेतल्लक्षणप्रविष्टन्यायावयवत्वशरीरे प्रतिज्ञाहेत्वादिसमुदायेऽतिप्रसङ्ग-वारणायोभयघटकभागद्वयाघटितत्वमेव निवेशनीयम्। न तु प्रतिज्ञाद्यघटकत्वमपि,

---

ज्ञायमानशब्दस्य शाब्दबोधजनकत्वमिति मते पक्षतावच्छेदकप्रवेशवैयर्थ्यं शङ्कते– ***अत्र चेत्यादिना।*** इति नाशङ्कनीयमित्यन्वयः। यत्किञ्चिद्धर्मावच्छिन्न-विशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकशाब्दबुद्धित्वावच्छिन्न-जन्यतानिरूपितजनकत्वं प्रतिज्ञायाः लक्षणम्। इदं तु लक्षणम् उदाहरणैकदेशे 'स वह्निमान्' इति वाक्य एव अस्ति। तत्र तु न्यायावयवत्वाभावादेव नातिव्याप्तिः। न्यायावयवत्वं तु 'यो यो धूमवान् स वह्निमान्' इति समुदाय एवास्ति। तत्र तु तादृशजनकत्वं नास्तीति नातिव्याप्तिः। तथा च पक्षतावच्छेदकविशिष्टत्वनिवेशनं व्यर्थमिति शङ्का। न च जनकतायाः प्रत्येकपर्यवसिततया प्रतिज्ञैकदेशेऽतिव्याप्तिवारणाय तादृशजनकताश्रय-वर्णत्वव्यापकसमुदायत्वं विवक्षणीयम्। तथा च उदाहरणे अतिव्याप्तिः दुर्वारैव। स्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्य समुदायत्वविशेषणत्वेन तद्वारणे तु उभयघटकभागद्वयाघटिततत्वस्य वैयर्थ्यमिति वाच्यम्। एतन्मते तद्वैयर्थ्यस्य इष्टत्वात्।

ज्ञायमानस्य शब्दस्य न शाब्दबोधजनकत्वम्, अप्रामाणिकत्वात्। अपि तु शब्दज्ञानस्यैव इत्यभिप्रायेण समाधत्ते–***जनकत्वस्येति।*** तथा च यो यो धूमवान्, स वह्निमान्' इति समुदायविषयकज्ञानस्य यत्किञ्चिद्धर्मावच्छिन्न-विशेष्यकवह्नित्वावच्छिन्नप्रकारकशाब्दबुद्धित्वावच्छिन्नजनकत्वात् तद्विषयवर्ण-समुदायत्वमादाय उदाहरणरूपे समुदाये अतिव्याप्तिप्रसक्त्या तद्वारणाय पक्षतावच्छेदकावच्छिन्नत्वनिवेशः आवश्यक इति भावः। ***विवक्षिततत्वादिति।*** यत्किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि-

प्रयोजनान्तरविरहात्। उदाहरणैकदेशे तादृशवाक्येतिप्रसङ्गस्य लघुतरप्रकृतपक्षतावच्छेदक–वैशिष्ट्यनिवेशेनैव वारयितुमुचितत्वात्।

यद्यप्येवं नीलपर्वतो वह्निमानित्यादिप्रतिज्ञैकदेशे पर्वतो वह्निमानित्यादिभागेपि व्यावृत्तिस्सम्भवति। तथापि सकलप्रतिज्ञैकदेशे न तथेति विशेषोपादाने प्रयासाधिक्येनो–

---

बुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयितानिरूपकवर्ण–समुदायत्वस्य प्रतिज्ञालक्षणघटकजनकत्वपदेन विवक्षणीयत्वात् इत्यर्थः।

ननु 'स वह्निमान्' इति भागे प्रतिज्ञाद्यघटकत्वनिवेशेनापि अतिव्याप्तिवारणसंभवात् पक्षतावच्छेदकनिवेशः व्यर्थ इति चेत्, न। 'स वह्निमान्' इति भागे अतिव्याप्तिवारणसंभवेऽपि उदाहरणरूपे समुदाये अतिव्याप्तिवारणासंभवात्। अपि च एतल्लक्षणप्रविष्टन्यायावयवत्वशरीरे प्रतिज्ञाद्यघटकत्वं प्रयोजनाभावात् न निवेशनीयम् इत्याह– **एवमिति।** ननु उदाहणैकदेशेऽतिव्याप्तिवारणायैव प्रतिज्ञाद्यघटकत्वं निवेशनीयम् इत्याशङ्क्य तत्रातिव्याप्तेः प्रतिज्ञाद्यघटकत्वापेक्षया लघुभूतेन प्रकृतपक्षतावच्छेदकविशिष्ट–विशेष्यकत्वनिवेशेनैव वारयितुं शक्यत्वात् इति समाधत्ते – ***उदाहरणैकदेश*** इति। ***तादृशवाक्य*** इति। 'स वह्निमान्' इति वाक्ये इत्यर्थः। ***यद्यप्येवमिति।*** 'नीलपर्वतो वह्निमान्' इत्यादिन्यायान्तर्गतप्रतिज्ञायाः एकदेशे 'पर्वतो वह्निमान्' इति भागेऽपि यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकबोधजनकत्वसद्भावात् प्रसक्तायाः अतिव्याप्तेर्वारणाय पक्षतावच्छेदकावच्छिन्नत्वनिवेशः इत्यपि वक्तुं शक्यते, तथापि कतिपयप्रतिज्ञैकदेशे एव अतिव्याप्तिः, न तु सकलप्रतिज्ञैकदेशे। 'पर्वतो वह्निमान्' इति प्रतिज्ञैकदेशे पर्वतपदे वह्निमत्पदे वा यत्किञ्चिद्धर्मावच्छिन्नविशेष्यक–वह्नित्वावच्छिन्नप्रकारकबोधजनकत्वाभावेन अतिव्याप्त्यप्रसक्तेः। सकलो–दाहरणैकदेशे तु अतिव्याप्तिप्रसक्तिरस्ति। अतः प्रतिज्ञैकदेशोपेक्षा इति भावः। ***विशेषोपादाने*** इति। 'नीलपर्वतो वह्निमान्' इत्यादि प्रतिज्ञाविशेषैकदेशे अतिव्याप्तिरिति कथने इत्यर्थः।

***उपनयाच्चेति*** दीधितिग्रन्थे साध्यतावच्छेदकविशिष्टवैशिष्ट्यनिवेशस्य प्रयोजनमुक्तम्। तदनिवेशे पक्षतावच्छेदकावच्छिन्नविशेष्यकशाब्दबोधजनक–ज्ञानविषयत्वं प्रतिज्ञालक्षणमित्युक्तौ उपनयेऽतिव्याप्तिः। पर्वतत्वावच्छिन्नविशेष्यकः

**किन्तूद्देश्यानुमिति चरमकारणलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकवाक्यम्॥**

---

**किन्त्वित्यादि। प्रकृतन्यायबहिर्भूतवारणाय सत्यन्तम्। प्रकृतन्याया-वयवत्वंपर्यवसितार्थकम्। उद्देश्येति। प्रकृतेत्यर्थः। वह्निसाध्यकोपनयस्य वह्निव्याप्यधूमसाध्यकानुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकस्य वारणाय प्रकृतद्वयम्।**

---

दाहरणानुधावनमिति ध्येयम्। साध्यतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशप्रयोजनमाह ***उपनयाच्चेति।*** साध्यवैशिष्ट्यमात्रनिवेशेपि पर्वतो द्रव्यवान् धूमादित्यादिन्यायान्तर्गते उपनये तत्स्थलीयप्रतिज्ञालक्षणातिव्याप्तिरिति साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वनिवेश इत्यवधेयम्॥

***इति सूत्रकारीयप्रतिज्ञालक्षणम्॥***

---

यः 'वह्निव्याप्यधूमवान् पर्वत' इति बोधः, तज्जनकज्ञानविषयत्वस्य तत्र सद्भावात्। साध्यतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशे तु उपनयजन्यबोधस्य हेतुतावच्छेदकावच्छिन्नप्रकारकत्वेऽपि साध्यतावच्छेदकावच्छिन्नप्रकारकत्वविरहात् नातिव्याप्तिः। ननु साध्यप्रकारकत्वनिवेशेनापि उपनयेऽतिव्याप्तिः वारयितुं शक्यते। हेतुप्रकारकस्य तज्जन्यबोधस्य साध्यप्रकारकत्वाभावात्। अतः साध्यतावच्छेदकावच्छिन्नत्वनिवेशनं किमर्थमित्यत आह- ***साध्यवैशिष्ट्यमात्रनिवेशेऽपीति।*** तथा च यत्किञ्चिद्धर्मावच्छिन्नविशेष्यक-प्रकृतसाध्यप्रकारकबोधजनकवाक्यत्वं प्रतिज्ञालक्षणमित्युक्ते 'पर्वतो वह्निमान्, धूमात्' इत्यादिन्यायान्तर्गते उपनयवाक्ये यद्यपि अतिव्याप्तिर्वारयितुं शक्यते, तथापि 'पर्वतो द्रव्यवान्, धूमात्' इत्यादि न्यायान्तर्गते 'द्रव्यव्याप्यधूमवान् पर्वतः' इत्युपनये तत्स्थलीयप्रतिज्ञालक्षणस्य यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकसाध्य-द्रव्यप्रकारकबोधजनकत्वस्य अतिव्याप्तिः। तादृशोपनयजन्यबोधे धूमप्रकारके द्रव्यप्रकारकत्वस्य अक्षतत्वात्। धूमस्यापि द्रव्यत्वात्। तद्वारणाय प्रकृतसाध्यता-वच्छेदकावच्छिन्नत्वं निवेशनीयम्। तन्निवेशे तु तत्स्थलीयोपनयजन्यबोधस्य धूमत्वावच्छिन्नप्रकारकत्वेऽपि साध्यतावच्छेदकद्रव्यत्वावच्छिन्नप्रकारकत्वविरहात् नातिव्याप्तिरिति भावः।

एतावता सूत्रानुसारेण दीधितिकृत्परिष्कृतं प्रतिज्ञालक्षणमवसितम्। अथ

**तथा च, यादृशपक्षसाध्यकन्यायावयवत्वं तादृशपक्षसाध्यकानुमित्यन्यूनानतिरिक्त-विषयकशाब्दज्ञानजनकत्वं पर्यवसितोऽर्थः।**

---

यथाश्रुतसत्यन्तार्थस्योदासीनवाक्यसाधारण्य मक्षतमेव; न्यायान्तर्गत वाक्यजन्यस्येव तदनन्तर्गततादृशवाक्यजन्यस्यापि शाब्दबोधस्योपनायकज्ञानादिविधया परामर्श-प्रयोजकत्वादतस्तदर्थमाह – ***प्रकृतेति।*** वह्निव्याप्यधूमसाध्यकानुमितेरपि कदाचिदुद्देश्यतया वक्ष्यमाणातिप्रसङ्गवारणासम्भवादुद्देश्यपदं प्रकृतार्थकतया व्याचष्टे– ***उद्देश्येतीति।*** **वह्निसाध्यकोपनयस्य**–तत्साध्यकन्यायान्तर्गतोपनयस्य। एतेन सत्यन्तदलसत्त्वमाविष्कृतम्। वह्निव्याप्यधूमसाध्यकेत्यादिनाऽन्यसाधकानुमितिमादाय विशेष्यदलसत्त्वं स्फुटीकृतम्। ***वारणाय*** – प्रतिज्ञाव्यवहारविषयतावारणाय। ***प्रकृतद्वयम्*** – प्रकृतप्रतिज्ञापदार्थघटकन्यायानुमित्योः एकसाध्यादिकत्वप्रतिपादकं प्रकृतपदद्वयम् (साध्यपक्षविशेषनियन्त्रितार्थकं प्रकृतपदद्वयम्।) प्रकृतन्यायावयवत्वपर्यन्तानिवेशे वह्निव्याप्यधूमसाध्यकप्रतिज्ञानुरोधेन तत्साध्यकानुमितेरपि प्रकृतपदेन विवक्षणीयतया तामादाय दर्शितोपनये प्रकृतानुमितिपर्यन्तानिवेशे वह्निसाध्यकन्यायस्यापि प्रकृतन्यायेत्यनेन विवक्षणीयतया तदवयवत्वमादाय तत्र प्रतिज्ञाव्यवहारस्य दुर्वारत्वादुभयत्र प्रकृतत्वनिवेशः। (तथा च सति तत्पक्षसाध्यकन्यायान्तर्गतत्वघटितप्रतिज्ञापदार्थगर्भे तत्साध्यपक्षकानुमितेरेवान्तर्भावान्नातिप्रसङ्गः एतदेव) तथा च सति अभिन्नसाध्य-पक्षकन्यायानुमित्यन्तर्भावे यादृशो लक्षणार्थस्तं स्फुटयति – ***तथा चेति।***

---

मणिकारीयं प्रतिज्ञालक्षणं प्रस्तूयते। उद्देश्यानुमितेः प्रकृतानुमितेः हेतुभूतः यः लिङ्गपरामर्शः तत्प्रयोजकं यत् वाक्यार्थज्ञानं तज्जनकत्वे सति प्रकृतानुमित्यन्यूनानातिरिक्तविषयकं यत् शाब्दज्ञानं तज्जनकवाक्यत्वं प्रतिज्ञायाः लक्षणम्। प्रतिज्ञावाक्यजन्यस्य शाब्दबोधस्य महावाक्यार्थबोधद्वारा अनुमितिहेतुपरामर्शप्रयोजकत्वमस्ति। एवं प्रकृतानुमित्यन्यूनानतिरिक्तविषयकत्वं चास्तीति लक्षणसमन्वयः कार्यः। प्रकृतन्यायानन्तर्गते तत्समानाकारके वाक्येऽतिव्याप्तिवारणाय सत्यन्तम्। सत्यन्तानिवेशे तस्य वाक्यस्यापि अनुमितिसमानविषयकशाब्दबोधजनकत्वरूपविशेष्यदलसद्भावात् तत्र अतिव्याप्तिः। सत्यन्तनिवेशे तु कथमतिव्याप्तिः वारयितुं शक्यते। न्यायान्तर्गतवाक्यजन्यस्य शाब्दबोधस्य यथा परामर्शप्रयोजकत्वं तथा न्यायानन्तर्गतवाक्यजन्यशाब्दबोधस्यापि परामर्शप्रयोजकत्वसद्भावात् परामर्शविषयपदार्थोपस्थितिरूपज्ञानलक्षणा-

यत्तु तादृशोपनये वह्निव्याप्यधूमसाध्यकप्रतिज्ञाव्यवहारवारणाय न्याये, वह्निसाध्यकप्रतिज्ञाव्यवहारवारणायानुमितौ प्रकृतत्वनिवेशनमिति प्रकृतद्वयमित्यस्यार्थ इति,

---

प्रत्यासत्तिविधया तस्य शाब्दबोधस्य परामर्शप्रयोजकत्वम् इत्याशङ्कायां सत्यन्तेन प्रकृतन्यायावयवत्वं विवक्षितम्। प्रकृतन्यायानन्तर्गते वाक्ये तद्विरहान्नातिव्याप्तिरिति दीधितिकृतामाशयः॥ उद्देश्यपदस्य इच्छाविषय इति यथाश्रुतार्थस्वीकारे तत्पदं व्यर्थम्। वह्निसाध्यकोपनयस्य वह्निव्याप्यसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकस्य वारणाय हि उद्देश्यपदम्। तन्निवेशेऽपि 'वह्निव्याप्यधूमवान्' इत्याकारकानुमितेरपि कदाचित् इच्छाविषयतया उद्देश्यानुमितिपदेन ताम् अनुमितिं गृहीत्वा तदन्यूनानतिरिक्तविषयकशाब्दज्ञानजनके उपनयेऽतिव्याप्तेः तादवस्थ्यम्। अतः उद्देश्यपदं प्रकृतार्थकतया व्याचष्टे–***दीधितौ प्रकृतेत्यर्थ*** इति। तथा च प्रकृतन्यायावयवत्त्वे सति प्रकृतानुमितिसमानविषयकशाब्दज्ञानजनकत्वं प्रतिज्ञालक्षणम्। तत्र सत्यन्ते प्रकृतपदानिवेशे वह्निव्याप्यधूमसाध्यकप्रतिज्ञास्थले तत्साध्यकानुमितेरपि प्रकृतपदेन विवक्षणीयतया तत्समानविषयकशाब्दबोधजनके वह्निसाध्यकन्यायान्तर्गते उपनयेऽतिव्याप्तिः। विशेष्यदले प्रकृतत्वानिवेशे वह्निसाध्यकन्यायस्यापि प्रकृतन्यायेत्यनेन विवक्षणीयतया प्रकृतन्यायावयवे 'वह्निव्याप्यधूमवान्' इत्युपनये 'वह्निव्याप्यधूमवान्' इत्यनुमितिसमान-विषयकशाब्दबोधजनकत्वमादाय अतिव्याप्तिः। विशेष्ये प्रकृतत्वनिवेशे तु 'पर्वतो वह्निमान्' इत्यनुमितेरेव प्रकृतानुमितिपदेन ग्राह्यतया तत्समानविषयकशाब्दज्ञानजनकत्वस्य उपनयवाक्ये विरहात् नातिव्याप्तिः। तथा च यादृशपक्षसाध्यकन्यायावयवत्वं तादृशपक्षसाध्यकानुमिति-समानविषयकशाब्दबोधजनकत्वं प्रतिज्ञालक्षणमिति पर्यवसितोऽर्थः।

प्रतिज्ञासामान्यलक्षणाभिप्रायेण दीधितिं व्याख्याय प्रतिज्ञाविशेषलक्षणाभि-प्रायकतया दीधितिं व्याकुर्वतां मतमनुवदति– **यत्तु** इत्यादिना। ***तादृशोपनये*** इति। वह्निसाध्यकोपनये इत्यर्थः। तथा च न्याये प्रकृतत्वानिवेशे वह्निसाध्यकोपनये 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारके 'वह्निव्याप्य-धूमसाध्यकप्रतिज्ञा' इति व्यवहारः स्यात्। प्रकृतवह्निव्याप्य-

**तच्चिन्त्यम्** – तत्साध्यपक्षकप्रतिज्ञाव्यवहारविषयस्यात्र निर्वाच्यत्वे प्रतिज्ञापदार्थघटक-न्यायानुमित्योरुभयत्र समभिव्याहृतसाध्यपक्षान्वयनिवेशसूचनाय प्रकृतद्वयं तत्साध्यपक्षार्थक-मित्यस्यैवाभिधातुमुचिततया तदुपेक्ष्य प्रतिज्ञाव्यवहारविषयतावच्छेदकीभूतैकधर्मशरीरे द्विधा निविष्टयोस्साध्यपक्षयोरभेदमात्रलाभाय तथा चेत्यभिधाने सन्दर्भविरोधात्। **यादृशेत्यादेः** स्वस्येत्यादिः। तादृशेत्यादेः स्वनिष्ठमित्यादिः। **पर्यवसितोर्थः**– प्रतिज्ञापदप्रतिपाद्यतावच्छेदकतया मूलाभिप्रायविषयः।

एवं च सति प्रतिज्ञादिपदस्य नानार्थकत्वं न दोषाय; **गत्यन्तरविरहादिति** प्रागेवोक्तं

---

धूमसाध्यकानुमितिसमानविषयकशाब्दबोधजनकत्वे सति वह्निसाध्यक-न्यायावयवत्वसद्भावात्। न्याये प्रकृतत्वनिवेशे तु वह्निव्याप्यधूम-साध्यकप्रतिज्ञालक्षणसमन्वयकाले प्रकृतन्यायपदेन वह्निव्याप्यधूमसाध्यकन्यायस्यैव ग्राह्यतया तदवयवत्वं वह्निसाध्यकोपनये नास्तीति नातिव्याप्तिः। एवं अनुमितौ प्रकृतत्वानिवेशे वह्निसाध्यकोपनये 'पर्वतो वह्निव्याप्यधूमवान्' इत्याकारके प्रकृतवह्निसाध्यकन्यायान्तर्गतत्वात् अप्रकृतवह्निव्याप्यसाध्यकानुमितिसमान-विषयकशाब्दबोधजनकत्वात् 'वह्निसाध्यकप्रतिज्ञा' इति व्यवहारः स्यात्। तद्वारणाय अनुमितौ प्रकृतत्वनिवेशः। तन्निवेशे तु वह्निसाध्यकप्रतिज्ञालक्षणप्रसञ्जनकाले प्रकृतानुमितिपदेन वह्निसाध्यकानुमितेरेव ग्राह्यतया तत्समानविषयकशाब्दबोध-जनकत्वम् उपनये नास्तीति नातिव्याप्तिः इति भावः।

तन्मतं दूषयति – ***तच्चिन्त्यमित्यादिना।*** तत्साध्यपक्षकप्रतिज्ञाव्यवहार-विषयस्य लक्षणमत्र यदि विवक्षितं स्यात्, तदा प्रतिज्ञापदार्थघटके न्याये अनुमितौ च उभयत्र समभिव्याहृतस्वोपस्थाप्यसाध्यपक्षान्वयनिवेशसूचनाय प्रकृतपदद्वयम् तत्साध्यपक्षकार्थकम्। तथा च पर्वतपक्षकवह्निसाध्यकस्थले पर्वतपक्षकवह्निसाध्यकन्यायावयवत्वे सति पर्वतपक्षकवह्निसाध्यकानुमित्यन्यूना-नतिरिक्तविषयकशाब्दज्ञानजनकत्वं प्रतिज्ञाव्यवहारविषयतावच्छेदकम् इत्येव वक्तुं युक्ततया तदुपेक्ष्य प्रतिज्ञाव्यवहारविषयतावच्छेदकधर्मशरीरे द्विधानिविष्टयोः साध्यपक्षयोः अभेदमात्रलाभाय तथा चेत्यभिधाने सन्दर्भविरोधापत्तेः। एतदुक्तं भवति – अनुमितौ न्याये च प्रकृतपदयोः तत्साध्यपक्षकत्वनिवेशार्थकत्वे तत एव उपनये तत्साध्यपक्षकप्रतिज्ञाव्यवहारवारणसंभवात् यादृशपक्षकेत्यादिना अनुमितिन्यायघटकशाब्दबोधविषयसाध्यादीनाम् ऐक्यविवक्षाया अनावश्यकत्वादिति।

ग्रन्थकृतैव। तत्साध्यतावच्छेदकावच्छिन्न तत्साध्यकत्वस्य न्यायाद्यंशेऽनिवेशने उक्तोपनय एवातिप्रसङ्गः। यत्पक्षकानुमितिसमानविषयकत्वं तत्पक्षकन्यायान्तर्गतत्वस्याक्षतत्वादिति तन्निवेशनम्। द्रव्यव्याप्यधूमवानयमित्याकारकद्रव्यत्वावच्छिन्नसाध्यकोपनयवारणाय साध्यतावच्छेदकनिवेशनम्। एतल्लक्षणघटकन्यायावयवत्वशरीरे उदाहरणाद्यघटकत्वनिवेशस्य सिषाधयिषाधीनन्यायप्रयोगानङ्गीकारपक्षे प्रयोजनान्तरविरहात्प्रतिज्ञाऽघटकत्वमात्रस्य तदेकदेशसाधारणस्य निवेशनीयतया वह्न्यादिसाध्यकन्यायान्तर्गतस्य यत्किञ्चिद्धर्मिकवह्न्यादिसाध्यकानुमित्यन्यूनानतिरिक्तविषयकबोधजनकस्य स वह्निमानित्युदाहरणैकदेशस्य वारणायैकधर्मावच्छिन्नपक्षकत्वनिवेशनम्।

---

***पर्यवसितोऽर्थ*** इति। स्वस्य यादृशपक्षसाध्यकन्यायावयवत्वं स्वनिष्ठं तादृशपक्षसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं प्रतिज्ञापद-प्रतिपाद्यतावच्छेदकतया मूलतात्पर्यविषय इति भावः। ***तत्साध्यतावच्छेदकावच्छिन्नसाध्यकत्वस्येति।*** न्यायावयवत्वशरीरे न्याये तत्साध्यकत्वस्यानिवेशे वह्निसाध्यकोपनये अतिव्याप्तिः। न्यायांशेऽनिवेशे अनुमितावपि तत्साध्यकत्वं नास्त्येव। एकदैव तस्य निवेशात्। तथा च यादृशपक्षकन्यायावयवत्वं तादृशपक्षकानुमितिसमानविषयकशाब्दज्ञानजनकत्वमिति प्रतिज्ञालक्षणम्। वह्निसाध्यकोपनयस्य पर्वतपक्षकन्यायपदेन पर्वतपक्षकवह्निसाध्यकन्यायं गृहीत्वा तदवयवत्वमादाय पर्वतपक्षकानुमितिपदेन पर्वतपक्षकवह्निव्याप्यसाध्यकानुमितिं गृहीत्वा तत्समानविषयकशाब्दबोधजनकत्वमादाय तत्र प्रतिज्ञाव्यवहारापत्तिः। तत्साध्यकत्वनिवेशे तु पर्वतपक्षकवह्निसाध्यकन्यायावयवस्य उपनयस्य पर्वतपक्षक–वह्निसाध्यकानुमिति–समानविषयकशाब्दबोधजनकत्वं नास्तीति नातिव्याप्तिः। तत्साध्यकेत्यनेन तत्साध्यतावच्छेदकावच्छिन्नसाध्यकेत्यपि विवक्षणीयम्। अन्यथा पर्वतपक्षकद्रव्यसाध्यकोपनये 'पर्वतः द्रव्यव्याप्यधूमवान्' इत्याकारके प्रतिज्ञालक्षणस्य अतिव्याप्तिः। तस्य वाक्यस्य पर्वतपक्षकद्रव्य-साध्यकन्यायावयवत्वात् पर्वतपक्षकद्रव्यसाध्यकानुमितिपदेन 'पर्वतः द्रव्यव्याप्यधूमवान्' इत्यनुमितेरपि धूमरूपद्रव्यसाध्यकत्वेन ग्रहीतुं शक्यतया तत्समानविषयकशाब्दज्ञानजनकत्वाच्च। तत्साध्यतावच्छेदकावच्छिन्नत्वनिवेशे तु पर्वतपक्षकद्रव्यत्वावच्छिन्नसाध्यक 'पर्वतो द्रव्यवान्' इत्याकारकानुमिति–समानविषयकशाब्दज्ञानजनकत्वं पूर्वोक्तोपनये नास्ति इति नातिव्याप्तिः।

तत्पक्षकपदेन तत्पक्षतावच्छेदकावच्छिन्नपक्षकत्वं निवेशनीयम्। तत्प्रयोजनं वक्तुमारभते- ***एतल्लक्षणघटकेत्यादिना।*** तथा च तत्पक्षकत्वानिवेशे यत्साध्यकन्यायावयवत्वं तत्साध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं प्रतिज्ञात्वम् इत्येतावन्मात्रोक्तौ वह्निसाध्यकन्यायान्तर्गतोदाहरणैकदेशे 'स वह्निमान्' इति भागे अतिव्याप्तिः। तस्यापि वह्निसाध्यकन्यायान्तर्गतत्वात्, महानसधर्मिकवह्निसाध्यकानुमितिसमानविषयकशाब्दबोधजनकत्वाच्च। न च तत्पक्षकत्वनिवेशेऽपि तत्रातिव्याप्तिः। तस्य भागस्य 'महानसान्यद्वह्निमत्' इत्याकारकशाब्दबोधजनकतया तस्य शाब्दबोधस्य पर्वतपक्षकवह्निसमान-विषयकत्वात् तादृशशाब्दबोधे महानसान्यत्वरूपेण पर्वतस्यापि भानात् इति वाच्यम्। तत्पक्षतावच्छेदकावच्छिन्न पक्षकत्वस्य विवक्षितत्वात् पर्वतत्वावच्छिन्न-पक्षकानुमितिसमानविषयबोधजनकत्वस्य 'स वह्निमान्' इति बोधे विरहात्, अतिव्याप्तिवारणसंभवात्।

ननु उदाहरणैकदेशस्य न्यायावयवत्वमेव नास्ति। अवयवलक्षणप्रविष्टस्य उदाहरणाघटकत्वस्य तत्र विरहात्। तथा च कथं अतिव्याप्तिप्रसक्तिः? इति चेत्, न। प्रतिज्ञालक्षणघटकन्यायावयवत्वशरीरे प्रतिज्ञैकदेशे अतिव्याप्तिवारणाय प्रतिज्ञा-अघटकत्वमात्रं निवेश्यते, न तु उदाहरणाद्यघटकत्वमपि। प्रयोजनाभावात्। अतः उदाहरणैकदेशे अतिव्याप्तेः प्रसक्तिरिति। ***सिषाधयिषाधीनन्यायप्रयोगा-नङ्गीकारपक्ष*** इति। तदङ्गीकारपक्षे तु 'पर्वतो वह्निमान् धूमात्', 'यो यो धूमवान् स वह्निमान्, यथा पर्वतः' इति प्रयोगसंभवेन उदाहरणान्तर्गतस्य 'स वह्निमान्' इति भागस्यापि प्रकृतपक्षतावच्छेदकपर्वतत्वावच्छिन्ने प्रकृतसाध्यतावच्छेदक-वह्नित्वावच्छिन्नप्रकारकबोधजनकत्वसत्त्वेन पक्षतावच्छेदकावच्छिन्न-पक्षकत्वनिवेशेऽपि तत्रातिव्याप्तेः वारणाय उदाहरणाघटकत्वस्य अवश्यं निवेशनीयतया पक्षतावच्छेदकावच्छिन्नपक्षकत्वनिवेशवैयर्थ्यमित्यालोच्य अनङ्गीकारपक्षे प्रयोजनान्तरविरहात् इत्युक्तम्। उदाहरणैकदेशे अतिव्याप्तिवारणातिरिक्तस्य प्रयोजनस्याभावात् इत्यर्थः। तत्तु प्रयोजनं प्रकृतपक्षतावच्छेदकावच्छिन्नत्वनिवेशेनापि संपद्यत इति उदाहरणाघटकत्व-

सति तादृशवैशिष्ट्यविषयताविलक्षणविषयताशून्यत्वरूपमनुमितिमनन्तर्भाव्यैवाग्रे निर्वचनीयम्। तत्र प्रकृतपक्षादिनिवेशव्यावृत्तिरग्रे दर्शनीयेति किं व्यावर्त्यस्थलान्तारनुसरणेन।

यत्तु – पक्षविशेषमनन्तर्भाव्यानतिप्रसक्तस्य न्यायत्वस्य दुर्वचतया पक्षप्रवेशनमिति – तदसत्, तथा सति हेतुविशेषमनन्तर्भाव्यापि तस्य दुर्वचतया यादृशहेतुकेत्यस्यापि वक्तुमुचितत्वात्।

यदि च न्यायपदोपादानादेव तद्धेतुनियन्त्रितन्यायलाभ इति न तदभिहितमित्युच्यते तदा पक्षप्रवेशस्यावश्यकत्वेपि न्यायपदादेव पक्षविशेषनियन्त्रितन्यायलाभ इति यादृशपक्षक इत्यभिधानस्यानुपयुक्ततेति। ***हेतोर्वारणायेति।***

अनतिरिक्तविषयकत्वं पक्षतावच्छेदकविशिष्टे यत्साध्यतावच्छेदकविशिष्ट-वैशिष्ट्यविषयकत्वं तद्विलक्षणविषयिताशून्यत्वम्, न तु प्रकृतानुमित्यविषयाविषयकत्वम्, स्वयमेवाग्रे दूषणीयत्वात्। तादृशविषयताविलक्षणत्वं च, तादृशविषयताशालि-निश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकत्वरूपं निर्वक्ष्यते। एवं चोक्तहेत्ववयवजन्य-बोधस्यानुमित्यविषयवह्निनिष्ठधूमज्ञानज्ञाप्यत्वविषयकत्वेपि तादृशविषयताविलक्षणविषयता-शून्यत्वमक्षतमेवेत्यतिप्रसक्तेरिति भावः। ***निगमनवारणायेति।*** निगमनजन्यबोधस्यापि

---

निवेशनमनावश्यकमिति भावः। ***तदेकदेशवारणायेति।*** 'रमाधवः पूज्यः' इति प्रतिज्ञैकदेशे 'माधवः पूज्यः' इति भागे प्रतिज्ञालक्षणातिव्याप्तिवारणायेत्यर्थः।

***वस्तुत*** इत्यादि। अत्र सत्यन्तं अन्यूनविषयकत्वदलस्यार्थः। ***अनुमितित्वमनन्तर्भाव्यैवेति।*** तथा च एकसाध्यादिमत्त्वप्रापकं प्रकृतद्वयमिति कल्पनामात्रमेव। एवञ्च प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वे सति तादृशवैशिष्ट्यविषयताबहिर्भूतविषयताशून्यबोधजनकत्वं प्रतिज्ञात्वमिति फलितम्। ***अग्रे प्रदर्शनीयेति।*** 'धूमादालोकवान् पर्वतो वह्निमान् धूमात्' इत्यत्र हेतौ अतिव्याप्तिवारणाय अन्यूनविषयकत्वनिवेशः। 'हेतुत्वं प्रमेयाद्वाच्यत्ववत् प्रमेयात्' इत्यत्र हेतौ अतिव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नसाध्यनिवेशः इत्यादिकमग्रे प्रदर्शयिष्यत इत्यर्थः।

***अनतिरिक्तविषयकत्वमित्यादि।*** विशेष्यदले अन्यूनपदानुपादाने प्रकृतानुमित्यनतिरिक्तविषयकशाब्दज्ञानजनकत्वम् इत्येतावन्मात्रोक्तौ 'धूमादालोकवान् पर्वतो वह्निमान् धूमात्' इत्यत्र 'धूमात्' इति हेतुवाक्ये अतिव्याप्तिः। तज्जन्यबोधस्यापि प्रकृतानुमित्यनतिरिक्तविषयकत्वात्। अतः ***अन्यूनपदमिति*** दीधितिकारेण उक्तम्। अत्र अनुमित्यनतिरिक्तविषयकत्वं यदि

**धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादावनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणाया*न्यूनेति*। निगमनावारणायाऽ*नतिरिक्तेति*। यद्यपि निगमने साक्षात्पक्षवाचकपदं न श्रूयते, तथापि न्यूनताभङ्गायोपनयस्थाऽयमादिपदानुषङ्गात्तथा बोध्यम्।**

---

पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्टयावगाहित्वेनान्यून–विषयकतयाऽतिव्याप्तिप्रसक्तेरिति भावः। ***निगमने*** – तस्माद्वह्निमानित्यादिवाक्यसन्निधाने।

---

अनुमित्यविषयाविषयकत्वं तदा हेतुवाक्ये अतिव्याप्तेः न प्रसक्तिः। हेतुवाक्याद्धि वह्निनिष्ठं यत् धूमज्ञानज्ञाप्यत्वं तद्विषयकः बोधः जायते। प्रकृतानुमितौ तु आलोकनिष्ठं धूमज्ञानज्ञाप्यत्वं भासते। तथा च प्रकृतानुमित्यविषयवह्निनिष्ठज्ञाप्यत्वविषयकबोधजनकत्वमेव हेतुवाक्येऽस्ति, न तु प्रकृतानुमित्यविषयाविषयकबोधजनकत्वमिति कथमतिव्याप्तिप्रसक्तिः इत्याशङ्कानिराकरणाय ***अनतिरिक्तविषयकत्वञ्चेति*** ग्रन्थः प्रवृत्तः। तथा च प्रमेयसाध्यकस्थले प्रकृतानुमित्यविषयस्यैवाप्रसिद्ध्या तत्रत्यप्रतिज्ञायाम् अव्याप्तिः स्यात् इति प्रकृतानुमित्यविषयाविषयकत्वम् अनतिरिक्तविषयकत्वमिति न विवक्षणीयम्। किन्तु प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षता–वच्छेदकावच्छिन्नविषयताविलक्षणविषयताशून्यत्वमेव अनतिरिक्तविषयकत्वम्। तादृशविषयताविलक्षणत्वमपि यदि तादृशविषयताभिन्नत्वम्, तदा असंभवः। प्रतिज्ञाजन्यबोधीयसाध्यादिविषयतायाः पक्षविषयताभिन्नत्वात्। नापि तादृशविषयता–विलक्षणमुख्यविशेष्यताशून्यत्वम्। 'धूमादालोकवान् पर्वतो वह्निमान् धूमात्' इत्यत्र 'धूमात्' इति हेतुवाक्ये अतिव्याप्तेः अप्रसक्तेः। हेतुजन्यबोधे पक्षविषयताभिन्नमुख्यविशेष्यताशून्यत्वाभावात्। किन्तु तादृशविषयताशालि–निश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकत्वम्। तथा च प्रकृतसाध्यता–वच्छेदकावच्छिन्नप्रकारतानिरूपित–प्रकृतपक्षतावच्छेदकावच्छिन्नविषयताशालि–निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्य–संशयप्रतिबन्धकतावच्छेदक–विषयताशून्यबोधजनकत्वं प्रकृतानुमित्यनतिरिक्तविषयकबोधजनकत्वम् इति पर्यवसितम्। तथा च 'धूमादालोकवान् पर्वतः वह्निमान्' इति निश्चयेन प्रतिबध्यः

**साक्षादिति।** अवयवान्तरबहिर्भावेनेत्यर्थः। ***न श्रूयत*** इति। तथा च कथं तज्जन्यबोधस्या-न्यूनविषयकत्वमिति भावः। ***न्यूनताभङ्गाय*** - आकांक्षापूरणाय। पक्षतावच्छेदकविशिष्टपक्षे तादृशसाध्यवत्ताबोधने कस्तादृशवह्निमानिति जिज्ञासा निवर्तते। वह्निमानित्यभिधानेन तादृशाकांक्षोत्सर्गतो जायत इत्यनुभवसिद्धमेवेति भावः। ***अनुषङ्गादिति।*** निगमन-समभिव्याहृतत्वेनानुसन्धानोपगमादित्यर्थः।

तथा च तदन्तर्भाव्यैव निगमनावयवत्वं पर्यवस्यतीत्यन्यूनविषयक-बोधजनकन्यायावयवत्वमादाय, तादृशसमुदायातिव्याप्तिप्रसक्तिरिति भावः। 'निगमनं च न

---

यः 'ज्ञानज्ञाप्यत्वं धूमनिरूपितं न वा' इति संशयः तमेव निवर्तयति हेतुवाक्यजन्यबोधोऽपि। अतः तादृशनिश्चयत्वावच्छिन्ननिवर्त्यः यः संशयः -उदासीनसंशयः तन्निवर्तकतावच्छेदकविषयताशून्यत्वस्य हेतुवाक्यजन्यबोधे सत्त्वात् तज्जनके हेतुवाक्ये अतिव्याप्तिवारणाय बोधेऽन्यूनविषयकत्वनिवेशः। तन्निवेशे तु उक्तस्थलीयहेतुवाक्यजन्यबोधे प्रकृतपक्षे प्रकृतसाध्य-वैशिष्ट्यविषयकत्वरूपम् अन्यूनविषयकत्वं नास्ति इति नातिव्याप्तिरिति भावः। अन्यूनविषयकत्वमात्रनिवेशे निगमनवाक्ये अतिव्याप्तिः। अनुषङ्गपक्षे निगमनजन्यबोधस्यापि पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यविषयकत्व-रूपान्यूनविषयकत्वसद्भावात्। तद्वारणाय अनतिरिक्तविषयकत्वनिवेशः। तन्निवेशे तु निगमनजन्यबोधस्य पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्ननिवर्त्यो यः संशयः 'वह्निः धूमज्ञानज्ञाप्यो न वा', 'अबाधितो न वा' इत्यादिः तन्निवर्तकतावच्छेदकविषयताशालित्वात् तच्छून्यबोधजनकत्वरूपं लक्षणं नास्तीति न निगमनेऽतिव्याप्तिः। तथा च प्रकृतपक्षसाध्यकन्यायावयवत्वे सति प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाही प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृत-पक्षतावच्छेदकवच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्न प्रतिबन्धकतानिरूपितप्रति-बध्यताशून्यसंशयप्रतिबन्धकतावच्छेदकविषयताशून्यश्च यः बोधः तज्जनकवाक्यत्वं प्रतिज्ञालक्षणम्।

तस्माद्वह्निमानिति निगमनवाक्यसमीपे पक्षवाचकपदस्याश्रवणात् निगमनवाक्यजन्यबोधस्य 'धूमज्ञानज्ञाप्यवह्निमान्' इत्याकारकत्वमेव; न तु 'तादृशवह्निमान् पर्वतः' इत्याकारकत्वम्। तथा च निगमनजन्यबोधे प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपस्य अन्यूनविषयकत्वस्याभावात् निगमने

**इत्थमेव च प्रसक्तामतिप्रसक्तिं 'निगमनं चेत्यादिना निराकरिष्यति ।**

---

परामर्शहेतुरिति यथाश्रुताग्रिममूलग्रन्थस्य सत्यन्तदलविरहेण निगमने नातिव्याप्तिरित्यर्थपरत्वं प्रतीयते, तच्च न घटते सत्यन्तस्य न्यायावयवत्वरूपत्वात्तस्य च निगमनसाधारणत्वात् यथाश्रुतस्यापि सत्यन्तार्थस्य प्रतिज्ञायामिव तत्राप्यक्षतत्वात्। अनतिरिक्तषियकत्वविशेषणेनैव तद्वारणाच्चेत्यनतिरिक्तविषयकत्वविशेषणस्य निगमनातिव्याप्तिवारकतापरत्वेन तादृशग्रन्थमत्रैव

---

अतिव्याप्त्यप्रसक्त्या तद्वारणफलकं अनतिरिक्तपदमिति कथं सङ्गच्छत इत्याशङ्क्य उपनयस्थस्य 'अयं' पदस्य निगमने अनुषङ्गात् अतिव्याप्तिप्रसक्तिरिति समाहितं दीधितौ ***यद्यपि निगमने*** इत्यादिना। तत्र निगमने न श्रूयते इत्यनन्वयात् निगमनवाक्यसन्निधाने इति विवरणं कृतम्। ***अवयवान्तरबहिर्भावेनेति।*** स्वभिन्नावयवाघटकत्वेनेत्यर्थः। ***तथा चेति।*** 'अयं' पदस्य निगमनाघटकत्वे सतीत्यर्थः। ***आकाङ्क्षापूरणायेति।*** 'को वह्निमान्' इति आकाङ्क्षानिवृत्त्यर्थमित्यर्थः।

मणिकारस्यापि निगमने उपनयस्थ 'अयं' पदानुषङ्गपक्षोऽभिप्रेतः इत्याशयेन प्रवृत्तं **इत्थमेव चेत्यादि** दीधितिग्रन्थमवतारयति ***निगमनं चेत्यादिना।*** 'निगमनं च न परामर्शहेतुः' इति अग्रेतनमणिग्रन्थस्य अनुमितिहेतुलिङ्ग-परामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वरूपसत्यन्तदलविरहात् निगमने नातिव्याप्तिरिति यथाश्रुतार्थः प्रतीयते। स च न घटते। सत्यन्तस्य प्रकृतन्यायावयवत्वार्थकत्वस्य पूर्वमुक्तत्वात् निगमने प्रकृतन्यायावयवत्वसद्भावात् सत्यन्तनिवेशेऽपि तत्र अतिव्याप्तेः। किञ्च यथाश्रुतसत्यन्तार्थोऽपि निगमनवाक्येऽस्त्येव। पञ्चानामपि वाक्यानां परामर्शप्रयोजकशाब्दज्ञानजनकतायाः मणिकारैरेव पूर्वम् उपपादितत्वात्। किञ्च अनतिरिक्तविषयकत्वविशेषणेनैव निगमने अतिव्याप्तिवारणं संभवति इति न सत्यन्तस्य तत्फलकत्वम्। तस्मात् स मणिग्रन्थः न सत्यन्तव्यावृत्तिप्रदर्शकः। किन्तु अनतिरिक्तविषयकत्वविशेषणस्य निगमनातिव्याप्तिवारणरूपप्रयोजनप्रदर्शनपरः इति ***इत्थं चेत्यादिना*** उपपादयति। अन्यूनविषयकत्वमादाय प्रसक्तां निगमने अतिव्याप्तिं अनतिरिक्तविषयकत्वनिवेशेन वारयितुं हि उपरितनः मणिग्रन्थः प्रवृत्तः। निगमने 'अयं' पदाननुषङ्गपक्षे तु अतिव्याप्तेरप्रसक्त्या स ग्रन्थो न सङ्गच्छते। तथा च अनुषङ्गपक्षोपष्टम्भकतया उपात्तस्य मणिग्रन्थस्य अर्थात् व्याख्यानमपि अत्र दीधितिकारेण कृतमिति भावः।

**गादाधर्याम्** ***अनतिरिक्तविषयकत्वनिवेशनेनैवेति।*** एतद्विशेषणमेव निगमने

**तदर्थश्च निगमनमन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं सत्र परामर्शहेतुः। येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि व्याप्नुयात्। अबाधितत्वादेः तद्बोधौपयिकविशिष्टहेतुसम्बन्धस्य वा बोधकतया तस्यातिरिक्तविषयक-ज्ञानजनकत्वादिति।**

**यत्तु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यत्र पृथिवीतरेभ्यो भिद्यते तत्र पृथिवीत्युदाहरणवारणाय** ***तदिति*** ;

---

व्याख्यातुं भूमिकामारचयति– ***इत्थमेव चेति। अन्यूनानतिरिक्तेति।*** तथा च न्यायावयवत्व-पर्यवसितनिरुक्तपरामर्शप्रयोजक शाब्दज्ञानजनकत्वसत्त्वेप्यन्यूनानतिरिक्तविषयकज्ञानजनकत्वं नास्तीति पर्यवसितार्थः। अबाधितत्वादिपरतया उदीच्यतद्बोधेनापि निर्वाहान्निगमनजन्यशाब्दबोधे तद्भानार्थं लक्षणादरो न युक्त इति मूलोक्तं तद्विषयकतयातिरिक्तविषयकत्वं न विचारसहम्, एवं पञ्चम्यन्तभागार्थस्यातिरिक्तस्य विषयतया तथात्वप्रतिपादनेन न्यूनत्वं चेत्यतः पूरयति– ***तद्बोधौपयिकेति।*** अबाधितत्वादिबोधौपयिकेत्यर्थः। ***विशिष्टहेतुसम्बन्धस्य*** – व्याप्तिपक्षधर्मता-विशिष्टहेतुज्ञानज्ञाप्यत्वस्य। तस्य चाबाधितत्वादिव्याप्यतया तद्बोधौपयिकत्वं बोध्यम्।

मिश्रमतमुपन्यस्यति – ***यत्त्विति।*** पृथिवीतरेभ्यो भिद्यत इत्यसमस्तं, इतरपदं पृथिवीतरपरम्। इतरादिससम्बन्धिकार्थबोधकपदानां समभिव्याहृततत्तत्पदोपस्थाप्य-

---

अतिव्याप्तिवारणक्षमम्, न तु सत्यन्तमिति 'एव' कारस्य तात्पर्यम्। अपि च 'एव' कारेण अन्यूनविषयकत्वदलेन वारणं नास्तीत्यपि सूचितम्। तेन 'अयं' पदानुषङ्गपक्षोपष्टम्भकत्वं, मणिग्रन्थस्य लभ्यते। **दीधितौ तदर्थश्च इत्यादि।** 'निगमनं च न परामर्शहेतुः' इति मणिग्रन्थस्यार्थः इत्यर्थः। यद्यपि निगमनस्य परामर्शप्रयोजकज्ञानजनकत्वं वा तत्पर्यवसितं न्यायावयवत्वं वा अस्ति, तथापि अन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं नास्ति। अनतिरिक्तविषयक-शाब्दज्ञानजनकत्वं नास्ति इति फलितोऽर्थः। कुतो नास्ति इति शङ्कायाम् अबाधितत्वअसत्प्रतिपक्षितत्वादेः अबाधितत्वादिबोधौपयिकस्य व्याप्तिपक्षधर्मता-विशिष्टहेतुज्ञानज्ञाप्यत्वस्य अधिकस्य निगमनजन्येबोधे भानात् निगमनस्य अतिरिक्तविषयकज्ञानजनकत्वादिति उपपादितम्। ***निरुक्तन्यायावयवत्वरूपमिति।*** प्रकृतपक्षसाध्यकानुमित्यन्यूनातिरिक्तविषयकशाब्दज्ञानजनकत्वविशिष्टन्यायावयवत्वरूपम् इत्यर्थः। ***तदपि***–निगमनमपि। **गादाधर्यां *लक्षणादर*** इति। लक्षणाख्यवृत्तेः आदर

तत्तदर्थेतरत्वादिना निरूढलक्षणा, अतो वादिवाक्ये स्वारसिकलक्षणाविरहेपि न क्षतिः। प्रतिज्ञादौ सर्वत्रैकेनैव पदेन साध्यादिनिर्देश इति न नियमः। तेनाग्रे यन्न पृथिवीतरेभ्यो भिद्यत इत्युदाहरणप्रयोगाविरोधः। विशेष्यवाचकं पृथिवीति पदान्तरं पूरणीयं श्रुतपदं समस्तमित्येव वा। **उदाहरणवारणायेति।** तज्जन्यबोधेपि पक्षसाध्याश्रयत्वात्मक-तत्सम्बन्धरूपानुमितिविषयसकलपदार्थभानेनान्यूनविषयकत्वसत्त्वादित्यभिमानः। **तत्** –

---

इत्यर्थः। **तद्विषयकतयेति।** अबाधितत्वादिविषयकतयेत्यर्थः। **पञ्चम्यन्तभागार्थस्येति।** धूमज्ञानज्ञाप्यत्वस्येत्यर्थः। **तथात्वाप्रतिपादनेनेति।** पञ्चम्यन्तभागार्थरूपाधिक-विषयकत्वाप्रतिपादनेनेत्यर्थः। **तस्य चेति।** विशिष्टहेतुसंबन्धस्येत्यर्थः। यस्मिन् साध्ये व्याप्तिपक्षधर्मताविशिष्टहेतुसंबन्धः तस्मिन् साध्ये अबाधितत्वादिकम् इति व्याप्त्या विशिष्टहेतुसंबन्धेऽवगते सति तद्व्यापकस्य अबाधितत्वादेः अवगमः अवर्जनीयः इत्याशयेन विशिष्टहेतुसंबन्धस्य अबाधितत्वादि-बोधौपयिकत्वमुक्तमिति भावः।

मिश्रोक्तम् अनतिरिक्तपदप्रयोजनं **'यत्तु'** इत्यादिना **दीधितौ** अनूदितम्। तस्य अयमाशयः –'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्' इत्यादिन्यायान्तर्गते 'यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवी' इति उदाहरणे अनतिरिक्तपदानुपादानेऽतिव्याप्तिः। तथा हि– अनतिरिक्तपदं विहाय प्रकृतन्यायावयवत्वे सति प्रकृतपक्षसाध्यकानुमित्यन्यूनविषयकशाब्द-ज्ञानजनकवाक्यत्वं प्रतिज्ञालक्षणमित्युक्तौ 'पृथिवी इतरेभ्यो भिद्यते' इत्यनुमितौ यावन्तः पदार्थाः विषयाः तेषां सर्वेषामपि उदाहरणजन्यशाब्दबोधेऽपि विषयत्वात् प्रकृतानुमित्यन्यूनविषयकशाब्दज्ञानजनकत्वस्य निरुक्तोदाहरणवाक्ये सत्त्वात् अतिव्याप्तिः। अनतिरिक्तपदोपादाने तु प्रकृतानुमितौ अविषयाणां नञर्थादीनाम् अधिकपदार्थानां उदाहरणजन्यशाब्दबोधे विषयत्वात् प्रकृतानुमित्यनतिरिक्तविषयकशाब्दज्ञानजनकत्वं नास्तीति नातिव्याप्तिः इति यथाश्रुतदीधितेरर्थः। 'पृथिवी इतरेभ्यः' इति असमस्तं पदद्वयम्, न तु 'पृथिवीतरेभ्यः' इति समस्तं पदम्। तथा सति पक्षवाचकपदस्य अध्याहारापत्तेः। असमस्तपदत्वे पृथिवीपदं पक्षवाचकम्। 'इतरेभ्यो भिद्यते' इति साध्यनिर्देशः। इतरपदं पृथिवीतरपरम्। तथा च पृथिवीत्वावच्छिन्ने पृथिवीतरभेदः साध्यः।

**तत्तुच्छम्। तेन पृथिव्यामितरभेदस्याविषयीकरणात्।**

---

अनतिरिक्तेति पदम्। अन्यूनविषयकत्वं हि न प्रकृतानुमितिविषयताव्यापकविषयताकत्वं सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽतिव्याप्तेः।

नापि पक्षतावच्छेदकविशिष्टपक्षविषयकत्वं, हेतुत्वम् प्रमेयाद्वाच्यत्ववत्प्रमेयादित्यादौ हेत्ववयवेऽतिव्याप्तेः। नापि पक्षतावच्छेदकविशिष्टपक्षविषयकत्वे सति साध्यतावच्छेदक-

---

तदाह गादाधर्याम् ***'पृथिवीतरेभ्यो भिद्यत इति असमस्तं'*** इति। ननु इतरपदस्य पृथिवीतरपरत्वे लक्षणाया अङ्गीकरणीयतया वादिवाक्ये न लक्षणेति समयविरोधः इत्यत आह–**इतरादीति।** इतरादयः शब्दाः ससंबन्धिकपदार्थबोधकाः ससंबन्धिकत्वं च नियमेन संबन्धिसाकाङ्क्षत्वम्। तथा च इतरादिपदानां समभिव्याहृततत्तत्पदोपस्थापितपदार्थेतरत्वेन रूपेण निरूढलक्षणा अङ्गीक्रियते। वादिवाक्ये अन्वयानुपपत्तिमूलकस्वारसिकलक्षणैव नाङ्गीक्रियते। निरूढलक्षणा तु न दोषाय इति भावः।

ननु प्रतिज्ञावाक्ये येन शब्देन साध्यं निर्दिश्यते, तेनैव शब्देन उदाहरणादिवाक्येष्वपि साध्यनिर्देशः उचितः। प्रकृते 'पृथिवी इतरेभ्यो भिद्यते' इति प्रतिज्ञावाक्ये पृथिवीपदस्य पक्षवाचकत्वात् 'इतरेभ्यो भिद्यते' इति शब्देन साध्यनिर्देश इति वक्तव्यम्। 'यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवी' इति उदाहरणवाक्ये तु पृथिवीतरशब्दस्य समासरूपतया 'पृथिवीतरेभ्यो भिद्यते' इति शब्देन साध्यनिर्देशः। तथा च एकेनैव पदेन साध्यनिर्देश इति नियमभङ्गः इत्याशङ्क्य तादृशनियमानङ्गीकारेण समाधत्ते–***प्रतिज्ञादौ सर्वत्रेति।*** प्रतिज्ञादिषु पञ्चसु अवयवेषु इत्यर्थः। एकेनैव पदेन साध्यनिर्देश इति नियमे सत्यपि समाधानमाह– ***विशेष्यवाचकमिति।*** 'पृथिवीतरेभ्यो भिद्यते' इति दीधितौ पृथिवीति पदान्तरम् अध्याहर्तव्यम्। अध्याहृतं पृथिवीपदं पक्षवाचकम्। पृथिवीतरपदं समासरूपमेव। अतः पृथिवीतरेभ्यो भिद्यते इति शब्देनैव प्रतिज्ञायामपि साध्यनिर्देशः। उदाहरणेऽपि तथेति न नियमविरोध इति भावः।

***तज्जन्यबोधेऽपीति।*** उदाहरणजन्यबोधेऽपीत्यर्थः। अनुमितिविषयसकल-पदार्थविषयकत्वम् अनुमित्यन्यूनविषयकत्वम्। अनुमितौ पृथिवीरूपः पक्षः, पृथिवीतरभेदरूपः साध्यः, आश्रयत्वरूपः पक्षसाध्ययोः सम्बन्धः इति एते

विशिष्टसाध्यविषयकत्वं तद्वैशिष्ट्यविषयकत्वं वा, प्रमेयनिष्ठहेतुत्वम्, प्रमेयं प्रमेयादित्यत्र हेतावतिव्याप्तेः। तज्जन्यबोधे प्रमेयत्वत्वरूपसाध्यतावच्छेकविशिष्टस्य प्रमेयपदार्थता-वच्छेदकस्य धर्मिणि वैशिष्ट्यभानादिति पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदक-विशिष्टवैशिष्ट्यावगाहित्वं तद्वाच्यम्। तथा च नोक्तोदाहरणेऽतिव्याप्तिरित्याशयेन दूषयति *तत्तुच्छमिति।*

---

पदार्थाः भासन्ते। ते त्रयोऽपि उदाहरणजन्यशाब्दबोधेऽपि भासन्त इति तस्य अनुमित्यन्यूनविषयकत्वमिति भावः। **तत्तुच्छमिति** ग्रन्थमवतारयति – ***अन्यूनविषयकत्वं हि*** इति। अनतिरिक्तपदानुपादानेऽपि नोक्तस्थले उदाहरणवाक्येऽतिव्याप्तिः। तज्जन्यशाब्दबोधस्य अनुमित्यन्यूनविषयकत्वविरहात् अतिव्याप्तेरप्रसक्तेः। तथा हि– किन्नाम अन्यूनविषयकत्वम्? न तावत् प्रकृतानुमितिविषयता-व्यापकविषयताकत्वपर्यवसितं प्रकृतानुमितिविषयसकलपदार्थविषयकत्वम्। 'सर्वस्मात् कालत्ववान् महाकालः कालपरिमाणवान् सर्वस्मात्' इत्यत्र हेतुवाक्येऽतिव्याप्तेः। प्रकृतानुमितौ ये ये पदार्था विषयाः काल–कालत्व–कालपरिमाणादयः ते सर्वेऽपि हेतुवाक्यजन्यशाब्दबोधेऽपि सर्वत्वेन रूपेण विषयाः। तथा च प्रकृतानुमितिविषयताव्यापकविषयताकशाब्दबोधजनकत्वस्य सर्वस्मात् इति हेतुवाक्ये सत्त्वात् अतिव्याप्तिः। न च पक्षतावच्छेदकविशिष्टविषयकत्वम् अन्यूनविषयकत्वम्। तथा च प्रकृतपक्षतावच्छेदकविशिष्टविषयकशाब्द-बोधजनकत्वं प्रतिज्ञालक्षणम्। हेतुवाक्यजन्यशाब्दबोधस्य सर्वत्वविशिष्ट-विषयकत्वेऽपि सर्वहेतुककालत्ववन्महाकालत्वरूपपक्षतावच्छेदकविशिष्ट-विषयकत्वाभावात् न पूर्वोक्तहेतुवाक्येऽतिव्याप्तिरिति वाच्यम्। एवमपि 'हेतुत्वं प्रमेयाद्वाच्यत्ववत् प्रमेयात्' इत्यादौ हेतुवाक्येऽतिव्याप्तिः। तथा हि–अत्र हेतुत्वं पक्षः। प्रमेयज्ञानज्ञाप्यवाच्यत्वं साध्यम्। हेतुत्वत्वं पक्षतावच्छेदकम्। प्रमेयादिति हेतुवाक्यात् प्रमेयनिष्ठं हेतुत्वं इति शाब्दबोधो जायते। स च शाब्दबोधः हेतुत्वत्वावच्छिन्ने प्रमेयनिष्ठत्वमवगाहमानः हेतुत्वत्वरूपपक्षतावच्छेदक-विशिष्टविषयको भवतीति तज्जनके हेतौ अतिव्याप्तिः। न च पक्षतावच्छेदकविशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टविषयकत्वं साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकत्वं वा अन्यूनविषयकत्वं शाब्दबोधे

**तात्पर्यप्रमेण तादृशबोधजनकत्वस्यातिप्रसक्तत्वात्। न च तावताप्युदाहरणस्य तथात्वसम्भवः, यत्रेत्यादेरनन्वयात्।**

---

ननु भ्रान्तः पृथिवीपदस्य विशेष्यपरत्वं इतरपदस्य पृथिवीतरपरत्वमवगत्य तादृशोदाहरणात्पृथिवीत्वविशिष्टे साध्यवत्त्वं प्रत्येतीति तत्रातिव्याप्तिरित्यत आह- **तात्पर्यभ्रमेणेति। तादृशेति** अन्यूनविषयकेत्यर्थः। ***अतिप्रसक्तत्वात्*** – तथा चायमित्याकारक-

---

निवेशनीयम्। प्रमेयादिति हेतुवाक्यजन्यशाब्दबोधे हेतुत्वत्वरूपपक्षता-वच्छेदकविशिष्टविषयकत्वसद्भावेऽपि प्रमेयहेतुकवाच्यत्वत्वरूपसाध्यता-वच्छेदकविशिष्टविषयकत्वं नास्तीति नोक्तस्थले अतिव्याप्तिरिति वाच्यम्। तथाविवक्षणेऽपि 'प्रमेयनिष्ठहेतुत्वं प्रमेयम्, प्रमेयात्' इत्यत्र हेतावतिव्याप्तेः। तत्र प्रमेयनिष्ठहेतुत्वं पक्षः। प्रमेयनिष्ठत्वविशिष्टहेतुत्वत्वं पक्षतावच्छेदकम्। प्रमेयत्वं साध्यम्। प्रमेयत्वत्वं साध्यतावच्छेदकम्। प्रमेयादिति हेतुवाक्यजन्यबोधः 'प्रमेयनिष्ठ हेतुत्वम्' इत्याकारकः। तत्र प्रकृत्यर्थे धर्मिणि प्रमेयत्वत्वविशिष्टप्रमेयत्वं प्रकारः। तथा च तस्य बोधस्य प्रमेयनिष्ठत्वविशिष्टहेतुत्वत्वरूपपक्षतावच्छेदका-वच्छिन्नविषयकत्वमप्यस्ति। प्रमेयत्वत्वरूपसाध्यतावच्छेदकविशिष्टप्रमेयत्व-विषयकत्वमप्यस्ति। अतः तादृशशाब्दबोधजनके हेतुवाक्येऽतिव्याप्तिः। तस्मात् पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टप्रकारकत्वमेव अन्यूनविषयकत्वम्। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यता-वच्छेदकावच्छिन्नप्रकारताशालिशाब्दबोधजनकत्वं प्रतिज्ञालक्षणम्। उक्तस्थलीय-हेतुवाक्यजन्यबोधस्य हेतुत्वत्वावच्छिन्नविशेष्यकप्रमेयनिष्ठत्वप्रकारकत्वेऽपि प्रमेयनिष्ठहेतुत्वत्वरूपपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रमेयत्वत्वरूपसाध्यता-वच्छेदकावच्छिन्नप्रकारकत्वं नास्तीति नातिव्याप्तिः। इत्थञ्च 'पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात्' इत्यादौ यत् उदाहरणवाक्यं 'यन्न पृथिवीतरेभ्यो भिद्यते, तन्न पृथिवी' इति तत्र उदाहरणवाक्यजन्यशाब्दबोधस्य पृथिवीत्वावच्छिन्नविशेष्यकपृथिवीतरभेदत्वावच्छिन्नप्रकारकत्वं नास्ति। पृथिवीतरभेदस्य नञर्थे एव प्रकारत्वात्। अतः उक्तान्यूनविषयकशाब्द-ज्ञानजनकत्वस्य अभावादेव उदाहरणातिव्याप्तिवारणसम्भवात् तत्र अतिव्याप्तिवारणफलकत्वं अनतिरिक्तपदस्य नोचितमित्याशयेन ***तत्तुच्छमित्यादिना***

साध्यवत्त्वतात्पर्यभ्रमविषयसर्वनामपदघटितोपनयेऽतिव्याप्तत्वात्। तात्पर्यभ्रमदशायामपि नातिव्याप्तिप्रसक्तिरित्याह **न च तावतापीति। उदाहरणस्य** उदाहरणत्वपर्याप्त्यधिकरणस्य। **यन्नेत्यादेः**– यन्नेत्यादिभागार्थस्य। **अनन्वयात्** – पृथिवीतरेभ्यो भिद्यत इत्येतादृशबोधेऽप्रवेशात्।

---

दीधितौ मिश्रमतं दूषितमिति भावः।

दीधितौ **तेन पृथिव्यामिति। तेन** – उदाहरणवाक्येन। **पृथिव्याम्** – पृथिवीत्वरूपपक्षतावच्छेदकावच्छिन्ने इतरभेदस्य अविषयीकरणादित्यर्थः। शब्दस्यापि सविषयकत्वमिति मत्वा एवमुक्तम्। अन्यथा तु तेनेत्यस्य उदाहरणजन्यबोधेनेति अर्थो वर्णनीयः।

**तात्पर्यभ्रमेणेति** दीधितिमवतारयति गादाधर्या–**ननु भ्रान्त** इति। 'यन्न पृथिवीतरेभ्यो भिद्यते' इति उदाहरणवाक्ये पृथिवीपदम् विशेष्यपरम्। इतरपदं पृथिवीतरपरमिति भ्रान्तः पुरुषः तादृशोदाहरणवाक्यात् पृथिवीत्वावच्छिन्ने पृथिवीतरभेदवत्त्वं जानाति। तथा च उक्ततात्पर्यभ्रमवतः पुरुषस्य यः उदाहरणजन्यः शाब्दबोधः तस्य पृथिवीत्वावच्छिन्नविशेष्यतानिरुपित – पृथिवीतरभेदत्वावच्छिन्नप्रकारताशालित्वात् तज्जनकत्वमादाय उदाहरणवाक्ये अतिव्याप्तेः प्रसक्तिः इत्याशङ्क्य **तात्पर्यभ्रमेणेत्या**दिना समाहितम्। तात्पर्यभ्रममादाय उक्तविधान्यूनविषयकशाब्दबोधजनकत्वात् उदाहरणेऽतिव्याप्तिरुच्यते चेत् 'तथा चायम्' इति उपनयवाक्ये अनतिरिक्तविषयकत्वनिवेशेऽपि अतिव्याप्तिः स्यात्। उपनयवाक्यस्थं 'तथा' पदं साध्यवत्त्वपरम् इति भ्रमवतः पुरुषस्य 'साध्यवान् पक्षः' इत्याकारकशाब्दबोध एव उपनयवाक्याज्जायते। स च शाब्दबोधः प्रकृतानुमित्यन्यूनानतिरिक्तविषयक इति तज्जनकत्वात् उपनये अतिव्याप्तिः स्यात्। अतः तात्पर्यभ्रमाधीनशाब्दबोधमादाय दोषप्रसञ्जनं न कार्यमिति भावः।

**तात्पर्यभ्रमदशायामपीति।** तात्पर्यभ्रमकालीनबोधमादायापि उदाहरणेऽति–व्याप्तिः न सम्भवति। 'यन्न' इत्यादेः अनन्वयात्। 'यन्न पृथिवीतरेभ्यो भिद्यते, तन्न पृथिवी' इति उदाहरणशरीरम्। तत्र 'पृथिवीपदं विशेष्यपरम्', 'इतरपदं पृथिवीतरपरम्' इति भ्रमकाले 'पृथिवी पृथिवीतरभेदवती' इत्याकारकः शाब्दबोधो वक्तव्यः। तस्मिन् शाब्दबोधे 'यन्न', 'तन्न', इत्यादिभागार्थस्य

तथाचान्यूनविषयकतादृशबोधजनकत्वमेकदेशस्यैव। न तु यन्नेत्यादिघटितसमुदायस्य, एकदेशस्य तु न्यायावयवत्वाभावादेव नातिप्रसङ्गशङ्का, न्यायान्तर्गतत्वस्यैकदेशसाधारणस्य

---

अप्रवेशात् अन्यूनविषयकशाब्दबोधजनकत्वं 'पृथिवीतरेभ्यो भिद्यते' इत्याकारकस्य उदाहरणैकदेशस्यैव। एकदेशस्य तु न्यायावयवत्वाभावादेव तत्र अतिव्याप्तेः न प्रसक्तिः। यदि तु एकदेशसाधारणं न्यायान्तर्गतत्वं लक्षणे निवेश्यते, न तु तद्व्यावृत्तं न्यायावयवत्वम् इत्युच्यते, तदा अनतिरिक्तपदनिवेशेऽपि तात्पर्यभ्रमाधीनस्य उक्तबोधस्य अनुमित्यनतिरिक्तविषयकत्वमस्ति इति उदाहरणैकदेशे अतिव्याप्तिर्दुर्वारा। 'यन्ने' त्यादिभागघटितसमुदायरूपस्य उदाहरणस्य अन्यूनविषयकबोधजनकत्वाभावात् तत्र न्यायावयवत्वसत्त्वेऽपि नातिव्याप्तेः प्रसक्तिः। तथा च मिश्रोक्तं अनतिरिक्तपदप्रयोजनं न युक्तमिति भावः।

दीधितौ ***तावतापीति।*** तात्पर्यभ्रमेणापीत्यर्थः। ***तथात्वसंभवः*** - पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टप्रकारकबोधजनकत्वसंभवः। ननु यत्पदार्थस्य नञर्थे भेदेऽन्वयः। नञर्थस्य भेदस्य पृथिव्यामन्वयः। तथा च 'यद्भिन्ना पृथिवी इतरेभ्यो भिद्यते' इत्याकारकः शाब्दबोधः यन्नेति भागर्थविषयकः उदाहरणवाक्यात् जायते। तादृशशाब्दबोधस्य पृथिवीत्वावच्छिन्नविशेष्यतानिरूपितपृथिवीतरभेदत्वावच्छिन्नप्रकारताशालित्वमक्षतमिति तज्जनकत्वमादाय उदाहरणात्मके समुदाये अतिव्याप्तिः संभवतीति शङ्कामनूद्य समाधत्ते – ***तात्पर्यभ्रमेणेत्यादिना।*** नञर्थम् उद्देश्यतावच्छेदकीकृत्य शाब्दबोधः अव्युत्पन्नः इत्यङ्गीकरणीयम्। अन्यथा 'जलं न द्रव्यम् गन्धवत्' इत्यादौ नञर्थे भेदे प्रतियोगितासंबन्धेन जलस्य, नञर्थस्य भेदस्य आश्रयतासंबन्धेन द्रव्ये अन्वयं स्वीकृत्य 'जलभिन्नं द्रव्यं गन्धवत्' इत्याकारकशाब्दबोधस्य आपादनसंभवात्। जलभेदविशिष्टद्रव्यमुद्दिश्य द्रव्यवत्त्वविधानेन जलभेदस्य नञर्थस्य उद्देश्यतावच्छेदकत्वे बाधकाभावात्। तथा च नञ्समभिव्याहारस्थले नञर्थोद्देश्यतावच्छेदककशाब्दबोधे आकाङ्क्षा नास्तीति स्वीकृत्यैव 'जलभिन्नं द्रव्यं गन्धवत्' इति शाब्दबोधो वारणीयः। एवमेव 'यद्भिन्ना पृथिवी इतरेभ्यो भिद्यते' इति शाब्दबोधोऽपि आकाङ्क्षाविरहात् न सम्भवति इति समाधानम्।

ननु 'यन्न पृथिवी इतरेभ्यो भिद्यते' इत्यत्र पञ्चम्यन्तार्थस्य

निवेशे चानतिरिक्तविषयकत्वनिवेशेपि तादृशोदाहरणैकदेश एवातिव्याप्तिरिति भावः। तात्पर्यभ्रमेण यन्नेत्यादिकमन्तर्भाव्य यद्भिन्ना पृथिवी इतरेभ्यो भिद्यत इत्यन्वयबोधस्सम्भवतीति नाशङ्कनीयम्। जलं न द्रव्यं गन्धवदित्यादौ जलभिन्नद्रव्यं गन्धवदित्यन्वयबोधस्यानुभव-विरुद्धतया नञर्थोद्देश्यतावच्छेदककबोधस्याऽव्युत्पन्नत्वात्। यदितरभिन्नपृथिव्यन्यदित्याकारको यदर्थविशेष्यकबोधोपि न सम्भवति। 'अयं न पचति पुरुष' इत्यत्र इदंपदार्थे पाककर्तृपुरुषभेदबोधस्यानुभवविरुद्धतया अभावप्रतियोगितावच्छेदकत्वेनाख्यातार्थभानस्य, 'पचति चैत्र इवायमि'त्यादितः पाककर्तृचैत्रादिसादृश्यबोधस्याननुभवेनेतरविशेषणविशेषणतया तद्भानस्यैव वाऽव्युत्पन्नत्वात्।

---

इतरप्रतियोगिकत्वस्य धात्वर्थे भेदेऽन्वयः। भेदस्य आख्यातार्थे आश्रयत्वेऽन्वयः। आश्रयत्वस्य पृथिवीपदार्थेऽन्वयः। पृथिवीपदार्थस्य नञर्थे भेदेऽन्वयः। तस्य आश्रयतासंबन्धेन यत्पदार्थेऽन्वयः। तथा च 'यत् इतरभिन्नपृथिव्यन्यत्' इत्याकारकः यत्पदार्थविशेष्यकः शाब्दबोधो जायते। तस्य च अन्यूनविषयकत्वात् तज्जनकत्वमादाय उदाहरणेऽतिव्याप्तिः इत्याशङ्क्य समाधत्ते–***यदितरभिन्नेत्यादिना।*** 'अयं न पचति पुरुषः' इति वाक्यात् 'पाकानुकूलकृत्याश्रयपुरुषभिन्नः अयम्' इत्याकारकशाब्दबोधस्य अनुभवविरुद्धतया तादृशशाब्दबोधवारणाय अभावप्रतियोगितावच्छेदकत्वेन आख्यातार्थभानं न संभवतीति व्युत्पत्तिः स्वीकरणीया। एवं 'पचति चैत्र इवायम्' इति वाक्यात् 'पाकानुकूलकृतिमच्चैत्रसदृशः अयम्' इत्याकारकशाब्दबोधस्य अनुभवविरुद्धतया इतरविशेषणविशेषणतया 'आख्यातार्थभानं अव्युत्पन्नमिति वक्तव्यम्। इवार्थे सादृश्ये विशेषणतापन्ने चैत्रे आख्यातार्थकृतेः विशेषणतया भानासंभवात् 'पचति चैत्र इवायम्' इत्यत्र यथा 'पाककृतिमच्चैत्रसदृशः' इति बोधः न संभवति, तथा नञर्थे भेदे विशेषणतापन्नायां पृथिव्यां आख्यातार्थस्य भेदाश्रयत्वस्य विशेषणत्वासंभवात् 'यत् इतरभिन्नपृथिव्यन्यत्' इत्याकारकशाब्दबोधोऽपि न संभवतीति, तादृशबोधमादाय उदाहरणे नातिव्याप्तिरिति भावः।

मिश्रोक्तमनतिरिक्तपदप्रयोजनं समर्थयतां मतमनुवदति – *अत्र* ***केचिदित्यादिना।*** अन्यूनविषयकत्वं प्रकृतलक्षणप्रविष्टं पक्षतावच्छेदक-विशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टविषयकत्वम्, न तु पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्न–

अत्र केचित् - अन्यूनविषयकत्वं पक्षतावच्छेदकविशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टविषयकत्वमेव, न तु पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदक-

---

प्रकारतानिरूपकत्वम्। तथा च 'पृथिवीतरेभ्यो भिद्यत' इत्यादौ 'यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवी' इत्युदाहरणवाक्यजन्ये पृथिवीतरभेदवद्भिन्नं यत् तत् पृथिवीभिन्नमित्याकारके पृथिवीतरभेदत्वरूपसाध्यतावच्छेदक-विशिष्टविषयकत्वमस्ति, तथा पृथिवीत्वरूपपक्षतावच्छेदकविशिष्ट-विषयकत्वमप्यस्तीति तादृशबोधजनके उदाहरणेऽतिव्याप्तिः। तद्वारणाया-नतिरिक्तपदम्, तन्निवेशे च अनुमित्यविषयस्य यत्पदार्थनञर्थभेदादेरपि शाब्दबोधे विषयतया अतिरिक्तविषयकत्वान्नातिव्याप्तिरिति भावः। एवकारव्यवच्छेद्यमाह-**न्त्विति। दर्शितव्यतिरेक्युदाहरणेति।** यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवीत्युदाहरणवाक्येत्यर्थः।

ननु एतादृशान्यूनविषयकत्वोक्तौ प्रमेयनिष्ठं हेतुत्वं प्रमेयं प्रमेयात् इत्यत्र हेत्ववयवेऽतिव्याप्तिः प्रागभिहितैवेति कथं पुनस्तादृशान्यूनविषयकत्वोक्तिः संगच्छत इति चेत्-न। नवीनमते ज्ञाप्यत्वस्यैव पञ्चम्यर्थत्वात् तन्मते प्रमेयादिति हेतुवाक्यात् प्रमेयनिष्ठहेतुत्वबोधाभावान्न तत्रातिव्याप्तिरिति तन्मतावलम्बनेन तदुक्तिसंगतेः।

न च तन्मतेऽपि प्रमेयज्ञाप्यत्वं प्रमेयं प्रमेयादित्यत्र हेत्ववयवेऽतिव्याप्तिरिति वाच्यम्। नामार्थधात्वर्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्याव्युत्पन्नतया तत्र पक्षस्थप्रमेयपदस्य प्रमेयविषयके लक्षणया तस्योत्तरपदघटकज्ञाधात्वर्थज्ञाने अभेदेनान्वयो वक्तव्य इति प्रमेयविषयकाभिन्नज्ञानविषयत्वत्वं पक्षतावच्छेदकम्। तद्विशिष्टविषयकत्वं तु हेतुजन्यबोधस्य नास्ति। प्रमेयादित्यत्र प्रकृत्यर्थस्य प्रमेयस्य विषयतासंबन्धेन पञ्चम्यर्थज्ञाप्यत्वैकदेशे ज्ञानेऽन्वयेन विषयतासंबन्धेन प्रमेयविशिष्टज्ञानविषयत्वस्यैव ततो बोधात्। न चैवं विषयत्वं प्रमेयं प्रमेयादित्यत्र हेतुवाक्येऽतिव्याप्तिः, तज्जन्यस्य प्रमेयविशिष्टज्ञानविषयत्वमिति बोधस्य विषयत्वत्वरूपपक्षतावच्छेदकविशिष्टविषयकत्वात् प्रमेयत्वरूपसाध्यता-वच्छेदकविशिष्टविषयकत्वाच्चेति वाच्यम्। तस्य ज्ञानरूपाधिकपदार्थविषयकतया अतिरिक्तविषयकत्वेनातिव्याप्तिवारणसंभवादित्याहुः।

विशिष्टवैशिष्ट्यावगाहित्वम्। एवं च दर्शितव्यतिरेक्युदाहरणजन्यबोधस्यापि तादृशान्यूनविषयकत्वादतिव्याप्तिः प्रसज्यते। न चैवमपि साध्यतावच्छेदकविशिष्टसाध्य पक्षतावच्छेदकविशिष्टपक्षघटितैकवाक्यार्थबोधकत्वमुदाहरणैकदेशस्यैव, न तु तन्न पृथिवीत्यादिभागघटितसमुदायस्येत्यवयवत्वविशेषणप्रवेशादेव नातिव्याप्तिशङ्केति वाच्यम्। तादृशान्यूनविषयकत्वघटितधर्मावच्छिन्ननिरूपितजनकतापर्यन्तानिवेशात्। वाक्यार्थद्वयविषयक–समूहालम्बनबोधजनकतामादायातिव्याप्तेः प्रसञ्जनात्, न हि तादृशसमूहालम्बनबोधजनकत्व–मेकदेशे पर्यवस्यति। अपि तु समुदाय एव। अथवा न्यायान्तर्गतत्वमेव सत्यन्तार्थः। अत एव **मिश्राणां** "घटशब्दो गुणः, द्रव्यकर्मान्यत्वे सति सत्त्वा" दित्यत्रोदाहरणे यदि प्रतिज्ञारूपशब्द एव दृष्टान्तत्वेन उपादीयते तदा **तत्रातिव्याप्तिवारणार्थत्वादि**त्यादिना

---

***न चैवमिति।*** 'पृथिवीतरेभ्यो भिद्यते' इत्युदाहरणैकदेशे एव पृथिवीत्वविशिष्टविषयकः पृथिवीतरभेदत्वविशिष्टविषयकश्च यो बोधः तज्जनकत्वमस्ति, तस्य तु न्यायावयवत्वं नास्ति, प्रतिज्ञाघटकत्वविरहात्। यन्नेत्यादिघटितसमुदायस्यैव न्यायावयवत्वं, तस्य तु न तादृशबोधजनकत्वमिति नातिव्याप्तिरिति भावः। ***तादृशान्यूनेति।*** उक्तोदाहरणे 'यन्न पृथिवीतरेभ्यो भिद्यते', 'तन्न पृथिवी' इति वाक्यद्वयमस्ति तज्जन्यः वाक्यार्थद्वयविषयकः समूहालम्बनबोधः, तस्योक्तान्यूनविषयकत्वसत्त्वात् तज्जनकत्वमादाय उदाहरणरूपे समुदाये न्यायावयवेऽतिव्याप्तिः। न च पक्षतावच्छेदकविशिष्टपक्षविषयकत्वविशिष्ट–साध्यतावच्छेदकविशिष्टसाध्यविषयकत्वविशिष्टशाब्दत्वावच्छिन्न–जन्यतानिरूपितजनकताश्रयत्वमुदाहरणस्य नास्ति। यत्पदार्थविशेष्यकपृथिवीतरभेद–वद्भिन्नत्वावच्छिन्नविषयकबुद्धित्वस्यैव तत्कार्यतावच्छेदकत्वात् इति वाच्यम्। प्रयोजनविरहेण तादृशधर्मावच्छिन्नत्वस्य जन्यतायामनिवेशादिति भावः।

***सत्यन्तार्थः*** इति। तथा चोदाहरणैकदेशेऽतिव्याप्तिप्रसक्तिरिति भावः। ***अत एवेति।*** न्यायावयवत्वस्थाने न्यायान्तर्गतत्वनिवेशादेवेत्यर्थः। घटशब्दे गुणत्वं साध्यम्। द्रव्यकर्मान्यत्वे सति सत्ता हेतुः। "यो यो द्रव्यकर्मान्यत्वे सति सत्तावान् स गुणः यथा घटशब्दः गुणः इति प्रतिज्ञा" इति उदाहरणवाक्यम्। शाब्दपदानिवेशे उद्देश्यानुमित्यन्यूनविषयकज्ञानजनकत्वमिति निवेशे उक्तस्थलीयोदाहरणैकदेशस्य 'यथा घटशब्दः गुणः' इति भागस्य तादृशप्रतिज्ञारूपशब्दविषयकश्रावणप्रत्यक्षं प्रति विषयविधया कारणत्वमस्ति।

शाब्दज्ञानपदस्य व्यावृत्तिदानसङ्गतिः। तददाने तत्रातिव्याप्तिप्रसक्तिः। विषयविधया श्रावणप्रत्यक्षजनकत्वात्तादृशदृष्टान्तरूपशब्दस्येति। पक्षतावच्छेदकविशिष्टविषयकत्वमेवान्यूनविषयकत्वम्, एवं च तादृशोदाहरणैकदेशातिव्याप्तिवारणायैव साध्यतावच्छेदकसम्बन्धेन 'साध्यतावच्छेदकमात्रविशिष्टसाध्यप्रकारकत्वार्थकमनतिरिक्तविषयकत्वमिति तज्जन्यबोधस्य साध्यतावच्छेदकसम्बन्धेन साध्यप्रकारकत्वात्। मात्रपदान्तर्भावान्निगमनव्युदासः तज्जन्यबोधे विशिष्टहेतुसम्बन्धस्याधिकस्य साध्यांशे भानेन शुद्धसाध्यतावच्छेदकावच्छिन्न साध्यप्रकारकत्वात्। एवं वह्निव्याप्यधूमवानयमित्याद्युपनयजन्यबोधस्य व्याप्तिघटकाधिकरणांशे साध्यतावच्छेदकावच्छिन्नप्रकारकत्वेपि साध्यांशे व्यापकत्वस्याधिकस्य भानेन तत्रापि नातिप्रसङ्गः।

---

तथा श्रावणप्रत्यक्षे घटशब्दगुणशब्दसमुदायरूपप्रतिज्ञाविषयके पक्षतावच्छेदकघटशब्दत्वविशिष्टविषयकत्वमस्तीति तज्जनकत्वमादाय उदाहरणैकदेशेऽतिव्याप्तिः। शाब्दज्ञानेति निवेशे तु श्रावणप्रत्यक्षस्य शाब्दबोधरूपत्वाभावान्नातिव्याप्तिरिति मिश्रैरुक्तम्। तेन न्यायान्तर्गत्वमेव लक्षणघटकमिति सूच्यते। न्यायावयवत्वनिवेशे उदाहरणैकदेशेऽतिव्याप्त्यप्रसक्तेः। एवमन्यूनविषयकत्वं पक्षतावच्छेदकविशिष्टविषयकत्वं न साध्यतावच्छेदकविशिष्टविषयकत्वमपि। उक्तश्रावणप्रत्यक्षे गुणत्वविशिष्टविषयकत्वाभावेनातिव्याप्तिप्रसक्त्यभावात्। एवं च घटशब्दो गुण इत्यादिन्यायान्तर्गते उदाहरणैकदेशे प्रतिज्ञारूपशब्दे अतिव्याप्तिवारणाय अनतिरिक्तविषयकत्वनिवेशः कार्यः। अनतिरिक्तविषयकत्वं च साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकमात्रविशिष्टसाध्यप्रकारकत्वम्। उक्तस्थले उदाहरणैकदेशजन्यबोधस्य समवायसंबन्धेन गुणत्वाप्रकारकत्वात् न तत्रातिव्याप्तिः। मात्रपदनिवेशात् निगमनवाक्यजन्यबोधस्य वह्नित्वरूपसाध्यतावच्छेदकविशिष्टप्रकारकत्वेऽपि न निगमनेऽतिव्याप्तिः। धूमज्ञानज्ञाप्यत्वस्याधिकस्य भानेन साध्यतावच्छेदकमात्रावच्छिन्नप्रकारकत्वविरहात्। एवं च पक्षतावच्छेदकविशिष्टविषयकत्वे सति शुद्धसाध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारताशालिशाब्दज्ञानजनकं न्यायान्तर्गतं वाक्यं प्रतिज्ञेति फलितम्। ***विशिष्टहेतुसंबन्धस्येति।*** हेतुतावच्छेदकविशिष्टहेतुज्ञानज्ञाप्यत्वस्येत्यर्थः। ***एवं चेति।*** वह्निव्याप्यधूमवानयमित्युपनयवाक्यात् धूमव्यापकवह्न्यधिकरणवृत्तिधूमवानयमिति शाब्दबोधो जायते। तस्य बोधस्य

न चैवमपि यन्न पृथिवीतरान्यदित्युदाहरणैकेदेशेऽतिप्रसङ्गः, तज्जन्यबोधे पक्षतावच्छेदकविशिष्टपक्षविषयकत्वस्य शुद्धसाध्यतावच्छेदकविशिष्टप्रकारकत्वस्य च सत्त्वादिति वाच्यम्। पक्षतावच्छेदकत्वावच्छिन्नविशेष्यकत्वावच्छेदेन तादृशसाध्यप्रकारकत्वस्य दलद्वयनिष्कृष्टार्थत्वात् तादृशोदाहरणभागजन्यबोधस्येतरभेदांशे निर्धर्मितावच्छेदकतया तादृशप्रकारकत्वविरहात्। साध्यतावच्छेदकसम्बन्धनिवेशनं च यत्र कालिकसम्बधेन कालपरिमाणस्पन्दत्वादेस्साध्यता समवायेन च तस्यैव हेतुता तत्रत्योपनयीयव्याप्यान्तातिरिक्त–

---

अधिकरणांशे साध्यतावच्छेदकसंयोगसंबन्धेन साध्यतावच्छेदकवह्नित्वा–वच्छिन्नप्रकारकत्वमस्ति, एवमयमिति पक्षतावच्छेदकपर्वतत्वविशिष्टविषयकत्व–मस्ति इति तज्जनके उपनयेऽतिव्याप्तिरिति नाशङ्कनीयम्। तस्य बोधस्य शुद्धवह्नित्वावच्छिन्नप्रकारकत्वविरहात्। वह्न्यंशे धूमव्यापकत्वस्याधिकस्य भानात् व्यापकत्ववह्नित्वोभयावच्छिन्नप्रकारकत्वादिति भावः।

**न चैवमपीति।** इदमुपलक्षणम्, "यथा घटशब्दो गुण" इति पूर्वोक्तोदाहरणैकदेशजन्यबोधे यथाशब्दार्थतया गुणत्वावच्छिन्नस्य प्रकारत्वात् घटशब्दत्वविशिष्टस्य विषयत्वाच्च तज्जनके यथाशब्दघटितभागेऽतिव्याप्तिरित्यपि बोध्यम्। पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ 'यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवी' इत्युदाहरणैकदेशे नातिव्याप्तिप्रसक्तिः। तज्जन्यबोधे साध्यतावच्छेदकस्वरूपसंबन्धेन पृथिवीतरभेदरूपसाध्याप्रकारकत्वात्। आख्यातार्थाश्रयत्वे निरूपितत्वसंबन्धेन हि पृथिवीतरभेदस्तत्र प्रकारः इत्यालोच्य 'यन्न पृथिवीतरान्यत्' इति प्रोक्तम्। अत्र च बोधे भेदः स्वरूपसंबन्धेन प्रकार इत्याशयः।

***पक्षतावच्छेदकावच्छिन्नेति।*** अन्यूनविषयकं सत् अनतिरिक्तविषयकमिति उद्देश्यविधेयभावमहिम्ना उक्तार्थलाभः। उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदक–विधेययोरवच्छेद्यावच्छेदकभावो भासत इति व्युत्पत्तेः। तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकत्वावच्छिन्नप्रकृतसाध्यतावच्छेदका–वच्छिन्नप्रकारकत्वविशिष्टशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकता–वन्न्यायान्तर्गतवाक्यं प्रतिज्ञेति फलितम्। यन्न पृथिवीतरान्यत् इत्युदाहरणैकदेशजन्यबोधे पृथिवीतरभेदस्य अन्यपदार्थे धर्मिणि अनवच्छिन्ने एव प्रकारत्वात् पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितपृथिवीतरभेदप्रकारताशालित्व–

भागवारणाय। सिषाधयिषया च न्यायप्रयोगो नाभ्युपेयत इति यत्र साध्यतावच्छेदकविशिष्टसाध्यस्य साध्यतावच्छेदकसम्बन्धेन हेतुता तत्रत्योपनयीयतादृशभागेऽतिप्रसङ्ग इत्यस्य नावकाशः।

न चैवमपि निगमनीये तस्मादित्यंशातिरिक्तांशेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्। तस्मादित्यंशार्थमनन्तर्भाव्य व्यवहितयोः पक्षसाध्यवद्वाचकपदयोरन्वयबोधजनकत्वादिति

---

विरहान्नातिव्याप्तिः। 'यथा घटशब्दो गुण' इत्युदाहरणैकदेशे प्रतिज्ञात्वावच्छिन्न-विशेष्यतानिरूपितगुणत्वनिष्ठप्रकारताशालिबोधजनकत्वसत्त्वेऽपि घटशब्दत्वरूप-पक्षतावच्छेदकावच्छेदकावच्छिन्नविशेष्यकगुणत्वप्रकारकबोधजनकत्वं नास्तीति नातिव्याप्तिरिति भावः।

साध्यतावच्छेदकसंबन्धनिवेशप्रयोजनमाह–***साध्यतावच्छेदकसंबन्ध-निवेशनं चेति।*** 'अयं कालिकसंबन्धेन कालपरिमाणवान् समवायसंबन्धेन तत्परिमाणात्', इत्यत्र 'अयं कालिकसंबन्धेन स्पन्दत्ववान् समवायेन स्पन्दत्वात्' इत्यत्र च कालपरिमाणव्याप्यकालपरिमाणवानयम्, स्पन्दत्वव्याप्यस्पन्दत्ववानयम् इत्युपनयवाक्यम्। तत्र व्याप्यान्तं परित्यज्य अवशिष्टो यो भागः कालपरिमाणवानयं, स्पन्दत्ववानयम् इति तस्य पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकबोध-जनकत्वमस्ति, साध्यतावच्छेदकहेतुतावच्छेदकयोरैक्यादिति तस्मिन् भागेऽतिव्याप्तिवारणाय 'साध्यतावच्छेदकसंबन्धनिवेशः। उक्तबोधस्य समवायरूपहेतुतावच्छेदकसंबन्धेन साध्यात्मकहेतुप्रकारकत्वेऽपि कालिकसंबन्धेन तत्प्रकारकत्वाभावान्नातिव्याप्तिरिति भावः।

ननु तन्निवेशेऽपि यत्र कालिकसंबन्धेनैव कालपरिमाणादेः साध्यत्वं हेतुत्वं च तत्रत्योपनयीयव्याप्यान्तभागातिरिक्तभागेऽतिव्याप्तिरित्यत आह–***सिषाधयिषया चेति।*** तादृशस्थले पक्षधर्मताज्ञानवेलायामेव पक्षे साध्यस्य निश्चितत्वात् संशयाभावेन 'संदिग्धे हि न्यायः प्रवर्तते' इति नानुमानापेक्षा, सिषाधयिषया स्वार्थानुमानसम्भवेऽपि परार्थानुमानानभ्युपगमात् तादृशस्थले न्यायप्रयोग एव नास्तीति नातिव्याप्तिप्रसङ्ग इति भावः।

***न चैवमिति।*** अयं तस्माद्वह्निमानिति निगमनावयवे तस्मादिति भागरहिते अयं वह्निमानिति भागे पर्वतत्वविशिष्टे संयोगसंबन्धेन वह्निप्रकारकबोधजनकत्व-

**यदि च निगमने नाऽयमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टलाभादिति विभाव्यते,**

---

रीत्या उक्तस्थलेपि व्यावृत्तिदानं सङ्गमयन्ति। अयम्पदाननुषङ्गपक्षे निगमनेऽनतिरिक्त-विषयकत्वव्यावृत्तिर्न सङ्गच्छते इत्याशङ्कते – ***यदि चेति।*** अयमादीत्यादिना इदमादिपरिग्रहः। ***विशिष्टलाभात् – वाक्यैकवाक्यतयेति।*** उपनयनिगमनवाक्ययोरेकवाक्यतयेत्यर्थः।

---

सत्त्वादतिव्याप्तिरिति शङ्का। तस्मादिति पदव्यवहितयोः अयं वह्निमानिति पदयोः आसत्तिरूपकारणाभावेन शाब्दबोधजनकत्वमेव नास्तीति नातिव्याप्तिरिति समाधानम्। ***उक्तस्थलेऽपीति।*** पृथिवीतरेभ्यो भिद्यत इत्यादिन्यायान्तर्गतोदाहरणैकदेशे यन्न पृथिवीतरेभ्यो भिद्यत इति भागेऽतिव्याप्तिवारणायानतिरिक्तपदमिति पूर्वोक्तरीत्या मिश्रमतसमर्थनं कुर्वन्तीत्यर्थः।

'यदि च' इत्यादि 'वारणाय तत्' इत्यन्तस्य ***दीधितिग्रन्थस्यायमर्थः –*** निगमने निगमनेऽतिव्याप्तिवारणाय अनतिरिक्तपदमिति यदुक्तं तन्न संगच्छते। निगमने अयमादिपदानुषङ्गपक्षे निगमनजन्यबोधस्य पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वसत्त्वेऽपि तदननुषङ्गपक्षे तदभावात्। न च को वह्निमानित्याकाङ्क्षायाः अयमादिपदानुषङ्गं विना वह्निमानित्येतावन्मात्रोक्त्या अनिवृत्तेः तन्निवृत्त्यर्थमनुषङ्ग आवश्यक इति वाच्यम्। उपनयनिगमनयोरेकवाक्यतया पक्षतावच्छेदकविशिष्टे साध्यवत्ताज्ञानात् विशेषाकाङ्क्षानिवृत्तेः इति यदि आलोच्यते, तदा अनतिरिक्तपदानुपादाने उपनयेऽतिव्याप्तिः। उपनयवाक्यजन्ये धूमव्यापकवह्न्यधिकरणवृत्तिधूमवानयमिति बोधे अधिकरणत्वरूपसामान्यधर्मावच्छिन्ने पर्वते वह्निवैशिष्ट्यावगाहित्वसद्भावात्। न च अधिकरणत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वसत्त्वेऽपि पक्षतावच्छेदकपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वमुक्तबोधस्य नास्तीति नातिव्याप्तिरिति वाच्यम्। पक्षे साध्यवैशिष्ट्यावगाहित्वमेवान्यूनविषयकत्वं न तु पक्षतावच्छेदकविशिष्टे, प्रयोजनाभावात्। तथा च अधिकरणत्वेन पर्वते वह्निवैशिष्ट्यावगाहितया उपनयजन्यबोधस्य, तज्जनक उपनयेऽतिव्याप्तिः। अनतिरिक्तपदप्रवेशे तु उपनयजन्यबोधे अनुमित्यविषयाणां व्यापकत्वादीनां भानात् अतिरिक्तविषयकतया नातिव्याप्तिः।

न चान्यूनविषयकत्वशरीरे पक्षतावच्छेदकविशिष्टे इत्यवश्यं निवेशनीयम्, अन्यथा प्रमेयाद्वाच्यत्ववानयं प्रमेयः प्रमेयादित्यत्र हेतुवाक्येऽतिव्याप्तेः। पञ्चमीप्रकृत्यर्थे प्रमेये प्रमेयत्वरूपसाध्यवैशिष्ट्यं हेतुवाक्यजन्ये प्रमेयत्ववन्निष्ठं हेतुत्वमिति बोधे भासते। वाच्यत्ववदिदम्पदार्थस्य पक्षस्यापि प्रमेयतया पक्षे साध्यवैशिष्ट्यावगाहित्वं बोधस्यास्तीति तज्जनके हेतुवाक्येऽतिव्याप्तिः। पक्षतावच्छेदकविशिष्टे इति निवेशे तु हेतुजन्यबोधस्य प्रमेयहेतुक-वाच्यत्वरूपपक्षतावच्छेदकविशिष्टे प्रमेयत्ववैशिष्ट्यावगाहित्वं नास्ति। प्रमेयत्वस्य तत्र निर्धर्मितावच्छेदककभानादिति नातिव्याप्तिः। एवं चोपनये नातिव्याप्तिरिति न तद्वारणफलकमनतिरिक्तपदमिति वाच्यम्। एवमपि यत्र पर्वतवह्न्योः पर्वतत्वेन दृष्टान्ततया वह्नित्वेन हेतुतया चोपन्यासः तत्र पर्वतो वह्निमान् वह्नेः, यो यो वह्निमान् स वह्निमान् यथा पर्वतः, वह्निव्याप्यवह्निमांश्चायमिति न्यायान्तर्गते उदाहरणे उपनये चातिव्याप्तिः। तज्जन्यबोधयोः पर्वतत्वविशिष्टे वह्नित्वविशिष्टवैशिष्ट्यावगाहित्वात्। अनतिरिक्तपदनिवेशे तु तद्बोधस्य व्याप्त्याद्यधिकपदार्थविषयकतया नातिव्याप्तिः। न च तत्र पक्षे साध्यनिश्चयदशायामेव पक्षस्य दृष्टान्तत्वं साध्यस्य हेतुत्वं च संभवति। साध्यनिश्चयदशायां च न्यायप्रयोग एव नेष्यते। सन्दिग्धे न्यायः प्रवर्तत इति भाष्योक्तेरिति वाच्यम्। जल्पस्थले साध्यसंशयस्यावश्यकत्वेऽपि वादस्थले संशयमन्तरेणापि सिषाधयिषाधीनानुमितिनिर्वाहाय न्यायप्रयोगसंभवात्।

यदि तु सिषाधयिषया न्यायप्रयोगो नाङ्गीक्रियते तदापि यत्र पर्वतत्वावच्छेदेन वह्न्यनुमितिरुद्देश्या एतत्पर्वतत्वेन दृष्टान्तस्योपन्यासः तत्र 'यो यो धूमवान् स वह्निमान्', 'यथा एष पर्वत' इत्युदाहरणेऽतिव्याप्तिवारणायानतिरिक्तपदम्।

एवम् अनतिरिक्तपदानिवेशे प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिः। तज्जन्यस्य पर्वतो धूमहेतुकवह्निमानिति बोधस्य पर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वात्। एवं उपनयघटकायम्पदादिनिगमनान्तसमुदाये 'अयं तस्माद्वह्निमान्' इत्यत्र अतिव्याप्तिः। अनतिरिक्तपदनिवेशे तु तयोर्बोधयोः धूमहेतुकत्वरूपाधिकपदार्थ-विषयकतया नातिव्याप्तिः। न च न्यायावयवत्वविरहादेव नातिव्याप्तिः,

पक्षतावच्छेदकविशिष्टे साध्यवत्तालाभाद्विशेषाकांक्षानिवृत्तेः। न च पक्षवाचकपदाननुषङ्गे तस्मान्नेतराणीत्यादिनिगमनविरोधः अनुयोग्यमिश्रितनञर्थशाब्दबोधस्याऽव्युत्पन्नतया तन्मात्रस्याबोधकत्वेन वाक्यत्वाभावादिति वाच्यम्। एतन्मते तादृशनिगमनानभ्युपगमात्। यद्यप्यनतिरिक्तविषयकत्वानिवेशे अन्यूनविषयकबोधजनकत्वं तज्जनकज्ञानविषयत्वं वा न्यायावयवत्वविशेषितं प्रतिज्ञाहेत्वादिजन्यबोधमादाय हेत्वादावतिप्रसक्तम्, तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक-यत्किंचिज्ज्ञानविषयतावद्वर्णसमुदायत्वनिवेशे नायं दोष इति स्थलान्तरे व्यावृत्तिमाह -

---

प्रतिज्ञाहेतुसमुदाये अयमादिनिगमनान्तसमुदाये च उभयघटकभागद्वयाघटितत्वाभावात् इति वाच्यम्। अवयवाघटकत्वे सति न्यायान्तर्गतत्वमात्रस्य सत्यन्तेन विवक्षणात् उभयघटकभागद्वयाघटितत्वस्यात्र प्रयोजनाभावेनानिवेशात् - इति।

गादाधर्या-***साध्यवत्तालाभादिति।*** साध्यवत्ताज्ञानादित्यर्थः। ***न च विशेषाकाङ्क्षानिवृत्तेः***- को वह्निमानित्याकाङ्क्षायाः निवृत्तेः। ***न च पक्षवाचकपदाननुषङ्गे*** इति। निगमनवाक्ये अयमादिपदाननुषङ्गे तस्माद्वह्निमानित्यादिनिगमनेऽनुपपत्त्यभावेऽपि केवलव्यतिरेकिस्थले 'तस्मान्नेतराणि' इति निगमनवाक्याच्छाब्दबोधानुपपत्तिः। तत्रानुयोगिवाचकपदाभावेन ***तस्मादितरभेद*** इति बोधस्यैव वाच्यतया तस्यापि नञः अनुयोग्यमिश्रितार्थबोधकत्वस्याव्युत्पन्नतया असम्भवादिति शङ्का। अननुषङ्गमते नञः अनुयोग्यमिश्रितार्थबोधकत्वाभाव इति नियमो नाङ्गीक्रियते इति समाधानम्। अथ वा 'तस्मादितरेभ्यो भिद्यते' इत्येव निगमनवाक्यमिति समाधेयम्। प्रथमान्तासमभिव्याहारस्थले आख्यातार्थ-विशेष्यकबोधस्य स्वीकारात्।

शङ्कते-***यद्यपीति।*** अनतिरिक्तविषयकत्वानिवेशे अन्यूनविषयक-शाब्दज्ञानजनकत्वं तादृशशाब्दज्ञानजनकज्ञानविषयत्वं वा प्रतिज्ञाहेतूभयजन्यशाब्द-बोधमादाय हेतुवाक्येऽतिव्याप्तम्। अनतिरिक्तविषयकत्वनिवेशे तु उभयजन्यबोधस्य अनुमित्यविषयधूमनिष्ठहेतुत्वविषयकतया न तमादायातिव्याप्तिरित्यपि वक्तुं शक्यतया तदेत्यादिना क्लेशेनोपनयेऽतिव्याप्तिप्रदर्शनं किमर्थमिति शङ्कितुराशयः। समाधत्ते-***तथापीति।*** अनतिरिक्तपदानिवेशेऽपि जन्यतायामन्यून-विषयकत्वावच्छिन्नत्वं निवेश्याप्यतिव्याप्तिर्हेतुवाक्ये वारयितुं शक्यते। तथाहि प्रकृतपक्षनिष्ठविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि-

**तदा हेतौ साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेपि, साध्यवत्त्वभानात् पक्षे हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताबोधकस्योपनयस्य ; तत्र पक्षसाध्ययोस्ताद्रूप्येण दृष्टान्तत्वहेतुत्वाभ्यामुपन्यासः,**

---

***तदेत्यादिना। भाने*** – ज्ञाने। ***सामान्यतः***– अधिकरणत्वरूपसामान्यधर्मावच्छिन्ने विशेष-रूपानवच्छिन्ने इति वा। ***साध्यवत्त्वभानात्*** – साध्यवत्त्वविषयकत्वात्, उपनयस्य वारणाय तदिति योजना। पक्षे साध्यवैशिष्ट्यावगाहित्वमेवान्यूनविषयकत्वम्, न तु पक्षतावच्छेदकवैशिष्ट्यान्तर्भाव इत्यभिप्रायेणेदम्। प्रमेयाद्वाच्यत्ववानयं प्रमेयः प्रमेयादित्यादि-वक्ष्यमाणहेतुवारणाय पक्षतावच्छेदकवैशिष्ट्यान्तर्भाव आवश्यक इति तदन्तर्भावाभिप्रायेण

---

शाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिज्ज्ञानीय-विषयितानिरूपकवर्णसमुदायत्वं प्रतिज्ञालक्षणम्। प्रतिज्ञाहेतूभयजन्यः यः शाब्दबोधः तद्गतधूमनिष्ठहेतुत्वविषयकबुद्धित्वावच्छिन्नजन्यता निरूपितजनकतावच्छेदक-विषयितानिरूपकवर्णसमुदायत्वमेव धूमादिति हेतुवाक्येऽस्ति।। न तु पर्वतनिष्ठविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिशाब्दबुद्धित्वावच्छिन्न-जन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वमिति न तत्रातिव्याप्तिः। अतः हेतुवाक्यमुपेक्ष्य उपनयेऽतिव्याप्तिरुक्ता। उपनयजन्यशाब्दबोधे धूमव्यापकवह्न्यधिकरणवृत्तिधूमवानित्याकारके विद्यमाना या पर्वतनिष्ठविशेष्यता-निरूपितवह्निनिष्ठप्रकारताशालिबुद्धित्वावच्छिन्नजन्यता तन्निरूपितजनकता-वच्छेदकविषयितानिरूपकवर्णसमुदायत्वस्य उपनये सत्त्वादतिव्याप्तिप्रसक्ति-रित्यालोच्य स्थलान्तरानुधावनमिति भावः।

साध्यसामानाधिकरण्यघटकस्य अधिकरणस्य अधिकरणत्वेन रूपेण निवेशे अधिकरणत्वावच्छिन्ने साध्यस्य प्रकारतया भानं व्युत्पाद्य साध्येन रूपेण अधिकरणस्य निवेशे निरवच्छिन्ने धर्मिणि साध्यस्य भानं व्युत्पादयति–***विशेषरूपानवच्छिन्ने*** इति। अनेन अधिकरणत्वेन अधिकरणभानपक्षः साध्येन रूपेण तद्भानपक्षश्च संगृहीतो भवति। ***ताद्रूप्येणेति।*** पक्षतावच्छेदकप्रकारेणेत्यर्थः। 'दृष्टान्तत्वहेतुत्वाभ्याम् उपन्यास' इति दीधितौ यथासंख्यम् अन्वयः। पक्षस्य पक्षतावच्छेदकरूपेण दृष्टान्ततया उपन्यासः। साध्यस्य साध्यतावच्छेदकरूपेण हेतुतया उपन्यासः इति तदर्थः। ***रूपान्तरेणेति।***

**तादृशसिषाधयिषया च न्यायप्रयोगः तत्रोदाहरणोपनययोः,**

---

स्थलान्तरे व्यावृत्तिमाह ***यत्रेति। पक्षेति।*** पक्षस्य ताद्रूप्येण पक्षतावच्छेदकप्रकारेण दृष्टान्ततया यत्रोपन्यासः तत्रोदाहरणस्य, साध्यस्य ताद्रूप्येण साध्यतावच्छेदकप्रकारेण हेतुतया यत्रोपन्यासः, तत्रोपनयस्य च वारणाय तदित्यर्थः। रूपान्तरेण पक्षसाध्ययोर्दृष्टान्तहेतुत्वेनोपन्यासे दर्शितान्यूनविषयकत्वासम्भव इति ***ताद्रूप्येणेति।***

ननु पक्षे साध्यनिश्चयदशायामेव तादृशदृष्टान्तहेतुत्वसम्भव इति संशयाभावात् न्याय एव न सम्भवतीत्यत आह – ***तादृशसिषाधयिषयेति।*** जल्पस्थले संशयस्यावश्यकत्वेपि वादस्थले न तथेति संशयमन्तेरणापि अनुमित्साधीनानुमितिनिर्वाहाय प्रयोगसम्भवादिति भावः।

---

पक्षतावच्छेदकातिरिक्तरूपेण दृष्टान्ततया उपन्यासे साध्यतावच्छेदकातिरिक्तरूपेण हेतुतया उपन्यासे च पक्षे साध्यवैशिष्ट्यविषयकत्वम् उदाहरणोपनयजन्यबोधयोः न सम्भवतीति ताद्रूप्येणेत्युक्तमिति भावः। ***न्याय एव न सम्भवतीति।*** सन्दिग्धेऽर्थे न्यायः प्रवर्तत इति सिद्धान्तादिति भावः। ***जल्पस्थल*** इत्यादि। विपरीतोद्भावकपरविजिगीषया न्यायप्रयोगः जल्पः। तत्त्वबुभुत्सोः कथा वादः। वादस्थले साध्यनिश्चयसत्त्वेऽपि अनुमित्साबलात् अनुमितिप्रयोजकन्यायप्रयोगः सम्भवतीति भावः।

***ननु सिषाधयिषयेत्यादि।*** यदि साध्यनिश्चयस्थलेऽपि सिषाधयिषाबलात् न्यायप्रयोगः उपगम्यते, तदा पञ्चम्यर्थे हेतुत्वे येन संबन्धेन प्रकृत्यर्थस्यान्वयः तेन संबन्धेन वह्निसाध्यक–हेतुत्वपक्षक–वह्निहेतुकः यः न्यायः 'हेतुत्वम् आधेयतासंबन्धेन वह्निमत्,, आधेयतासंबन्धेन वह्नेः' इति तदन्तर्गते वह्नेरिति हेतुवाक्येऽतिव्याप्तिः। तज्जन्यस्य आधेयतासंबन्धेन वह्निविशिष्टं हेतुत्वम् इत्याकारकबोधस्य अनुमित्यन्यूनानतिरिक्तविषयकत्वात्। अतः सिषाधयिषया न्यायप्रयोगो नाङ्गीकरणीयः। तथा च उदाहरणोपनययोः अतिव्याप्तिवारणरूपं अनतिरिक्तपदप्रयोजनं न सङ्गच्छत इत्याशयेन 'यत्र वा' इत्यादिना स्थलान्तरम्, अनुसरतीति भावः। 'पर्वतत्वावच्छेदेन' इत्यस्य प्रयोजनमाह– ***पर्वतत्वसामानाधिकरण्येनेत्यादिना।*** पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितेः उद्देश्यत्वे एतत्पर्वतस्य दृष्टान्तत्वं न सम्भवति। 'एतत्पर्वतो वह्निमान्' इति

**यत्र च पर्वतत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यतायामेतत्पर्वतत्वादिना दृष्टान्तस्योपन्यासः तत्रोदाहरणस्य;**

---

ननु सिषाधयिषया न्यायप्रयोगोपगमे पञ्चम्यर्थहेतुत्वे यादृशसम्बन्धेन प्रकृत्यर्थस्यान्वयस्तत्सम्बन्धेन वह्निसाध्यकहेतुत्वपक्षकवह्निहेतुकन्यायान्तर्गतहेत्ववयवेऽति-व्याप्तिर्दुर्वारैवेति सिषाधयिषया न्यायप्रयोगो नाङ्गीकर्तव्य इत्यत उक्तव्यावृत्तिर्न सङ्गच्छत इत्यतः स्थलान्तरमनुसरति – ***यत्र चेति।*** पर्वतत्वसामानाधिकरण्येन साध्यसिद्धेर्यत्रोद्देश्यता तत्रैतत्पर्वतत्वेनापि दृष्टान्तता न सम्भवति, एतत्पर्वतत्वेन साध्यवत्तानिश्चयस्यापि तादृशानुमितिविरोधित्वात्, अतः ***पर्वतत्वावच्छेदेनेति। तत्रोदाहरणस्येति।*** यद्यपि पर्वतत्वावच्छेदेन वह्निमत्तावगाहिन्यामनुमितौ पर्वतत्वव्यापकत्वस्याधिकस्य वह्न्यंशे भानात्तादृश-दृष्टान्तघटितोदाहरणजन्यबोधे च तदभानादस्यानुमितिन्यूनविषयकत्वमेव; तथापि पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपं निर्वाच्य-मुद्देश्यानुमित्यन्यूनविषयकत्वमव्याहतमेवेति भावः।

---

निश्चयस्य पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितिं प्रति प्रतिबन्धकत्वात्। अतः पर्वतत्वावच्छेदेनेत्युक्तम्। पर्वतत्वावच्छेदेन वह्न्यनुमितिं प्रति पर्वतत्वावच्छेदेन वह्निनिश्चय एव प्रतिबन्धकः, न तु 'एतत्पर्वतो वह्निमान्' इति निश्चयः। अतः एतत्पर्वतत्वेन दृष्टान्तः संभवतीति भावः।

***यद्यपीत्यादि।*** पर्वतत्वावच्छेदेन वह्न्यवगाहिन्यामनुमितौ पर्वतत्व-व्यापकत्वरूपं पर्वतत्वावच्छिन्नत्वं वह्नौ भासते। 'यथा एतत्पर्वतः' इति दृष्टान्तघटितोदाहरणवाक्यजन्यबोधे तु वह्न्यंशे पर्वतत्वव्यापकत्वं न भासते। अतः शाब्दबोधस्य अनुमितिविषयसकलपदार्थविषयकत्वरूपम् अन्यूनविषयकत्वं नास्तीति कथमुदाहरणेऽतिव्याप्तिप्रसक्तिरिति शङ्का। प्रकृते अन्यूनविषयकत्वं पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टविषयकत्वम्। तत्तु उदाहरणजन्यबोधे अस्त्येवेति अतिव्याप्तेः प्रसक्तिः। अत्र अन्यूनविषयकत्वशरीरे साध्यतावच्छेदकसंबन्धः न निवेश्यते। अतः पर्वतत्वावच्छेदेन वह्न्यनुमितौ पर्वतत्वव्यापकत्वविशिष्टसंयोगसंबन्धेन वह्नेः भानात् उदाहरणजन्यबोधे च शुद्धसंयोगसंबन्धेन तद्भानात् कथमतिव्याप्तिप्रसक्तिरिति शङ्कायाः नावसरः।

**सत्यन्तस्य वा, अवयवाघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्याऽयमादिनिगमनान्तस्य च वारणाय तत् ।**

---

यद्यपि पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतानिवेशे उदाहरणैकदेश एव तादृशविषयता न तु समुदाये इति न्यायावयवत्वनिवेशान्नातिव्याप्तिप्रसङ्गः।

तथापि प्रतिज्ञामात्राघटकत्वगर्भन्यायावयवत्वं प्रकृतलक्षणे प्रविष्टम्; तच्च यथाऽयं पर्वत इत्युदाहरणैकदेशेपीत्याशयः। अवच्छेदकावच्छेदेन साध्यसाधनकन्यायनिविष्टप्रतिज्ञालक्षणे अवच्छेदकावच्छेदेन साध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वनिवेशे

---

पुनः शङ्कते–***यद्यपीति।*** अनतिरिक्तविषयकत्वानिवेशेऽपि पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित–साध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वमिति परिष्कारे सति तादृशलक्षणस्य 'यथा एतत्पर्वतः' इति उदाहरणैकदेश एव सत्त्वात्, तत्र च न्यायावयवत्वविरहादेव अतिव्याप्तेः न प्रसक्तिः। यत्र तु न्यायावयवत्त्वमस्ति, 'यथा एतत्पर्वत' इति दृष्टान्तघटिते समुदाये, तत्र पूर्वोक्तजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वं नास्तीति नातिव्याप्तिः इति शङ्कितुराशयः।

समाधत्ते–***तथापीति।*** प्रकृतलक्षणे न्यायावयवत्वशरीरे प्रतिज्ञामात्राघटकत्वमेव निवेश्यते। न तु उदाहरणाद्यघटकत्वमपि। प्रयोजनाभावात्। तथा च 'यथा एतत्पर्वतः' इति भागे प्रतिज्ञा–अघटकत्वघटितन्यायावयवत्त्वस्य अन्यूनविषयकशाब्दज्ञानजनकत्वस्य च सत्त्वात् तत्रातिव्याप्तिः इति समाधानम्। अनतिरिक्तपदनिवेशे तु तज्जन्यबोधस्य एतत्त्वरूपाधिकपदार्थविषयकतया नातिव्याप्तिरिति अवधेयम्।

सत्यन्तस्येत्यादिना स्थलान्तरानुधावने निमित्तमाह–***अवच्छेदकावच्छेदेनेति।*** यत्र अवच्छेदकावच्छेदेन अनुमितिः उद्देश्या, तत्प्रयोजकन्यायान्तर्गतप्रतिज्ञालक्षणे पक्षतावच्छेदकावच्छेदेन साध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्नशाब्दज्ञानजनकत्वं निवेश्यते। 'यथा एतत्पर्वत' इति वाक्यजन्यबोधस्य पर्वतत्वावच्छेदेन वह्निवैशिष्ट्यावगाहित्वं नास्तीति नातिव्याप्तिरिति यदि ब्रूयात्, तदा स्थलान्तरे अनतिरिक्तपदस्य प्रयोजनं दर्शयति इत्यर्थः।

नैतद्द्व्यावृत्तिसङ्गतिरित्यपरितोषेण व्यावृत्यन्तरमाह – **सत्यन्तस्यवेति।** अत्रायमाशयः – एतल्लक्षणघटकन्यायावयवत्वशरीरे उभयघटकभागद्वयाघटितत्वं न निवेशनीयम्, अनतिरिक्तविषयकत्वविशेषणेनैव तादृशभागद्वयघटितसमुदायातिप्रसङ्गवारणात्।

न च शब्दज्ञानस्यैव शाब्दबोधजनकतया जनकत्वमत्र जनकज्ञानविषयत्वमेव वाच्यम्, एवं च तादृशसमुदायविषयकज्ञानमप्येकदेशप्रतिज्ञाविषयकत्वेन तथाविधबोधजनकमिति समुदायेऽतिप्रसङ्ग इति वाच्यम्। तादृशबोधजनकतावच्छेदकीभूतयत्किञ्चिदेकज्ञान–विषयतानिरूपकवर्णसमुदायत्वस्यैव विवक्षणीयत्वात्।

न च तादृशवर्णसमुदायत्वं तादृशवर्णत्वव्यापकसमुदायत्वम्, तादृशं च प्रतिज्ञाहेतुसमुदायत्वमपीति तत्समुदायातिप्रसङ्ग एवेति तादृशभागद्वयाघटितत्वमवश्यमेव

---

ननु 'सत्यन्तस्य चे'त्यादिग्रन्थेन अनतिरिक्तविषयकत्वानिवेशे प्रतिज्ञाहेतुसमुदाये 'पर्वतो वह्निमान् धूमात्' इत्यत्र अयमादिनिगमनान्ते 'अयं तस्माद्वह्निमान्' इति वाक्ये च अतिव्याप्तिप्रसञ्जनं न सङ्गच्छते। न्यायावयवत्वशरीरे उभयघटकभागद्वयाघटितत्वस्य निविष्टत्वात् तद्विरहादेव प्रतिज्ञाहेतुसमुदाये अयमादिनिगमनान्ते च अतिव्याप्तिवारणसंभवात् इत्याशङ्क्य अतिव्याप्तिं प्रसञ्जयतां दीधितिकृतां तात्पर्यं स्पष्टयति–***अयमाशय*** इत्यादिना। अवयवसामान्यलक्षणे उभयघटकभागद्वयाघटितत्वस्य निवेशेऽपि प्रतिज्ञालक्षणघटकं यत् न्यायावयवत्वं तच्छरीरे तस्य न निवेशः। न च तदनिवेशे प्रतिज्ञाहेतुसमुदाये अतिव्याप्तिः इति वाच्यम्। शाब्दबोधे अनतिरिक्तविषयकत्वनिवेशेनैव तद्वारणसंभवात्। समुदायजन्यबोधे धूमनिष्ठहेतुत्वस्य अधिकस्य भानात्। न च अनुमित्यन्यूनानतिरिक्तविषयकशाब्दबोधपदेन प्रतिज्ञामात्रार्थविषयकस्य 'पर्वतो वह्निमान्' इत्याकारकशाब्दबोधस्य ग्रहणेऽपि तज्जनकं यत् प्रतिज्ञाहेतूभयविषयकं ज्ञानं तद्विषयत्वस्य प्रतिज्ञाहेतुसमुदाये सत्त्वात् तत्रातिव्याप्तिवारणाय उभयघटकभागद्वयाघटितत्वं निवेशनीयमिति वाच्यम्। अन्यूनानतिरिक्तविषयक–शाब्दबोधजनकतावच्छेदक–यत्किञ्चिज्ज्ञानीय – विषयितानिरूपकवर्णसमुदायत्वम् इति विवक्षणेन प्रतिज्ञाहेतुसमुदाये अतिव्याप्तिवारणसंभवात् इति भावः। **न च *तादृशवर्णेत्यादि।*** प्रतिज्ञैकदेशेऽतिव्याप्तिवारणाय तादृशवर्णत्वव्यापकसमुदायत्वमेव निवेशनीयम्। प्रतिज्ञार्थविषयकशाब्दबोधजनकतावच्छेदकविषयितानिरूपकवर्णत्व–व्यापकत्वं प्रतिज्ञाहेतुसमुदायत्वेऽप्यस्ति। अतः प्रतिज्ञाहेतुसमुदाये अतिव्याप्तिः

निवेश्यमिति वाच्यम्। अनतिरिक्तपदसार्थक्याय तादृशयत्किंचिदेकज्ञानविषयिताशालि-वर्णत्वसमनैयत्यमेव निवेश्य प्रतिज्ञाहेत्वादिसमुदायत्वस्य वारणीयत्वात्। समानार्थकप्रतिज्ञाद्वयादि-

---

प्रसज्यते, तद्वारणाय उभयघटकभागद्वयाघटितत्वम् अवश्यं निवेशनीयम्। तन्निवेशे तेनैव समुदायवारणसंभवात् अनतिरिक्तविषयकत्वं मास्तु इति भावः।

***अनतिरिक्तपदसार्थक्यायेति।*** मूलोक्तस्य अनतिरिक्तपदस्य सार्थक्याय अनुमित्यन्यूनविषयकशाब्दज्ञानजनकतावच्छेदकविषयितानिरूपकवर्णत्वसमनियत-समुदायत्वमिति विवक्षणीयम्। प्रतिज्ञाहेतुसमुदायत्वे तादृशवर्णत्वव्यापकत्वसत्त्वेऽपि तद्व्याप्यत्वं नास्ति। तादृशवर्णत्वशून्येषु हेतुघटकवर्णेष्वपि समुदायत्वसत्त्वात्। अतः प्रतिज्ञाहेतुसमुदाये नातिव्याप्तिः। एतदुक्तं भवति- प्रतिज्ञाहेतु-समुदायेऽतिव्याप्तिवारणाय हि मूलेऽनतिरिक्तविषयकेत्युक्तम्। यदि वर्णत्वसमनैयत्यं समुदायत्वे न निवेश्यते तदा अनतिरिक्तविषयकेत्युक्तावपि अन्यूनानतिरिक्तविषयकं प्रतिज्ञामात्रार्थविषयकं शाब्दबोधमादाय तज्जनकं ज्ञानमित्यनेन च प्रतिज्ञाविषयकं ज्ञानं गृहीत्वा तद्विषयवर्णत्वव्यापकत्वस्य प्रतिज्ञाहेतुसमुदायत्वे सत्त्वात् अतिव्याप्त्यापत्त्या अनतिरिक्तपदसार्थक्यं न निर्वहतीति तदर्थं वर्णत्वसमनियतत्वं निवेशनीयमेव। न च तन्निवेशे तादृशवर्णत्वव्याप्यत्वाभावादेव प्रतिज्ञाहेतुसमुदायत्वस्यातिव्याप्तिवारणात् अनतिरिक्तदलवैयर्थ्यं दुर्वारमिति वाच्यम्। अनतिरिक्तपदाभावे अनुमित्यन्यूनविषयकं प्रतिज्ञार्थहेत्वर्थोभयविषयकं बोधं गृहीत्वा तज्जनकप्रतिज्ञाहेतूभयविषयकयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्व-समनियतत्वस्य तत्समुदायत्वे सत्त्वात् प्रतिज्ञाहेतुसमुदायेऽतिव्याप्त्यापत्त्या तद्वारकतया अनतिरिक्तपदसार्थक्यादिति हृदयम्।

ननु तादृशवर्णत्वव्याप्यत्वमेव कुतो न निवेशितम्। न च प्रतिज्ञैकदेशेऽतिव्याप्तिवारणाय व्यापकत्वनिवेशः इति वाच्यम्। प्रतिज्ञाऽघटकत्वदलेनैव तद्वारणात् इति चेन् न। एकप्रतिज्ञाअपरप्रतिज्ञाएकदेश-घटितसमुदाये अतिव्याप्तिवारणाय व्यापकत्वनिवेशात्। अन्यथा तत्समुदायत्वे तादृशप्रतिज्ञाद्वयविषयकसमूहालम्बनज्ञानीयविषयताश्रयवर्णत्वव्याप्यत्वसत्वात् अतिव्याप्तेः।

विषयकयत्किंचिज्ज्ञानविषयताश्रयवर्णत्वसमनैयत्यस्य तादृशप्रतिज्ञाद्वयादिपर्याप्तसमुदायत्वे सत्त्वेपि न क्षतिः, तदुभयस्मादपि प्रतिज्ञाव्यवहारात्। अपि तु प्रतिज्ञैकदेशस्यापि तादृशबोधनिष्ठवह्निसम्बन्धिबुद्धित्वाद्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूत यत्किञ्चिदेकज्ञानविषयताश्रयवर्णसमुदायत्वमादायैव प्रतिज्ञात्वप्रसङ्ग इति प्रतिज्ञाद्यघटकत्वं प्रतिज्ञामात्राघटकत्वमेव वा निवेशनीयम्। अन्यूनानतिरिक्तविषयकशाब्दबुद्धित्वस्य किञ्चिज्जन्यतानवच्छेदकतया तदवच्छिन्नजन्यतानिरूपितजनकतानिवेशासम्भवात्।

इत्थं चाऽननुषङ्गपक्षेऽप्ययं तस्माद्वह्निमानिति भागे प्रतिज्ञादिहेत्वन्तभागेऽपि व्यावृत्तिस्सम्भवतीति ***अवयवाघटकेति।*** न च तदुपादानेपि धूमादालोकवान् पर्वतो

---

ननु तथापि समानार्थकप्रतिज्ञाद्वयविषयकज्ञानीयविषयताश्रयवर्णत्वसमनियतस्य तादृशप्रतिज्ञाद्वयसमुदायत्वस्य आश्रये तादृशप्रतिज्ञाद्वयसमुदाये अतिव्याप्तिः इत्याशङ्क्य इष्टापत्या परिहरति–***समानार्थकेति। अपि तु*** इति। अनुमित्यन्यूनानतिरिक्तविषयकशाब्दबोधनिष्ठजन्यतानिरूपितजनकतावच्छेदक–यत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वसमनियतसमुदायत्वं इत्युक्तावपि 'पर्वतो वह्निमान्' इत्याकारकप्रतिज्ञार्थविषयकशाब्दबुद्धिनिष्ठा या वह्निसंबन्धिविषयक–बुद्धित्वावच्छिन्ना जन्यता तन्निरूपितजनकतावच्छेदकविषयताश्रयवर्णत्वसमनियत–समुदायत्वपदेन वह्निमत्समुदायत्वं गृहीत्वा तदाश्रये वह्निमत्पदे प्रतिज्ञैकदेशे अतिव्याप्तिर्भवति। तद्वारणाय प्रतिज्ञाद्यघटकत्वं प्रतिज्ञामात्राघटकत्वं वा निवेशनीयम्। वह्निमत्पदस्य प्रतिज्ञायां घटकत्वात् नातिव्याप्तिरिति भावः।

ननु प्रतिज्ञैकदेशे अतिव्याप्तिः अन्यूनानतिरिक्तविषयकशाब्दबुद्धित्वा–वच्छिन्नजन्यतानिवेशेनापि वारयितुं शक्यते। तादृशजन्यतानिरूपितजनकता–वच्छेदकविषयतायाः प्रतिज्ञाघटकेषु सर्वेष्वपि वर्णेषु सत्त्वात् तत्र वह्निमत्समुदायत्वविरहात् व्याप्यत्वविरहात् इत्यत आह–***अन्यूनेति। इत्थं चेति।*** प्रतिज्ञाऽघटकत्वमात्रस्य निवेशे च। प्रतिज्ञाहेतुसमुदाये अयं तस्माद्वह्निमानिति भागे च प्रतिज्ञायाम् अघटके अन्यूनविषयकशाब्दज्ञानजनके अतिव्याप्तिवारणाय अनतिरिक्तविषयकत्वनिवेश इति सिद्धम्।

अथानतिरिक्तविषयकत्वोपादानेऽपि अन्यूनविषयकत्वावच्छिन्नजन्यता–निवेशावश्यकतां प्रदर्श्य अवयवाघटकत्वनिवेशस्य वैयर्थ्यं शङ्कते–***न च तदुपादानेऽपीति।*** अवयवाघटकत्वोपादानेऽपीत्यर्थः। अयं भावः–

वह्निमानित्यादिप्रतिज्ञार्थमात्रविषयकबोधनिष्ठ धूमविशेषित हेतुत्वविषयक शाब्दत्वावच्छिन्नकारण धूमादित्यादिहेतुविषयकज्ञानविषयतामादायावयवाघटके तादृशहेतावतिव्याप्तिवारणायानतिरिक्त विषयकबोधनिष्ठ पक्षतावच्छेदकावच्छिन्नविशेष्यक साध्यतावच्छेदकविशिष्टवैशिष्ट्या- वगाहित्वरूपान्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिज्ज्ञान- विषयतानिरूपकवर्णसमुदायत्वनिवेशस्यावश्यकतया अवयवाघटकत्वनिवेशनं निष्प्रयोजनमिति

---

अवयवाघटकत्वानिवेशे पर्वतो वह्निमानिति प्रतिज्ञैकदेशे पर्वतपदे प्रतिज्ञामात्रार्थविषयकपर्वतो वह्निमानिति बुद्धिनिष्ठपर्वतविषयकबुद्धित्वा- वच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वसत्त्वादतिव्याप्तिः। अवयवाघटकत्वनिवेशे तु पर्वतपदस्य प्रतिज्ञारूपावयवघटकत्वान्नातिव्याप्तिरिति वक्तव्यम्। परं तु तन्निवेशेऽपि 'धूमादालोकवान् पर्वतो वह्निमान् धूमादि'त्यादिन्यायान्तर्गते धूमादिति हेतुवाक्ये अवयवाघटकत्वसद्भावात् प्रतिज्ञार्थमात्रविषयिणी या धूमनिष्ठहेतुतानिरूपकालोकवत्पर्वतो वह्निमानित्याकारकबुद्धिः तन्निष्ठा या धूमनिष्ठहेतुत्वविषयकबुद्धित्वावच्छिन्ना जन्यता तन्निरूपितजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वस्य सद्भावाच्चातिव्याप्तिः प्रसजति। तद्वारणाय ***जन्यतायामन्यूनविषयकत्वावच्छिन्नत्वं*** निवेशनीयम्। अन्यूनविषयकत्वं च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित- साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपकत्वम्। तथा च अवयवाघटकत्वे सति अनुमित्यनतिरिक्तविषयकबोधनिष्ठपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित- साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक- यत्किंचिज्ज्ञानीयविषयितानिरूपकवर्णसमुदायत्वं प्रतिज्ञालक्षणं संपन्नम्। धूमादिति हेतुवाक्यविषयकज्ञानस्य धूमनिष्ठहेतुत्वविषयकबुद्धित्वावच्छिन्नं प्रति जनकत्वेऽपि पक्षतावच्छेदकीभूतधूमहेतुकालोकवत्पर्वतत्वावच्छिन्नविशेष्यता- निरूपितवह्नित्वावच्छिन्नप्रकारतानिरूपकबुद्धित्वावच्छिन्नं प्रत्यजनकतया तदवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वं हेतुवाक्ये नास्तीति नातिव्याप्तिः। इत्थं च प्रतिज्ञैकदेशपर्वतपदविषयकज्ञानस्य पर्वतविषयकबुद्धित्वावच्छिन्नं प्रति जनकत्वेऽपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपित- वह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रत्यजनकतया तदवच्छिन्न- जन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकत्वं पर्वतपदे नास्तीत्यत

वाच्यम्। तादृशहेतुवारणाय अवयवाघटकेत्यनेन अवयवैकदेशमात्रविषयकज्ञाननिष्ठजनकता-व्यावृत्तावयवत्वपर्याप्त्यवच्छेदकयत्किंञ्चिद्धर्मव्यापकविषयताकान्यज्ञानवृत्तित्वावच्छिन्नभेदस्यैवान्यूनानतिरिक्तविषयकबोधजनकतायां विवक्षणीयत्वात्। अवयवत्वं चेदं न्यायान्तर्गतत्वविशेषणशून्यम्। तेन प्रतिज्ञासमानाकारोदासीनवाक्यज्ञाने प्रतिज्ञाज्ञानीय-कारणतायास्सत्त्वेपि तत्संग्रहः, तादृशोदासीनवाक्येऽपि तथाविधावयवत्वपर्याप्तेः।

---

एवातिव्याप्तिवारणसम्भवात् तद्वारणफलकम् अवयवाघटकत्वं व्यर्थमिति।

समाधत्ते – ***तादृशहेतुवारणायेति।*** धूमादालोकवान् पर्वतो वह्निमान् इत्यादिन्यायान्तर्गते धूमादिति हेतुवाक्येऽतिव्याप्तिवारणायेत्यर्थः। व्यावृत्तान्तं भेदस्योपलक्षणम्। न तु तस्य निवेशः। अवयवत्वपर्याप्त्यवच्छेदक-यत्किंचिद्धर्मव्यापकविषयताकान्यज्ञानवृत्तिभिन्नत्वं जनकतायां निवेशनीयम्। एतत्तात्पर्यग्राहकमवयवाघटकेति। तथा च प्रकृतानुमित्यन्यूनानतिरिक्तविषयक-बोधनिष्ठजन्यतानिरूपिता अथ च अवयवत्वपर्याप्त्यवच्छेदक-यत्किञ्चिद्धर्मव्यापकविषयताकान्यज्ञानवृत्तित्वावच्छिन्नभिन्ना या जनकता तदवच्छेदकयत्किंचिज्ज्ञानीयविषयितानिरूपकवर्णसमुदायत्वं प्रतिज्ञालक्षणं सम्पन्नम्। ***धूमादालोकवान्पर्वतो वह्निमान् धूमादित्यत्र*** हेतुवाक्ये नातिव्याप्तिः। हेतुवाक्यज्ञाननिष्ठायां प्रतिज्ञार्थमात्रविषयकबोधजनकतायां अवयवत्वपर्याप्त्य-वच्छेदकप्रतिज्ञात्वव्यापकविषयताकान्यवृत्तित्वस्यैव सत्त्वेन तद्भिन्नत्वविरहात्। प्रतिज्ञात्ववति पर्वतपदादौ हेतुवाक्यनिष्ठविषयताविरहात् हेतुवाक्यविषयतायाः प्रतिज्ञात्वव्यापकत्वाभावात्। एवं प्रतिज्ञैकदेशे पर्वतपदेऽपि नातिव्याप्तिः। पर्वतपदनिष्ठविषयतायाः प्रतिज्ञात्ववति वह्निमत्पदेऽभावेन प्रतिज्ञात्वव्यापकत्वाभावात् पर्वतपदज्ञाननिष्ठजनकतायां अवयवत्वपर्याप्त्यवच्छेदकप्रतिज्ञात्वव्यापक-विषयताकान्यज्ञानवृत्तितया तद्भिन्नत्वविरहात्। तथा चान्यूनविषयकत्वावच्छिन्नत्वं जन्यतायां न निवेशनीयम्। अवयवाघटकेत्यनेनोक्तार्थविवक्षया प्रतिज्ञैकदेशे हेतुवाक्ये चातिव्याप्तिवारणं संभवतीति हृदयम्। अत्र व्याख्याता भ्रान्तः।

अवयवत्वावच्छेदकमित्यनेन पर्वतपदत्वं गृहीत्वा प्रतिज्ञैकदेशेऽतिव्याप्तिः स्यादिति अवयवत्वपर्याप्तिनिवेशः। अवयवत्वपर्याप्त्यवच्छेदकन्यायत्वव्यापकत्वस्य प्रतिज्ञानिष्ठविषयतायामभावेनासंभववारणाय यत्किंचिदिति। यत्किंचित्पदेन प्रतिज्ञात्वं गृहीत्वा समन्वयः कार्यः। असंभववारणाय व्यापकत्वनिवेशः।

वस्तुतस्तु अवयवत्वघटकविशेष्यदलपरित्यागमात्रेणैव व्यावृत्तिस्सङ्गच्छत इति तादृशजनकतापर्यन्तनिवेशने प्रतिज्ञाघटकत्वदलपरित्यागसम्भवेपि तत्परित्यागस्य प्रकृतानुपयुक्तत्वमित्येतल्लाभायैव अवयवाघटकेत्यभिहितमिति।

केचित्तु - यत्र प्रतिज्ञैकदेशस्यापि कथंचित्प्रतिज्ञासमानार्थकत्वं सम्भवति तत्रैकदेशेऽतिप्रसंगवारणायावयवाघटकत्वनिवेशनमावश्यकमित्याहुः। तदसत्; प्रतिज्ञाप्रतिपाद्य-विशिष्टार्थबोधकताया एकदेशे संभवेपि तन्मात्रस्य तथाविधबोधपरत्वाभावात्, तथात्वे

---

ननु अवयवत्वं न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्। तत्पर्याप्त्यवच्छेदकं च न पर्वतो वह्निमानिति वाक्यत्वम्, तस्योदासीनवाक्यसाधारण्यात्। किं तु तत्तद्वाक्यत्वम्। तथा च तत्तत्प्रतिज्ञाविषयतानामेव तद्व्यापकत्वात् तन्निरूपकान्यज्ञानवृत्तित्वस्य उदासीनवाक्यज्ञानसाधारणजनकतायां सत्त्वात् तत्र तद्वृत्तिभिन्नत्वं नास्तीति प्रतिज्ञायां लक्षणासंभव इत्यत आह–***अवयवत्वं चेहेति।*** ***इह***–अवयवत्वपर्याप्त्यवच्छेदकेत्यत्र अवयवत्वमित्यर्थः। ***तत्संग्रहः***– प्रतिज्ञासंग्रहः। ***तथाविधावयवत्वपर्याप्तेः*** न्यायान्तर्गतत्वशून्यं यत् अवयवत्वं प्रतिज्ञाद्यन्यतमत्वं तत्पर्याप्तेरित्यर्थः।

***वस्तुतस्त्वित्यादि।*** सत्यन्तस्य न्यायान्तर्गतत्वे सति अवयवाघटकत्वमात्रमर्थः। न तु उभयघटकभागद्वयाघटितत्वरूपस्य अवयवलक्षणे विशेष्यस्य सत्यन्ते प्रवेशः। तथा च प्रतिज्ञादिहेत्वन्तभागेऽतिव्याप्तिप्रसक्त्या तद्वारणाय अनतिरिक्तपदमिति हि प्रकृतम्। तत्रान्यूनविषयकत्वावच्छिन्नत्वस्य जन्यतायां निवेशे अवयवाघटकत्वदलस्य वैयर्थ्यं भवति चेत् भवतु नाम। तद्वैयर्थ्यकथनस्ये-दानीमनुपयुक्तत्वात् इति भावः। ***तादृशजनकतेति।*** प्रकृतपक्षतावच्छेदकावच्छिन्न-विशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपान्यून-विषयकत्वावच्छिन्नजन्यतानिरूपितजनकतापर्यन्तनिवेशन इत्यर्थः। ***व्यावृत्तिरिति।*** अनतिरिक्तविषयकत्वस्येत्यादिः।

***केचित्त्विति।*** रमाधवः पूज्यः, सदाशिवो वन्द्यः इत्यादौ प्रतिज्ञैकदेशस्य माधवः पूज्यः, शिवो वन्द्यः इत्यादेः प्रतिज्ञार्थविषयकबोधजनकत्वात् तत्रातिव्याप्तिवारणाय अवयवाघटकत्वं निवेश्यम्। तस्य प्रतिज्ञारूपावयव-घटकत्वान्नातिव्याप्तिरिति भावः। ***तदसदित्यादि।*** नानार्थकहर्यादि-

समुदायप्रयोगानुपपत्तेः। कथंचित्प्रयोगेपि वैयर्थ्येन तत्र समुदायमन्तर्भाव्य न्यायत्वानङ्गीकारात्। अप्रकृतार्थपरवाक्यवारणाय वास्तवतथाविधतात्पर्यसत्ताया लक्षणे निवेशनीयतया एकदेशमात्रस्य तादृशार्थपरत्वाभावेनाऽतिप्रसंगानवकाशादिति। **हेत्वन्तस्येति।** कथितान्यूनविषयकत्वावच्छिन्न जन्यतानिरूपितजनकतानिवेशेन तत्तद्भागप्रतिपाद्यविशिष्टार्थबोधजनकत्वमादाय केवलहेत्वादावतिव्याप्तिर्न सम्भवतीति निगमनमात्रं हेतुमात्रं चोपेक्षितम्।

---

पदघटितप्रतिज्ञायामेकार्थतात्पर्येण प्रयुक्तायामर्थान्तरपरप्रतिज्ञात्ववारणाय यदर्थतात्पर्येण वाक्यं प्रयुज्यते तदर्थबोधकवाक्यं प्रतिज्ञेति वाच्यतया **रमाधवः पूज्य** इत्यादौ एकदेशस्य **माधवः पूज्य** इत्यस्य तदर्थतात्पर्यकत्वाभावात् नातिव्याप्तिरिति प्रतिज्ञाद्यघटकत्वं व्यर्थमेव। कथंचिदेकदेशस्य प्रयोगेऽपि समुदायस्यैव रमाधवः इत्यादेः न्यायत्वात् एकदेशघटितस्य न्यायत्वमेव नास्तीति न्यायान्तर्गतत्वाभावादेव वारणात् अवयवाघटकत्वं व्यर्थमिति भावः। **वास्तवतात्पर्यसत्ताया** इति। प्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधकत्वप्रकारकस्वानुकूलकृतिसमानाधिकरणेच्छाविशेष्यत्वं प्रतिज्ञालक्षणमिति भावः। इदं वाक्यममुमर्थं बोधयतु इति इच्छयैव वाक्यप्रयोगात् वाक्ये तादृशतात्पर्यसत्तायाः निर्वाहः।

ननु दीधितौ 'हेत्वन्तस्यायमादिनिगमनान्तस्य च; वारणाय तत्' इत्यनेन प्रतिज्ञाहेतुसमुदाये अयं तस्मात्तथेत्यत्र चातिव्याप्तिवारणाय प्रतिज्ञालक्षणेऽनतिरिक्तविषयकत्वनिवेश इति लभ्यते। तत्र हेतोर्निगमनस्य च वारणायेत्येव कुतो नोक्तम्। अनतिरिक्तविषयकत्वानिवेशे धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेतुवाक्येऽपि अनुमित्यन्यूनविषयकशाब्दबोध-निष्ठधूमनिष्ठहेतुत्वविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतायाः सत्त्वात्, पर्वतो वह्निमानित्यादौ तस्मात्तथेति निगमनेऽपि तादृशबोधनिष्ठवह्निमद्विषयकबुद्धित्वा-वच्छिन्नजन्यतानिरूपितजनकतायाश्च सत्त्वात् इत्यत आह - **कथितान्यूनेति।** तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकविशिष्ट-वैशिष्ट्यविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिज्ज्ञानीय-विषयितानिरूपकवर्णसमुदायत्वविवक्षणे हेतुवाक्ये निगमने च नातिव्याप्तिः। पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वघटितधर्मस्य तत्कार्यतावच्छेदकत्वाभावादिति हेतुमात्रस्य निगमनस्य चोपेक्षेति भावः। **तत्तद्भागेति।** प्रतिज्ञाघटकः यो हेतुसमानार्थको

**यद्यपि सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताप्रसिद्धिः;**

अन्यूनानतिरिक्तविषयकेत्यस्य प्रकृतानुमितिविषयस्यान्यूनविषयस्सन्ननतिरिक्तो विषयो यस्येति व्युत्पत्तेरनुमितिविषयनिष्ठभेद प्रतियोगितानवच्छेदकत्वे सत्यनुमितिविषयातिरिक्तावृत्ति यद्विषयत्वं तत्त्वमिति यथाश्रुतार्थमाक्षिपति – ***यद्यपीति।***

यद्यपि प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यक यत्किंचिदनुमित्यविषयविषयकत्वं पर्वतो वह्निमानित्यादिप्रतिज्ञाजन्यनिखिलबोधानामेवेति तादृशानुमितिविषयत्वसामान्याभावो विवक्षणीयः, तथा च केवलाभिधेयत्वाद्यवच्छिन्न–

---

भागः निगमनघटकश्च यः साध्यसमानार्थको भागः तत्प्रतिपाद्यो यो विशिष्टार्थः धूमनिष्ठहेतुत्ववह्नित्वविशिष्टवह्न्यादिः तद्विषयकबुद्धित्वावच्छिन्नजन्यतानिरूपित–जनकत्वमादायेत्यर्थः। ***तादृशजनकतेति।*** अन्यूनविषयकत्वावच्छिन्न–जन्यतानिरूपितजनकताश्रये यत्किंचिज्ज्ञाने यावन्तो वर्णाः विषयाः तत्समुदायत्वस्येत्यर्थः।

यद्यपीत्यादिदीधितिमवतारयति–***अन्यूनानतिरिक्तेत्यादिना।*** अन्यूनश्चासौ विषयश्च अन्यूनविषयः। अनुमितिविषयस्यान्यूनः अनुमितिविषयनिष्ठभेदाप्रतियोगी, अनतिरिक्तः अनुमितिविषयातिरिक्तभिन्नः विषयः यस्य सः अन्यूनानतिरिक्तविषयकः। तेन यन्निरूपितविषयत्वं प्रकृतानुमितिविषयनिष्ठभेदप्रतियोगितानवच्छेदकं प्रकृतानुमितिविषयातिरिक्तावृत्ति च स बोधः प्रकृतानुमित्यन्यूनानतिरिक्तविषयकः तज्जनकत्वं प्रतिज्ञालक्षणमिति यथाश्रुतमूलाल्लभ्यते। तस्मिन्नर्थे स्वीकृते सति सर्वमभिधेयं प्रमेयमिति प्रतिज्ञायामव्याप्तिः। सर्वस्यापि प्रकृतानुमितिविषयतया अनुमितिविषयातिरिक्तस्याप्रसिद्धेरिति भावः।

सर्वमभिधेयं प्रमेयमिति दीधितिस्थसर्वपदवैयर्थ्यं शङ्कते–***यद्यपीति।*** अनुमित्यविषयाविषयकत्वं हि अनुमित्यनतिरिक्तविषयकत्वं यथाश्रुतम्। तत्र अनुमित्यविषय इत्यनेन प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदका–वच्छिन्नसाध्यकयत्किंचिदनुमित्यविषय इति विवक्षायां पर्वतो वह्निमानिति प्रतिज्ञाजन्यानां सर्वेषामपि बोधानां यत्किंचित्तादृशानुमित्यविषयविषयकत्वस्यैव सत्त्वेन तदविषयाविषयकत्वरूपानतिरिक्तविषयकत्वाभावादसंभवः प्राप्नोति। अतः प्रकृतानुमितिविषयत्वसामान्याभाववदविषयकत्वमेवानतिरिक्तविषयकत्वमिति

पक्षकस्थलेप्यतिरिक्ताप्रसिद्धिरस्त्येव; तथाप्यप्रसिद्धिं स्फुटीकर्तुमभिधेयत्वाद्यवच्छिन्न-पक्षकप्रमेयत्वादिसाध्यकस्थले विश्वमेवानुमितिविषय इत्येतल्लाभाय सर्वमित्युक्तम्। सर्वेभ्यो दर्शपूर्णमासावित्यत्रेव प्रक्रान्तकतिपयपदार्थमात्रवृत्तिसर्वत्वावच्छिन्नतात्पर्येणापि विशेष्यवाचकपदान्तरासमभिव्याहृत सर्वपदप्रयोगसम्भवात्सर्वं प्रमेयमित्युक्तावनुमितिविषयतायाः केवलान्वयित्वालाभादभिधेयमित्युक्तम्।

एवं च किंचिद्धर्मावच्छिन्नांशेऽभेदेन स्वार्थविशेषणकबोधपरसर्वशब्दस्य तद्धर्मव्यापकविधेयव्याप्यसर्वत्वबोधकताव्युत्पत्तेरभिधेयत्वव्यापकसर्वत्वलाभान्नानुमितेः

---

वक्तव्यम्। पर्वतो वह्निमानिति प्रतिज्ञाजन्ये यस्मिन् बोधे यः पर्वतो वह्निर्वा विषयः तस्य पर्वतान्तरादिविषकयत्किंचिदनुमितिविषयत्वाभावेऽपि अनुमितिविषयत्वसामान्याभाववत्त्वं नास्ति, तत्पर्वतादिविषयकानुमितिविषयत्वेन तत्सामान्याभावासम्भवात्। अतः पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्न-साध्यकानुमितिविषयत्वसामान्याभाववान् घटादिः तदविषयको यो बोधः तज्जनकत्वं पर्वतो वह्निमानित्यादिप्रतिज्ञायामस्तीति नासम्भवः। इत्थं च अभिधेयं प्रमेयमित्यत्रापि अभिधेयत्वावच्छिन्नपक्षकप्रमेयत्वावच्छिन्नसाध्यकानुमिति-विषयत्वसामान्याभावः अप्रसिद्धः, घटादिरूपप्रमेये पटादिप्रमेयविषयकानुमित्य-विषयत्वसत्त्वेऽपि प्रमेयत्वावच्छिन्नसाध्यकानुमितिविषयत्वसामान्याभावस्य कुत्राप्यसत्त्वात्। तथा च सर्वपदं मास्तु इत्याक्षेपः। सर्वस्याप्यनुमितिविषयत्वे सत्येवानुमितिविषयत्वसामान्याभावोऽप्रसिद्ध इति वक्तुं शक्यते। अतः अभिधेयं प्रमेयमित्यनुमितौ अभिधेयत्वेन सर्वं विषय इति स्फुटतया ज्ञापयितुं सर्वपदमुपात्तमिति समाधानम्।

ननु तर्हि सर्वं प्रमेयमित्येव प्रतिज्ञाशरीरमस्तु, पक्षशरीरे अभिधेयपदं किमर्थमित्यत आह–**सर्वेभ्यो दर्शपूर्णमासाविति।** 'एकैकस्मै कामायान्ये क्रतव इज्यन्ते, सर्वेभ्यो ज्योतिष्टोमः, सर्वेभ्यो दर्शपूर्णमासौ' इत्यत्र विशेष्यवाचकपदान्तरासमभिव्याहृतः सर्वशब्दः यथा ततः पूर्ववाक्यप्रस्तुताः पुत्रपशुस्वर्गादयः ये फलविशेषाः तद्वृत्तिसर्वत्वावच्छिन्नपरतया प्रयुज्यते तथा सर्वं प्रमेयमित्युक्ते प्रक्रान्तकतिपयमात्रमेव सर्वत्वेनानुमितिविषय इति लभ्येत, तथा चानुमित्यविषयाप्रसिद्धिरापादयितुं न शक्यत इत्याशयेन विशेष्यवाचकमभिधेयपदं प्रयुक्तम्। तत्प्रयोगे च यत्र किंचिद्धर्मावच्छिन्नेऽभेदसंबन्धेन सर्वशब्दार्थस्य

**न च कोटचप्रसिद्ध्या प्रमेयं न वेति विप्रतिपत्तेः संशयस्य चायोगात् न तादृशी प्रतिज्ञा,**

---

विशेषणत्वतात्पर्येण सर्वशब्दः प्रयुज्यते तत्र तद्धर्मव्यापकविधेयव्याप्य-सर्वत्वबोधकत्वमिति व्युत्पत्त्या अभिधेयत्वव्यापकसर्वत्वलाभात् अनुमितेः सर्वविषयकत्वसिद्ध्या अनुमित्यविषयाप्रसिद्धिरापादयितुं शक्येति भावः। ***तद्धर्मव्यापकेति।*** तद्धर्मव्यापकं विधेयव्याप्यं च यत् सर्वत्वं तद्बोधकताव्युत्पत्तेरित्यर्थः। यथा सर्वे घटा रूपवन्तः इत्यत्र घटत्वव्यापकरूपवत्त्वव्याप्यसर्वत्ववन्तो घटा रूपवदभिन्ना इति बोधः, तथा सर्वमभिधेयं प्रमेयम् इति वाक्यात् अभिधेयत्वव्यापकप्रमेत्वव्याप्यसर्वत्ववत् अभिधेयं प्रमेयाभिन्नमिति बोध इति द्रष्टव्यम्।

दीधितौ – ***न चेति।*** वाच्यमित्यनेनान्वयः। सर्वमभिधेयं प्रमेयमित्यत्र अतिरिक्ताप्रसिद्ध्या अव्याप्तिराशङ्कितुं न शक्यते, तादृशप्रतिज्ञाघटित-न्यायप्रयोगस्यैवासंभवात्। सन्दिग्धे हि न्यायः प्रवर्तते। सन्देहश्च मध्यस्थस्य विप्रतिपत्तिवाक्याधीनः। अभिधेयं प्रमेयं न वेति विप्रतिपत्तिर्वा संशयो वा न संभवति, प्रमेयत्वावच्छिन्नभेदरूपकोटचप्रसिद्धेः। न च प्रमेय–तद्भेदकोटिकस्य वा प्रमेयत्वतदभावकोटिकस्य वा संशयस्यासंभवेऽपि प्रमेयत्वं पक्ष (अभिधेय) निष्ठाभावप्रतियोगि न वेति संशयः संभवति, तदधीनः न्यायप्रयोगश्च संभवति। तथा चातिरिक्तविषयाप्रसिद्ध्या अव्याप्त्यापादनं युक्तमेवेति वाच्यम्। तर्हि प्रकृतानुमितिविषयतासमनियतविषयताकत्वमन्यूनानतिरिक्तविषयकत्वमिति विवक्षयातिव्याप्तेर्वारिणीयत्वात्। तथाहि प्रकृतन्यायान्तर्गतत्वे सति प्रकृतानुमितिविषयतासमनियतविषयताकबोधजनकज्ञानविषयवर्णसमुदायत्वं प्रतिज्ञालक्षणम्। सर्वमभिधेयं प्रमेयमित्यनुमितिविषयतासमनियतविषयताको बोधः सर्वमभिधेयं प्रमेयं इत्याकारको बोधः। अनुमितिविषयाणां सर्वेषां बोधविषयत्वात्, बोधविषयाणां सर्वेषामनुमितिविषयत्वाच्च। तादृशबोधजनकज्ञानविषयत्वस्य प्रतिज्ञायां सत्त्वाल्लक्षणसमन्वयः। न चैवं विवक्षणेऽपि सर्वमभिधेयं प्रमेयमिति प्रतिज्ञाघटितन्यायान्तर्गते प्रमेयत्वव्याप्यज्ञेयत्ववत्सर्वमभिधेयमित्याकारके उपनयेऽतिव्याप्तिः। तज्जन्यबोधे अनुमितिविषयाणां सर्वेषां विषयत्वात् इति

**प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वम्, प्रकृतानुमितिप्रकारता-समव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम्।**

---

कतिपयवस्तुमात्रविषयकत्वशङ्केति भावः। ***अतिरिक्ताप्रसिद्धिः*** – प्रकृतानुमितिविषया-तिरिक्ताप्रसिद्धिः। प्रमेयत्वं पक्षनिष्ठाभावप्रतियोगि न वेति संशयसम्भव इत्यतस्तत्संग्रहाया-न्यूनानतिरिक्तविषयकत्वमन्यथा निर्वक्ति- ***प्रकृतेति।*** स्वविषयताव्यापकप्रकृतानुमिति विषयताव्यापकविषयिताकत्वमित्यर्थः। स्वविषयेऽनुमितिविषयान्यूनत्वस्य स्वविषयत्वे तद्विषयताव्यापकत्वपर्यवसितत्वात्, स्वविषयेऽनुमितिविषयानतिरिक्तत्वस्य च तद्विषयत्वे स्वविषयताव्यापकत्वपर्यवसितत्त्वादिति भावः।

---

वाच्यम्। तर्हि प्रकृतानुमितिप्रकारतासमनियतप्रकारताकबोधजनकत्वस्य विवक्षणीयत्वात्। उपनयजन्यबोधे प्रकारीभवतां व्याप्तिघटकाभावत्वादी-नामनुमितावप्रकारतया बोधनिरूपितप्रकारतायाः अनुमितिप्रकारताव्याप्यत्वविरहेण समनियतत्वाभावान्नोपनयेऽतिव्याप्तिः। प्रतिज्ञायां च नाव्याप्तिः। तज्जन्यबोधेऽनुमितौ प्रकारीभवतां सर्वेषां प्रकारत्वात् शाब्दबोधे प्रकरीभवतां सर्वेषाम् अनुमितौ प्रकारत्वाच्चेति न चेत्यादिवाच्यमित्यन्तस्य दीधितिग्रन्थस्याशयः।

गादाधर्या –***तत्संग्रहायेति।*** सर्वमभिधेयं प्रमेयमिति प्रतिज्ञायामव्याप्ति-वारणायेत्यर्थः। ***स्वविषयतेति।*** शाब्दबोधनिरूपितविषयतेत्यर्थः। ***स्वविषये*** – शाब्दबोधविषये। ***स्वविषयत्वे-*** शाब्दबोधविषयत्वे। ***तद्विषयता-***अनुमितिविषयता। ***स्वविषये-*** शाब्दबोधविषये। ***तद्विषयत्वे-*** अनुमितिविषयत्वे। तथा च प्रकृतन्यायान्तर्गतत्वे सति स्वविषयताव्यापकप्रकृतानुमितिविषयताव्यापक-विषयताकशाब्दबोधजनकज्ञानविषयत्वं प्रतिज्ञालक्षणमिति भावः।

शङ्कते – ***यद्यपीत्यादिना।*** 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञायां लक्षणासत्त्वमाशङ्कते। तथाहि – प्रकृतपक्षकप्रकृतसाध्यकानुमितिपदेन 'पर्वतो वह्निमान्', 'सर्वमभिधेयं प्रमेयम्' इत्याकारकसमूहालम्बनानुमितेरपि ग्रहीतुं शक्यतया तद्विषयताव्यापकत्वं पर्वतो वह्निमानिति प्रतिज्ञाजन्यशाब्दबोधविषयतायां दुर्घटम्। अनुमितिविषयतायाः विश्ववृत्तित्वात् शाब्दबोधे च विश्वस्याविषयत्वात्। न च शाब्दबोधपदेनापि 'सर्वमभिधेयं प्रमेयम्' इति वाक्यान्तरसहित 'पर्वतो वह्निमानि'ति प्रतिज्ञाजन्यः 'पर्वतो वह्निमान्', 'सर्वमभिधेयं प्रमेयम्' इत्याकारकः

यद्यपि समूहालम्बनात्मक प्रकृतपक्षक वह्निविधेयकानुमितिविषयतायाः विश्ववृत्तितया पर्वतो वह्निमानिति प्रतिज्ञाजन्यबोधो न तादृशानुमितिविषयतासमनियतविषयताकः, वाक्यान्तरसहित-तज्जन्यसमूहालम्बनबोधजनकयत्किंचिज्ज्ञानविषयवर्णसमुदायत्वं न तन्मात्रपर्याप्तं; यत्किंचित्प्रकृतानुमितिव्यक्तिविषयतासमनैयत्यस्य विवक्षणेपि च निगमनाद्यतिव्याप्तिर्दुर्वारैव, तज्जन्यबोधस्यापि पर्वतो वह्निमान् धूमज्ञानज्ञाप्यवह्निमांश्चेत्याकारकसमूहालम्बनानुमिति-विषयतासमनियतविषयताकत्वात्।

तथापि प्रकृतपक्षकप्रकृतसाध्यव्याप्यवत्तापरामर्शत्वावच्छिन्नजनकतानिरूपित-जन्यतावच्छेदकविषयताकत्वेन यद्विषयतासमनैयत्यं तत्वस्य विवक्षितत्वान्न दोषः।

---

समूहालम्बनशाब्दबोधो ग्राह्यः, तन्निरूपितविषयतायाश्च पूर्वोक्तसमूहालम्बनानुमिति-विषयतासमनियतत्वमस्तीति तादृशबोधजनकत्वमादाय पर्वतो वह्निमानिति प्रतिज्ञायां समन्वयः कार्य इति वाच्यम्। तादृशसमूहालम्बनशाब्दबोधजनकज्ञानीय-वर्णत्वव्यापकसमुदायत्वस्य वाक्यान्तरसहितप्रतिज्ञायां सत्त्वेऽपि केवलप्रतिज्ञाया-मभावात्। न च यत्किंचित्प्रकृतानुमितिव्यक्तिविषयतासमनियतत्वं विवक्षणीयम्, पर्वतो वह्निमानित्यसमूहालम्बनानुमितिं गृहीत्वा लक्षणं संगमनीयमिति वाच्यम्। एवमपि 'तस्माद्वह्निमान्' इति निगमनेऽतिव्याप्तेः। यत्किंचित्प्रकृतपक्ष-साध्यकानुमितिपदेन 'पर्वतो वह्निमान्' धूमज्ञानज्ञाप्य-वह्निमांश्च', इत्याकारकसमूहालम्बनानुमितिर्ग्राह्या, तद्विषयतासमनियतत्वं निगमनजन्यो यः 'धूमज्ञानज्ञाप्यवह्निमान्पर्वतः' इति बोधः तद्विषयतायामस्ति, अनुमितिविषयाणां सर्वेषां शाब्दबोधविषयत्वात्। तथा च तादृशबोधजनकत्वात् निगमनस्येति शङ्कितुराशयः।

***न तन्मात्रपर्याप्तमिति।*** न प्रतिज्ञामात्रपर्याप्तम्, किं तु वाक्यान्तर-सहितप्रतिज्ञापर्याप्तं, तथा च न प्रतिज्ञायाः संग्रह इति भावः। अथेदमसंगतम्, वाक्यान्तरसहितप्रतिज्ञाजन्यसमूहालम्बनबोधनिष्ठसाध्यविशिष्टपक्षविषयकत्वा-वच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रतिज्ञामात्रविषयकयत्किंचिज्ज्ञानीय-विषयताश्रयवर्णसमुदायत्वस्य प्रतिज्ञामात्रे सत्त्वात्। मैवम्। तादृशबोधनिष्ठ-वह्निसम्बन्धिविषयकत्वावच्छिन्नजन्यतामादायैकदेशेऽतिव्याप्तिवारणाय तादृशबोधनिष्ठा या या जन्यतेति विवक्षणस्यावश्यकतया प्रतिज्ञासंग्रहो दुश्शक एव। न चैकदेशस्य न्यायावयवत्वदलेनैव वारणं शङ्क्यम्।

**सकलाभिधेयवृत्तिधर्मवत्सकलाभिधेयनिष्ठात्यन्ताभावाप्रतियोग्याकाशाभाववद्वेदं द्रव्यमित्यादौ विशिष्टपक्षबोधकोपनयेऽतिव्याप्तेः।**

---

नन्वेवं सत्युक्तस्थलीयोपनयेऽतिव्याप्तिः, तज्जन्यबोधस्यापि विश्वविषयकत्वेन तथाविधानुमितिविषयितासमनियतविषयताकत्वादित्यतो विषयतापदस्य प्रकारत्वाभिप्रायेणान्यथा तदर्थं निर्वक्ति – ***प्रकृतेति।*** तादृशोपनयजन्यबोधे प्रकारीभवतोऽभावत्वादेस्तादृशानुमिताव-प्रकारत्वान्न तत्प्रकारतायास्समनैयत्यमिति नातिव्याप्तिरिति भावः। ***सकलेति।*** सकलाभिधेयवृत्ति-धर्मवदिदं द्रव्यमिति योजना। तादृशानुमिताविवतत्स्थलीयोपनयजन्यबोधे विश्वस्यैवाभिधेयत्वेन प्रकारतया तत्प्रकारतायास्समनैयत्यमक्षतमेवेति भवत्यतिव्याप्तिरिति भावः।

---

प्रतिज्ञाद्यघटकत्वाघटितस्यैव तस्य निवेश इत्यभिप्रायात्।

समाधत्ते–***तथापीति।*** यद्विषयतेत्यत्र यत्पदं प्रतिज्ञाजन्यशाब्दबोधपरम्। विषयतात्वेनेत्यत्र तृतीयार्थः अवच्छिन्नत्वं समनैयत्यान्वयि। तथा च यादृशाब्दबोधनिरूपितविषयत्वं प्रकृतपक्षकप्रकृतसाध्यव्याप्यवत्तापरामर्शजन्यता-वच्छेदकविषयतासमनियतं तादृशविषयत्वावच्छिन्नजन्यतानिरूपितजनकता-वच्छेदकविषयताश्रयवर्णसमुदायत्वं प्रतिज्ञात्वमिति पर्यवसितम्। पर्वतत्वावच्छिन्न-विशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतारूपविषयताया एव पर्वतो वह्निव्याप्यधूमवानितिपरामर्शजन्यतावच्छेदकतया तादृशविषयतासमनियता शाब्दबोधविषयतापि तादृशप्रकारतैव तदवच्छिन्नबोधनिष्ठजन्यतानिरूपितजनकता-वच्छेदकविषयताश्रयवर्णसमुदायत्वं पर्वतो वह्निमानिति प्रतिज्ञायामस्तीति समन्वयः। निगमनजन्यतावच्छेदकधूमज्ञानज्ञाप्यवह्निमत्पर्वतविषयकत्वस्य परामर्शजन्यतावच्छेदकवह्निमत्पर्वतविषयतासमनैयत्यं नास्ति इति न निगमनेऽतिव्याप्तिरिति भावः। यद्यपि निगमनजन्यतावच्छेदकघटक-वह्निमत्पर्वतविषयतायां परामर्शजन्यतावच्छेदकविषयतासमनियतत्वमस्ति, तथापि परामर्शजन्यतावच्छेदकविषयतासमनियतविषयतापर्याप्तावच्छेदकताकजन्यतानिरूपित-जनकतायाः विवक्षणान्न दोष इति ध्येयम्।

***एवं सतीति।*** अनुमितिविषयतासमव्याप्तविषयताकत्वनिवेशे सतीत्यर्थः। उक्तस्थलीयोपनये सर्वमभिधेयं प्रमेयमिति स्थलीयोपनये प्रमेयत्वव्याप्यज्ञेयत्ववत् सर्वमभिधेयमित्याकारके।

दीधितौ–***सकलाभिधेयवृत्तीत्यादि।*** प्रकृतानुमितिप्रकारतासमनियत–

प्रकारताकबोधजनकज्ञानविषयत्वविवक्षणेऽपि स्थलद्वये उपनयेऽतिव्याप्तिः। सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमिति प्रथमस्थलम्। अत्र इदमन्तं पक्षः, द्रव्यत्वं साध्यम्। इदन्त्वं हेतुः। सकलाभिधेयवृत्तिः धर्मः ज्ञेयत्वादिः तद्वत् इदन्त्वादि। तत्रोपनयवाक्यम्– "द्रव्यत्वव्याप्येदन्त्ववत् सकलाभिधेय-वृत्तिधर्मवदिदम्" इत्याकारकम्। अनुमितौ ये ये प्रकाराः ते सर्वेऽप्युपनयजन्यबोधे प्रकाराः। एवमुपनयजन्यबोधे ये ये प्रकाराः तेऽप्यनुमितौ प्रकारा एव। न चोपनयजन्यबोधे प्रकारीभवतां व्याप्तिघटकाभावत्वप्रतियोगित्वादीनां नानुमितौ प्रकारत्वमिति व्याप्यत्वं कथमिति वाच्यम्। अनुमितौ आधेयत्वरूपवृत्त्यंशे निरूपितत्वसंबन्धेन सकलाभिधेयस्य प्रकारत्वात् अभावत्वप्रतियोगित्वादीना-मप्यभिधेयत्वरूपेण प्रकारत्वात्। तथा च; प्रकृतानुमितिप्रकारतासमनियतप्रकारताक-बोधजनकज्ञानविषयत्वस्योपनये सत्वात्तत्रातिव्याप्तिः।

ननु प्रकृतानुमितिनिरूपितविशेषणानवच्छिन्नप्रकारतासमव्याप्त-विशेषणानवच्छिन्नप्रकारताकत्वं बोधे विशेषणम्; उपनयजन्यबोधे अभावत्वप्रतियोगित्वादीनां स्वरूपत एव प्रकारत्वात् तन्निष्टप्रकारताः विशेषणानवच्छिन्नाः। अनुमितौ तु अभावत्वादीनामभिधेयत्वेनैव प्रकारत्वात् तन्निष्ठाः प्रकारताः अभिधेयत्वावच्छिन्नाः। तथा चानुमितिशाब्दबोध-निरूपितानामनवच्छिन्नप्रकारतानां समनैयत्यविरहात् नोपनयेऽतिव्याप्तिरिति चेत् – तर्हि स्थलान्तरेऽतिव्याप्तिरुच्यते। सकलाभिधेयनिष्ठात्यन्ताभावा-प्रतियोग्याकाशाभाववदिदं द्रव्यमिति द्वितीयं स्थलम्। इदमन्तं पक्षः। द्रव्यत्वं साध्यम्। इदन्त्वं हेतुः। सकलाभिधेयनिष्ठात्यन्ताभावाप्रतियोगी य आकाशाभावः तद्वत् इत्यर्थः। आकाशाभावस्य केवलान्वयित्वात् सकलाभिधेयनिष्ठात्यन्ता-भावाप्रतियोगित्वम्। अत्रोपनयवाक्यम्– "द्रव्यत्वव्याप्येदन्त्ववत् सकलाभिधेय-निष्ठात्यन्ताभावाप्रतियोग्याकाशाभाववदिदम्" इत्याकारकम्। तज्जन्यबोधे स्वरूपतः प्रकाराणामभावत्वादीनामपि अनुमितौ स्वरूपतः प्रकारत्वात् निरवच्छिन्नप्रकारतानां समनैयत्यविवक्षणेऽपि भवत्यत्रोपनयेऽतिव्याप्तिरिति भावः।

गादाधर्याम् – ***तादृशानुमिताविवेति।*** सर्वमभिधेयं प्रमेयमित्यनुमिताविवेत्यर्थः। व्याप्तिघटकीभूताभावत्वादीनामपि अनुमितावभिधेयत्वेन प्रकारत्वमिति सूचनाय दृष्टान्तकथनम्। ***एतत्स्थलीयोपनयजन्यबोधे*** इति। सकलाभिधेयवृत्तिधर्मवदिदं

ननु विशेषणानवच्छिन्नप्रकारतानां समनैयत्यं विवक्षणीयम्, अतो नातिव्याप्तिः; उपनयजन्यबोधेऽभावत्वादौ तादृशप्रकारतासत्त्वादुक्तानुमितेस्तादृशप्रकारतायाश्च तत्रासत्वादित्यतोऽनुमितावपि तेषां तथाविधप्रकरताघटनाय स्थलान्तरेऽतिव्याप्तिमाह **सकलाभिधेयेति।** अत्राभावत्वप्रतियोगित्वत्वादीनां स्वरूपतः पक्षतावच्छेदकत्वाद्भवति तथात्वमिति, भावः। द्रव्यमिति विपरीतकोटिप्रसिद्ध्यर्थम्। **विशिष्टपक्षबोधक** इति उपनयस्थेदम्पदेन विशेष्यमात्रपरामर्शेऽन्यूनविषयकत्वं न सम्भवतीति भ्रमनिराकरणाय। व्याप्तिशरीरे साधनसाध्यप्रकारेणैव तदधिकरणान्तर्भावः। नत्वधिकरणत्वेनापीत्यनुमितौ तस्य तत्त्वस्य वा स्वरूपतः प्रकारत्वविरहेऽपि नासङ्गतिः। हेतुरप्यत्रेदन्त्वं, समवायेन

---

द्रव्यमिति प्रतिज्ञाघटितन्यायान्तर्गतः "द्रव्यत्वव्याप्यवत् सकलाभिधेयवृत्तिधर्मवदिदम्" इत्याकारक उपनयः तज्जन्यबोधे इत्यर्थः। **विश्वस्यैवाभिधेयत्वेन प्रकारतयेति।** वृत्तौ निरूपितत्वसंबन्धेनाभिधेयस्य प्रकारत्वात् अभिधेयत्वेन विश्वस्य प्रकारत्वम्। **तत्प्रकारतासमनैयत्यमिति।** अनुमितिप्रकारतासमनियतत्वं शाब्दबोध-प्रकारतायामक्षतमित्यर्थः। **तादृशप्रकारतासत्त्वात्** – निरवच्छिन्नप्रकारतासत्त्वात्। **उक्तानुमितेरिति।** सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमित्याकारकानुमितेरित्यर्थः। निरूपितत्वं षष्ठ्यर्थः प्रकारतान्वयि। **तादृशप्रकारतायाश्च** – निरवच्छिन्न-प्रकारतायाश्च। **तत्रासत्त्वात्**– अभावत्वादावसत्त्वात्। तेषामभिधेयत्वेनैवानुमितौ प्रकारत्वादिति भावः। **तेषाम्**–अभावत्वादीनाम्। **तथाविधप्रकारताघटनाय** –निरवच्छिन्नप्रकारतासम्पादनाय। **तथानुमितिरिति।** अभावत्वादिनिष्ठ-निरवच्छिन्नप्रकारताकानुमितिरित्यर्थः। प्रमेयत्वस्य साध्यत्वे प्रमेयत्वाभाव-रूपकोटयप्रसिद्ध्या साध्यसंशयासंभवात् प्रतिज्ञायाः असंभव इत्यालोच्य द्रव्यत्वसाध्यकप्रतिज्ञानुसरणमित्याह– **द्रव्यमिति** इति। **विपरीतकोटिप्रसिद्ध्यर्थम्** –द्रव्यत्वविरुद्ध– द्रव्यत्वाभावरूपकोटिप्रसिद्ध्यर्थम्। **अन्यूनविषयकत्वं न संभवतीति।** प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वं वा प्रकृतानुमिति-प्रकारतासमव्याप्तप्रकारताकत्वं वा न संभवतीत्यर्थः।

ननु निरवच्छिन्नप्रकारतानां समनैयत्यनिवेशे उक्तोपनयेऽतिव्याप्तिर्न सम्भवति। तस्य व्याप्तिबोधकत्वेन तद्घटकहेतुसामानाधिकरण्यसाध्य-सामानाधिकरण्यघटकाधिकरणानां हेत्वधिकरणत्वेन साध्याधिकरणत्वेन च

द्रव्यमेव वा बोध्यः। गुणादेस्तथात्वे हेतुतावच्छेदकगुणत्वादेः स्वरूपतः उपनयजन्यबोधे भाने कथितप्रकारतासमनैयत्यानुपपत्तेः।

न चाभेदेन विषयतासमनैयत्योक्तावनुमितिविषयतात्वसमनियतस्वविषयतात्वकत्वोक्तौ नायं दोष इति वाच्यम्। हेत्वर्थघटितार्थकप्रतिज्ञाघटकन्यायान्तर्गत हेतुजन्यबोधविषयतायामनुमिति-निरूपितविषयतात्वाभावादनुमितिविषयतात्वव्याप्यस्वविषयतात्वकत्वाभावादेव तादृशबोधवारण-सम्भवेनान्यूनविषयकत्वांशवैयर्थ्यापत्तेः।

---

निवेशे अधिकरणत्वस्य अधिकरणतात्वस्य वा उपनयजन्यबोधे "इदन्त्वाधिकरणवृत्त्यन्ताभावाप्रतियोगिद्रव्यत्वाधिकरणवृत्तीदन्त्ववत् सकलाभिधेयवृत्तिधर्मवदिदम्" इत्याकारके स्वरूपतो भानेनानुमितौ तु तथा आभानेन निरवच्छिन्नानुमितिप्रकारतासमनैयत्याभावात् इत्याशङ्कां निरस्यति – **व्याप्तिशरीर** इति। ***साध्यसाधनप्रकारेणैवेति।*** साध्येन साधनेन वा प्रकारेणेत्यर्थः। एवकारव्यवच्छेद्यं स्पष्टयति–***न त्विति। तस्य तत्त्वस्य वेति।*** अधिकरणत्वस्य अधिकरणतात्वस्य वेत्यर्थः। ***नासंगतिरिति।*** नातिव्याप्त्यसंगतिरित्यर्थः। **हेतुरपीति।** इदन्त्वस्य द्रव्यस्य वा हेतुत्वे इदन्त्वत्वस्य द्रव्यत्वस्य च हेतुतावच्छेदकस्यानुमितौ उपनयजन्यबोधे च स्वरूपतः प्रकारत्वात् निरवच्छिन्नप्रकारतानां समनैयत्यं निर्वहति, समवायेन गुणस्य हेतुत्वे च हेतुतावच्छेदकस्य गुणत्वस्य उपनयजन्यबोधे स्वरूपतः प्रकारत्वात् अनुमितौ तु अभिधेयत्वेन प्रकारत्वात् समनैयत्यं न निवर्हतीति भावः। ***तत्त्वे*** – हेतुत्व इत्यर्थः। ***कथितप्रकारतेति।*** निरवच्छिन्नप्रकारतेत्यर्थः। उक्तोपनयेऽतिव्याप्तिं निराकर्तुं शङ्कते–***न चाभेदेनेति।*** समानाकारकज्ञानीय-विषयतयोरैक्यमिति मतेनेयं शङ्का। पर्वतो वह्निमानित्यनुमितेः प्रतिज्ञाजन्यशाब्दबोधस्य च समानाकारकत्वात् तदीयविषयतयोरैक्यात् अनुमितिविषयतात्ववति शाब्दबोधविषयतात्वसत्त्वात् लक्षणसमन्वयः। 'सकलाभिधेयवृत्तिधर्मवदिदं द्रव्य' मित्यनुमितिविषयतायाः तत्स्थलीयोपनयजन्यशाब्दबोधविषयतायाश्चैक्यं नास्ति, अनुमितिनिरूपितपक्षनिष्ठविशेष्यतायाः द्रव्यत्वनिष्ठप्रकारतानिरूपितत्वात् शाब्दबोधनिरूपिततन्निष्ठविशेष्यतायाः द्रव्यत्वव्याप्यहेतुनिष्ठप्रकारतानिरूपितत्वात् इत्येवं निरूपकभेदेन विशेष्यताभेदात् अनुमितिनिरूपितविषयतात्वव्यापक-

न हि साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्न विषयता-बहिर्भूतविषयता अनुमितिनिरूपिता॥समूहालम्बनानुमितिनिरूपितत्वमादाय नातिप्रसङ्गावकाशः, प्रकृतपरामर्शजन्यतावच्छेदकविषयतात्वस्यैव निवेशनीयत्वादन्यथाऽसम्भवापातादिति।

---

स्वनिरूपितविषयतात्वकत्वं शाब्दबोधे नास्तीति नातिव्याप्तिरिति शङ्काग्रन्थाशयः।

उक्तरीत्या उपनयेऽतिव्याप्तिवारणेऽपि अन्यूनविषयकत्वदलवैयर्थ्यं स्यादिति समाधत्ते-**हेत्वर्थघटितार्थकेत्यादिना।** धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेतुवाक्येऽतिव्याप्तिवारणाय हि अनुमितिविषयताव्यापकविषयताकत्व-रूपान्यूनविषयकत्वोपादानम्। हेतुवाक्यजन्यबोधीयहेतुत्वनिष्ठविषयतायाः अनुमितिनिरूपिततद्विषयतायाश्च नास्त्यैक्यम्, अनुमितिविषयतायाः आलोकविषयतानिरूपितत्वात् हेतुजशाब्दविषयतायाश्चातथात्वात्। एवं च शाब्दबोधविषयतात्वव्यापकत्वं अनुमितिविषयतात्वे नास्तीति अनुमितिविषयतात्व-व्यापकस्वविषयतात्वकत्वविरहादेव शाब्दबोधस्य, हेतुवाक्येऽतिव्याप्तिवारणसंभवात् अन्यूनविषयकत्वं व्यर्थं स्यादिति भावः। हेत्वर्थः हेतुवाक्यार्थः धूमनिष्ठहेतुत्वं तद्घटितः यः अर्थः वह्निविशिष्टधूमहेतुकालोकवत्पर्वतरूपः तद्बोधकप्रतिज्ञा घटिका यस्मिन् न्याये तदन्तर्गतं यत् हेतुवाक्यं तज्जन्यबोधविषयतायामित्यर्थः। **अनुमितिनिरूपितेति।** धूमादालोकवान् पर्वतो वह्निमानित्यनुमितिनिरूपितेत्यर्थः। **स्वविषयतात्वकत्वाभावादेवेति।** अनतिरिक्तविषयताकत्वाभावादित्यर्थः। **तादृशबोधवारणसंभवेनेति।** हेतुजन्यबोधवारणसंभवेनेत्यर्थः। हेतुजन्यबोधविषयताया-मनुमितिविषयतात्वाभावमुपपादयति- **न हीति। बहिर्भूतविषयतेति।** केवलहेत्वर्थविषयतेत्यर्थः। **नानुमितिनिरूपितेति।** तथा च नातिव्याप्तिर्हेतुवाक्य इति भावः।

ननु धूमादालोकवान् पर्वतो वह्निमान् धूमादिति समूहालम्बनानुमिति-निरूपितहेतुवाक्यार्थविषयतायाः हेतुजन्यशाब्दबोधविषयतायाश्चैक्यात् हेतावतिव्याप्तिरित्यत्राह- **समूहालम्बनेति।** अनुमितिविषयतापदेन प्रकृतपरामर्शजन्यतावच्छेदकविषयतैव विवक्षणीया, अन्यथा प्रतिज्ञार्थहेत्वर्थविषयक-समूहालम्बनानुमितिनिरूपितविषयतात्वे प्रतिज्ञाजन्यशाब्दबोधविषयतात्वव्यापकत्व-विरहेण प्रतिज्ञायां लक्षणासम्भवप्रसङ्गात्। इत्थं च हेतुवाक्यार्थविषयतायाः

**तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयकत्वं, तदन्यूनविषयकत्वम्।**

---

उपनयविशेषातिव्याप्त्याभिधानं चोपलक्षणपरम्। अन्यूनविषयकेत्यस्य निरुक्तार्थकत्वे सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽप्यतिव्याप्तिर्बोध्या। तज्जन्यबोधविषयतायाः विश्ववृत्तित्वेनानुमितिविषयताव्यापकत्वात्।

एवं तादृशान्यूनानतिरिक्तविषयकत्वस्य किंचिज्जन्यतानवच्छेदकत्वेन तदवच्छिन्न-जन्यताविवक्षणासम्भवेन प्रतिज्ञाहेतुजन्यसमूहालम्बनबोधमादाय तन्निष्ठहेत्वर्थ-विषयकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रये धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ हेत्ववयवेऽतिव्याप्तिर्दुर्वारा। तस्यानवच्छिन्नप्रकारताव्यापकप्रकारताकत्वविवक्षयापि वारणासम्भवादित्यपि बोध्यम्।

एतद्दोषवारणाय प्रथमतोऽनुमित्यन्यूविषयकत्वमन्यथा निर्वक्ति – ***तथापि प्रकृतेति।***

---

परामर्शजन्यतावच्छेदकत्वाभावात् परामर्शजन्यतावच्छेदकविषयतायां च शाब्दबोधविषयतात्वविरहात् न हेतुवाक्ये कथमप्यतिव्याप्तिप्रसङ्गः। तथा च तद्वारणफलकस्यान्यूनविषयकत्वस्य वैयर्थ्यमेवेति भावः।

**उपनयविशेष** इति। द्रव्यत्वव्याप्यवत् सकलाभिधेयवृत्तिधर्मवदिदम् इत्याद्युपनये इत्यर्थः। ***निरुक्तार्थकत्व*** इति। अनुमितिविषयताव्यापक-विषयताकत्वरूपत्व इत्यर्थः। सर्वस्मात् कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेतुवाक्यं सर्वस्मादिति वाक्यम्। तज्जन्यबोधविषयता विश्ववृत्तिरिति अनुमितिविषयाः सर्वे तद्बोधविषया इति अनुमितिविषयताव्यापकत्वं बोधविषयतायामस्तीति तादृशबोधजनके हेतुवाक्येऽतिव्याप्तिः।

एवं धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र प्रतिज्ञाहेतूभय-जन्यसमूहालम्बनात्मकबोधविषयतायाः प्रकृतानुमितिविषयताव्यापकत्वात् अनुमितिविषयताव्यापकविषयताकसमूहालम्बनबोधनिष्ठधूमनिष्ठहेतुत्व-विषयकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रये हेतुवाक्येऽतिव्याप्तिः। न च शाब्दबोधनिष्ठजन्यतायामन्यूनानतिरिक्तविषयकत्वावच्छिन्नत्वनिवेशान्नातिव्याप्तिरिति वाच्यम्। अन्यूनानतिरिक्तविषयकत्वस्य किञ्चिज्जन्यतावच्छेदकत्वविरहेण अप्रसिद्धिनिबन्धनासम्भवापत्त्या तदवच्छिन्नजन्यतानिवेशासंभवादिति भावः। ***तादृशान्यूनेति।*** प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वरूपस्यान्यूनानतिरिक्त-

एतच्च पक्षतावच्छेदकविशिष्टार्थकम्। तदनुपादाने प्रमेयाद्वाच्यत्ववानयं प्रमेयः प्रमेयादित्यादौ, हेत्ववयवे, यत्किंचिद्धर्मावच्छिन्नत्वोपादानेपि घटान्यत्ववद्रूपघटान्यतरस्मात् घटान्यत्ववत्सधर्मा घटो घटान्यत्ववानित्याकारिका, या सामानाधिकरण्यसम्बन्धेन घटान्यत्वसाध्यकप्रतिज्ञा

---

विषयकत्वस्येत्यर्थः। **तस्याः** –अतिव्याप्तेः। **तादृशप्रकारता** – अनवच्छिन्न-प्रकारता। धूमादालोकवान् पर्वतो वह्निमानित्यनुमितिनिरूपिता अनवच्छिन्नाः प्रकारता यत्र सन्ति धूमत्वादौ, तत्र तादृशप्रतिज्ञाहेतूभयजन्यसमूहालम्बनबोधनिरूपिताः निरवच्छिन्नप्रकारताः सन्ति, इति समूहालम्बनबोधजनके हेतावतिव्याप्तिरिति भावः।

दीधितौ – **तथापीत्यादि।** ननु यद्यपीत्यादिना सर्वमभिधेयं प्रमेयमित्यत्र अतिरिक्ताप्रसिद्ध्या अव्याप्तेराशङ्कितत्वात् तत्समाधानाय प्रथमतः अनतिरिक्तवृत्तित्वमेव परिष्करणीयम्, तदुपेक्ष्य आदावन्यूनविषयकत्वनिर्वचनं न संगतमिति चेत् – सत्यम्। तादृशविषयताविलक्षणविषयताशून्यत्वमिति निर्वक्ष्यमाणानतिरिक्तवृत्तित्वशरीरे विलक्षणत्वप्रतियोगितया अन्यूनविषयताया एव तादृशपदेन परामर्शात् आदावन्यूनविषयकत्वनिर्वचनमिति। सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताप्रसिद्धावपि प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारता-निरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयानिवर्त्यसंशयनिवर्तकता-वच्छेदकविषयताशून्यत्वरूपस्यानतिरिक्तविषयकत्वस्य उक्तप्रतिज्ञाजन्यबोधे सत्त्वात् तज्जनकत्वमादाय सर्वमभिधेयं प्रमेयमिति प्रतिज्ञायां लक्षणं संगमनीयमिति भावः।

गादाधर्याम् – **एतद्दोषवारणायेति।** सर्वस्मात् कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेतुवाक्येऽतिव्याप्तिवारणायेत्यर्थः। तादृशहेतुवाक्यजन्यबोधे विश्वस्यैव विषयत्वेन प्रकृतानुमितिविषयताव्यापकविषयताकत्वरूपपूर्वोक्तान्यून-विषयकत्वसत्त्वेऽपि इदानीं निरुच्यमानस्य पक्षतावच्छेदकसर्वहेतुक-कालत्ववदिदन्त्वावच्छिन्नविशेष्यकसाध्यवैशिष्ट्यावगाहित्वरूपस्यान्यून-विषयकत्वस्याभावान्नातिव्याप्तिरिति भावः। **एतच्चेत्यादि।** तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्य-विषयकशाब्दबोधजनकज्ञानविषयत्वं प्रतिज्ञालक्षणम्। तत्र पक्षतावच्छेदका-

तद्घटितन्यायान्तर्गते रूपघटान्यतरत्वावच्छिन्नांशे सामानाधिकरण्यसम्बन्धेन विशेषणतापन्न-घटान्यत्वघटित तादृशसम्बधावच्छिन्नहेतुताके विशिष्ठान्यतररूपहेतु प्रतिपादके

---

वच्छिन्नत्वनिवेशस्य प्रयोजनमाह – ***तदनुपादान*** इति। प्रकृतपक्षविशेष्य-केत्येतावन्मात्रोक्तौ 'सर्वस्माद्वाच्यत्ववानयं प्रमेयः प्रमेया'दित्यत्र हेतुवाक्येऽतिव्याप्तिः। पञ्चमीप्रकृत्यर्थे प्रमेये प्रकृत्यर्थतावच्छेदकं प्रमेयत्वं हेतुवाक्यजन्ये प्रमेयनिष्ठं हेतुत्वं इति बोधे भासते। तथा च प्रकृतपक्षरूपे प्रमेये प्रमेयत्वत्वरूपसाध्यतावच्छेदकविशिष्टप्रमेयत्ववैशिष्टयावगाहित्वं बोधस्यास्तीति तज्जनके हेतुवाक्येऽतिव्याप्तिः। पक्षतावच्छेदकावच्छिन्नत्वनिवेशे तु प्रमेयत्वरूपसाध्यस्य निर्धर्मितावच्छेदककमेव भानं तत्रेति प्रमेयहेतुकवाच्यत्व-रूपपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रमेयत्ववैशिष्टयावगाहित्वं हेतुजन्यबोधस्य नास्तीति नातिव्याप्तिरिति भावः।

ननु यत्किंचिद्धर्मावच्छिन्नविशेष्यकेत्युक्त्यापि उक्तदोषो वारयितुं शक्यते, किं पक्षतावच्छेदकावच्छिन्नत्वनिवेशेनेत्यत आह – ***यत्किंचिद्धर्मेति।*** तथा च पक्षतावच्छेदकावच्छिन्नत्वानिवेशे यत्किंचिद्धर्मावच्छिन्नत्वनिवेशेऽपि "घटान्यत्ववद्रूपघटान्यतरस्मात् घटान्यत्ववत्सधर्मा घटो घटान्यत्ववान्, घटान्यत्ववद्रूपघटान्यतरस्मात्" इति न्यायान्तर्गते 'घटान्यत्ववद्रूपघटान्यतरस्मात्' इति हेतुवाक्येऽतिव्याप्तिः। तज्जन्यबोधे रूपघटान्यतरत्वरूपयत्किंचिद्धर्मावच्छिन्ने घटान्यत्वरूपसाध्यस्य भानेन यत्किंचिद्धर्मावच्छिन्नविशेष्यकसाध्यता-वच्छेदकविशिष्टवैशिष्टयावगाहिबोधजनकत्वस्य हेतुवाक्ये सत्त्वात् अतस्तन्निवेशः। तन्निवेशे तु रूपघटान्यतरत्वं न पक्षतावच्छेदकमिति नातिव्याप्तिरिति। अत्र सधर्मा घट इत्यन्तं पक्षः। पक्षतावच्छेदकशरीरे रूपघटान्यतरत्वावच्छिन्ने घटान्यत्वं सामानाधिकरण्यसम्बन्धेन विशेषणम्। सामानाधिकरण्यं च स्वरूपसमवायोभयघटितम्। स्वरूपसंबन्धेन घटान्यत्ववति कपाले तदीयरूपस्य घटस्य च समवायसंबन्धेन सत्त्वात् रूपघटान्यतरस्य स्वरूपसमवायोभयघटित-सामानाधिकरण्यसंबन्धेन घटान्यत्ववैशिष्टयम्। रूपघटान्यतरहेतुक-घटान्यत्ववत्त्वमपि सामानाधिकरण्यसंबन्धेन पक्षतावच्छेदकघटकम्। घटान्यत्वं साध्यम्। साध्यतावच्छेदकसम्बन्धोऽपि न स्वरूपसंबन्धः घटे स्वरूपसंबन्धेन

हेत्ववयवेऽतिव्याप्तिः। घटत्वादौ सामानाधिकरण्यसम्बन्धेन रूपवति व्यभिचारवारकतया

---

घटान्यत्वविरहेण बाधापत्तेः। किं तु स्वरूपसमवायोभयघटितसामानाधिकरण्यम्। स्वरूपसंबन्धेन घटान्यत्वाधिकरणे कपाले समवायसम्बन्धेन घटस्य वृत्तित्वात् पक्षे घटे उक्तसंबन्धेन साध्यसत्त्वनिर्वाहः। घटान्यत्वविशिष्टरूपघटान्यतरस्मात् इति हेतुः। तत्र घटान्यत्ववैशिष्ट्यं स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन। हेतुतावच्छेदकसम्बन्धोऽपि न समवायः, घटान्यत्वविशिष्टस्य घटस्य कपालरूपस्य वा समवायेन पक्षे घटेऽभावात् स्वरूपसिद्ध्यापत्तेः। अपि तु समवायघटितसामानाधिकरण्यमेव। समवायेन रूपघटान्यतरवति कपाले समवायेन घटस्य वृत्तेः पक्षे हेतुसत्त्वनिर्वाहः। सामानाधिकरण्यसंबन्धेन रूपघटान्यतरमात्रस्य हेतुत्वे हेतुतावच्छेदकशरीरे घटान्यत्वाप्रवेशे समवायेन रूपवति घटे समवायेन वर्तमाने घटत्वे सामानाधिकरण्यसंबन्धेन रूपघटान्यतरात्मकहेतुसत्त्वात् घटे घटान्यत्वविरहेण घटत्वे सामानाधिकरण्यसंबन्धेन घटान्यत्वरूपसाध्याभावाच्च व्यभिचारः स्यादिति तद्वारणाय हेतौ घटान्यत्वविशेषणम्। तद्विशेषणे दत्ते च घटान्यत्वसमानाधिकरणस्य कपालरूपस्य वा घटस्य वा घटत्वे सामानाधिकरण्यसंबन्धेनासत्त्वान्न व्यभिचारः। सामानाधिकरण्यसंबन्धेन घटान्यत्वविशिष्टस्य यस्य कस्यापि सामानाधिकरण्यसंबन्धेन हेतुत्वे सामानाधिकरण्यसंबन्धेन घटान्यत्वविशिष्टा या सत्ता तस्याः सामानाधिकरण्यसंबन्धेन घटरूपे विद्यमानतया हेतुमति तत्र सामानाधिकरण्यसंबन्धेन घटान्यत्वरूपसाध्याभावात् व्यभिचारः। अतः रूपघटान्यतरस्य हेतुत्वानुसरणम्। तथा सति घटान्यत्वसमानाधिकरणस्य कपालरूपस्य घटस्य वा सामानाधिकरण्यसंबन्धेन घटरूपेऽसत्त्वान्न व्यभिचारः। सामानाधिकरण्यसंबन्धेन घटान्यत्वविशिष्टस्य घटमात्रस्य सामानाधिकरण्यसंबन्धेन हेतुत्वे, घटत्वे घटस्य सामानाधिकरण्यसंबन्धेनाभावात् व्यभिचाराप्रसक्त्या हेतुविशेषणस्य घटान्यत्वस्य वैयर्थ्यं स्यादिति रूपस्य हेतुत्वानुसरणम्। रूपमात्रस्य हेतुत्वे पक्षमात्रविशेष्यकत्वनिवेशेनापि अतिव्याप्तिवारणं संभवतीति अन्यतरत्वावच्छिन्नस्य हेतुत्वानुधावनम् इति घट्टार्थः।

अथ पङ्क्त्यर्थ उच्यते। **तद्घटितन्यायान्तर्गते** –प्रतिज्ञाघटितन्यायान्तर्गते। अस्य हेत्ववयवे इत्यनेनान्वयः। **रूपघटान्यतरत्वावच्छिन्ने** – कपालरूपघटान्यतरस्मिन्। **सामानाधिकरण्यसंबन्धेन** – स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन। **विशेषणतापन्नेति।** विशेषणीभूतेन घटान्यत्वेन घटिता या सामानाधिकरण्यसंबन्धावच्छिन्ना हेतुता तत्के इत्यर्थः। **विशिष्टान्यतरेति।** घटान्यत्वविशिष्टरूपघटान्यतरात्मकस्य हेतोः प्रतिपादके इत्यर्थः। **हेत्ववयवे** –हेतुवाक्यरूपेऽवयवे। **अतिव्याप्तिरिति।** रूपघटान्यतरत्वात्मकयत्किंचिद्धर्मावच्छिन्नविशेष्यकघटान्यत्वरूपसाध्यवैशिष्ट्यावगाहिबोधजनकत्वसत्त्वात् अतिव्याप्तिरित्यर्थः। हेतुघटकस्य घटान्यत्वरूपविशेषणस्य प्रयोजनमाह – **घटत्वादाविति।** रूपवतीत्यनेन हेतुसत्त्वं सूचितम्। तथा च घटरूपस्यापि अन्यतरान्तर्गततया सामानाधिकरण्यसंबन्धेन तस्य घटत्वे सत्त्वेन तत्र च सामानाधिकरण्यसंबन्धेन घटान्यत्वरूपसाध्याभावात् व्यभिचारः। घटान्यत्वरूपे विशेषणे दत्ते च तद्वैशिष्ट्यं कपालरूपस्यैव, तस्य सामानाधिकरण्येन घटत्वेऽसत्त्वान्न व्यभिचार इति भावः। **घटान्यत्वात्मकविशेषणस्येति।** अस्य सार्थक्यमिति परेणान्वयः। घटान्यत्वमात्रं न हेतुः साध्याविशिष्टत्वात्। घटान्यत्वविशिष्टरूपस्य घटान्यत्वविशिष्टघटस्य वा हेतुत्वे त्वाह –**धर्मिभेदेनेति।** रूपभिन्नतया घटात्मकविशेष्यस्येत्यर्थः। सार्थक्यमिति परेणान्वयः। घटमात्रस्य विशेष्यत्वे घटान्यत्वं व्यर्थम्, सामानाधिकरण्यसंबन्धेन घटस्य घटत्वेऽभावेन व्यभिचारविरहात्। रूपमात्रस्य विशेष्यत्वे पक्षविशेष्यकत्वनिवेशेनाप्यतिव्याप्तिवारणसंभवात् पक्षतावच्छेदकावच्छिन्नत्ववैयर्थ्यमिति अन्यतरदुपात्तमिति भावः।

ननु रूपघटान्यतरस्यापि अन्यतरत्वेन हेतुत्वं मास्तु। घटान्यत्वविशिष्टत्वेनैव हेतुत्वमस्त्वित्यत आह – **घटान्यत्वसमानाधिकरणेति। व्यभिचार वारणायेति।** तथा सति सत्ताया अपि कपलान्तर्भावेण घटान्यत्वविशिष्टतया तस्याः घटत्व–घटरूपादौ सत्त्वेन व्यभिचारः स्यादिति भावः। घटान्यत्वविशिष्टस्यैव हेतुत्वे तु सामानाधिकरण्यसंबन्धेनापि न घटत्वघटरूपादौ व्यभिचार इति घटान्यत्वोपलक्षितस्यैवान्यतरस्य हेतुत्वम्, विशिष्टहेतुके च न प्रयोजनमिति अवधेयम्। **विशेष्यतावच्छेदकस्य** – रूपघटान्यतरत्वस्य।

घटान्यत्वात्मकविशेषणस्य, धर्मिभेदेन विशेष्यस्य, घटान्यत्वसमानाधिकरणसत्तासमानाधिकरणे घटरूपादौ व्यभिचारवारकतया च विशेष्यतावच्छेदकस्य सार्थक्यमित्यवधेयम्। सामानाधिकरण्यसम्बधस्य वृत्त्यनियामकतया व्यापकत्वाघटकत्वेपि नित्यद्रव्यावृत्ति-धर्मशून्यत्वान्निरवयवं गगनं नित्यं नित्यद्रव्यावृत्तिधर्मशून्यत्वात्, वह्निमत्पर्वतावृत्ति-धर्मशून्यत्वादालोकवान् पर्वतो वह्निमान् वह्निविशिष्टपर्वतावृत्तिधर्मशून्यत्वादित्यादौ हेत्ववयवेऽतिव्याप्तिवारणाय पक्षतावच्छेदकवैशिष्ट्यनिवेशनमावश्यकम्। अखण्डाभाव-घटकतया हेतुघटकद्रव्यत्वपर्वतत्वादीनामवैयर्थ्यम्।

---

इदमत्रावधेयम् – अत्र हेतुकोटौ यावतां निवेशस्तेषां तेषां पक्षकोटौ निवेशो हेतुवाक्यजन्यबोधस्यानतिरिक्तविषयकत्वसम्पादनार्थम्। पक्षे सधर्मेत्यनुपादाने पक्षनिश्चयकाल एव पक्षे साध्यनिश्चयसम्पत्तेः संशयाभावात् न्यायप्रयोगानुपपत्तिरतस्तन्निवेशः। बाधवारणाय स्वरूपसमवायोभयघटित-सामानाधिकरण्यस्य साध्यतावच्छेदकसम्बन्धत्वम्। घटान्यत्ववद्रूप-घटोभयत्वावच्छिन्नस्य हेतुत्वे घटान्यत्वस्य वैयर्थ्यापत्तिः। उभयत्वावच्छिन्नस्य सामानाधिकरण्यसंबन्धेन घटत्वादावभावेन व्यभिचाराभावात्। न चेष्टापत्तिः। हेतुवाक्यजन्यबोधस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावेन हेतुवाक्येऽतिव्याप्त्यनापत्त्या पक्षतावच्छेदकावच्छिन्नत्वव्यावृत्त्यसंगतेः। अतो घटान्यत्वविशिष्टरूपघटान्यतरत्वावच्छिन्नस्य हेतुत्वमिति।

ननु सामानाधिकरण्यस्य वृत्त्यनियामकसम्बन्धतया व्यापकतावच्छेदकत्वं न संभवति। व्यापकतानवच्छेदकसम्बन्धस्य साध्यतावच्छेदकसंबन्धत्वं न भवतीत्यतः स्थलान्तरे पक्षतावच्छेदकावच्छिन्नत्वनिवेशस्य प्रयोजनमाह – ***सामानाधिकरण्यसम्बन्धस्येति।*** सामानाधिकरण्यसंबन्धेन साध्यत्वे व्याप्तिरेव न संभवति, तस्य वृत्त्यनियामकतया हेतुसमानाधिकरणाभावीयतत्संबन्धावच्छिन्न-प्रतियोगित्वाप्रसिद्धेरिति भावः। "नित्यद्रव्यावृत्तिधर्मशून्यत्वान्निरवयवं गगनं नित्यं नित्यद्रव्यावृत्तिधर्मशून्यत्वात्" इत्यत्र पक्षः गगनम्। हेतुवाक्यजन्यबोधे नित्यत्वविशेष्यतया द्रव्यस्य भानात् गगनस्यापि द्रव्यत्वात् द्रव्ये नित्यत्ववैशिष्ट्यविषयकस्य तस्य बोधस्य पक्षे गगने नित्यत्ववैशिष्ट्यावगाहित्वात् तज्जनके हेतुवाक्येऽतिव्याप्तिः। पक्षतावच्छेदकावच्छिन्नत्वनिवेशे तु द्रव्यत्वावच्छिन्ने नित्यत्ववैशिष्ट्यावगाहित्वेऽपि पक्षतावच्छेदकगगनत्वावच्छिन्ने नित्यत्व-

**प्रकृतपञ्चम्यर्थपक्षकप्रतिज्ञास्थले तु पक्षे प्रकृत्यर्थस्य वैशिष्ट्यबोधको हेतुर्नतु प्रकृतसाध्यस्य।**

---

साध्यतावच्छेदकविशिष्टसाध्यनिवेशनप्रयोजनमाह – **पञ्चम्यर्थेति।** हेतुत्वं प्रमेयाद्वाच्यत्ववत्प्रमेयादित्यादौ हेतुजन्यबोधस्य विभक्त्यर्थहेतुत्वे प्रमेयाद्यात्मकप्रकृत्यर्थ-वैशिष्ट्यावगाहित्वेपि प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यानवगाहित्वान्नातिव्याप्तिरिति

---

वैशिष्ट्यावगाहित्वं बोधस्य नास्तीति नातिव्याप्तिः। ननु पक्षतावच्छेदकावच्छिन्नत्वनिवेशेऽपि "वह्निमत्पर्वतावृत्तिधर्मशून्यत्वादालोकवान् पर्वतो वह्निमान् वह्निमत्पर्वतावृत्तिधर्मशून्यत्वा"दित्यत्र हेतावतिव्याप्तिः। हेतुजन्यबोधस्य पर्वतत्वरूपपक्षतावच्छेदकावच्छिन्ने वह्निवैशिष्ट्यावगाहित्वसद्भावादिति चेत्–न। पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यकत्वस्य विवक्षितत्वात्। उक्तस्थले वह्निमत्पर्वतावृत्तिधर्मशून्यत्वहेतुकालोकवत्पर्वतत्वं पक्षतावच्छेदकता-पर्याप्त्यधिकरणम्, तदवच्छिन्नविशेष्यकवह्निवैशिष्ट्यावगाहित्वं प्रतिज्ञाजन्य-बोधस्यैवास्ति, न हेतुवाक्यजन्यबोधस्येति नातिव्याप्तिरिति भावः। पक्षतावच्छेदकतापर्याप्तिनिवेशार्थमेव द्वितीयस्थलानुधावनम्। पक्षमुख्यविशेष्यता लक्षणे न निविष्टेत्याशयेनेमानि प्रयोजनान्युक्तानि।

ननु नित्यावृत्तिधर्मशून्यत्वात्, वह्निमदवृत्तिधर्मशून्यत्वात् इत्येव कथं नोक्तम्, द्रव्यपदं पर्वतपदं चानर्थकमित्यत आह–***अखण्डाभावघटकतयेति।***

दीधितौ–***पञ्चम्यर्थपक्षकेत्यादिना*** साध्यतावच्छेदकविशिष्टसाध्यनिवेशस्य प्रयोजनमुच्यते। पक्षतावच्छेदकावच्छिन्ने साध्यवैशिष्ट्यावगाहिबोधजनकत्वं प्रतिज्ञात्वमित्युक्तौ यत्र पञ्चमीविभक्त्यर्थः हेतुत्वं पक्षः तत्र हेतुत्वं प्रमेयाद्वाच्यत्ववत् प्रमेयात् इत्यादौ हेतुवाक्येऽतिव्याप्तिः। हेतुजन्ये प्रमेयनिष्ठं हेतुत्वमिति बोधे हेतुत्वत्वरूपपक्षतावच्छेदकावच्छिन्ने प्रमेयवैशिष्ट्यं भासते। अतः प्रमेयाद्वाच्यत्वरूपसाध्यस्यापि प्रमेयतया साध्यवैशिष्ट्यावगाहित्वं बोधस्यास्तीति तज्जनके हेतावतिव्याप्तिः। साध्यतावच्छेदकविशिष्टेति निवेशे तु प्रमेयज्ञानज्ञाप्यवाच्यत्वत्वरूपसाध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकत्वं बोधस्य नास्ति। प्रमेयत्वेनैव साध्यस्य भानादिति नातिव्याप्तिः इति भावः। ***प्रकृत्यर्थस्य***– प्रमेयस्य। ***हेतुः***– हेतुवाक्यम्। ***प्रकृतसाध्यस्य***–

भावः। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित साध्यतावच्छेदकावच्छिन्नप्रकारकत्वमेव पर्यवसितोर्थः। सम्बन्धविशेषश्चैतद्दले न प्रवेश्यः प्रयोजनविरहात्; अतः पञ्चम्यर्थे प्रकृत्यर्थस्य यादृशसम्बन्धेनान्वयस्तस्य वृत्त्यनियामकतया व्यापकत्वाघटकत्वेपि नैतद्व्याावृत्त्यसङ्गतिः।

यदि च जन्यग्रहविषयत्वरूप पञ्चम्यर्थैकदेशजन्यत्वे प्रकृत्यर्थस्य हेतुज्ञानस्यान्वयः, न तु परम्परासम्बधेन तादृशविषयत्वे, तदा जन्यत्वपक्षकोक्तसाध्यहेतुकस्थले व्यावृत्तिर्बोध्या। पक्षमुख्यविशेष्यकत्वपर्यन्तानिवेशात्, न तु तादृशविषयत्वत्वावच्छिन्नपक्षकस्थले, हेतुजन्यबोधस्य तादृशविशिष्टपक्षे इतरवैशिष्ट्यानवगाहित्वात्।

---

प्रकृतसाध्यतावच्छेदकावच्छिन्नस्य। अत्रेदं बोध्यम् – प्रमेयाद्वाच्यत्ववत् इत्यत्र वाच्यत्ववतो वाच्यस्यैव साध्यत्वम्, न तु वाच्यत्वस्य। तथा सति "जन्यत्वपक्षकोक्तसाध्यहेतुकस्थले" इत्युत्तरत्र वाच्यत्वसाध्यकस्थलस्यैव परामर्शे तत्स्थलीयहेतौ व्यावृत्तिदानासंगतिः स्यात्। प्रमेयादित्यत्र प्रमेयपदस्य लक्षणया ज्ञानपरतया वाच्यत्वबोधकत्वासंभवात्। वाच्यस्यसाध्यत्वे तु प्रमेयज्ञानस्यापि वाच्यतया साध्यबोधकत्वात्। अत एव प्रमेयाद्वाच्यत्ववदित्यस्यापि नासंगतिः, अन्यथा हेतोर्निराकाङ्क्षत्वं स्यात्। इदानीं तु साध्यघटकप्रमेयज्ञानज्ञाप्यत्वस्य वाच्यत्वेऽन्वयः, हेत्वर्थस्य तस्य वाच्यत्ववति अन्वय इति। गादाधर्या ***पर्यवसितार्थ*** इति। अन्यूनविषयकत्वस्य इति शेषः।

ननु साध्यतावच्छेदकावच्छिन्नत्वनिवेशो व्यर्थः। ***उक्तातिव्याप्तिवारणाय***– साध्यतावच्छेदकसंबन्धेन साध्यप्रकारकत्वस्य निवेशनीयत्वात्। हेतुजन्यबोधे पञ्चम्यर्थे हेतुत्वे आधेयतासंबन्धेन प्रमेयवैशिष्ट्यभानेऽपि साध्यतावच्छेदकस्वरूपसंबन्धेन प्रमेयस्य अप्रकारत्वात् नातिव्याप्तिः। न च साध्यतावच्छेदकसंबन्धनिवेशेऽपि यत्र आधेयतासंबन्धेन वाच्यत्वस्य साध्यत्वम्, हेतुत्वस्य पक्षत्वम् तत्र प्रमेयादिति हेतौ अतिव्याप्तिः। अतः साध्यतावच्छेदकावच्छिन्नत्वनिवेश आवश्यक इति वाच्यम्। आधेयत्वस्य वृत्त्यनियामकतया तस्य साध्यतावच्छेदकसंबन्धत्वासम्भवात् इत्याशङ्कां निरस्यति–***सम्बन्धविशेषस्य चेति।*** ननु हेतुत्वं प्रमेयात् वाच्यत्ववत् प्रमेयात् इत्यत्र हेतौ प्रमेयपदं लक्षणया प्रमेयज्ञानपरम्। पञ्चम्यर्थः जन्यज्ञानविषयत्वम्। तदेकदेशे जन्यत्वे प्रकृत्यर्थस्य प्रमेयज्ञानस्य निरूपितत्वसंबन्धेन अन्वयः। तथा

तादृशविषयताविलक्षणविषयताशून्यत्वम् ।

---

***तादृशविषयताविलक्षणेति।*** साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताविलक्षणेत्यर्थकम्। तद्विलक्षणत्वं न तद्भिन्नत्वं, प्रतिज्ञाजन्यबोधीयसाध्यादिविषयतायास्तद्भिन्नत्वेनासम्भवापातात्। तादृशविषयताभिन्नमुख्यविशेष्यताशून्यत्वनिवेशेनासम्भवोद्धारे निगमनातिव्याप्तितादवस्थ्यम्। अन्यूनविषयकत्वदलवैयर्थ्यां च। धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ हेत्ववयवजन्यबोधीय-

---

च हेतुत्वत्वावच्छिन्ने साध्यस्य अप्रकारत्वात् हेतुवाक्ये अतिव्याप्तिविरहेण साध्यतावच्छेदकविशिष्टत्वनिवेशनं व्यर्थमिति शङ्कते-***यदि चेति। परंपरासंबन्धेनेति।*** स्वविषयकज्ञाननिरूपितत्वसंबन्धेन प्रमेयस्य पञ्चम्यर्थविषयत्वे अन्वयो नास्तीत्यर्थः। समाधत्ते-***तदेति।*** 'जन्यत्वं प्रमेयात् वाच्यत्ववत् प्रमेयात्' इत्यत्र हेतुवाक्यजन्यबोधे पञ्चम्यर्थतावच्छेदकजन्यत्वत्वरूपपक्षतावच्छेदकावच्छिन्ने प्रकृत्यर्थप्रमेयज्ञानवैशिष्ट्यभानेन वाच्यवैशिष्ट्यस्यापि भानात्, प्रमेयज्ञानस्यापि वाच्यत्वात् इति हेतुवाक्येऽतिव्याप्तिः स्यात्। साध्यतावच्छेदकविशिष्टत्वनिवेशे तु प्रमेयज्ञानत्वविशिष्टवाच्यप्रकारकस्यापि हेतुजन्यबोधस्य वाच्यत्वावच्छिन्नप्रकारकत्वं नास्तीति नातिव्याप्तिरिति भावः। ***तादृशविषयत्वत्वावच्छिन्नेति।*** जन्यज्ञानविषयत्वत्वावच्छिन्नेत्यर्थः। ***तादृशविशिष्टपक्ष*** इति। जन्यज्ञानविषयत्वत्वविशिष्टे पक्षे इत्यर्थः। ***इतरवैशिष्ट्यानवगाहित्वादिति।*** तदेकदेशजन्यत्व एव प्रकृत्यर्थवैशिष्ट्यावगाहित्वादिति भावः।

'सर्वम् अभिधेयम् प्रमेयम्' इत्यादौ अतिरिक्ताप्रसिद्ध्या अव्याप्तिवारणाय अनतिरिक्तविषयकत्वं तादृशविषयताविलक्षणविषयताशून्यत्वमिति दीधितौ परिष्कृतम्। एवं परिष्कारे कृते सति अव्याप्तिवारणप्रकारं प्रदर्शयितुं भूमिकामारचयति-***साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्यादिना।*** साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताविलक्षणविषयताशून्यत्वम् अनतिरिक्तविषयकत्वम्। तद्घटकविलक्षणत्वं न भिन्नत्वरूपम्। 'पर्वतो वह्निमान्' इति प्रतिज्ञाजन्यबोधीयसाध्यनिष्ठविषयतायाः पक्षतावच्छेदकावच्छिन्नविषयताभिन्नतया तद्भिन्नविषयताशून्यत्वस्य बोधे अभावेन प्रतिज्ञायां लक्षणासम्भवप्रसङ्गात्। न

हेतुत्वनिष्ठमुख्यविशेष्यतायास्तादृशविषयताभिन्नत्वात्। एतेन तादृशविषयतानन्तःपातित्वं प्रकृतपरामर्शजन्यतानवच्छेदकत्वं वा तदित्यपि निरस्तम्। उक्तस्थले आलोकाद्यंशे हेतुत्वप्रकारताया एव तादृशविषयतान्तःपातित्वात्। प्रकृतपरामर्शजन्यतावच्छेदकत्वाच्च। हेतुजन्यबोधीयतद्विषयताया अतथात्वात्।

न च तथाविधविषयतावच्छेदककोटयप्रविष्टधर्मावच्छिन्नविषयताशून्यतानिवेशात्

---

च साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न-विषयताभिन्नमुख्यविशेष्यताशून्यत्वं बोधस्य अनतिरिक्तविषयकत्वम्। प्रतिज्ञाजन्यबोधे पक्षतावच्छेदकावच्छिन्नविषयताभिन्नायाः साध्यनिष्ठप्रकारतायाः सत्त्वेऽपि मुख्यविशेष्यतायाः निरूपकतासंबन्धेन अभावात् नासम्भव इति वाच्यम्। एवमपि 'अयं तस्मात् तथेति' निगमनवाक्येऽतिव्याप्तितादवस्थ्यात्। तज्जन्यबोधे पक्षतावच्छेदकावच्छिन्नविषयताभिन्नायाः मुख्यविशेष्यताया अभावात्। किञ्च तथाविवक्षणे अन्यूनविषयकत्वदलवैयर्थ्यात् 'धूमादालोकवान् पर्वतो वह्निमान् धूमात्' इत्यादौ हेतुवाक्यजन्यबोधीयहेतुत्वनिष्ठमुख्यविशेष्यतायाः पक्षतावच्छेदकावच्छिन्नविषयताभिन्नतया तच्छून्यत्वविरहादेव तत्रत्यहेतौ अतिव्याप्त्यप्रसक्त्या तद्वारणफलकस्य अन्यूनविषयकत्वस्य वैयर्थ्यात्। **एतेनेत्यादि।** तादृशविषयताविलक्षणत्वं तादृशविषयतानन्तःपातित्वम्, अथ वा प्रकृतपरामर्शजन्यतानवच्छेदकत्वम्। तथा च साध्यतावच्छेदकावच्छिन्नप्रकारता-निरूपितपक्षतावच्छेदकावच्छिन्नविषयतानन्तःपातिनी प्रकृतपरामर्शजन्यतानवच्छेदिका वा या विषयता तच्छून्यत्वम् अनतिरिक्तविषयकत्वम्। तच्छून्यबोधजनकत्वं प्रतिज्ञालक्षणम्। 'अयं तस्मात् तथेति' निगमनजन्यबोधे वह्नित्वावच्छिन्नप्रकारतानिरूपित - पर्वतत्वावच्छिन्न - विषयतानन्तःपातिन्याः परामर्शजन्यतानवच्छेदिकायाश्च धूमज्ञानज्ञाप्यत्वनिष्ठविषयतायाः सत्त्वेन तच्छून्यत्वविरहात् न निगमनेऽतिव्याप्तिः इति कैश्चिदुक्तम् अपास्तम्। 'धूमादालोकवान् पर्वतो वह्निमान् धूमात्' इत्यत्र आलोकनिष्ठविशेष्यतानिरूपितायाः हेतुत्वनिष्ठप्रकारताया एव साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयतान्तर्गतत्वात्-प्रकृतपरामर्शजन्यतावच्छेदकत्वाच्च हेतुवाक्यजन्यबोधीयहेतुत्वनिष्ठविषयतायाः अतादृशत्वात् तादृशविषयानन्तःपातिविषयताशून्यत्वं हेतुजन्यबोधे नास्तीत्यत

न दोष इत्यपि साधु, यत्र प्रमेयसामान्यस्य पक्षतावच्छेदकादिघटकता तत्र तादृशविषयतावच्छेदककोटचप्रविष्टाप्रसिद्धेः। विलक्षणावच्छेदकतानिवेशेपि द्रव्यव्याप्य-धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ न्यायान्तर्गतनिगमनादावतिव्याप्तिः,

---

एव हेतावतिव्याप्तिवारणसम्भवात् अन्यूनविषयकत्वदलवैयर्थ्यात् इति भावः। ***तद्विषयताया*** इति। हेतुत्वनिष्ठविषयताया इत्यर्थः। ***अतथात्वादिति।*** तादृशविषयतानन्तःपातित्वात् प्रकृतपरामर्शजन्यतानवच्छेदकत्वाच्चेत्यर्थः।

***न च तथाविधेति।*** साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपित-पक्षतावच्छेदकावच्छिन्नविषयतावच्छेदककोटचप्रविष्ठधर्मावच्छिन्नविषयता-शून्यबोधजनकत्वम् अनतिरिक्तविषयकबोधजनकत्वम्। तादृशविषयतावच्छेदक-कोटचप्रविष्ट धूमज्ञानज्ञाप्यत्वत्वावच्छिन्नविषयताशालित्वान्निगमनजन्यबोधस्य, न निगमनेऽतिव्याप्तिः। धूमादालोकवान्पर्वतो वह्निमान् धूमादित्यत्र धूमनिष्ठहेतुत्वनिष्ठविषयतायाः पक्षतावच्छेदकावच्छिन्नविषयतावच्छेदककोटि-प्रविष्टं यत् धूमनिष्ठहेतुत्वत्वं तदवच्छिन्नतया तत्कोटचप्रविष्टधर्मावच्छिन्नविषयता-शून्यत्वं हेतुजन्यबोधस्यास्तीति हेतावतिव्याप्तिः, तद्वारकतया अन्यूनविषयकत्व-सार्थक्यमिति भावः। **न दोष** इति। न निगमनेऽतिव्याप्तिर्न वा अन्यूनविषयकत्व-वैयर्थ्यमित्यर्थः। न च प्रतिज्ञायां पर्वतो वह्निमानित्यादौ कथं समन्वयः पक्षतावच्छेदकावच्छिन्नविषयतावच्छेदककोटचप्रविष्टो यः साध्यतावच्छेदकः तदवच्छिन्नविषयताया एव प्रतिज्ञाजन्यबोधे सत्त्वादिति वाच्यम्। साध्यतावच्छेदकावच्छिन्नविषयतावच्छेदककोटचप्रविष्टो यो धर्मः तदवच्छिन्नविषयताशून्यत्वस्य विवक्षितत्वात्। ***यत्र प्रमेयसामान्यस्येति।*** सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमित्यादौ प्रमेयसामान्यं अभिधेयत्वेन रूपेण पक्षतावच्छेदकप्रविष्टमिति पक्षतावच्छेदककोटचप्रविष्टस्य धर्मस्याप्रसिद्ध्या तत्र प्रतिज्ञालक्षणाव्याप्तिरिति भावः।

ननु विषयतावच्छेदककोटचप्रविष्टधर्मावच्छिन्नत्वं तादृशविषयतानिरूपिता-वच्छेदकताशून्यधर्मनिष्ठावच्छेदकताकत्वम्। तत्रावच्छेदकताद्वयेऽपि निरवच्छिन्नत्वं विशेषणं दातव्यम्। तथा च साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षता-वच्छेदकावच्छिन्नविषयतानिरूपितनिरवच्छिन्नावच्छेदकताशून्यधर्मनिष्ठनिरवच्छिन्ना-

तज्जन्यबोधविषयतावच्छेदकधूमत्वादेस्तादृशविषयतावच्छेदककोटिप्रविष्टत्वनियमात्। अपि तु तादृशविषयताशालिनिश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकत्वमेव तत्।

---

वच्छेदकताकविषयताशून्यबोधजनकत्वमिति पर्यवसितम्। पर्वतत्ववह्नित्वनिष्ठ-निरवच्छिन्नावच्छेदकताशून्यः घटत्वादिः तन्निष्ठनिरवच्छिन्नावच्छेदकताक-विषयतावान् घटवद्भूतलमित्यादिबोधः तादृशविषयताशून्यो बोधः पर्वतो वह्निमानिति बोधः तज्जनकत्वं पर्वतो वह्निमानिति प्रतिज्ञायामस्तीति लक्षणसमन्वयः। सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमित्यादौ विश्वस्यैव पक्षतावच्छेदकत्वेऽपि तन्निष्ठा विषयतावच्छेदकता अभिधेयत्वावच्छिन्ना, निरवच्छिन्नावच्छेदकता सकलत्वादिनिष्ठा, तादृशावच्छेदकताशून्यः घटत्वादिः तन्निष्ठावच्छेदकताकविषयताशून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति लक्षणगमनान्न दोष इत्यत आह– ***विलक्षणावच्छेदकतानिवेशेऽपीति।*** विलक्षणत्वं निरवच्छिन्नत्वम्। ***द्रव्यव्याप्येति।*** तथा च विलक्षणावच्छेदकतानिवेशेऽपि द्रव्यव्याप्यधूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादिन्यायान्तर्गते "वह्निव्याप्यधूमवत्त्वात् वह्निमान् अयम्' इत्याकारके निगमनेऽतिव्याप्तिः। तज्जन्यबोधविषयतावच्छेदकस्य निरवच्छिन्नधूमत्वादेः पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितनिरवच्छिन्ना-वच्छेदकताश्रयत्वात् तच्छून्यधर्मनिष्ठावच्छेदकताकविषयताशून्यत्वस्य निगमनजन्यबोधे सत्त्वात्। यद्यपि पक्षतावच्छेदककोटचप्रविष्टमबाधितत्वादिकं निगमनजन्यबोधविषयतावच्छेदकम्; तथापि तज्जन्यबोधेऽबाधितत्वादिभानं नास्तीत्याशयेनैतदतिव्याप्तिप्रसञ्जनमिति द्रष्टव्यम्।

***अपि तु तादृशेति।*** तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालि-निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यसंशयप्रतिबन्धकता-वच्छेदकविषयताशून्यत्वमनतिरिक्तविषयकत्वम्। तदाश्रयबोधजनकत्वं लक्षणम्। संयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयताशालि-निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशाली संशयः पर्वतो वह्निमान्नवेत्याकारकः, तादृशप्रतिबध्यताशून्यः संशयः भूतलं घटवन्न वेत्यादिः तत्प्रतिबन्धकतावच्छेदिका घटवद्भूतलविषयता तच्छून्यो बोधः पर्वतो

निगमनादिजन्यबोधीयज्ञानज्ञाप्यात्वादिविषयतायास्तादृशनिश्चयत्वावच्छिन्नानिवर्त्य ज्ञानज्ञाप्यत्वादि-संशयप्रतिबन्धकतावच्छेदकतया तद्वारणम्। उक्तहेत्ववयवजन्यबोधनिवर्त्यस्य हेतुत्वं धूमीयं नवेत्यादिसंशयस्य धूमादिज्ञानज्ञाप्यत्वघटितपक्षतावच्छेदकावच्छिन्नपक्षकसाध्यता-वच्छेदकावच्छिन्नप्रकारकनिश्चयनिवर्त्यतया तादृशबोधविषयताया न तथाविधविषयता-विलक्षणतेत्यन्यूनपदस्य व्यावृत्तिसङ्गतिः। सर्वेषामेव संशयानां स्वविरोधिविषयक-तथाविधविषयताशालिसमूहालम्बननिश्चयनिवर्तनीयतया तादृशनिश्चयानिवर्त्य संशयाप्रसिद्धिः;

---

वह्निमानित्याकारकः तज्जनकत्वं पर्वतो वह्निमानिति प्रतिज्ञायामस्तीति लक्षणसमन्वयः। वह्निप्रकारकपर्वतविशेष्यकनिश्चयत्वावच्छिन्नाप्रतिबध्यः यः धूमज्ञानज्ञाप्यं न वेत्याकारकः संशयः तत्प्रतिबन्धकतावच्छेदकज्ञानज्ञाप्यत्वविषयतायाः एव निगमनजन्यबोधे सत्त्वेन तादृशविषयताशून्यबोधजनकत्वं निगमने नास्तीति नातिव्याप्तिः। धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेतुजन्यशाब्दबोधीयायाः धूमनिरूपितज्ञानज्ञाप्यत्वनिष्ठविषयतायाः वह्नित्वावच्छिन्न-प्रकारतानिरूपितधूमज्ञानज्ञाप्यालोकवत्पर्वतत्वावच्छिन्नविषयताशालिनिश्चय-प्रतिबध्यसंशयप्रतिबन्धकतावच्छेदकत्वमेवास्ति। धूमज्ञानज्ञाप्यालोकवान् पर्वतो वह्निमान् इति निश्चयस्य ज्ञानज्ञाप्यत्वं धूमनिरूपितं न वा इति संशयं प्रत्यपि प्रतिबन्धकत्वात् तादृशनिश्चयप्रतिबध्यतादृशसंशयं प्रति धूमनिरूपितं ज्ञानज्ञाप्यत्वमिति शाब्दबोधस्य प्रतिबन्धकत्वेन ज्ञानज्ञाप्यत्वविषयतायाः प्रतिबन्धकतावच्छेदकत्वात्। तथा च तादृशनिश्चयाप्रतिबध्यसंशयप्रतिबन्धकतावच्छेदकविषयताशून्यत्वं हेतुजन्यबोधेऽस्तीति तत्रत्यहेतुवाक्येऽतिव्याप्तिवारकतयान्यूनपदसार्थक्यमिति भावः। ***उक्तहेत्ववयवेति।*** धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादिस्थलीय-हेतुवाक्यजन्यबोधप्रतिबध्यस्येत्यर्थः। ***धूमादिज्ञानेति।*** धूमनिरूपितज्ञानज्ञाप्यत्वघटितं यत् पक्षतावच्छेदकं धूमज्ञानज्ञाप्यालोकवत्पर्वतत्वं तदवच्छिन्नविशेष्यतानिरूपिता या वह्नित्वावच्छिन्नप्रकारता तन्निरूपकनिश्चयप्रतिबध्यतयेत्यर्थः। ***तादृशबोधविषयतायाः*** –हेतुजन्यबोधनिरूपितायाः ज्ञानज्ञाप्यत्वनिष्ठविषयतायाः। ***तथाविधविषयता-विलक्षणतेति।*** साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न-विषयताविलक्षणतेत्यर्थः।

निश्चयनिष्ठत्वमुपेक्ष्य निश्चयत्वावच्छिन्नत्वनिवेशस्य प्रयोजनमाह – ***सर्वेषामेव संशयानामिति।*** वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयता-

अतः ***तादृशनिश्चयत्वावच्छिन्नेति।*** इत्थं चाधिकमवगाहमानेपि निगमनजन्यबोधे साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षविषयत्वस्याक्षततया धूमज्ञानज्ञाप्यत्वादिसंशयस्य तादृशविषयताशालिनिश्चयनिवर्त्यत्वानुपपत्तिरित्यपि समाहितम्।

---

शालिनिश्चयानिवर्त्यः संशयः भूतलं घटवन्न वेत्यादिसंशयः इति वक्तव्यम्। परं तु तथा वक्तुं न शक्यते। पर्वतो वह्निमान् भूतलं घटवच्चेति समूहालम्बननिश्चयस्यापि वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्न-विशेष्यताशालितया तत्प्रतिबध्यत्वस्यैव तादृशसंशये सत्त्वात्। तथा च तादृशनिश्चयाप्रतिबध्यसंशयाप्रसिद्ध्या लक्षणासंभव इति तद्वारणाय निश्चयत्वावच्छिन्नत्वनिवेशः। अवच्छिन्नत्वं च व्यापकत्वम्। तथा च वह्निप्रकारकपर्वतविशेष्यकनिश्चयत्वस्य असमूहालम्बने पर्वतो वह्निमानिति निश्चयेऽपि सत्त्वेन तत्र भूतलं घटवन्नवेति संशयप्रतिबन्धकताविरहात् न सा तादृशनिश्चयत्वव्यापिका। अपि तु पर्वतो वह्निमान्न वेति संशयप्रतिबन्धकतैव तादृशी। तन्निरूपितप्रतिबध्यताशून्यः भूतलं घटवन्नवेति संशय इति नाप्रसिद्धिरिति भावः। ***स्वविरोधिविषयकेत्यादि।*** संशयप्रतिबन्धकतावच्छेदकविषयताशाली साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशाली च यः समूहालम्बननिश्चयः तत्प्रतिबध्यतयेत्यर्थः। निश्चयस्य प्रतिबन्धकत्वनिर्वाहाय स्वविरोधिविषयकत्वोक्तिः।

***इत्थं चेति।*** निश्चयत्वावच्छिन्नत्वनिवेशे चेत्यर्थः। निश्चयनिष्ठत्वनिवेशे साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालि-निश्चयपदेन पर्वतो वह्निमान् धूमादित्यादौ अयं तस्मात्तथेति निगमनजन्यबोधोऽपि ग्रहीतुं शक्यते, तस्यापि वह्निप्रकारकपर्वतविशेष्यकत्वात्। तन्निवर्त्यः संशयः ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयोऽपीति तदनिवर्त्यसंशयः घटादिसंशय एव तन्निवर्तकतावच्छेदकविषयताशून्यत्वं निगमनजन्यबोधस्यास्तीति निगमनेऽतिव्याप्तिः। निश्चयत्वव्यापकत्वनिवेशे तु वह्निप्रकारकपर्वतविशेष्यकनिश्चयत्वं धूमज्ञानज्ञाप्यत्वाविषयके पर्वतो वह्निमानिति निश्चयेऽप्यस्ति। तद्व्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावान् पर्वतो वह्निमान्न वेति संशयः तच्छून्यः ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयः। तत्प्रतिबन्धकतावच्छेदकविषयता ज्ञानज्ञाप्यत्वविषयता तच्छून्यत्वं निगमनजन्यबोधे नास्तीति नातिव्याप्तिरिति

अवच्छिन्नत्वं चान्यूनवृत्तित्वं व्यापकत्वपर्यवसितम्, अतो ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयनिरूपित प्रतिबन्धकतायां धूमज्ञानज्ञाप्यत्वातिरिक्तप्रतिज्ञाप्रतिपाद्यभागविषयताघटितधर्मस्य, स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेऽपि नान्यूनपदव्यावृत्त्यसङ्गतिः। अप्रामाण्यज्ञानास्कन्दितस्य निगमनादिजन्यबोधस्य संशयाप्रतिबन्धकतया तज्जनकत्वमादायातिप्रसङ्गस्य वारणाय तादृशसंशयानिवर्तकत्वमुपेक्ष्य तन्निवर्तकतावच्छेदकविषयताशून्यत्वेन बोधो विशेषितः।

---

भावः। इदं तु चिन्त्यम्–सर्वेषामेव संशयानामित्युक्तरीत्या तादृशनिश्चया-निवर्त्यसंशयाप्रसिद्ध चैवातिव्याप्त्यप्रसक्तेरिति।

निश्चयत्वावच्छिन्नत्वं न स्वरूपसंबन्धरूपम्, अपि तु व्यापकत्वरूपम्। स्वरूपसंबन्धरूपत्वेऽन्यूनपदवैयर्थ्यात्। धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ हेतावतिव्याप्तिवारणाय हि तत्। वह्नित्वावच्छिन्नप्रकारतानिरूपित-धूमज्ञानज्ञाप्यालोकवत्पर्वतविषयताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपित-प्रतिबध्यताशाली संशयः ज्ञानज्ञाप्यं धूमीयं न वेति संशयो न भवति, तादृशसंशयं प्रति धूमादालोकवान् पर्वतो वह्निमानिति निश्चयस्य धूमाज्ञानज्ञाप्यत्व-विषयकनिश्चयत्वेनैव प्रतिबन्धकत्वात्। अतस्तादृशनिश्चयत्वावच्छिन्नप्रतिबन्ध-कतानिरूपितप्रतिबध्यताशून्यः संशयः ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयः तत्प्रतिबन्धकतावच्छेदकविषयतावानेव हेतुजन्यबोधः न तु तच्छून्य इति हेतावतिव्याप्त्यप्रसक्त्या तद्वारणार्थमन्यूनविषयकत्वं नोपादेयं स्यात्। निश्चयत्वव्यापकत्वरूपत्वे तु तादृशनिश्चयत्वं यत्रास्ति तत्र ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयप्रतिबन्धकतायाः सत्त्वात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकता-निरूपितप्रतिबध्यतावानेव स संशयः प्रतिबध्यताशून्यः अन्यः संशयः तत्प्रतिबन्धकतावच्छेदकविषयताशून्यबोधजनकत्वस्य हेतौ सत्त्वात् अतिव्याप्तिः, तद्वारणाय चान्यूनपदमिति भावः। ***धूमज्ञानेति।*** धूमज्ञानज्ञाप्यत्वातिरिक्तः यः प्रतिज्ञाप्रतिपाद्यो भागः आलोकवत्पर्वतः तद्विषयताघटितधर्मस्येत्यर्थः।

अत्रेदं बोध्यम्– पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यता-वच्छेदकावच्छिन्नप्रकारतानिष्ठस्वरूपसंबन्धरूपावच्छेदकताकप्रतिबन्धकताया निवेशे धूमादालोकवान्पर्वतो वह्निमानिति प्रतिज्ञायामव्याप्तिः। ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यत्वात् तादृशसंशयप्रतिबन्धकतावच्छेदकविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधे विरहात्।

पक्षतावच्छेदकाद्यनिवेशे तदनवच्छिन्नपक्षादिविषयताशालिनिश्चयसमुदायस्य कमपि संशयं प्रत्यप्रतिबन्धकतया तादृशनिश्चयत्वावच्छिन्ननिवर्त्यसंशयाप्रसिद्धिः, ***अतस्तन्निवेश*** इति। इत्थं चानतिरिक्तविषयकत्वघटकसाध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदका-वच्छिन्नविषयतायां स्वनिष्ठत्वनिवेशेनैव न्यूनविषयकदर्शितहेतुजन्यबोधवारणसम्भवे पृथगन्यूनविषयकत्वविशेषणमनर्थकमित्यपि समाहितम्। तादृशविषयतायां स्वनिष्ठत्वविशेषणे निगमनादिजन्यबोधस्य ज्ञानज्ञाप्यत्वविशेषितसाध्यविशिष्टपक्षविषयताशालित्वनियमात्

---

एवं चैतादृशप्रतिज्ञायामव्याप्तिवारणायैव व्यापकत्वरूपावच्छिन्नत्वं निवेश्यम्, न त्वन्यूनपदव्यावृत्त्यसंगतिनिराकरणमात्राय। एतेन स्वरूपसंबन्धरूपावच्छिन्नत्व-निवेशेऽन्यूनपदस्य वैयर्थ्यमिष्टमेव, लाघवादिति निरस्तमिति।

ननु साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न-विशेष्यताशालिनिश्चयानिवर्त्यसंशयानिवर्तकत्वमेव बोधविशेषणमस्तु किं तादृशसंशयनिवर्तकतावच्छेदकविषयताशून्यत्वेन गुरुविशेषणेन इत्यत आह–***अप्रामाण्यज्ञानास्कन्दितस्येति।*** अप्रामाण्यज्ञानविशिष्टस्य निगमनजन्यबोधस्य पक्षः साध्यवानिति निश्चयानिवर्त्यं ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयं प्रत्यप्रतिबन्धकतया तज्जनके निगमनेऽतिव्याप्तिः। अतः तादृशसंशयप्रतिबन्धक-तावच्छेदकविषयताशून्यत्वनिवेशः। अप्रामाण्यज्ञानास्कन्दितस्य निगमनजन्यबोधस्य तादृशसंशयानिवर्तकत्वेऽपि बोधनिष्ठायाः ज्ञानज्ञाप्यत्वविषयतायाः प्रतिबन्धकतावच्छेदकत्वमस्त्येव। अतः तन्निवर्तकतावच्छेदकविषयताशून्यत्वाभावा-न्नातिव्याप्तिरिति भावः।

पक्षनिष्ठविषयतायां पक्षतावच्छेदकावच्छिन्नत्वस्य साध्यनिष्ठविषयतायां साध्यतावच्छेदकावच्छिन्नत्वस्य साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य चानिवेशे द्रव्यं वह्निमत्, प्रमेयं वह्निमत्, पर्वतो द्रव्यवान्, पर्वतः प्रमेयवान्, पर्वतः समवायेन वह्निमानित्यादिनिश्चयेषु तादृशनिश्चयत्वाश्रयेषु पर्वतः संयोगेन वह्निमानिति संशयप्रतिबन्धकताविरहेण पक्षादिनिष्ठविषयताशालिनिश्चयत्वव्यापक-प्रतिबन्धकत्वाप्रसिद्धिरिति पक्षतावच्छेदकादिनिवेश इत्याह–***पक्षतावच्छेदकाद्यनिवेश*** इति।

एतावता प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्न-प्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वे सति

स्वनिष्ठनिरुक्तविषयताशालिनिश्चयत्वव्यापकप्रतिबन्धकताकज्ञानज्ञाप्यत्वादि-संशयान्यसंशयाप्रतिबन्धकतयाऽनतिरिक्तविषयताकत्वापत्तेर्दुर्वारत्वात्। सत्यन्तस्य

---

तादृशविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यसंशय-प्रतिबन्धकतावच्छेदकविषयत्वानिरूपकः यः बोधः तज्जनकज्ञानीयवर्णसमुदायत्वं प्रतिज्ञालक्षणमिति सिद्धम्।

***इत्थंचेति।*** निश्चयत्वव्यापकत्वविशेषणे चेत्यर्थः। समाहितमित्यनेनान्वयः। तादृशविषयताविलक्षणविषयताशून्यत्वं ह्यनतिरिक्तविषयकत्वम्। तादृशविषयतापदेन साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयता विवक्षिता। तस्यां विषयतायां स्वनिष्ठत्वं विशेषणीयम्। स्वपदं यादृशशाब्दबोधमादाय लक्षणं संगमनीयं तादृशशाब्दबोधपरम्। धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र अनुमितिन्यूनविषयके हेतुजन्यबोधे साध्यतावच्छेदका-वच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताया अभावात् स्वपदेन तस्य ग्रहीतुमशक्यतया तत्रत्यहेतावतिव्याप्त्यप्रसक्तेः अन्यूनविषयकत्वं व्यर्थमिति शङ्का समाहिता। तादृशविशेषणे सति निगमनजन्यबोधोऽपि स्वपदेन ग्रहीतुं शक्यते। तत्रापि साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न-विषयतायाः सत्त्वात्। तथा च स्वनिष्ठतादृशविषयताशालिनिश्चयत्वव्यापक-प्रतिबन्धकतानिरूपितप्रतिबध्यताशाली संशयः पर्वतो वह्निमान्न वेति संशय इव ज्ञानज्ञाप्यत्वसंशयोऽपि, तादृशप्रतिबध्यताशून्यः संशयः घटादिसंशयः तदप्रतिबन्धकतया निगमनजन्यबोधस्य निगमनेऽतिव्याप्तिः प्रसज्यते। अतः स्वनिष्ठत्वं निवेशयितुं न शक्यते। तदनिवेशे च हेतावतिव्याप्तिः। तद्वारणाय अन्यूनपदमिति।

तथा च न्यायावयवत्वे सति पक्षतावच्छेदकविशिष्टबोधजनकवाक्यत्वं प्रतिज्ञात्वम्। बोधे पक्षतावच्छेदकवैशिष्ट्यं च स्वावच्छिन्नविशेष्यतानिरूपित-साध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-तादृशप्रकारताशालिनिश्चयत्व—व्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यसंशयप्रतिबन्धकतावच्छेदकविषयता-शून्यत्वोभयसंबन्धेनेति।

व्याप्त्यविषयकत्वमनतिरिक्तविषयकत्वमिति द्वितीयकल्पः। तस्मिन्

134

**प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्त्यविषयकत्वं वा तदनतिरिक्तविषयकत्वम्।**

---

न्यायावयवत्वमर्थः। निगमने च पक्षवाचकपदमनुषज्यते इति तद्वारणमनतिरिक्तविशेषणप्रयोजनमिति मतमनुसृत्य लघुशरीरमनतिरिक्तविषयकत्वं निर्वक्ति- ***प्रकृतेति।*** प्रकृतहेतुका या प्रकृतसाध्यसिद्ध्यौपयिका व्याप्तिस्तदविषयकत्वमित्यर्थः, यद्रूपावच्छिन्नविशेषित-प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविषयनिश्चयत्वं प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमिति-जनकतानातिरिक्तवृत्ति, तद्रूपावच्छिन्नाविषयकत्वमिति तु पर्यवसितम्। तादृशं च रूपं तद्धेतुतावच्छेदकावच्छिन्न तद्धेतुव्यापकप्रकृतसाध्यसामानाधिकरण्यत्वं तत्तत्साध्यतावच्छेदका-वच्छिन्न साध्याभावव्यापकाभावप्रतियोगितात्वं च। निगमनस्थतत्पदस्य च व्याप्तिपक्षधर्मता-

---

कल्पे प्रतिज्ञादिहेत्वन्तसमुदायस्यापि व्याप्त्यविषयकबोधजनकत्वात् तत्रातिव्याप्तिः। तद्वारणाय न्यायावयवत्वार्थकं मूलस्थं सत्यन्तम्। अनतिरिक्तविषयकत्वानिवेशे अयंपदानुषङ्गपक्षे पक्षे साध्यवैशिष्ट्यविषयकबोधजनके निगमनेऽतिव्याप्तिः। अनतिरिक्तविषयकत्वनिवेशे निगमनजन्यबोधस्य व्याप्तिविषयकतया व्याप्त्यविषयकत्वरूपमनतिरिक्तविषयकत्वं नास्तीति नातिव्याप्तिरित्याशयेन प्रवृत्तं लघुभूतं द्वितीयकल्पमवतारयति–***सत्यन्तस्येति। यद्रूपावच्छिन्नेत्यादि।*** यद्रूपपदेन तद्धेतुतावच्छेदकावच्छिन्नतद्धेतुव्यापकप्रकृतसाध्यसामानाधिकरण्यत्वरूप-मन्वयव्याप्तित्वं, तत्तत्साध्यतावच्छेदकावच्छिन्नसाध्याभावव्यापकाभाव-प्रतियोगितात्वरूपं व्यतिरेकव्याप्तित्वं च धर्तव्यम्। पर्वतो वह्निमानित्यनुमितिं प्रति वह्निव्याप्तिविशिष्टधूमविशिष्टपर्वतविषयकं ज्ञानं कारणम्। व्याप्तिः अन्वयव्याप्तिर्वा व्यतिरेकव्याप्तिर्वा यथासम्भवम्। तादृशव्याप्तित्वावच्छिन्नाविषयक-बोधजनकत्वं प्रतिज्ञायामस्तीति लक्षणसमन्वयः। यद्रूपावच्छिन्नेत्यनुक्त्वा यद्विशिष्टेत्येतावन्मात्रोक्तौ प्रमेयत्वेन व्याप्त्यवगाहिनि प्रमेयविशिष्टधूमवान् पर्वत इति निश्चयेऽपि व्याप्तिविशिष्टहेतुविशिष्टविषयकनिश्चयत्वसत्त्वात् तत्र चानुमितिजनकत्वाभावात् असम्भवः। अतो यद्रूपावच्छिन्नेत्युक्तम्। हेतुतावच्छेदका-वच्छिन्नत्वानिवेशे वह्निव्याप्यप्रमेयवान्पर्वत इति ज्ञानेऽपि व्याप्त्यवच्छिन्न-हेतुविशिष्टविषयकनिश्चयत्वसद्भावात् तत्र च प्रकृतानुमितिजनकत्वाभावादसंभवः। अतः तन्निवेशः। एवं वह्निव्याप्यधूमवान् प्रमेय इति निश्चयमादायासंभववारणाय पक्षतावच्छेदकावच्छिन्नत्वनिवेशः। तथा च पर्वतो वह्निमानित्यनुमितिं प्रति

**वह्निव्याप्यालोकवत्सधर्मा पर्वतो वह्निमान् धूमादिन्धनव्याप्यधूमवान् पर्वतो वह्निमान् धूमादित्यदौ तस्यास्संग्रहाय प्रकृतहेतुसाध्ययोरुपादानम् ।**

---

विशिष्टहेतुपरतया तज्जन्यबोधस्य तादृशरूपावच्छिन्नविषयकत्वान्नातिव्याप्तिः। अन्वयव्यतिरेकव्याप्त्योर्विशिष्यैकतरनिवेशे अन्वयिनि व्यतिरेकिणि वा निगमनेऽतिव्याप्तिरिति निरुक्तरूपावच्छिन्नत्वेन द्वयोरनुगमः। यदि च यत्त्वतत्त्वयोर्निवेशान्नानुगमश्शक्य इति भाव्यते तदा अभावद्वयमेव बोधे निवेशनीयं, एतल्लाभायैव चौपयिकान्तमिति ध्येयम्। यद्यप्युदाहरणजन्यबोधस्य न निरुक्तरूपावच्छिन्नविषयकत्वम्। तथापि सिषाधयिषाधीनन्याय-प्रयोगानुपगमेन तत्र पक्षतावच्छेकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्व-रूपान्यूनविषयकत्वविरहादेव नातिप्रसङ्गः, हेत्वन्तभागे च सत्यन्ताभावान्नातिव्याप्तिरित्यवधेयम्।

---

धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति निश्चयः, वह्न्यभाव-व्यापकीभूताभावप्रतियोगिधूमवान् पर्वत इति निश्चयश्च कारणम्। तादृशव्याप्त्यविषयकत्वं निगमनजन्यबोधे नास्ति। वह्निव्याप्यधूमज्ञानज्ञाप्यवह्निमान् पर्वत इत्याकारके तस्मिन् व्याप्तिविषयकत्वनियमात्। निगमनस्थतस्मात्पदस्य हि वह्निव्याप्यधूमवत्त्वादित्यर्थः। अतो न निगमनेऽतिव्याप्तिः इति भावः।

***अभावद्वयमिति।*** अन्वयव्याप्तिविषयकत्वाभावव्यतिरेकव्याप्ति-विषयकत्वाभावद्वयमित्यर्थः। ***एतल्लाभायैवेति।*** अभावद्वयलाभायेत्यर्थः। ननूदाहरणजन्यबोधस्यापि व्याप्त्यविषयकत्वात् तज्जनके उदाहरणेऽतिव्याप्तिरित्यत आह–***यद्यपीति। निरुक्तरूपावच्छिन्नविषयकत्वं*** – अन्वयव्याप्तित्वव्यतिरेक-व्याप्तित्वावच्छिन्नविषयकत्वम्। ***तथापीति।*** उदाहरणजन्यबोधस्य व्याप्त्यविषयकत्वरूपानतिरिक्तविषयकत्वसत्त्वेऽपि पक्षतावच्छेदकपर्वतत्व-विशिष्टे साध्यवैशिष्ट्यविषयकत्वरूपमन्यूनविषयकत्वं नास्ति। महानसं वह्निमत् महानसान्यत् वह्निमत् इति बोधस्यैवोदाहरणाज्जननात्। अतो न निगमनेऽतिव्याप्तिरिति भावः। सिषाधयिषाधीनन्यायप्रयोगस्थले यथा पर्वत इति दृष्टान्तसम्भवात् तद्घटितोदाहरणस्य पर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहि-बोधजनकत्वमस्तीत्याशङ्क्य– ***सिषाधयिषाधीनन्यायप्रयोगानुपगमेनेत्युक्तम्।***

दीधितौ – ***वह्निव्याप्यालोकवत्सधर्मेत्यादि।*** प्रकृतहेतुकप्रकृतसाध्य-सिद्धचौपयिकव्याप्त्यविषयकत्वमनतिरिक्तविषयकत्वमित्युक्तम्। तत्र

वह्निव्याप्तिविशिष्टस्यालोकस्य पर्वतत्वावच्छिन्नविशेषणत्वे (सिद्धार्थविषया न्यायप्रयोगानुपगमे) तद्विशिष्टेपि पर्वते तद्वृत्तेरर्थतो लाभेनार्थतस्तत्र प्रकृतपक्षे प्रकृतसाध्यगमकता-लाभान्न हेत्ववयवाभिधानप्रयोजकाकांक्षावसर इत्यतस्**सधर्मेति**। **तस्याः** – प्रतिज्ञायाः। नन्वेवमपि यत्र प्रकृतहेतुकप्रकृतसाध्यकव्याप्तिरेवान्तर्भवति पक्षगर्भे, तत्रत्यप्रतिज्ञाया असंग्रह इत्याशङ्कां परिहरति – **वह्नीति। विशिष्टेति।** पक्षतावच्छेदकविशिष्टपक्षेत्यर्थः।

---

प्रकृतहेतुसाध्ययोरुपादानस्य प्रयोजनमुच्यते। प्रकृतहेतुकेत्यनुपादाने आलोकनिष्ठ-वह्निव्याप्तेः प्रकृतवह्निसाध्यकानुमित्यौपयिकत्वात् प्रकृतसाध्यकानु-मित्यौपयिकव्याप्तिविषयकत्वमेव 'वह्निव्याप्यालोकवत्सधर्मा पर्वतो वह्निमान्' इति प्रतिज्ञाजन्यशाब्दबोधेऽस्तीति तादृशव्याप्त्यविषयकबोधजनकत्वस्य तस्यां प्रतिज्ञायामभावादव्याप्तिः। एवं प्रकृतसाध्यकेत्यनुपादाने धूमनिष्ठायाः इन्धनव्याप्तेः धूमहेतुकेन्धनसाध्यकानुमित्यौपयिकत्वात् 'इन्धनव्याप्यधूमवान् पर्वतो वह्निमान्' इति प्रतिज्ञाजन्यबोधे प्रकृतधूमहेतुकानुमित्यौपयिकव्याप्तिविषयकत्वमेवास्तीति तादृशव्याप्त्यविषयकबोधजनकत्वाभावात् तस्यां प्रतिज्ञायामव्याप्तिः। तद्वारणाय प्रकृतहेतुसाध्ययोरुपादानम्। ननु तदुपादानेऽपि 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान् धूमात्, सत्ताव्याप्यद्रव्यत्ववदिदं सत्तावत् द्रव्यत्वात्' इत्यादिन्यायान्तर्गतप्रतिज्ञास्वव्याप्तिः, तज्जन्यबोधेषु प्रकृतधूमहेतुकप्रकृत-वह्निसाध्यकानुमित्यौपयिकव्याप्तिविषयकत्वात् प्रकृतद्रव्यत्वहेतुकप्रकृत-सत्तासाध्यकानुमित्यौपयिकव्याप्तिविषयकत्वात् इति चेत्–न। तादृशप्रतिज्ञाघटितन्यायप्रयोगानभ्युपगमात्। पक्षतावच्छेदकविशिष्टपक्षप्रतिपादक-पदादेव प्रकृतहेतुनिष्ठप्रकृतसाध्यव्याप्तेर्ज्ञाततत्वात् तज्ज्ञापनफलकोदाहरणा-काङ्क्षाविरहात्। आकाङ्क्षाविरहेऽप्यवयवप्रयोगे एकस्मिन् साध्ये हेतुद्वयस्यैकन्यायप्रयोगकाले उपन्यासप्रसङ्गात्। आकाङ्क्षाविरहादेव एकदा अन्वयव्याप्तिव्यतिरेकव्याप्त्योर्द्वयोर्नोपन्यासः इति।

वह्निव्याप्यालोकवत्सधर्मा पर्वतो वह्निमानित्यत्र पक्षे सधर्मा इति विशेषणस्य प्रयोजनमाह–गादाधर्यां **वह्निव्याप्तिविशिष्टस्येति।** वह्निव्याप्यालोकवान् पर्वतो वह्निमानिति यदि प्रतिज्ञा स्यात् तर्हि पर्वतत्वावच्छिन्ने विशेषणत्वेन आलोकस्य, आलोकविशिष्टपर्वते वह्निव्याप्तिविशिष्टालोकस्य वृत्तित्वलाभेन पक्षे साध्यगमकहेतुसत्ताया अपि लाभेन कुत इत्याकाङ्क्षाविरहात्

**वह्निव्याप्यधूमवान् पर्वतो वह्निमान् धूमात्सत्तादिव्याप्यद्रव्यत्ववदिदं सत्त्वादिमत् द्रव्यत्वादित्यादिकस्तु न प्रयोगः। विशिष्टपक्षोपस्थापकादेव तादृशव्याप्तिप्रतीतावाकाङ्क्षाविरहेणोदाहरणानुत्थानात्। अन्यथाऽतिप्रसङ्गात्। अत एव नैकदोभयव्याप्त्युपन्यासोऽपि।**

---

*तादृशव्याप्तीति।* प्रकृतहेतुकप्रकृतसाध्यसिद्धौपयिकव्याप्तीत्यर्थः। ***उदाहरणेति।*** यद्यपि दर्शितस्थले विशिष्टपक्षोपस्थापकपदात् प्रकृतहेतौ विशिष्टपक्षवृत्तित्वस्याप्यर्थतः प्रतीत्या उपनयादिप्रयोजकाकांक्षाया अप्यनवकाशः। तथापि धूमवत्त्वस्थाने धूमवत्साधर्म्यनिवेशने तस्यास्सम्भव इति उदाहरणमात्रोपादानम्। ***अन्यथा*** – आकाङ्क्षादिविरहेप्यभिधाने। ***अतिप्रसङ्गात्*** – हेतुद्वयादेरप्यभिधानप्रसङ्गात्। ***अत एव*** – अनाकाङ्क्षितानभिधानादेव। ***एकदा*** – एकन्यायप्रयोगदशायाम्। ***उभयव्याप्तीति।*** अन्वयव्याप्तिव्यतिरेकव्याप्तिद्वयेत्यर्थः। व्याप्तिद्वयस्य क्रमेणैवाभिधातुं शक्यतया प्रथमोपन्यस्तव्याप्तिप्रतीत्यैव समीहितनिर्वाहेण व्याप्त्यन्तराकाङ्क्षाऽनुदयादिति भावः।

एतेनान्वयव्यतिरेकोदाहरणाकाङ्क्षाघटितान्वयव्यतिरेकिहेतुलक्षणानन्तरमपर

---

हेत्ववयवाभिधानासंगतिः स्यादिति सधर्मेत्युक्तम्। तथा सति आलोकवत्साधर्म्यविशिष्टे पर्वते आलोकसत्ताया अलाभेन हेत्वाकाङ्क्षया हेत्वभिधानसंगतिरिति भावः। ***अर्थत*** इति। आलोकविशिष्टपर्वते आलोकस्यावृत्तौ तस्य विशेषणत्वानुपपत्तेरित्यर्थः। ***अर्थत*** इति। पक्षवृत्तेः प्रकृतसाध्यव्याप्तिविशिष्टस्य प्रकृतसाध्यगमकता–व्याप्यत्वादित्यर्थः। ***यद्यपीति।*** वह्निव्याप्यधूमवान् पर्वत इति पक्षवाचकपदादेव उपनयार्थस्यापि लाभेन व्याप्यं किं पक्षे वर्तत इत्युपनयप्रयोजकाकाङ्क्षाविरहेण उपनयानुत्थानस्यापि वक्तुं शक्यतया उदाहरणमात्रानुत्थानकथनं न युक्तमिति शङ्का। पक्षगर्भे धूमवत्त्वस्थाने धूमवत्साधर्म्यनिवेशेन वह्निव्याप्यधूमवत्सधर्मा पर्वतो वह्निमानित्यादिन्यायप्रयोगस्थले विशिष्टपक्षवाचकपदात् धूमवत्साधर्म्यलाभेऽपि धूमवत्त्वालाभेन व्याप्यस्य पक्षवृत्तित्वाकाङ्क्षया उपनयोत्थानात् तदनुत्थानं नोक्तमिति समाधानम्।

***एतेनेति।*** एकदा न व्याप्तिद्वयाभिधानमिति दीधितिकारोक्त्या। ***अन्वयव्यतिरेकेति।*** 'अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजकतथाभूतावयवत्व–मन्वयव्यतिरेकिहेतुत्वम्। यद्वा पक्षसपक्षसतो विपक्षासतो हेतुवचनमन्वयव्यतिरेकि' इति मणिग्रन्थोऽत्राभिप्रेतः।

**यदि च मैत्रः पचति अयं गौरित्यादेरेव प्रतिज्ञायाः तथोपवर्णित-विशिष्टज्ञानजनकत्वसम्भवः।**

---

तल्लक्षणमभिधास्यतो मणिकृतः प्रथमलक्षणानिर्भरबीजमाविष्कृतम्। अत एवैतादृशातिप्रसङ्गस्य पृथगभिधानम्।

वह्न्यादिसाध्यकप्रतिज्ञायामव्याप्त्या यथोपवर्णितलक्षणमाक्षिपति - ***यदि चेति।*** अत्र चासम्भवासम्भवमाविष्कर्तुं कतिपयप्रतिज्ञाजन्यबोधस्य यथोपवर्णितानुमित्यन्यूनातिरिक्त-विषयकत्वं व्यवस्थापयति -***मैत्र*** इत्यादिना। अयं गौरित्यत्र गोत्वस्य साध्यत्वे पक्षे साध्यतावच्छेदकगोत्वत्वविशिष्टप्रकारकज्ञानजनकत्वासम्भवादाह - ***तादात्म्येनेति।***

---

***वह्न्यादिसाध्यकप्रतिज्ञायामव्याप्त्या यथोपवर्णितलक्षणमाक्षिपतीति।*** पर्वतो वह्निमानित्यादिप्रतिज्ञायां तज्जन्यबोधस्य वह्निमदभिन्नपर्वतविषयकत्वेनानुमित्य-न्यूनानतिरिक्तविषयकत्वाभावादव्याप्त्या न्यायावयवत्वे सति पक्षतावच्छेदका-वच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वे सति तादृशप्रकारताशालिनिश्चयानिवर्त्यसंशयनिवर्तकतावच्छेदकविषयताशून्यः अथ वा तादृशप्रकारताशाल्यनुमितिजनकतानतिरिक्तवृत्ति यद्रूपावच्छिन्नविशेषित-प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यता-शालिनिश्चयत्वं तद्रूपावच्छिन्नाविषयको यो बोधः तज्जनकवाक्यत्वरूपं पूर्वोक्तं प्रतिज्ञालक्षणमाक्षिपतीत्यर्थः।

***यदि चेत्यादिदीधितिग्रन्थे*** कतिपयप्रतिज्ञायां लक्षणसमन्वयपूर्वकं कतिपयप्रतिज्ञायां लक्षणासत्त्वमुक्तं, तेन पूर्वोक्तलक्षणस्याव्याप्तिः न त्वसंभवः इति सूच्यते। तदाह - ***असंभवाभावम्*** इति। मैत्रः पचति इत्याकारकानुमितिः मैत्रविशेष्यकत्वे सति पाकानुकूलकृतिप्रकारिका। मैत्रः पचति इति प्रतिज्ञाजन्यबोधोऽपि मैत्रविशेष्यकः पाकानुकूलकृतिप्रकारकः। तथा अयं गौरित्यनुमितिः इदंविशेष्यिका तादात्म्यसंबन्धेन गोप्रकारिका च। अयं गौरिति प्रतिज्ञाजन्यबोधोऽपि इदंविशेष्यकः तादत्म्यसंबन्धेन गोप्रकारकः। अतः अनुमित्यन्यूनानतिरिक्तविषयकबोधजनकत्वं तत्प्रतिज्ञायामस्ति। न चायं गौरित्यत्र गोत्वमेव साध्यम्। न तु तादात्म्येन गौः इति वाच्यम्। प्रतिज्ञावाक्यस्य साध्यतावच्छेदकावच्छिन्नसाध्योपस्थापकत्वम् इति नियमात् गोत्वत्ववाचकपदाभावात् 'अयं गौः' इति वाक्यात् गोत्वत्वविशिष्टगोत्वप्रतिपादनायोगात्। गोः साध्यत्वे

**तादात्म्येन गोस्साध्यत्वात् गोत्वत्वाद्यनुपस्थित्या गोत्वादेस्साध्यत्वानुपपत्तेः।**

---

ननु भवतु गोसाध्यकप्रतिज्ञा तादृशी, तथापि यदि समवायेन गोत्वस्य साध्यत्वेपि तथाविधप्रतिज्ञा सम्प्रदायानुमता तदा तत्साध्यकतादृशप्रतिज्ञाया दर्शितबोधजनकत्वासम्भवात् सामान्यतस्तथाकारप्रतिज्ञायास्तथात्वाभिधानमसङ्गतमित्याशङ्कायां तस्याः गोत्वादिसाध्यकत्वं निराकरोति–***गोत्वत्वाद्यनुपस्थित्येति।*** तादृशप्रतिज्ञावाक्यादित्यादिः। तत्रेति शेषः। ***अनुपपत्तेरिति।*** प्रतिज्ञायाः साध्यतावच्छेदकोपस्थापकत्वनियमात्। अन्यथा सुन्दरवह्नित्वावच्छिन्नसाध्यकस्थलेपि वह्निमानित्याकारकप्रतिज्ञाप्रसङ्गादिति भावः।

यद्यपि समवायेन रक्तत्वविशिष्टदण्डावच्छिन्नसाध्यक रक्तदण्डिमानित्यादिप्रतिज्ञाया न समवायेन रक्तत्वविशिष्टसाध्यतावच्छेदकबोधकतासंभवः। तथापि तत्र साध्यतावच्छेदक–

---

तु गोपदस्य गोत्वविशिष्टगोवाचकतया प्रतिज्ञायाः साध्यतावच्छेदकविशिष्ट–साध्यप्रतिपादकत्वनिर्वाहः। किञ्च गोत्वस्य साध्यत्वे तत्रैव पञ्चम्यर्थस्य ज्ञानज्ञाप्यत्वस्य अन्वयो वक्तव्यः। स च न सम्भवति, 'पदार्थः पदार्थेनान्वेति, न तु तदेकदेशेन' इति व्युत्पत्तिविरोधात् गोपदार्थैकदेशे गोत्वे पञ्चम्यर्थान्वयासम्भवात्। तथा च अनुमितेः शाब्दबोधस्य च समानविषयकत्वात् 'अयं गौः' इत्यादिप्रतिज्ञायां लक्षणं समन्वेतीति भावः।

***ननु भवतु*** इत्यादि। गोसाध्यकप्रतिज्ञैव 'अयं गौः' इत्याकारिका। तस्याश्च गोत्वविशिष्टगोप्रतिपादकत्वं सुलभमेव। यदि समवायेन गोत्वसाध्यकप्रतिज्ञापि 'अयं गौः' इत्याकारिकैव संप्रदायसम्मता, तदा गोत्वसाध्यकतादृशप्रतिज्ञायाः साध्यतावच्छेदकगोत्वत्वविशिष्टगोत्वप्रकारकबोध–जनकत्वासम्भवेन प्रतिज्ञायाः साध्यतावच्छेदकविशिष्टसाध्यप्रतिपादकत्व–नियमभङ्ग इत्याशङ्क्य गोत्वसाध्यकप्रतिज्ञायाः 'अयं गौः' इत्याकारकत्वं नास्तीत्याह गोत्वत्वाद्यनुपस्थित्येति ग्रन्थेनेति भावः।

तथा च गोत्वस्य साध्यत्वे 'अयं गोत्ववान्' इत्येव प्रतिज्ञा, न तु 'अयं गौः' इति। प्रतिज्ञायाः साध्यतावच्छेदकरूपेण साध्यप्रकारकबोधजनकत्वमिति नियमानङ्गीकारे दोषमाह–***अन्यथेत्यादिना।*** तादृशनियमानङ्गीकारे सुन्दरवह्नित्वावच्छिन्नसाध्यकस्थलेऽपि 'वह्निमान्' इत्याकारकप्रतिज्ञाप्रसङ्गः। तादृशनियमाङ्गीकारे तु सुन्दरत्वविशिष्टवह्नित्वोपस्थापकपदघटितैव प्रतिज्ञा

**पदार्थतावच्छेदकजातौ हेत्वर्थस्यान्वयायोगाच्च।**

---

घटकपदार्थानामेव विशकलितानां तादृशप्रतिज्ञावाक्यादुपस्थितेः, तदधीनसाध्यतावच्छेदक–विशिष्टसाध्यविषयकमानसबोधेनापि तत्र विशिष्टसाध्यसंशयप्रयोज्यजिज्ञासाविषयसिद्धिसंभवः, प्रकृते तु विशकलितानामपि गोत्वत्वादिघटकपदार्थनां नोपस्थितिरिति विशेषः। गोत्वादेस्साध्यत्वे दोषान्तरमाह–***पदार्थेति।*** जातेः पदार्थतावच्छेदकत्वं पदार्थान्तरान्वयित्वासम्भव–प्रयोजकत्वेनाभिहितम्। इदमुपलक्षणम्। अन्वयितावच्छेदकरूपेणानुपस्थितत्वमपि तथा बोध्यम्।

---

प्रयोक्तव्या 'पर्वतः सुन्दरवह्निमान्' इति। अतः 'वह्निमान्' इति प्रतिज्ञायाः न प्रसक्तिरिति भावः।

ननु समवायसंबन्धेन रक्तत्वविशिष्टदण्डावच्छिन्नसाध्यकरक्तदण्डिमान् इत्याकारकप्रतिज्ञायाः न तादृशसाध्यतावच्छेदकविशिष्टसाध्यबोधकत्वम्। "रक्तत्ववदभिन्नदण्डसम्बन्ध्यभिन्नः' इत्याकारकबोधस्यैव तादृशप्रतिज्ञावाक्यात् जननात्। तथा च साध्यतावच्छेदकविशिष्टसाध्यबोधकत्वनियमभङ्ग इति शङ्कितुराशयः। समाधत्ते ***तथापीति।*** रक्तत्वविशिष्टदण्डात्मकसाध्यतावच्छेदक–घटकानां पदार्थानां विशकलितानां 'रक्तदण्डिमान्' इति वाक्यघटकैः पदैः उपस्थित्या तादृशवाक्यजन्यशाब्दबोधानन्तरं समवायसंबन्धेन रक्तत्वविशिष्ट–दण्डविषयकं मानसं ज्ञानं जायते। तेन रक्तत्वविशिष्टदण्डसंशयाधीनजिज्ञासायाः तादृशप्रतिज्ञावाक्याधीनमानसबोधेन विषयसिद्धिः सम्भवति। प्रकृते 'अयं गौः' इत्यत्र तु गोत्वस्य साध्यत्वे साध्यतावच्छेदकगोत्वत्वघटकपदार्थानां प्रतिज्ञाघटकपदेन कथमपि उपस्थितेः असम्भवात् मानसबोधमादाय गोत्वत्वविशिष्टगोत्वबोधकत्वं न संभवति। अतः तादात्म्येन गोरेव साध्यत्वमिति भावः। ***नोपस्थितिरिति।*** उपस्थापकपदाभावादिति भावः। ***दोषान्तरमिति।*** बाधकान्तरमित्यर्थः।

दीधितौ ***पदार्थतावच्छेदकजाताविति।*** पदार्थतावच्छेदके गोत्वजातिरूपसाध्ये इत्यर्थः। ***हेत्वर्थान्वयायोगादिति।*** हेतुविभक्तयर्थस्य ज्ञानज्ञाप्यत्वस्य अन्वयासम्भवादित्यर्थः। विशेष्यतासंबन्धेन इतरपदार्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन पदजन्योपस्थितेः कारणत्वात् गोपदजन्योपस्थिति–निरूपितविशेष्यतायाः गव्येव सत्त्वेन गोत्वेऽभावात् तत्र पञ्चम्यर्थान्वयः न

**वह्निमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वह्नेस्संयोगात्मकस्सम्बन्धो भासते। तथैव वह्निव्याप्यधूमवानयमित्युपनयसङ्गमात्।**

---

ननु पर्वतो वह्निमानित्याद्याकारप्रतिज्ञा न वह्निसाधिका, अपि त्वभेदेन वह्निमत्साधिकैव, तथा च तज्जन्यबोधविषयतायाः अभेदेन वह्निमत्साध्यकानुमितिविषयतातो न वैलक्षण्यम्, अतो न तत्राव्याप्त्यवकाशः इत्यत आह – ***तथैवेति।*** तादृशप्रतिज्ञाया वह्निसाध्यकत्वेनैवेत्यर्थः। ***इत्युपनयसङ्गमात्*** – इत्याकारकस्योपनयस्य तादृशप्रतिज्ञाघटित-न्यायान्तर्गतत्वोपपत्तेः, वह्निमतसाध्यत्वे वह्निमद्व्याप्यवानित्याकारकस्यैवोपनयस्य सम्भवादिति

---

सम्भवति इति भावः। 'घटादन्यः' इत्यादौ अन्यपदार्थैकदेशे अन्यत्वे पञ्चम्यर्थप्रतियोगित्वान्वयात् ***जातावित्युक्तम्।*** जात्यतिरिक्ते पदार्थतावच्छेदके पञ्चम्यर्थान्वयेऽपि जातिरूपे पदार्थतावच्छेदके तदन्वयासंभव इति तात्पर्यम्। ननु जातौ पदार्थतावच्छेदकेति विशेषणं किमर्थमित्यत्राह – ***जातेः पदार्थतावच्छेदकत्वमिति।*** जातौ पदार्थान्तरानन्वये हेतुगर्भं पदार्थतावच्छेदकेति विशेषणम्। यतः जातिः पदार्थतावच्छेदिका, अतः तत्र इतरपदार्थान्वयो न सम्भवति, व्युत्पत्तिविरुद्धत्वादिति भावः। ***इदमुपलक्षणमिति।*** किञ्चिद्रूपेण उपस्थिते पदार्थे एव इतरपदार्थान्वयः व्युत्पत्तिसिद्धः, अन्यथा 'घटो नित्यः' इत्यादौ घटत्वे नित्यत्वान्वयप्रसङ्गात्। तथा च गोपदात् गोत्वस्य स्वरूपत एव उपस्थित्या किञ्चिद्रूपेणोपस्थित्यभावात् तत्र पञ्चम्यर्थान्वयो न सम्भवतीति भावः। एतावता 'अयं गौः' इत्यत्र तादात्म्येन गोरेव साध्यत्वम्, न तु समवायेन गोत्वस्येति दृढीकृतम्।

अथ 'पर्वतो वह्निमान्' इति प्रतिज्ञायां लक्षणाव्याप्तिः उपपाद्यते। 'पर्वतो वह्निमान्' इत्यनुमितिः पर्वतविशेष्यिका वह्निप्रकारिका संयोगसंसर्गिका। 'पर्वतो वह्निमान्' इति प्रतिज्ञाजन्यशाब्दबोधस्तु पर्वतविशेष्यकः वह्निमत्प्रकारकः अभेदसंसर्गकश्च। नामार्थयोः भेदसंबन्धेन अन्वयस्य अव्युत्पन्नतया शाब्दबोधस्य संयोगेन वह्निप्रकारकत्वानुपपत्तेः। तथा च प्रतिज्ञाजन्यशाब्दबोधस्य पर्वतत्वावच्छिन्न-विशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताकत्वरूपं अन्यूनविषयकत्वं नास्ति। एवं तादृशप्रकारताशालिनिश्चयानिवर्त्य-संशयानिवर्तकत्वरूपं अनतिरिक्तविषयकत्वमपि नास्ति। अतः अन्यूनानतिरिक्तविषयकशाब्दबोधजनकत्वाभावात् प्रतिज्ञायाम् अव्याप्तिः।

**शाब्दज्ञाने तु वह्निमतो अभेदः। एवं भेदे साध्ये भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्ममीक्ष्यते,**

---

भावः। ***शाब्दज्ञाने*** – वह्निमानित्येतादृशप्रतिज्ञावाक्यजन्यज्ञाने। ***अभेद*** इति। भासत इत्यनुषज्यते न तु वह्नेस्संयोग इति शेषः। नामार्थयोर्भेदान्वयबोधस्याव्युत्पन्नत्वादिति हृदयम्।

तथा च तादृशप्रतिज्ञाजन्यबोधे निरुक्तमन्यूनविषयत्वमनतिरिक्तविषयकत्वं च न सम्भवतीति भावः। ***भेदे*** – शुद्धे प्रतियोगिविशेषिते वा। ***इत्यादौ*** – इत्यादिप्रतिज्ञायां आदिपदादितरेभ्यो भिद्यते इतरभिन्नमित्यादिपरिग्रहः। ***वैलक्षण्यम्*** – अनुमितिविलक्षण–बोधजनकत्वम्। शुद्धभेदसाध्यकानुमितौ भेदस्यानुयोगितया, इतरावच्छिन्नभेदसाध्यकानुमितौ अनुयोगितया तद्विशेषितस्य तस्य विशेषणताविशेषेण, भिद्यत इति प्रतिज्ञाजन्यबोधे च आख्यातान्तोपस्थाप्यभेदाश्रयत्वस्य, इतरेभ्यो भिद्यत इत्यादिजन्ये पञ्चम्यन्तार्थेतर–प्रतियोगिकत्वविशेषितभेदाश्रयत्वस्य तेन सम्बन्धेन, भिन्नमित्यादिजन्ये च निष्ठान्तोपस्थाप्यभेदा–श्रयत्वावच्छिन्नत्वस्य, इतरेभ्यो भिन्नमित्यादिजन्ये चेतरप्रतियोगिकत्वविशेषितभेदाश्रयत्वा–वच्छिन्नस्य, इतरभिन्नमित्यादिजन्ये चाभेदेन इतरप्रतियोगिकविशेषितभेदाश्रयत्वावच्छिन्नस्य,

---

ननु 'पर्वतो वह्निमान्' इत्यनुमितावपि अभेदसंबन्धेन वह्निमानेव प्रकारः। तथा च शाब्दबोधस्य अनुमित्यन्यूनानतिरिक्तविषयकत्वम् अस्तीति नाव्याप्तिः इति चेन्न– वह्निमतः साध्यत्वे वह्निमद्व्याप्यधूमवानयम् इत्येव उपनयप्रसङ्गात्। "वह्निव्याप्यधूमवानयम्" इत्युपनयः कथकसंप्रदायसिद्धः। तदनुरोधेन अनुमितेः वह्निसाध्यकत्वमेव युक्तमिति तात्पर्येण दीधितौ तथैव वह्निव्याप्यधूमवानयमिति उपनयसङ्गमात् इत्युक्तम्। तथैवेत्यस्य अनुमितेःप्रतिज्ञायाश्च वह्निसाध्यकत्वे सत्येवेत्यर्थः। ***'वह्निमद्व्याप्यवान्' इत्याकारस्यैवेति।*** प्रतिज्ञोपनययोः एकरूपावच्छिन्न–साध्यबोधकत्वनियमादिति भावः। ***दीधितौ एवं भेदे साध्ये*** इति। 'घटः भिद्यते पदार्थत्वात्, पटवत्' इत्यादो एवं 'घटः भिन्नः पदार्थत्वात्' इत्यादो 'पृथिवी इतरेभ्यो भिद्यते,' 'पृथिवी इतरभिन्ना' इत्यादो च अनुमितो भेदः प्रकारः, शाब्दबोधे भेदाश्रयत्वं अभेदसंबन्धेन भिन्नं च प्रकारः। तथा च अनुमितिशाब्दबोधयोः समानविषयकत्वाभावात् अनुमित्यन्यूनानतिरिक्त–विषयकशाब्दबोधजनकत्वं एतादृशप्रतिज्ञासु नास्तीत्यव्याप्तिरिति भावः। गादाधर्या ***शुद्धभेदसाध्यकानुमिताविति।*** 'घटो भिद्यते' इत्याकारकानुमितौ भेदः अनुयोगितासम्बन्धेन प्रकारः। प्रतिज्ञाजन्ये शाब्दबोधे भेदाश्रयत्वं स्वरूपसंबन्धेन

इतरेभ्योऽन्यदित्यादिजन्ये च इतरप्रतियोगिकत्वविशेषितभेदावच्छिन्नस्य, इतरान्यादित्यादिजन्ये च अभेदेनेतरप्रतियोगिकविशेषितभेदावच्छिन्नस्य, अभेदेन पक्षांशे विशेषणत्वादिति अनुमितेस्तादृशबोधवैलक्षण्यादिति भावः। इदमुपलक्षणम्, ईदृशदिशा प्रकृते विधेयांशे भान इव उद्देश्यतावच्छेदकांशे भानेपि वैलक्षण्यमवसेयम्। गन्धाद्यवच्छिन्नपक्षकानुमितौ गन्धादेस्साक्षाद्विधेयधर्मितावच्छेदकत्वात् गन्धवती इतरेभ्यो भिद्यते इत्याद्याकारक-तादृशप्रतिज्ञाजन्यबोधे च गन्धादिसम्बन्धस्यैव तथात्वादिति।

---

प्रकारः। ***इतरावच्छिन्नभेदसाध्यकानुमिताविति।*** 'पृथिवी इतरेभ्यो भिद्यते' इत्यनुमितौ इतरप्रतियोगिकत्वविशिष्टभेदस्य स्वरूपसंबन्धेन अनुमितौ प्रकारता। शाब्दबोधे तु इतरप्रतियोगिकत्वविशिष्टभेदनिरूपिताश्रयत्वस्य स्वरूपसंबन्धेन प्रकारता। घटः भिन्नः इत्यनुमितौ भेदः प्रकारः। शाब्दबोधे तु भेदाश्रयः अभेदसंबन्धेन प्रकारः। पृथिवी इतरभिन्नेत्यनुमितौ इतरप्रतियोगिकत्वविशिष्टभेदः स्वरूपसंबन्धेन प्रकारः। शाब्दबोधे तु तादृशभेदाश्रयः अभेदसंबन्धेन प्रकारः। पृथिवी इतरेभ्यो भिन्ना इत्यत्र शाब्दबोधे इतरप्रतियोगिकत्वविशिष्टभेदावच्छिन्नः अभेदेन प्रकारः। 'पृथिवी इतरभिन्ना' इत्यत्र शाब्दबोधे इतरप्रतियोगिकत्व-विशिष्टाभिन्नभेदावच्छिन्नः अभेदसम्बन्धेन प्रकारः। तथा च एतादृशस्थलेषु प्रतिज्ञाजन्यशाब्दबोधस्यानुमित्यन्यूनविषयकत्वं नास्तीत्यव्याप्तिः इति भावः। ***अनुयोगितयेति।*** अनुयोगितासंबन्धेन इतरविशिष्टो यः तस्य स्वरूपसंबन्धेन पक्षांशे विशेषणत्वात् इत्यर्थः। ***आख्यातान्तेति।*** तिङन्तेत्यर्थः। भिद्यते इत्यत्र भिद धातोर्भेदोऽर्थः, तिङः आश्रयत्वमर्थः। तत्र निरूपितत्वसंबन्धेन धात्वर्थभेदस्यान्वयः। तथा च भेदनिरूपिताश्रयत्वं स्वरूपसंबन्धेन पक्षविशेषणतया शाब्दबोधे भासत इत्यर्थः। ***इतरेभ्यो भिद्यत*** इति। पञ्चम्याः प्रतियोगित्वमर्थः, तत्राधेयतासंबन्धेन प्रकृत्यर्थस्येतरस्यान्वयः। प्रतियोगित्वस्य निरूपकत्वसंबन्धेन धात्वर्थे भेदेऽन्वयः। भेदस्य निरूपितत्वसंबन्धेन तिङर्थाश्रयत्वे तस्य स्वरूपसंबन्धेन पृथिव्यामन्वय इति इतरप्रतियोगिकत्वविशिष्टभेदाश्रयत्वं स्वरूपसंबन्धेन पक्षविशेषणतया भासत इति भावः। ***निष्ठान्तेति। निष्ठा*** – क्तप्रत्ययः। भिन्नमित्यत्र धातोः भेदोऽर्थः; क्तप्रत्ययस्य आश्रयत्वावच्छिन्नोऽर्थः। तदेकदेशाश्रयत्वे निरूपितत्वसंबन्धेन भेदस्यान्वयः। आश्रयत्वावच्छिन्न-स्याभेदसंबन्धेन पक्षेऽन्वय इति भावः। ***इतरेभ्यो भिन्नमिति।*** इतरप्रतियोगिकत्व-

**तदा यादृशपक्षसाध्यकाः पक्षे यादृशविशिष्टार्थबोधिकाः प्रतिज्ञाःसम्प्रदायसिद्धाः तादृशानां बोधानामन्यतमेनाप्यनिवर्तनीयस्य संशयस्यानिवर्तको यः तावतामन्यतमो बोधः तज्जनकत्वं वक्तव्यम्।**

---

उद्देश्यानुमितिपदस्य यादृशविशिष्टार्थबोधः प्रतिज्ञया जन्यते तादृशविशिष्टार्थबोध-परतेत्याभिप्रेत्य समाधत्ते – ***यादृशेति।*** यादृशरूपावच्छिन्नपक्षकयादृशरूपावच्छिन्नसाध्यक-सम्प्रदायसिद्धप्रतिज्ञाः यादृशरूपावच्छिन्नपक्षे यादृशरूपावच्छिन्नप्रकारकबोधजनिकाः तादृशरूपावच्छिन्ने तादृशरूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकतादृशबोधान्यतमबोध-जनकत्वे सति तादृशरूपावच्छिन्नपक्षकतादृशरूपावच्छिन्नसाध्यकन्यायान्तर्गतत्व

---

विशिष्टभेदाश्रयस्याभेदेनान्वयः। ***इतरभिन्नमिति।*** इतरपदस्य इतरप्रतियोगिकत्वविशिष्टे लक्षणा। तस्याभेदेन भेदेऽन्वयः। भेदस्य क्तप्रत्ययार्थाश्रयत्वावच्छिन्नैकदेशे आश्रयत्वे निरूपितत्वसंबन्धेनान्वयः। आश्रयस्याभेदेन पक्षेऽन्वयः इत्यर्थः।

***वैलक्षण्यमवसेयमिति।*** वैलक्षण्यमेवोपपादयति–***गन्धाद्यवच्छिन्नेति।*** गन्धवती इतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ अनुमितौ गन्धः उद्देश्यतावच्छेदकः, प्रतिज्ञाजन्यबोधे तु मतुबर्थः गन्धसम्बन्धः उद्देश्यतावच्छेदक इति वैलक्षण्यमित्यर्थः। ***तथात्वादिति।*** विधेयधर्मितावच्छेदकत्वात् उद्देश्यतावच्छेदकत्वादिति यावत्।

***उद्देश्यानुमितिपदस्येत्यादि।*** मूलस्थानुमितिपदस्य अनुमितिरिति नार्थः, येन पूर्वोक्तरीत्यानुमितिशाब्दबोधयोर्वैलक्षण्यात् अनुमित्यन्यूनानतिरिक्तविषयकत्वं शाब्दबोधस्य नास्तीति अव्याप्तिदोषः स्यात्। अपि तु तत्तत्प्रतिज्ञावाक्यात् यादृशविशिष्टार्थविषयकः शाब्दबोधो जायते तादृशशाब्दबोधपरः। अतो नाव्याप्तिरित्याशयेन समाधत्ते दीधितिकृत् इत्यर्थः। पर्यवसितं प्रतिज्ञालक्षणमाह–***यादृशरूपेत्यादिना।*** पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्न-साध्यकानुमितिस्थले पर्वतो वह्निमानिति प्रतिज्ञा सम्प्रदायसिद्धा। सा च प्रतिज्ञा पर्वतत्वावच्छिन्नविशेष्यकवह्निमत्त्वावच्छिन्नप्रकारकाभेदसंसर्गकशाब्दबोधजनिका, तादृशशाब्दबोधानिवर्त्यः संशयः भूतलं घटवन्न वा इत्यादिः संशयः तदनिवर्तको यः पर्वतः अभेदेन वह्निमद्विशिष्ट इति बोधः तज्जनकत्वं पर्वतो वह्निमानिति वाक्येऽस्ति, एवं पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकन्यायान्तर्गतत्वं चास्तीति लक्षणसमन्वयः।

प्रतिज्ञात्वमित्यर्थः, अत्र च जनिका इत्यन्तम् बोधविशेषस्य परिचायकमात्रं न तु तदर्थस्य लक्षणे निवेशः। बोधाश्च विषयविशेषान् निवेश्य विशिष्यैवोपादेयाः। अतो नात्माश्रयशङ्कावकाशः, एवं च प्रतिज्ञाप्रतिपाद्य विशिष्टार्थानामननुगमेनैकधर्मावच्छिन्नपक्षसाध्यक निखिलप्रतिज्ञासाधारणमपि

---

एवं शुद्धभेदत्वावच्छिन्नसाध्यकस्थले घटो भिद्यते भिन्नमिति प्रतिज्ञे प्रसिद्धे। घटो भिद्यते इति प्रतिज्ञाजन्यः शाब्दबोधः घटत्वावच्छिन्न-विशेष्यकभेदाश्रयत्वत्वावच्छिन्नप्रकारकः स्वरूपसंसर्गकश्च। घटो भिन्न इति प्रतिज्ञाजन्यबोधः घटत्वावच्छिन्नविशेष्यकः भेदाश्रयत्वावच्छिन्नप्रकारकः अभेदसंसर्गकश्च। तौ बोधौ अन्यतरत्वेनानुगमय्य तदन्यतरानिवर्त्यो यः संशयः उदासीनसंशयः तदनिवर्तकतादृशबोधान्यतरजनकत्वं तयोः प्रतिज्ञयोरस्ति। एवं घटत्वावच्छिन्नपक्षकभेदत्वावच्छिन्नसाध्यकन्यायान्तर्गतत्वं चास्तीति लक्षणसमन्वयः।

एवं पृथिवीत्वावच्छिन्नपक्षकेतरभेदत्वावच्छिन्नसाध्यकस्थले पृथिवी इतरेभ्यो भिद्यते, पृथिवी इतरेभ्यो भिन्ना, पृथिवी इतरभिन्ना इति प्रतिज्ञाः संप्रदायसिद्धाः। ततो जन्या बोधास्तु न एकरूपाः। अपि तु पृथिवीत्वावच्छिन्नविशेष्यक-इतरप्रतियोगिकत्वविशिष्टभेदाश्रयत्वप्रकारक-स्वरूपसंसर्गकबोधः, पृथिवीत्वावच्छिन्नविशेष्यक-इतरप्रतियोगिकत्वविशिष्ट-भेदाश्रयप्रकारकाभेदसंसर्गकबोधः, पृथिवीत्वावच्छिन्नविशेष्यक अभेदेन इतरप्रतियोगिकत्वविशिष्टविशेषितभेदाश्रयप्रकारकाभेदसंसर्गकबोध इत्येवं विलक्षणा बोधा जायन्ते, तेषां बोधानामन्यतमेनाप्यनिवर्त्यो यः संशयः तदनिवर्तकतादृशबोधान्यतमजनकत्वं तिसृष्वपि प्रतिज्ञास्वस्ति, एवं पृथिवीत्वावच्छिन्नपक्षक-इतरभेदत्वावच्छिन्नसाध्यकन्यायान्तर्गतत्वं चास्तीति लक्षणसमन्वयः।

यत्र एकधर्मावच्छिन्नसाध्यकस्थले विविधबोधजनिकाः प्रतिज्ञाः प्रसिद्धाः यथा भिद्यते, भिन्नमित्यादौ तत्रैव बोधानामन्यतरत्वेन वा अन्यतमत्वेन वानुगमः। पर्वतो वह्निमानित्यत्र तु बोधस्यैकविधत्वात् न तत्रान्यतमत्वेन बोधस्य निवेशः। अपि तु पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकबोधत्वेनैव निवेश इत्यवधेयम्। ***आत्माश्रय*** इति। प्रतिज्ञालक्षणघटकतया प्रतिज्ञाया निवेशे स्वज्ञानाधीनस्वज्ञानकत्वादात्माश्रय इत्यर्थः।

प्रतिज्ञात्वं नैकं सम्भवतीति बोधानामन्यतमत्वेनानुगमः। तेन रूपेण जनकतांश एव बोधानां विशेषणता न तु निवर्त्यत्वांशेपि। बोधानामननुगमेऽपि तादृशतादृशबोधनिवर्त्यत्वा-भावकूटघटितधर्मस्यानुगतत्वात् तादृशतादृशभेदकूटवद्भिन्नत्वरूपाद्यन्यतमत्ववन्निवर्त्यत्व-सामान्याभावस्थले तादृशतादृशबोधनिवर्त्यत्वाभावकूटस्य लाघवेन निवेशयितुमुचितत्वात्। एवं च तादृशाभावकूटनिवेशसूचनायैवान्यतमेनापीत्युक्तम्। एतेन सामान्याभावनिवेशसूचनायापिकार इति कस्यचिद्व्याख्यानमनादेयम्। विशेष्यदळे अन्यतमत्वनिवेशनमपि यत्र प्रतिज्ञार्थानां नानात्वं तत्रैव, पर्वतादिपक्षके वह्न्यादिसाध्यकस्थले पर्वतादौ वह्न्यादिमदभेदरूपेणैक-विधबोधस्यैव प्रतिज्ञया जननान्न तत्र तन्निवेशः। एतेनैकविधबोधमादायान्यतमत्वस्यासंभवेपि न क्षतिः। शब्दाभेदस्याप्रयोजकत्वात्। वह्नित्वावच्छिन्नसाध्यकप्रतिज्ञया घटवद्भूत-

---

***एवं चेत्यादि।*** एवं च भिद्यते भिन्नमित्यादौ प्रतिज्ञार्थविषयकबोधानामर्थ-विशेषान्निवेश्य विशिष्योपादाने चेत्यर्थः। अन्यतमत्वेनानुगमः सफलो भवतीति शेषः। अन्यथा प्रतिज्ञार्थत्वेनानुगमय्य तादृशार्थविषयकबोधानिवर्त्य-संशयानिवर्तकप्रतिज्ञार्थबोधजनकत्वमित्यस्यैव सम्यक्त्वेऽन्यतमत्वनिवेशो व्यर्थ एव स्यादिति ध्येयम्। एकधर्मावच्छिन्नपक्षसाध्यकनिखिलप्रतिज्ञासु घटत्वावच्छिन्नपक्षकभेदत्वावच्छिन्नसाध्यकेषु घटो भिद्यते, भिन्नः, अन्यः इत्यादिप्रतिज्ञावाक्येषु साधारणमेकं प्रतिज्ञात्वं न संभवति, तत्तत्प्रतिज्ञाप्रतिपाद्यार्थानां विलक्षणत्वात् एकविधबोधजनकत्वाभावेनानुगमासंभवात् इति तत्तद्बोधानामन्यतमत्वेनानुगमः कृतः। यथाश्रुतदीधितिग्रन्थात् बोधानामन्यतमत्वेन रूपेण निवर्त्यत्वांशे जनकत्वांशे च विशेषणत्वमिति प्रतीयते। परं तु जनकत्वांश एव विशेषणत्वम्। बोधानां विलक्षणत्वेऽपि तत्तद्बोधत्वेन निवर्त्यत्वांशे विशेषणत्वमुपगम्य तत्तद्बोधनिवर्त्यत्वाभावकूटवत्संशयनिवर्तकत्वाभावविशिष्ट-तत्तद्बोधान्यतमजनकत्वं भेदसाध्यकप्रतिज्ञानामनुगतं लक्षणम्। निवर्त्यत्वांशेऽन्यतमत्वेन बोधानां निवेशेऽन्यतमत्वस्य तद्भिन्नभिन्नत्वरूपतया तत्तद्बोधभिन्न-भिन्नत्ववन्निवर्त्यत्वसामान्याभावस्थाने तत्तद्बोधनिवर्त्यत्वाभावकूटस्यैव लाघवेन निवेशयितुं युक्तत्वादिति भावः। ***शब्दाभेदस्येति।*** स्थलभेदेन प्रतिज्ञात्वभेदात् लक्षणप्रतिपादकशब्दैक्यं न प्रयोजकम्।

अत्र यादृशपक्षसाध्यिकाः इत्यादिपरिचायकघटकस्य प्रकृतपक्ष-साध्यकार्थकत्वे एव यादृशरूपावच्छिन्नपक्षे यादृशरूपावच्छिन्नप्रकारकबोधलाभात्

लादिघटितधर्मावच्छिन्नविशेष्यकः पर्वतत्वावच्छिन्नपक्षकप्रतिज्ञया च तादृशधर्मावच्छिन्नप्रकारकोपि बोधो जन्यते। तन्निवर्त्यश्च भूतलं घटवन्नवेत्यादिसंशयोऽपीति प्रतिज्ञायां प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकत्वस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वस्य वानुपादाने तावद्बोधानिवर्त्यसंशयाप्रसिद्धिरतस्तदुपादानम्। यत्किंचिद्रूपावच्छिन्नपक्षसाध्यकप्रतिज्ञादिप्रतिपाद्यविशिष्टार्थबोधजनकत्वस्य यत्किंचिद्रूपावच्छिन्नपक्षसाध्यकन्यायान्तर्गतत्वस्य निवेशनेऽतिप्रसङ्गः प्रागुपदर्शित एवेति यादृशरूपावच्छिन्नपक्षसाध्यकप्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधनिवर्त्यसंशयानिवर्तकबोधजनकत्वं तादृशरूपावच्छिन्नपक्षसाध्यक न्यायान्तर्गतत्वं निवेशितम्।

---

निवर्त्यत्वान्वयिनां जनकतान्वयिनां च बोधानां यादृशरूपावच्छिन्नपक्षसाध्यविषयकत्वस्य लाभ इति प्रथमतः परिचायकप्रविष्टयोः पक्षसाध्ययोः प्रत्येकं प्रयोजनमाह – ***वह्नित्वावच्छिन्नसाध्यकप्रतिज्ञयेति।*** यादृशरूपावच्छिन्नपक्षकत्वानुक्तौ यादृशरूपावच्छिन्नसाध्यकप्रतिज्ञाः यादृशार्थबोधकतया संप्रदायसिद्धाः तादृशरूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकबोधान्यतमबोधजनकत्वे सति तत्तत्साध्यकन्यायान्तर्गतत्वं प्रतिज्ञात्वमित्युक्तौ वह्नित्वावच्छिन्नसाध्यकप्रतिज्ञा इत्यनेन घटवद्भूतलकालीनः पर्वतो वह्निमानिति प्रतिज्ञापि ग्रहीतुं शक्यते। तादृशप्रतिज्ञाजन्यो यः वह्निमदभिन्नस्तादृशपर्वत इति वोधः तन्निवर्त्यः संशयः भूतलं घटवन्नवेति संशयोऽपि इत्येवंरीत्या सर्वोऽपि संशयः वह्निसाध्यकप्रतिज्ञाजन्यबोधनिवर्त्य एवेति तदनिवर्त्यसंशयाप्रसिद्ध्या असंभवः स्यात् अतस्तदुपात्तम्। एवं साध्यतावच्छेदकावच्छिन्नसाध्यकत्वानिवेशे यादृशरूपावच्छिन्नपक्षकप्रतिज्ञाः यादृशविशिष्टार्थबोधजनिकाः संप्रदायसिद्धाः तादृशबोधानिवर्त्यसंशयानिवर्तकबोधान्यतमजनकत्वं प्रतिज्ञात्वमित्युक्तौ पर्वतो घटवद्भूतलकालीनवह्निमानिति प्रतिज्ञाजन्यबोधमादाय तन्निवर्त्यत्वमेव भूतलं घटवन्न वेति संशयेऽस्तीति तादृशबोधानिवर्त्यसंशयाप्रसिद्ध्यासंभवः स्यात्, अतस्तदुपात्तम् इति भावः। ***घटवद्भूतलादीति।*** घटवद्भूतलघटितधर्मः घटवद्भूतलकालीनपर्वतत्वम्। ***तादृशधर्मावच्छिन्नेति।*** घटवद्भूतलकालीनवह्नित्वावच्छिन्नप्रकारक इत्यर्थः।

ननु प्रकृतपक्षसाध्यतावच्छेदकावच्छिन्नत्वनिवेशो व्यर्थः, एवं तादृशबोधानिवर्त्यसंशयानिवर्तकत्वमपि व्यर्थमित्याशङ्क्य समाधत्ते ***यत्किंचिद्रूपावच्छिन्नेति।*** तथा च यत्किंचिद्रूपावच्छिन्नपक्षसाध्यकप्रतिज्ञा–

अधिकं त्विति न्यायेन साध्यांशे हेतुज्ञानज्ञाप्यत्वमवगाहमानेपि निगमनादिजन्यबोधे प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकत्वस्याक्षततया निगमनाद्यतिव्याप्तिवारणाय तद्रूपावच्छिन्न-विशेष्यकतद्रूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकत्वरूपतादृशबोधानतिरिक्तविषयकत्वं बोधविशेषणम्। इत्थं च प्रतिज्ञाजन्यबोधानिवर्त्यस्य वह्निः धूमज्ञानज्ञाप्यो न वेत्यादिसंशयस्य

---

प्रतिपाद्यविशिष्टार्थबोधजनकत्वे सति यत्किंचिद्रूपावच्छिन्नपक्षसाध्यक-न्यायान्तर्गतत्वं प्रतिज्ञात्वमित्युक्तौ वह्निसाध्यकोपनयस्य वह्निव्याप्य-धूमवानयमित्यस्य वह्निव्याप्यधूमसाध्यकप्रतिज्ञार्थबोधकत्वात् वह्निसाध्यक-न्यायान्तर्गतत्वाच्च प्रतिज्ञात्वप्रसङ्गः। तद्वारणाय प्रकृतपक्षसाध्यतावच्छेदका-वच्छिन्नत्वनिवेशः। तन्निवेशे च यद्रूपावच्छिन्नपक्षकयद्रूपावच्छिन्नसाध्यकप्रतिज्ञा-प्रतिपाद्यविशिष्टार्थबोधानिवर्त्यसंशयानिवर्तकबोधजनकत्वं तद्रूपावच्छिन्नपक्षकतद्रूपा-वच्छिन्नसाध्यकन्यायान्तर्गतत्वं प्रतिज्ञात्वमिति वह्निसाध्यकोपनयस्य पर्वतत्वावच्छिन्न-पक्षकवह्नित्वावच्छिन्नसाध्यकन्यायान्तर्गतस्य पर्वतत्वावच्छिन्नपक्षकवह्नित्वा-वच्छिन्नसाध्यकप्रतिज्ञार्थबोधानिवर्त्यः यः संशयः वह्निव्याप्यधूमवान्न वेति संशयः तन्निवर्तकबोधजनकत्वात् तदनिवर्तकबोधजनकत्वं नास्तीति नातिव्याप्तिः।

ननु तादृशान्यतमबोधजनकत्वमेवास्तु, किं तादृशबोधानिवर्त्यसंशया-निवर्तकत्वपर्यन्तनिवेशेनेत्यत आह–***अधिकंत्विति।*** पर्वतो वह्निमान् धूमादित्यादि-न्यायान्तर्गतात् तस्मात्तथेति निगमनात् जायमाने पर्वतो धूमज्ञानज्ञाप्यवह्निमदभिन्न इत्याकारकबोधे 'अधिकं तु प्रविष्टं चेन्न तद्धान्यै' इति न्यायेन वह्न्यंशे धूमज्ञानज्ञाप्यत्वस्याधिकस्य भानेऽपि प्रतिज्ञाप्रतिपाद्यो यो विशिष्टार्थः वह्निमदभिन्नपर्वतः तद्विषयकत्वमक्षतमिति पर्वतत्वावच्छिन्नविशेष्यकवह्निमत्त्वा-वच्छिन्नप्रकारकबोधजनके निगमनेऽतिव्याप्तिःस्यादिति तद्वारणाय तद्रूपावच्छिन्न-विशेष्यकतद्रूपावच्छिन्नप्रकारकबोधजनकत्वमुपेक्ष्य तादृशबोधानिवर्त्यसंशया-निवर्तकबोधजनकत्वमुक्तम्। तथा सति पर्वतो वह्निमानिति बोधानिवर्त्यो यः वह्निर्धूमज्ञानज्ञाप्यो न वा, इति ज्ञानज्ञाप्यत्वं धूमीयं न वेति च संशयः तन्निवर्तकत्वमेव निगमनजन्यबोधस्यास्तीति नातिव्याप्तिरिति भावः। ***निगमनाद्यतिव्याप्तिवारणायेति।*** आदिपदात् अनतिरिक्तविषयकत्वघटकसाध्यता-वच्छेदकसम्बन्धनिवेशस्थलस्य हेतुत्वं प्रमेयं प्रमेयादित्यादौ हेत्ववयवस्य परिग्रहः।

निवर्तकतया तादृशबोधवारणम्। न च प्रतिज्ञाजन्यबोधस्य पर्वतत्वाद्यवच्छिन्नविशेष्यक-वह्निमत्त्वाद्यवच्छिन्नप्रकारकबोधत्वेनैवोपादेयतया निगमनादिजन्यबोधस्यापि तथात्वात्तन्निवर्त्यत्वं-मुक्तसंशयस्याक्षतमेवेति वाच्यम्। अप्रामाण्यज्ञानानास्कन्दिततादृशविशिष्टार्थविषयक-निश्चयत्वावच्छिन्नानिवर्त्यत्वस्यैव निवेशनीयत्वात् उक्तसंशयस्य धूमज्ञानज्ञाप्यत्वाविषयक-वह्निमत्पर्वतनिश्चयानिवर्त्यत्वेन तथाविधनिश्चयत्वावच्छिन्नानिवर्त्यत्वाक्षतेः।

एतेन सर्वेषामेव संशयानां वह्निमत्पर्वतादिविषयकसमूहालम्बनात्मकस्वविरोधि-निश्चयनिवर्तनीयतया तादृशबोधानिवर्त्यसंशयाप्रसिद्धिरित्यपि निरस्तम्। तादृशनिश्चयत्वनिष्ठं

---

**न च प्रतिज्ञाजन्यबोधस्येति।** प्रतिज्ञाप्रतिपाद्यो यो विशिष्टार्थस्तद्विषयक-बोधानिवर्त्यसंशयानिवर्तकत्वनिवेशेऽपि तादृशबोधस्य पर्वतत्वावच्छिन्नविशेष्यता-निरूपितवह्निमत्त्वावच्छिन्नप्रकारताशालिबोधत्वेनैव निवेशनीयतया तादृशबोधत्वा-वच्छिन्ननिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यसंशयानिवर्तकबोधजनकत्वमिति लक्षणपर्यवसानात् निगमनजन्यबोधस्यापि पर्वतविशेष्यकवह्निप्रकारकबोधत्वा-वच्छिन्नत्वात् तन्निवर्त्यत्वमेव वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयेऽस्तीति तदनिवर्त्यघटादिसंशयानिवर्तकत्वं निगमनजन्यबोधेऽस्तीति तज्जनके निगमनेऽतिव्याप्तिरिति शङ्का। **तथात्वादिति।** पर्वतत्वावच्छिन्नविशेष्यता-निरूपितवह्निमत्त्वावच्छिन्नप्रकारताकबोधत्वावच्छिन्नत्वात्। ***तन्निवर्त्यत्वम्*** – निगमनजन्यबोधनिवर्त्यत्वम्। **उक्तसंशयस्य** – वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयस्य।

समाधत्ते – ***अप्रामाण्येति।*** अप्रामाण्यज्ञानानास्कन्दितपर्वतत्वावच्छिन्न-विशेष्यकवह्निमत्त्वावच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकता-निरूपितप्रतिबध्यताशून्यसंशयाप्रतिबन्धकबोधजनकत्वमिति विवक्षितम्। निश्चयत्वावच्छिन्नत्वं च निश्चयत्वव्यापकत्वम्। तथा च धूमज्ञानज्ञाप्यत्वाविषयके पर्वतो वह्निमानिति निश्चयेऽपि पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्न-प्रकारकनिश्चयत्वसत्त्वात् तत्र च ज्ञानज्ञाप्यत्वसंशयप्रतिबन्धकताविरहात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताकः संशयः पर्वतो वह्निमान्न वेति संशय एव। तच्छून्यः संशयः वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयः तन्निवर्तकत्वमेव निगमनजन्यबोधेऽस्तीति न निगमनेऽतिव्याप्तिः इति भावः।

निवर्तकतावच्छेदकत्वं च न स्वरूपसंबंधरूपं किंत्वनतिरिक्तवृत्तित्व, तेन सम्बन्धी वह्निमान्नवेत्याकारकैकदेशसंशयं प्रति वह्निसम्बन्ध्यभिन्नपर्वतादिनिश्चयत्वेनप्रतिबन्धकत्वेऽपि तादृशसंशयनिवर्तकप्रतिज्ञाजन्यबोधस्य नासंग्रहः। अत एव धूमदालोकवान् पर्वतो वह्निमानित्यादौ हेतुजन्यबोधनिवर्त्यं हेतुत्वं धूमीयं न वेति संशयं प्रति प्रतिज्ञाप्रतिपादित–

---

***एतेनेति।*** निश्चयत्वावच्छिन्नानिवर्त्यत्वनिवेशेनेत्यर्थः। भूतलं घटवन्न वेत्यादिः संशयः प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकनिश्चयानिवर्त्य इति वाच्यम्। परं तु सोऽपि वह्निमत्पर्वतविषयकः यः भूतलं घटवत् पर्वतो वह्निमांश्चेति समूहालम्बननिश्चयः तत्प्रतिबध्य इति तादृशनिश्चयरूपबोधाप्रतिबध्यसंशयाप्रसिद्ध्या असंभवः स्यात् यथाश्रुते। बोधत्वावच्छिन्नत्वनिवेशे तु घटवद्भूतलाविषयके पर्वतो वह्निमानिति निश्चयेऽपि प्रतिज्ञार्थविषयकनिश्चयत्वसत्त्वेन तत्र घटवद्भूतलसंशयप्रतिबन्धकताविरहात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपित–प्रतिबध्यताशून्यः घटवद्भूतलादिसंशयः प्रसिद्ध इति नाप्रसिद्धिरिति भावः।

तादृशनिश्चयत्वावच्छिन्नत्वं तादृशनिश्चयत्वनिष्ठावच्छेदकतानिरूपकत्वम्। तत्रावच्छेदकत्वं न स्वरूपसंबन्धविशेषः अपि त्वनतिरिक्त– वृत्तित्वमित्याह– ***तादृशनिश्चयत्वनिष्ठमिति।*** यदि स्वरूपसंबन्धरूपमवच्छेदकत्वं निवेश्येत तदा वह्निसम्बन्ध्यभिन्नपर्वतविषयकनिश्चयत्वेन 'सम्बन्धी वह्निमान्न वे'ति संशयं प्रति वह्निमदभिन्नः पर्वत इति बोधस्याप्रतिबन्धकतया तादृशनिश्चयत्वा–वच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यः संशयः 'सम्बन्धी वह्निमान्न वे'ति संशयः तत्प्रतिबन्धकत्वमेव प्रतिज्ञाजन्यबोधस्यास्तीति तदनिवर्तकबोधजनकत्वं नास्तीति पर्वतो वह्निमानिति प्रतिज्ञायामव्याप्तिः स्यात्। अनतिरिक्त–वृत्तित्वरूपावच्छेदकत्वनिवेशे तु तादृशनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां फलितमिति वह्निमदभिन्नपर्वतविषयकनिश्चयत्ववति 'वह्निसंबन्धी पर्वत' इति निश्चये 'सम्बन्धी वह्निमान्न वे'ति संशयप्रतिबन्धकतायाः सत्त्वात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यः संशयः घटादिसंशय एव, तदप्रतिबन्धको बोधः 'वह्निमदभिन्नः पर्वत' इति बोधः तज्जनकत्वं 'पर्वतो वह्निमानि'ति प्रतिज्ञायामस्ति इति नातिव्याप्तिः इति भावः।

***अत एवेति।*** तादृशनिश्चयत्वव्यापकत्वनिवेशादेवेत्यर्थः।

विशिष्टार्थविषकनिश्चयत्वेनाप्रतिबन्धकत्वेऽपि न विशेष्यदलवैयर्थ्यम्। वह्निमत्त्वावच्छिन्न-प्रकारकनिश्चयत्वावच्छिन्ननिवर्त्यस्य पर्वतत्वाद्यवच्छिन्नविशेष्यकनिश्चयत्वावच्छिन्ननिवर्त्यस्य चाप्रसिद्धिरतो विशिष्य विशेष्यप्रकारकोभयनिवेशनम्।

---

यादृशरूपावच्छिन्नपक्षकयादृशरूपावच्छिन्नसाध्यकसम्प्रदायसिद्धप्रतिज्ञाः यादृशयादृशविशिष्टार्थबोधजनिकाः तावद्बोधान्यतमानिवर्त्यसंशयानिवर्तको यस्तावद्बोधानामन्यतमो बोधस्तज्जनकत्वमिति लक्षणे तावद्बोधानामन्यतम इति विशेष्यदलमनुपादाय तादृशसंशयानिवर्तको यो बोधस्तज्जनकत्वमित्येतावन्मात्रोक्तौ धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेतुवाक्यजन्यः धूमनिरूपितं ज्ञानज्ञाप्यत्वमिति बोधः प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकेण धूमज्ञानज्ञाप्यालोकवत्पर्वतो वह्निमानिति बोधेन निवर्त्य 'ज्ञानज्ञाप्यत्वं धूमीयं न वे'ति संशयमेव निवर्तयति, न तु तदनिवर्त्यमिति तदनिवर्त्यसंशयानिवर्तकतादृशबोधजनके धूमादिति हेतुवाक्येऽतिव्याप्तिः। तावद्बोधानामन्यतम इति विशेष्यदलोपादाने च हेतुवाक्यजन्यबोधस्य प्रतिज्ञाजन्यबोधान्यतमत्वं नास्तीति नातिव्याप्तिरिति वक्तव्यम्। परं तु स्वरूपसंबन्धरूपनिश्चयत्वावच्छिन्नत्वनिवेशे ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयस्य धूमनिरूपितज्ञानज्ञाप्यत्वविषयकनिश्चयत्वा-वच्छिन्ननिवर्त्यत्वेऽपि धूमज्ञानज्ञाप्यालोकवत्पर्वतविशेष्यकवह्निमत्प्रकारक-निश्चयत्वावच्छिन्नानिवर्त्यतया तदनिवर्त्यतादृशसंशयनिवर्तकत्वमेव हेतुजन्यबोधेऽस्तीत्यतिव्याप्त्यप्रसक्त्या विशेष्यदलवैयर्थ्यं स्यात्। व्यापकत्वरूपा-वच्छिन्नत्वनिवेशे तु तादृशनिश्चयत्ववति धूमज्ञानज्ञाप्यालोकवान् पर्वतो वह्निमानिति निश्चये ज्ञानज्ञाप्यत्वं धूमीयं न वेति संशयप्रतिबन्धकतायाः सत्त्वात् प्रतिबन्धकतायां तादृशनिश्चयत्वव्यापकत्वमक्षतमिति व्यापकप्रतिबन्धकता-निरूपितप्रतिबध्यताशून्यः घटादिसंशय एव, तदनिवर्तकबोधजनकत्वमादाय हेतावतिव्याप्तिवारकतया विशेष्यदलसार्थक्यमिति भावः। ***विशेष्यदलम्*** –तादृशबोधान्यतमदलम्। विशेष्यदलासत्त्वे धूमादालोकवान् पर्वतो वह्निमानिति प्रतिज्ञाजन्यबोधत्वस्य 'हेतुत्वं धूमीयं न वे'ति संशयनिरूपितप्रतिबन्धकतानतिरिक्त-वृत्तित्वादतिव्याप्तिः स्यादिति न विशेष्यदलवैयर्थ्यमिति भावः। पर्वतत्वावच्छिन्नविशेष्यकत्वदलस्य वह्निमत्त्वावच्छिन्नप्रकारकत्वदलस्य च

यद्यप्यत्र प्रतिज्ञाप्रतिपादितस्य विधेयविशिष्टधर्मिण एव यादृशविशिष्टार्थेऽपुपपादनसम्भव इति यादृशविशिष्टार्थबोधिका इत्युपेक्ष्य विशेष्यप्रकारयोः खण्डश उपादानसूचनाय पक्षे

---

प्रयोजनमाह–**वह्निमत्त्वाद्यवच्छिन्नेति।** अभेदसम्बन्धावच्छिन्नवह्निमत्त्वावच्छिन्न-प्रकारताकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यसंशयानिवर्तकेत्युक्तौ तादृशनिश्चयत्वस्य पर्वतो वह्निमान्, द्रव्यं वह्निमत्, प्रमेयं वह्निमत्, भूतलं वह्निमत् इत्यादिनिश्चयेष्वपि सत्त्वेन तेषु सर्वेषु पर्वतो वह्निमान्न वेत्याद्येकैकसंशयनिरूपितप्रतिबन्धकताविरहेण तादृशनिश्चयत्वव्यापकप्रति-बन्धकताया अप्रसिद्ध्या तन्निरूपितप्रतिबध्यताशालिसंशयाप्रसिद्ध्या असंभवः स्यात्। अतः पर्वतत्वावच्छिन्नविशेष्यकत्वनिवेशः। तन्निवेशे च पर्वतो वह्निमानिति निश्चय एव ग्राह्यः, तत्र च पर्वतो वह्निमान्न वेति संशयनिरूपितप्रतिबन्धकतायाः सत्त्वान्नाप्रसिद्धिरिति। एवं पर्वतत्वावच्छिन्नविशेष्यक-निश्चयत्वव्यापकेत्येतावन्मात्रोक्तौ पर्वतो घटवान्, द्रव्यवान्, प्रमेयवानित्यादि-निश्चयेष्वपि तादृशनिश्चयत्वसत्त्वेन तत्र यत्किंचित्संशयनिरूपित-प्रतिबन्धकताविरहात् तादृशनिश्चयत्वव्यापकप्रतिबन्धकत्वाप्रसिद्ध्या असंभव इति वह्निमत्त्वावच्छिन्नप्रकारकत्वनिवेशः। तन्निवेशे पर्वतो वह्निमानिति निश्चय एव तादृशनिश्चयत्वसत्त्वेन तत्र पर्वतो वह्निमान्नवेति संशयनिरूपित-प्रतिबन्धकतायाःसद्भावेन नाप्रसिद्धिरिति भावः। ***निश्चयत्वावच्छिन्ननिवर्त्यस्येति।*** निश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिन इत्यर्थः। ***विशिष्येति।*** पर्वतत्वेन पर्वतस्य वह्निमत्वेन वह्निमतश्च निवेशनमित्यर्थः। पर्वतत्वावच्छिन्नविशेष्यकत्ववह्निमत्त्वावच्छिन्नप्रकारकत्वयोरुभयोर्निवेशनमिति यावत्।

नन्वभेदसम्बन्धेन साध्यवद्विशिष्टपक्षविषयकत्वरूपं विशिष्ट-विषयकत्वमेवानतिरिक्तविषयकत्वघटकबोधविशेषणमिति यादृशविशिष्टार्थबोधिका इत्येव वक्तुमुचितम्। न तु पक्षे यादृशविशिष्टार्थबोधिका इति। तथा सति पक्षविशेष्यकवह्निमत्त्वविशिष्टप्रकारकबोधजनिका इत्यर्थलाभेन भ्रमप्रमासाधारण-निरूप्यनिरूपकभावापन्नविषयताशालित्वेन बोधनिवेश इति अर्थप्रतीतिप्रसङ्गादिति शङ्कते–***यद्यपीति।*** यादृशविशिष्टार्थबोधजनिका इत्युक्तौ वास्तवविशिष्ट-विषयिताशालिबोधलाभेन जनकतास्वपि वास्तवविशिष्टविषयिताशालिबोधानामेव

यादृशविशिष्टार्थबोधिका इत्यभिधानमनुचितम्। तथापि धूमदालोकवान्पर्वतो वह्निमान्धूमादित्यादौ प्रतिज्ञार्थहेत्वर्थविषयकसमूहालम्बनबोधजनकहेत्वन्ते हेतौ वा न्यायावयवत्वं परित्यज्य न्यायान्तर्गतत्वनिवेशनपक्षे प्रतिज्ञाजन्यबोधनिष्ठैकदेशविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपित-जनकतामादायैकदेशे चाऽतिप्रसङ्गवारणाय विशिष्टार्थविषयकबोधत्वावच्छिन्नजन्यता-प्रतियोगिकजनकत्वनिवेशे पर्वतो वह्निमानित्यादिप्रतिज्ञाया असंग्रहः, वह्न्यादिशून्यपर्वतादौ

---

विशेषणत्वमिति लभ्येत। तथासत्यसंभव इति भ्रमप्रमासाधारण्येनैव बोधनिवेश इति वक्तुं भूमिकाम् आरचयति-***तथापीत्यादिना।*** यस्तावद्बोधानामन्यतमो बोधस्तज्जनकत्वमित्यस्य तावद्बोधान्यतमनिष्ठजन्यतानिरूपितजनकत्वमित्यर्थ-विवक्षायाम् अन्यतमबोधपदेन प्रतिज्ञार्थहेत्वर्थोभयविषयकसमूहालम्बनबोधस्यापि प्रतिज्ञार्थविषयकत्वेनान्यतमान्तर्गततया तज्जनके प्रतिज्ञाहेतुसमुदाये धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्रातिव्याप्तिः। एवं तत्रैव तादृशसमूहालम्बन-बोधनिष्ठहेत्वर्थविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतामादाय हेतुवाक्येऽतिव्याप्तिः। एवं न्यायावयवत्त्वं परित्यज्य न्यायान्तर्गतत्वनिवेशपक्षे पर्वतो वह्निमानिति प्रतिज्ञार्थविषयकबोधनिष्ठपर्वतविषयकबुद्धित्वावच्छिन्न-जन्यतानिरूपितजनकताश्रये प्रतिज्ञैकदेशे पर्वतपदे चातिव्याप्तिः। न चैतद्दोषवारणाय प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकबोधत्वावच्छिन्नजन्यतानिरूपितजनकत्वं विवक्षितम्। प्रतिज्ञाहेतुसमुदाये हेतौ प्रतिज्ञैकदेशे च प्रतिज्ञार्थविषयकबुद्धित्वावच्छिन्नजन्यता-निरूपितजनकत्वविरहान्नातिव्याप्तिरिति वाच्यम्। तथा सति पर्वतो वह्निमान् इति प्रतिज्ञाया असंग्रहात्। वह्न्यादिशून्यपर्वतादौ अभेदेन वह्निमत्प्रकारकभ्रमात्मकबोधं प्रत्यपि प्रतिज्ञाया जनकतया वास्तववह्निमदभिन्नपर्वतविषयकत्वस्य तत्राभावेन तस्य जन्यतानवच्छेदकतया भ्रमप्रमासाधारणं पर्वतत्वावच्छिन्नविशेष्यता-निरूपिताभेदसम्बन्धावच्छिन्नवह्निमत्त्वावच्छिन्नप्रकारताशालिबोधत्वमेव प्रतिज्ञाजन्यतावच्छेदकमिति वास्तववह्निमत्पर्वतविषयकत्वावच्छिन्नजन्यतानिरूपित-जनकताविरहात् प्रतिज्ञायां लक्षणासंभवात्। तस्मात् भ्रमसाधारण-पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नवह्निमत्त्वावच्छिन्न-प्रकारताशालिबोधत्वावच्छिन्नजन्यतानिरूपितजनकतैव लक्षणे प्रविष्टेति सूचनाय पक्षे यादृशविशिष्टार्थबोधिका इत्यभिधानमिति भावः।

वह्निमत्त्वाद्यवगाहिभ्रमात्मकशाब्दबोधसाधारण्यानुरोधेन तत्तत्पदार्थानां परस्परमुपश्लेषावगाहि-त्वस्यैव तादृशप्रतिज्ञाजन्यतावच्छेदकत्वोपगमात् तत्तद्विशिष्टार्थविषयकत्वस्यातथात्वादिति। अनतिरिक्तविषयकबोधनिष्ठतादृशपरस्परोपश्लेषावगाहित्वावच्छिन्नजन्यता-प्रतियोगिजनकताया निवेशसूचनाय तथाभिधानम्। तादृशपरस्परोपश्लेषावगाहिशाब्दत्वे जन्यतावच्छेदकतापर्याप्त्यनिवेशान्नानतिरिक्तविषयकत्वदलवैयर्थ्यमित्यवधेयम्।

---

हेत्वर्थमात्रविषयकबोधोपादाने तस्या वास्तवप्रतिज्ञार्थाविषयकत्वेनान्यत-मान्तर्गतत्वाभाव इति समूहालम्बनानुधावनम्। न्यायावयवत्वमुभयघटक-भागद्वयाघटितत्वाघटितमित्याशयेन हेत्वन्ते, तद्घटितमित्याशयेन च हेतावित्युक्तम्। पर्वतो वह्निमान्धूमादित्यत्रैव हेत्वन्तेऽतिव्याप्तिसंभवेन धूमादालोकवान्पर्वतो वह्निमान्धूमादिति स्थलानुधावनं किमर्थमित्यालोचनीयम्। ***तत्तत्पदार्थानामिति।*** तत्तत्पदार्थानां परस्परसम्बन्धावगाहित्वमित्यर्थः। पर्वतत्वाद्यवच्छिन्न-विशेष्यतानिरूपितवह्निमत्त्वाद्यवच्छिन्नप्रकारताशालित्वमिति यावत्। ***अतथात्वादिति।*** प्रतिज्ञाजन्यतावच्छेदकत्वाभावादित्यर्थः। ***अनतिरिक्तविषयकेति।*** तावद्बोधान्यतमा-निवर्त्यसंशयानिवर्तकत्वमनतिरिक्तविषयकत्वम्।

नन्वेवं सत्यनतिरिक्तविषयकत्वनिवेशनं व्यर्थम्। निगमनवारणाय हि तत्। निगमनस्य च धूमज्ञानज्ञाप्यवह्निमदभिन्नपर्वतविषयकबोधत्वा-वच्छिन्नजन्यतानिरूपितजनकत्वसत्त्वेऽपि वह्निमत्त्वावच्छिन्नप्रकारकपर्वत-विशेष्यकबोधत्वावच्छिन्नजन्यतानिरूपितजनकत्वविरहादतिव्याप्त्य-प्रसक्तेरित्याशङ्क्य निगमनजन्यतावच्छेदकशरीरे धूमज्ञानज्ञाप्यत्वविषयकत्व-स्याधिकस्य प्रवेशेऽपि 'अधिकं त्वि'त्यादिन्यायेन वह्निमत्प्रकारकपर्वतविशेष्यकत्वे जन्यतावच्छेदकत्वाक्षतेस्तदवच्छिन्नजन्यतानिरूपितजनकतामादायातिव्याप्ति-वारकतया तत्सार्थक्यम्। जन्यतावच्छेदकतायाः पर्याप्तिनिवेशे यद्यप्यतिव्याप्तिर्न संभवति, तथापि प्रयोजनविरहान्न सा निवेश्यत इत्याह–***परस्परोपश्लेषावगाहिशाब्दत्वे*** इति। ***जन्यतावच्छेदकतापर्याप्त्यनिवेशादिति।*** पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभेद-संबन्धावच्छिन्नवह्निमत्त्वावच्छिन्नप्रकारताशालिशाब्दबोधत्वपर्याप्तावच्छेदकता-कजन्यतानिरूपितजनकत्वस्याविवक्षणादित्यर्थः।

ननु पर्याप्त्यनिवेशे धूमादालोकवान्पर्वतो वह्निमान् धूमात् इत्यादौ प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिर्दुर्वारा, तादृशवाक्यद्वयजन्यविशिष्टवैशिष्ट्यावगाहि-

भेदादिसाध्यकस्थले पृथिवीतरेभ्यो भिद्यते इत्यादिप्रतिज्ञाप्रतिपाद्यभेदाश्रयत्वादिरूप-
यत्किंचिदेकार्थविषयकनिश्चयाप्रतिबध्यभेदादिकोटिकसंशयं प्रति पृथिवी
नेतराणीत्यादिप्रतिज्ञाजन्यभेदादिप्रकारकनिश्चयस्य प्रतिबन्धकतया न कस्याश्चिदपि
प्रतिज्ञायास्तादृशसंशयानिवर्तकबोधजनकत्वमतस्तद्विशिष्टार्थनिश्चयनिवर्त्यत्वाभावकूटनिवेशनम्।
प्रतिज्ञाजन्यबोधस्य स्वसमानाकारानुमितौ सिद्धिविधया प्रतिबन्धकत्वात् तादृशानुमितेश्च
सिषाधयिषाकालीनतादृशबोधाप्रतिबध्यतया तादृशाप्रमाण्यज्ञानानास्कन्दितप्रतिज्ञा-

---

बोधनिष्ठहेत्वर्थविशिष्टप्रतिज्ञार्थविषयकत्वावच्छिन्नजन्यतायाः प्रतिज्ञार्थविषयकत्वावच्छिन्नतया तन्निरूपितजनकताशालित्वात्। न च तादृशविशिष्टवैशिष्ट्यबोधो नाऽनतिरिक्तविषयकः, वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयस्यैव प्रतिज्ञार्थबोधानिवर्त्यतया तन्निवर्तकत्वादिति वाच्यम्। एवमपि धूमात् वह्निमतः सधर्मा पर्वतो वह्निमान् धूमादित्यादौ हेत्वन्तेऽतिव्याप्तिः, विशिष्टवैशिष्ट्यावगाहिबोधनिवर्त्यत्वस्य वह्निर्धूमज्ञानज्ञाप्यो न वेति संशये सत्त्वेन तदनिवर्त्यसंशयानिवर्तकत्वस्याक्षतत्वादिति चेत्–न। एवमपि तादृशप्रतिज्ञार्थविषयकनिश्चयत्वव्यापकप्रतिबन्धकताकान्यस्य पर्वतो धूमज्ञानज्ञाप्यवह्निमान्न वेति संशयस्य निवर्तकतयैवादोषादिति न पर्याप्तिनिवेश आवश्यक इति।

एतावता तत्तत्प्रतिज्ञार्थविषयका यावन्तो बोधाः प्रत्येकं तन्निवर्त्यत्वाभावकूटवत्संशयानिवर्तकतावद्बोधान्यतमजनकत्वमिति प्रतिज्ञालक्षणं संपन्नम्। तत्र कूटनिवेशस्य प्रयोजनमाह–***भेदादिसाध्यकस्थल*** इति। इतरभेदसाध्यकस्थले संप्रदायसिद्धाः प्रतिज्ञाः पृथिवी इतरेभ्यो भिद्यते, पृथिवी इतरभिन्ना, पृथिवी नेतराणीत्यादयः। तत्र इतरेभ्यो भिद्यते इति प्रतिज्ञाप्रतिपाद्यइतरभेदाश्रयत्वप्रकारकबोधानिवर्त्यो यः इतरभेदकोटिकः संशयः तन्निवर्तकबोधजनकत्वमेवं पृथिवी नेतराणीति प्रतिज्ञायामस्ति। एवं इतरभेदप्रकारकबोधानिवर्त्यभेदाश्रयत्वकोटिकसंशयनिवर्तकबोधजनकत्वमेव पृथिवी इतरेभ्यो भिद्यत इति प्रतिज्ञायामस्तीत्येवं इतरभेदसाध्यकप्रतिज्ञास्वव्याप्तिरिति यत्किंचिद्बोधनिवर्त्यत्वाभावमनिवेश्य बोधनिवर्त्यत्वाभावकूटनिवेशनम्। तन्निवेशने च भेदाश्रयत्वकोटिकसंशयस्य भेदप्रकारकबोधानिवर्त्यत्वेऽपि भेदाश्रयत्वप्रकारकबोधनिवर्त्यत्वाभावो नास्तीति भेदसाध्यकस्थलीयप्रतिज्ञाजन्ययावद्बोधान्यतमनिवर्त्यत्वाभावकूटवान् संशयः घटादिसंशय एव तदनिवर्तकत्वं प्रतिज्ञाजन्येषु

प्रतिपाद्यविशिष्टार्थनिश्चयत्वावच्छिन्नप्रतिबन्धकतान्यत्वादसम्भव इत्यतो ज्ञानसामान्यमुपेक्ष्य संशयपर्यन्तानुधावनम्। न चानुमितेस्तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वेऽपि तदप्रतिबन्धकसिषाधयिषाकालीनबोधजनकत्वमादाय प्रतिज्ञायां लक्षणसमन्वयः संभवतीति संशयपदमनर्थकं, स्वरूपयोग्यतारूपजनकताया एव निवेशनीयतयाऽव्याप्तेरप्यनवकाशादिति

---

बोधेष्वस्तीति तावद्बोधान्यतमजनकत्वमादाय तत्रत्यप्रतिज्ञासु समन्वयः कार्य इति भावः।

संशयनिश्चयसाधारणज्ञानपदमुपेक्ष्य संशयपदनिवेशस्य प्रयोजनमाह- ***प्रतिज्ञाजन्यबोधस्येति।*** तथा च प्रतिज्ञाजन्यविशिष्टार्थविषयकबोधा-निवर्त्यज्ञानानिवर्तकबोधजनकत्वं प्रतिज्ञात्वमित्युक्तौ असंभवः स्यात्। तथाहि – 'पर्वतो वह्निमान्' इति प्रतिज्ञाजन्यस्य सिषाधयिषाविरहविशिष्टस्य बोधस्य स्वसमानाकारकानुमितौ सिद्धिविधया प्रतिबन्धकत्वात् तादृशानुमितेश्च सिषाधयिषाकालीनः यः तादृशबोधः तदप्रतिबध्यतया तादृशबोधसामान्या-प्रतिबध्यानुमितिरूपज्ञानप्रतिबन्धकत्वमेव प्रतिज्ञाजन्यबोधस्य अस्तीति तदप्रतिबन्धकबोधजनकत्वस्य प्रतिज्ञायामभावात्। अतः ज्ञानसामान्यमुपेक्ष्य संशयपर्यन्तनिवेशः। तन्निवेशे च विशिष्टार्थबोधाप्रतिबध्यः यः घटादिसंशयः तदप्रतिबन्धकत्वस्य प्रतिज्ञाजन्यबोधे सद्भावात् न असम्भव इति भावः। ***सिषाधयिषाकालीनतादृशबोधप्रतिबध्येति।*** सिषाधयिषाविरहविशिष्टसिद्धेरेव प्रतिबन्धकत्वात् इति भावः। ***विशिष्टार्थनिश्चयत्वावच्छिन्नेति।*** विशिष्टार्थ-निश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्येत्यर्थः। विशिष्टार्थनिश्चयत्वस्य सिषाधयिषाकालीननिश्चयेऽपि सत्त्वात् तत्र प्रतिबन्धकताविरहादिति भावः।

शङ्कते – ***न चेति।*** सिषाधयिषाविरहविशिष्टस्य प्रतिज्ञाजन्यबोधस्य अनुमितिप्रतिबन्धकत्वेऽपि सिषाधयिषाकालीनस्य तस्य अनुमित्यप्रतिबन्धकतया तादृशबोधजनकत्वमादाय प्रतिज्ञायां लक्षणसमन्वयसंभवात् संशयपदं व्यर्थम्। बोधजनकत्वपदेन बोधस्वरूपयोग्यत्वस्य विवक्षितत्वात् बोधानुपधायकप्रतिज्ञायाम् अव्याप्तेरपि अनवकाश इति भावः। ***अनुमितेरिति।*** सिषाधयिषाकालीनानुमितेरित्यर्थः। ***तदप्रतिबन्धकेति।*** तादृशानुमित्यप्रतिबन्धकेत्यर्थः। ननु सिषाधयिषाविरहकालीन-

वाच्यम्। अनिवर्तकत्वं हि प्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वं न तु प्रतिबन्धकत्वाभावः। तथा सति अप्रामाण्यज्ञानास्कन्दितबोधमादाय निगमनातिव्याप्तितादवस्थ्यात्। तथा च सिषाधयिषाकालिकसिद्धेरप्रतिबन्धकत्वेऽपि प्रतिबन्धकतावच्छेदकीभूतविषयिताशालित्वेनानुमित्यनिवर्तकत्वासम्भवात्। न च सिद्धेः पूर्वं परतो वा सिषाधयिषाया उत्पादस्थले द्वितीयक्षणे प्रथमक्षणे वा सिषाधयिषाविरहविशिष्टत्वमक्षतमेवेति सिषाधयिषायामपि सिद्धौ अनुमितिप्रतिबन्धकत्वमक्षतमेवेति कथं तस्याप्रामाण्यज्ञानास्कन्दिततादृशविशिष्टार्थ-

---

बोधजनकप्रतिज्ञायां तादृशानुमित्यप्रतिबन्धकबोधजनकत्वाभावात् अव्याप्तिः इत्याशङ्क्याह- ***स्वरूपयोग्यतारूपेति।*** तथा च सिषाधयिषाविरहकालीन-बोधजनकप्रतिज्ञायां तादृशानुमित्यप्रतिबन्धकबोधजनकतावच्छेदकानुपूर्वीरूप-स्वरूपयोग्यतायाः सत्त्वात् नाव्याप्तिरिति भावः। समाधत्ते-***अनिवर्तकत्वमिति।*** अनिवर्तकत्वं यदि प्रतिबन्धकत्वाभावः तदा निगमनजन्यशाब्दबोधस्य प्रतिज्ञाजन्यविशिष्टार्थविषयकबोधानिवर्त्यज्ञानज्ञाप्यत्वसंशयप्रतिबन्धकत्वेऽपि अप्रामाण्यज्ञानास्कन्दितस्य निगमनजन्यबोधस्य तादृशसंशयाप्रतिबन्धकतया तदप्रतिबन्धकबोधजनकत्वात् निगमने अतिव्याप्तिः स्यात्। अतः अनिवर्तकत्वं प्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वरूपं वक्तव्यम्। तथा च अप्रामाण्यज्ञानास्कन्दिते निगमनजन्यबोधे संशयप्रतिबन्धकत्वाभावसत्त्वेऽपि संशयप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वं नास्ति। प्रतिबन्धकतावच्छेदकी-भूतायाः ज्ञानज्ञाप्यत्वादिविषयिताया एव तत्र सत्त्वात्। अतः प्रतिबन्धकतावच्छेदक-विषयिताशून्यबोधजनकत्वविरहात् न निगमनेऽतिव्याप्तिः। तथा च सिषाधयिषाकालीनप्रतिज्ञाजन्यबोधस्य अनुमित्यप्रतिबन्धकत्वेऽपि अनुमिति-प्रतिबन्धकतावच्छेदकविषयिताशालित्वेन तच्छून्यत्वरूपस्य अनिवर्तकत्वस्य अभावात् प्रतिज्ञायामसंभवः स्यात् इति ज्ञानसामान्यमुपेक्ष्य संशयनिवेश इति भावः।

***अप्रामाण्यज्ञानास्कन्दितबोधमिति।*** अप्रामाण्यज्ञानानास्कन्दितनिश्चयस्यैव प्रतिबन्धकत्वात् इति भावः। ***अप्रतिबन्धकत्वेऽपीति।*** अनुमित्यप्रतिबन्धकत्वेऽपीत्यर्थः। ***अनुमित्यनिवर्तकत्वासंभवादिति।*** अनुमितिप्रतिबन्धकतावच्छेदकविषयिता-शून्यत्वासंभवात् इत्यर्थः। तथा च संशयपदानुपादाने प्रतिज्ञायामसंभवः स्यादिति भावः।

निश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वमिति वाच्यम्। यादृशसिद्धेः पूर्वं परतश्च सिषाधयिषोत्पादः तादृशसिद्धेरेवाप्रतिबन्धकत्वात्। प्रत्यक्षनिश्चयेऽपि विशेषदर्शनकालीनविपरीतनिश्चयस्याप्रतिबन्धकतामते तस्यापि प्रतिज्ञार्थनिश्चयत्वा-वच्छिन्नाप्रतिबध्यतया उक्तदिशासम्भव इति प्रत्यक्षसामान्यमुपेक्ष्य संशयपर्यन्तानुधावनम्।

---

पुनः संशयपदवैयर्थ्यं शङ्कते–**न च सिद्धेः पूर्वम्** इति। यत्र प्रतिज्ञाजन्यशाब्दबोधात्मकसिद्धेः पूर्वक्षणे सिषाधयिषा उत्पद्यते, तत्र सिद्ध्युत्पत्तिद्वितीयक्षणे सिषाधयिषायाः नाशात् तत्क्षणावच्छेदेन सिद्धेः सिषाधयिषाविरहविशिष्टत्वमस्ति। यत्र सिद्ध्युत्पत्तिद्वितीयक्षणे सिषाधयिषायाः उत्पत्तिः तत्र सिद्ध्युत्पत्तिक्षणावच्छेदेन सिद्धेः सिषाधयिषाविरहविशिष्टत्वमस्तीति तस्याः अनुमितिं प्रति प्रतिबन्धकत्वात्। सिषाधयिषाविशिष्टसिद्ध्यप्रतिबध्यत्वं अनुमितेः न संभवतीति तादृशानुमितिप्रतिबन्धकत्वमादाय असंभवस्य अप्रसक्त्या तद्वारणफलकं संशयत्वनिवेशनं व्यर्थमिति भावः। सिषाधयिषाविरहविशिष्टसिद्धिः कार्यकालवृत्तितया प्रतिबन्धिकेति आकूतम्।

***द्वितीयक्षण*** इति। सिद्ध्युत्पत्तिद्वितीयक्षणावच्छेदेनेत्यर्थः। ***प्रथमक्षण*** इति। सिद्ध्युत्पत्तिक्षणावच्छेदेनेत्यर्थः। पूर्वं द्वितीयक्षणे परतः प्रथमक्षण इति यथासंख्यमन्वयः। ***सिषाधयिषायामपीति।*** सिषाधयिषायां सत्यामपीत्यर्थः। ***तस्या*** इति। अनुमितेरित्यर्थः।

समाधत्ते–***यादृशसिद्धेरिति।*** पूर्वोक्तस्थले पूर्वं पश्चाद्वा सिषाधयिषायाः सत्त्वात् क्षणविशेषावच्छेदेन सिद्धेः सिषाधयिषाविरहविशिष्टत्वेऽपि प्रतिबन्धकत्वं नाङ्गीक्रियत इति भावः।

ननु ज्ञानसामान्यनिवेशे अनुमितिप्रतिबन्धकत्वमादाय प्रसक्तस्य असम्भवस्य वारणाय प्रत्यक्षनिश्चयपदमेव निवेश्यताम्। तथा च विशिष्टार्थविषयकबोधानिवर्त्य-प्रत्यक्षनिश्चयावर्तकबोधजनकत्वमेव लक्षणमास्ताम्। अनुमितेः प्रत्यक्षनिश्च-यरूपत्वाभावात् न असंभवः। तथा च संशयपर्यन्तानुधावनं व्यर्थमित्या-शङ्क्याह–***प्रत्यक्षनिश्चयेऽपीति।*** 'पर्वतो वह्निमान्' इति प्रतिज्ञाजन्यशाब्दबोधः यद्यपि 'पर्वतो वह्न्यभाववान्' इति प्रत्यक्षनिश्चयं प्रति तदभाववत्ताज्ञानविधया प्रतिबन्धकः, तथापि 'वह्न्यभावव्याप्यवान्' इति विशेषदर्शनकालीनस्य

अत्र च तत्तद्विशिष्टार्थविषयकत्वनिश्चयत्वावच्छिन्नसंशयप्रतिबन्धकत्वशून्यत्वस्य ज्ञानविशेषणत्वोपगमेनैवातिरिक्तविषयकस्य हेत्वन्तादिभागजन्यबोधस्य तथाविधधूमज्ञान-ज्ञाप्यत्वादिसंशयप्रतिबन्धकताश्रयस्य वारणसम्भवात्तादृशप्रतिबन्धकतात्वे तथाविधनिश्चयत्वा-वच्छिन्नप्रतिबन्धकताकान्यसंशयप्रतिबन्धकतानिवेशः न तु तथाविधनिश्चयत्वावच्छिन्न-प्रतिबन्धकताकान्यसंशयप्रतिबन्धकतात्वेनैव गौरवादित्यवधेयम्। उक्तहेतुवारणाय

---

'वह्निमान्' इति निश्चयस्य 'वह्न्यभाववान्' इति प्रत्यक्षं प्रति प्रतिबन्धकत्वं नास्ति। तथा च प्रतिज्ञार्थविषयकनिश्चयसामान्यान्तर्गतविशेषदर्शनकालीन-विपरीतनिश्चयप्रतिबध्यत्वाभावात् प्रतिज्ञार्थविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकता-निरूपितप्रतिबध्यताशून्यः 'पर्वतो वह्न्यभाववान्' इति प्रत्यक्षनिश्चयः। तन्निरूपितप्रतिबन्धकतावच्छेदकवह्निमत्पर्वतविषयिताशालितया 'पर्वतो वह्निमान्' इति शाब्दबोधस्य तत्प्रतिबन्धकतावच्छेदकविषयिताशून्यत्वं नास्तीति असंभवः प्रसजति। तद्वारणाय प्रत्यक्षनिश्चयस्थाने संशयनिवेशः। तन्निवेशे च प्रतिज्ञार्थविषयकशाब्दबोधाप्रतिबध्यः संशयः घटादिसंशयः। तदप्रतिबन्धकत्वं प्रतिज्ञाजन्यबोधेऽस्तीति न असंभवः। ***विशेषदर्शनकालीनेति।*** प्रतिज्ञार्थवह्न्यभाव-व्याप्यवत्तानिश्चयकालीनस्य प्रतिज्ञाजन्यस्य 'पर्वतो वह्निमान्' इति शाब्दबोधात्मकनिश्चयस्येत्यर्थः। ***प्रतिज्ञार्थेति।*** प्रतिज्ञार्थविषयकनिश्चयत्वव्यापक-प्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यतयेत्यर्थः। ***उक्तदिशेति।*** अनिवर्तकत्वस्य प्रतिबन्धकतावच्छेदकविषयिताशून्यत्वरूपस्य निवेशावश्यकत्वप्रदर्शनदिशेत्यर्थः। ***प्रत्यक्षसामान्यम्*** –संशयनिश्चयसाधारणप्रत्यक्षत्वावच्छिन्नम्।

अनिवर्तकत्वं यथाश्रुतं प्रतिबन्धकत्वाभावरूपमेव। संशयांशे विशिष्टभेदकूटनिवेशापेक्षया प्रतिबन्धकतायां तादृशनिश्चयत्वानवच्छिन्नत्वनिवेशे लाघवम् इत्याशयेनाह–***अत्र चेत्यादिना।*** तत्तत्प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयक-निश्चयत्वावच्छिन्नाप्रतिबध्यसंशयाप्रतिबन्धकत्वस्थाने तत्तद्विशिष्टार्थविषयक-निश्चयत्वानवच्छिन्नसंशयनिरूपितप्रतिबन्धकताशून्यत्वं बोधविशेषणं दीयते, लाघवात्। निश्चयत्वानवच्छिन्नत्वं च निश्चयत्वाव्यापकत्वम्। तथा च तत्तद्विशिष्टार्थविषयकनिश्चयत्वाव्यापकसंशयप्रतिबन्धकताशून्यबोधजनकत्वं प्रतिज्ञालक्षणम्। 'पर्वतो वह्निमान्' इति निश्चयत्वाव्यापिका घटादिसंशयनिरूपितप्रतिबन्धकता। तच्छून्यत्वं 'पर्वतो वह्निमान्' इति

**तादृशबोधान्यतमेति।** प्रकृतप्रतिज्ञाजन्यतावच्छेदकीभूतं यादृशयादृशबुद्धित्वं तादृशतादृशबुद्धित्वावच्छिन्नान्यतमजन्यतानिरूपितजनकतापर्यन्तस्य विवक्षणीय-तोक्तसमूहालम्बनबोधमादाय न तत्रातिप्रसङ्ग इत्युक्तप्रायम्।

---

प्रतिज्ञाजन्यबोधेऽस्ति। तज्जनकत्वं प्रतिज्ञायामस्ति इति लक्षणसमन्वयः।

प्रतिज्ञाहेतुसमुदायजन्ये शाब्दबोधे प्रतिज्ञार्थविषयकनिश्चयत्वाव्यापिका या ज्ञानज्ञाप्यत्वसंशयनिरूपिता प्रतिबन्धकता तच्छून्यत्वं नास्तीति समुदायजन्यबोधमादाय प्रतिज्ञाहेतुसमुदाये न अतिव्याप्तिप्रसक्तिः इति भावः। **ज्ञानविशेषणत्वोपगमेनैवेति।** ज्ञानशब्देनात्र प्रतिज्ञाजन्यो बोधो विवक्षितः। **हेत्वन्तादिभागेति।** प्रतिज्ञाहेतुसमुदायजन्यबोधस्येत्यर्थः। **तथाविधेति।** तत्तद्विशिष्टार्थ-विषयकनिश्चयत्वाव्यापकेत्यर्थः। **तादृशप्रतिबन्धकतात्वेनैवेति।** तत्तद्विशिष्टार्थ-विषयकनिश्चयत्वाव्यापकसंशयप्रतिबन्धकतात्वेनैवेत्यर्थः। तावद्बोधान्यतमपद-प्रयोजनमाह–**उक्तहेतुवारणाय** इति। तथा च तावद्बोधान्यतमपदानुपादाने यादृशपक्षसाध्यकाः पक्षे यादृशयादृशविशिष्टार्थबोधिकाः प्रतिज्ञाः संप्रदायसिद्धाः तादृशैः बोधैः अनिवर्त्यः यः संशयः तदनिवर्तकबोधजनकं वाक्यं प्रतिज्ञा इत्युक्तौ 'धूमादालोकवान् पर्वतः वह्निमान्' इत्यादिस्थलीय'धूमात्' इति हेतुवाक्येऽतिव्याप्तिः। हेतुवाक्यजन्यबोधस्यापि प्रतिज्ञार्थबोधानिवर्त्य-संशयानिवर्तकत्वात्। धूमादिति हेतुवाक्यजन्यस्य धूमीयं ज्ञानज्ञाप्यत्वमिति बोधस्य यादृशसंशयनिवर्तकत्वं ज्ञानज्ञाप्यत्वं धूमीयं न वेत्याकारकसंशयनिवर्तकत्वं तादृशसंशयस्य प्रतिज्ञाबोधनिवर्त्यत्वात्, प्रतिज्ञाजन्यबोधेऽपि धूमज्ञानज्ञाप्यत्वभानात्। अतो बोधे तावद्बोधान्यतमत्वविशेषणम्। तस्मिन् सति हेतुवाक्यजन्यबोधे प्रतिज्ञाजन्यबोधान्यतमत्वाभावान्नातिव्याप्तिरिति भावः।

नन्वन्यतमत्वनिवेशेऽपि प्रतिज्ञार्थहेत्वर्थोभयविषयको यः समूहालम्बनबोधः धूमादालोकवान् पर्वतो वह्निमान् हेतुत्वं च धूमीयम् इत्याकारकः तस्यापि प्रतिज्ञार्थविषयकत्वेन प्रतिज्ञाजन्यबोधान्यतमत्वात् तज्जनकत्वमादाय हेतावतिव्याप्तिरित्यत आह– **प्रकृतप्रतिज्ञाजन्यतावच्छेदकीभूतमिति।** तथा चान्यतमत्वं जन्यतायां निवेश्यते। जन्यतायां च प्रतिज्ञाजन्यतावच्छेदकं यादृशयादृशबुद्धित्वं तादृशतादृशबुद्धित्वावच्छिन्नत्वं च निवेश्य तादृशान्यतमजन्यतानिरूपितजनकत्वं लक्षणमुच्यते। हेतुवाक्ये प्रतिज्ञाजन्यतावच्छेदकबुद्धित्वावच्छिन्नजन्यता–

**एवं च तादात्म्येन गवि साध्ये पक्षे गवाभेदस्य, संयोगेन समवायेन वा वह्नौ, वह्निमदभेदस्य समवायेन पाकस्य कृतौ, पाककृतिमत्त्वस्य, पाक-कर्त्रभेदस्य, विशेषणतया इतरेभ्यो भेदे, इतरभेदवत्त्ववत्त्वस्य, इतरान्याभेदस्य, इतरभेदवत्त्वस्य, इतरभिन्नाभेदस्य, बोधा विशिष्य धर्तव्या इति दिक्।**

---

***गवाभेदस्येत्यादि।*** सकलषष्ठ्यन्तैस्समं बोधा विशिष्य धर्तव्या इत्यग्रिमस्यान्वयः। यद्यपि तादात्म्यसम्बन्धेन गोसाध्यकस्थले अनुमित्यन्यूनानतिरिक्तविषयकबोधजनकत्वं प्रतिज्ञायास्सम्भवतीति प्रागभिहितं, तावतैव गवाभेदः प्रतिज्ञाप्रतिपाद्य इत्यस्य लाभात्तत्र तादृशबोधमादाय लक्षणं कर्तव्यमिति स्फुटमेव। तथापि तत्र तादृश एव बोधो लक्षणघटकः नत्वन्यविधो बोध इति स्फुटीकर्तुं तदुपादानम्। तादात्म्येन वह्नौ साध्येऽयं वह्निरित्येव प्रतिज्ञा जायते तत्र च न वह्निमदभेदबोधः लक्षणघटकः इत्यतस्संयोगेन समवायेन वेति। तादात्म्यातिरिक्तसम्बन्धेनेत्यर्थः। वह्नावित्यादिसप्तम्यन्तत्रयं साध्य इति प्राक्तनेनान्वितम्।

---

निरूपितजनकत्वं नास्तीति नातिव्याप्तिरिति भावः।

***उक्तप्रायमिति।*** एतावता इदं सिद्धम्– अनिवर्तकत्वान्तेन अनतिरिक्तविषयकत्वं व्युत्पादितम्। तत्प्रयोजनं च हेत्वन्तस्य वारणमित्युक्तमेव। तावद्बोधानिवर्त्यो वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयः तन्निवर्तकत्वाद्धेत्वन्तभागस्य। यद्यपि हेत्वन्तभागजनितस्य पर्वतो धूमज्ञानज्ञाप्यवह्निमानिति बोधस्यापि तावदन्यतमबोधान्तर्गतत्वात् वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयस्यापि तावदन्यतमबोधनिवर्त्यत्वादतिव्याप्तितादवस्थ्यम्। तथापि केवलप्रतिज्ञाव्यक्तीनां यादृशयादृशशाब्दधीजनकत्वं तादृशशाब्दसामान्यं यत्र यत्र प्रतिबन्धकं तदन्यसंशयानिवर्तकत्वं विवक्षितम्। तथा च वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयस्य केवलप्रतिज्ञाजन्यबोधेनाप्रतिबन्धान्न हेत्वन्तभागेऽतिव्याप्तिः। धूमादालोकवान् पर्वतो वह्निमान् धूमात् इत्यादौ हेत्ववयवस्य वारणाय लक्षणोपात्त-स्यान्यूनविषयकत्वदलस्य फलितार्थमाह– ***दीधितौ तावतां बोधानामन्यतमेनाप्य-निवर्त्यस्येति। वक्तव्यमिति।*** अन्यूनानतिरिक्तविषयकत्वदलेनेत्यादिः। अत्र कल्पे सत्यन्तस्य न्यायान्तर्गतत्वमेवार्थः, न तु न्यायावयवत्वम्। तावदन्य-तमबोधानिवर्त्यसंशयानिवर्तकत्वदलस्य वैयर्थ्यापत्तेः। हेत्वन्तस्य वा अवयवान्तरस्य वा तावद्बोधान्यतमबोधजनकत्वविरहाद्विशेष्यदलेनैव वारणसंभवात् इति।

**वह्निमदभेदस्येति।** तत्राप्येतादृशबोधस्य तादृशप्रतिज्ञाजन्यतायाः प्रागुपदर्शितत्वेऽपि अन्यविधबोधासम्भवमाविष्कर्तुमेतदुपादानम्। **पाककृतिमत्त्वस्येति।** पाककृतिसमवायस्येत्यर्थः। पचतीतिप्रतिज्ञातस्तद्बोधादिति भावः। **पाककर्त्रभेदस्येति।** पाककृत्यवच्छिन्नाभेदस्य पाककृतिमत्त्वावच्छिन्नाभेदस्य चेत्यर्थः। पक्ता पाककृतिमानित्यादिप्रतिज्ञातः तद्बोधादिति भावः। **इतरभेदवत्त्ववत्त्वस्येति।** इतरभेदाश्रयतासम्बन्धस्येत्यर्थः। इतरेभ्यो भिद्यते इत्यादितः तादृशबोधोदयादिति भावः। **इतरान्याभेदस्येति।** इतरभेदावच्छिन्नाभेदस्येत्यर्थः। इतरान्येतिप्रतिज्ञातस्तद्बोधादिति भावः। **इतरभेदवत्त्वस्येति।** इतरभेदसंसर्गस्येत्यर्थः। नेतराणीत्यतः तद्बोधादिति भावः। **इतरभिन्नाभेदस्येति।** इतरभेदाश्रयत्वावच्छिन्नाभेदस्येत्यर्थः। इतरभिन्नेत्यादिप्रतिज्ञातस्तद्बोधादिति भावः।

---

यादृशतादृशत्वयोरनुगतयोरभावात् विशेषतः पर्यवसन्नं लक्षणमाह दीधितौ – **एवंचेति। पक्षे** – इदन्त्वविशिष्टे। **गवाभेदस्येति।** अभेदसंबन्धेन गोरित्यर्थः। बोधा विशिष्य धर्तव्या इत्यग्रिमेणान्वयः। तदेवाह गादाधर्या – **षष्ठयन्तैः सममित्यादिना।** तथा च तादात्म्यसंबन्धेन गोप्रकारकेदन्त्वावच्छिन्न-विशेष्यकशाब्दसामान्यानिवर्त्यसंशयानिवर्तकबोधजनकत्वे सति प्रकृतन्यायावयवत्वं तादात्म्येन गोसाध्यकेदन्त्वावच्छिन्नपक्षकप्रतिज्ञात्वम्। इतन्त्वावच्छिन्न-धर्मिकगोप्रकारकत्वरूपान्यूनविषयकत्वं बोधविशेषणं न देयम्, प्रयोजनविरहात्। धूमादालोकवान् पर्वतो वह्निमानित्यादिस्थलीयप्रतिज्ञालक्षण एव हेतुवारणाय तस्य प्रवेश्यत्वात्। **सप्तम्यन्तत्रयमिति।** वह्नौ, कृतौ, इतरेभ्यो भेदे इति सप्तम्यन्तत्रयमित्यर्थः।

दीधितौ **वह्निमदभेदस्येति।** बोधा विशिष्य धर्तव्या इत्यनेन वचनविपरिणतेनान्वयः। तथा च पर्वतधर्मिकवह्निमत्प्रकारकशाब्दसामान्यानिवर्त्य-संशयानिवर्तकबोधजनकत्वे सति प्रकृतन्यायावयवत्वं संयोगेन वह्निसाध्यक-पर्वतपक्षकप्रतिज्ञात्वम्। गादाधर्या – **प्रागुपदर्शितत्वेऽपीति।** "वह्निमानित्यादौ पुनरनुमितौ पक्षे वह्नेः संयोगात्मकः संबन्धो भासते" इति ग्रन्थेनेति शेषः। पाककृतेः साध्यतायां चैत्रः पचति, चैत्रः पक्ता इत्येवं प्रतिज्ञाद्वैविध्यात् बोधद्वयं दर्शयति दीधितौ–**समवायेन पाकस्य कृताविति।** साध्ये इत्यनुवर्तते। **पाककृतिमत्त्वस्येति।** बोधा विशिष्य धर्तव्या इत्यनेनान्वयः। गादाधर्या–**पचतीति प्रतिज्ञातस्तद्बोधादिति।** पाककृतिमत्त्वबोधादित्यर्थः। आख्यातार्थकृतेश्चैत्रे प्रकारत्वादिति

**तावद्बोधानिवर्त्यसंशयानिवर्तकतावद्बोधनिवर्त्ययावत्संशयनिवर्तकबोधजनकत्वं वाच्यमित्यपि केचित्।**

---

अनतिरिक्तविषयकत्वदळार्थः पूर्ववदेव। अन्यूनविषयकत्वं तावद्बोधनिवर्त्य-यावत्संशयनिवर्तकत्वं दर्शितहेतुजन्यबोधस्य ज्ञानज्ञाप्यत्वं धूमीयं नवेत्यादिप्रतिज्ञाजन्यबोध-निवर्तनीयसंशयप्रतिबन्धकत्वेऽपि तादृशयावत्संशयान्तर्गतपर्वतो वह्निमान्न वेत्यादि संशयनिवर्तकत्वेन वारणसम्भवादिति वदतो मतमाह – ***तावदिति*** । तत्तद्विशिष्टार्थविषयकेत्यर्थः।

---

भावः। ***पाककर्त्रभेदस्येति।*** चैत्रः पक्ता इत्यत्र कृदर्थस्य, चैत्रः कृतिमानित्यत्र मतुबर्थस्य कृत्याश्रयस्य चैत्रे प्रकारत्वादिति भावः। तथा च चैत्रपक्षकपाककृतिसाध्यकप्रतिज्ञायाः चैत्रधर्मिको यः पाककृतिप्रकारकः यश्च तादात्म्येन पाककर्तृप्रकारको बोधः तदन्यतरानिवर्त्यसंशयानिवर्तकतदन्यतर-बोधजनकत्वे सति प्रकृतन्यायावयवत्त्वं लक्षणमिति भावः।

पृथिव्यां इतरभेदस्य साध्यतायां चतुर्विधस्य प्रतिज्ञाजन्यबोधस्य संभवात् तत्र अन्यतमत्वेन बोधा उपादेयाः इत्याह दीधितौ ***विशेषणतयेत्यादिना। इतरेभ्यो भेद*** इति। साध्ये इत्यनुवर्तते। ***इतरभेदवत्त्वस्येति।*** इतरभेदाश्रयत्वसंबन्धस्येत्यर्थः। 'पृथिवी इतरेभ्यो भिद्यते' इत्यत्र आख्यातार्थाश्रयत्वस्य स्वरूपसंबन्धेन पृथिव्यां प्रकारत्वात् इति भावः। ***इतरान्याभेदस्येति।*** पृथिवी इतरान्या इति प्रतिज्ञातः तादात्म्यसंबन्धेन पृथिव्याम् इतरान्यस्य प्रकारत्वात् इति भावः। ***इतरभेदवत्त्वस्येति।*** पृथिवी नेतराणि इत्यत्र नञर्थस्य इतरभेदस्य स्वरूपसंबन्धेन पृथिव्यां प्रकारत्वादिति भावः। ***इतरभिन्नाभेदस्येति।*** 'पृथिवी इतरभिन्ना' इति वाक्यात् तादात्म्यसंबन्धेन इतरभिन्नप्रकारकपृथिवीविशेष्यकबोधजननादिति भावः। तथा च पृथिवीधर्मिकभेदाश्रयत्वप्रकारकः, एवं पृथिवीधर्मिकेतरान्यप्रकारकः, तथा इतरभेदप्रकारकः, एवं इतरभेदाश्रयप्रकारकश्च यो बोधः तदन्यतमानिवर्त्यसंशयानिवर्तकतावदन्यतमबोधजनकत्वे सति प्रकृतन्यायावयवत्त्वं पृथिवीपक्षकेतरभेदसाध्यकप्रतिज्ञालक्षणमिति फलितम्।

मतान्तरमवतारयति – ***अनतिरिक्तविषयकत्वेति। पूर्ववदेवेति।*** तावद्बोधानिवर्त्ययावत्संशयानिवर्तकत्वरूप एवेत्यर्थः। ***दर्शितहेतुजन्यबोधस्येति।*** 'धूमादालोकवान् पर्वतो वह्निमान्, धूमात्,' इति स्थलीयहेतुजन्यस्य ज्ञानज्ञाप्यत्वं

***तावद्बोधनिवर्त्ययावत्संशयेति।*** तत्तद्विशिष्टार्थबोधान्यतमयत्किंचिद्बोधनिवर्त्ययावत्संशयेत्यर्थः। तेन भेदादिसाध्यकस्थले भेदतदाश्रयत्वादिकोटिकनानाविधसंशयानामेव प्रकृतसाध्यपक्षक-प्रतिज्ञार्थबोधनिवर्त्ययावत्संशयान्तर्गततया (तावत्संशयनिवर्तकतायाः पृथिवी नेतराणि पृथिवीतरेभ्यो भिद्यते इत्यादिप्रत्येकप्रतिज्ञाजन्यबोधेऽसत्त्वेऽपि न क्षतिः। तादृशसकलवाक्य-जन्यसमूहालम्बनबोधस्य तावत्संशयनिवर्तकत्वात्।) तावत्संशयनिवर्तकत्वं न कस्यापीति निरस्तम्। तावत्संशयनिवर्तकतायाः पृथिवी नेतराणि पृथिवीतरेभ्यो भिद्यत इत्यादि-प्रत्येकप्रतिज्ञाजन्यबोधेऽसत्त्वेऽप्येतादृशसकलवाक्यजन्यसमूहालम्बनबोधस्य तावत्संशय-निवर्तकत्वात्। तत्र च निरुक्तानतिरिक्तविषयकत्वस्यापि सत्त्वात्। तज्जनकत्वमादायैव प्रत्येकप्रतिज्ञासु लक्षणसमन्वयो (वा) बोध्यः। अत्र च स्वमतापेक्षया गौरवमेवास्वरसबीजं बोध्यम्। ननु विषयतासम्बन्धेन पाकाद्यवच्छिन्नकृत्यादेर्यत्र साध्यता तत्र कीदृशोपनयः? न तावत्पाककृतिव्याप्यवानित्याकारकः, तत्र तत्पुरुषघटकपाकादिपदस्य पाकादिविषयका-दिलाक्षणिकतया पाकविषयकाभिन्नकृतित्वाद्यवच्छिन्ननिरूपितव्याप्तेरेव लाभात् प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपिताया व्याप्तेरलाभेनार्थान्तरप्रसङ्गादित्यत आह – ***चैत्र*** इति। ***साध्ये*** विशिष्टसाध्यशरीरे ***विषयित्वानुयोगित्वयोरिति*** कृतिभेदांश इत्यादिः।

---

धूमीयमित्याकारकस्य बोधस्येत्यर्थः। ***तेनेति।*** यत्किंचित्त्वनिवेशेनेत्यर्थः। यत्किञ्चित्वनिवेशे नाव्याप्तिरित्युपपादयति– ***तावत्संशयनिवर्तकताया*** इति। ***तत्र चेति।*** समूहालम्बनबोधे चेत्यर्थः। ***निरुक्तेति।*** तावद्बोधानिवर्त्य-यावत्संशयानिवर्तकत्वरूपस्य अनतिरिक्तविषयकत्वस्येत्यर्थः। ***अत्रचेति।*** अस्मिन् मते चेत्यर्थः।

चैत्रः पचतीत्यादौ उपनयस्य दुर्वचत्वेन पञ्चावयववाक्यरूपन्यायाभावात् कथं प्रतिज्ञेत्याशङ्कानिराकरणाय चैत्रः पचतीत्यादिग्रन्थः प्रवृत्त इत्याह– ननु ***विषयतासंबन्धेनेति।*** चैत्रः पचतीत्यत्र धात्वर्थस्य पाकस्य विषयतासंबन्धेन आख्यातार्थकृतावन्वयः। कृतेः आश्रयतासंबन्धेन चैत्रेऽन्वयः। तथा चैत्रः पक्षः। विषयतासंबन्धेन पाकविशिष्टकृतिः साध्या। घटो नेतराणीत्यत्र घटः पक्षः। नञर्थे भेदे अनुयोगित्वसंबन्धेन घटस्यान्वयात् अनुयोगित्वसंबन्धेन इतरविशिष्टो भेदः साध्यः। तत्र पाककृतिव्याप्यवानयम् इतरभेदव्याप्यवानयम् इति चोपनयो न संभवति। पाकस्य कृतिः पाककृतिरिति षष्ठीतत्पुरुषे पूर्वपदस्य पाकविषयके लक्षणया तस्याभेदेन कृतावन्वयेन पाकविषयकाभिन्नकृतिनिरूपितव्याप्तेरेव ततो बोधेन पाकविशिष्टकृतित्वरूपप्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्ति-

**चैत्रः पचति घटो नेतराणीति प्रतिज्ञायां साध्ये विषयत्वानुयोगित्वयोः सम्बन्धविधयैवानुप्रवेशात् यथोपदर्शितसाध्यगमकतौपयिकव्याप्तिविशिष्टहेतुमत्त्वस्य च पक्षे उपनेयत्वात्तथाचायमित्याकारकः सुवच एव प्राचामुपनयः। नव्यानां पुनरगतिकतया तद्व्याप्यहेतुमान् तद्वान्वेत्याकारो योग्यतावशाच्च तदा साध्यस्य तद्व्याप्यस्य वा परामर्शः।**

---

सम्बन्धविधयैवेत्येवकारेण विशेषणविधाया व्यवच्छेदः। विषयत्वाद्युपस्थापकपदाभावेन तयोर्विशेषणत्वासम्भवादिति भावः। निपातार्थेन नामार्थस्य भेदान्वयधियोव्युत्पत्त्यविरुद्धतया नेतराणीत्यादौ प्रथमाया अनुयोगितार्थकत्वमसिद्धमिति हृदयम्। ***यथोपदर्शितेति*** प्रतिज्ञोपस्थापितेत्यर्थः ***उपनेयत्वात्।*** उपनयेन बोधनीयत्वात्। तादृशव्याप्तेरेवाकांक्षितत्वेन यः पाककृतिसामग्रीमान् स पचतीत्युदाहरणेन प्रतिपादनात् तादृशव्याप्तिविशिष्टस्य पक्षधर्मताकांक्षयैवोपनयप्रयोग इति भावः। ***सुवच एवेति।*** तथाशब्देन तादृशव्याप्तिविशिष्टहेतुमत एवोपस्थापनात् इति भावः।

ननु मणिकृता धाल्प्रत्ययार्थ वितर्क्य तस्मात् तथेति निगमनस्य निराकरणीयतया तथापदघटितोपनयेऽपि तद्दोषग्रास इत्यस्याननुमतेस्तादृशोपनय इत्यत एतन्मतमनुसृत्याह–

---

विशिष्टहेतुबोधकत्वरूपस्योपनयलक्षणस्याभावात्, इतरपदस्येतरानुयोगिके लक्षणया तस्याभेदसंबन्धेन भेदेऽन्वयेन इतरानुयोगिकाभिन्नभेदनिरूपितव्याप्तेरेव ततो बोधेन अनुयोगितासंबन्धेनेतरविशिष्टभेदत्वरूपप्रकृतसाध्यतावच्छेदकावच्छिन्न-निरूपितव्याप्तिविशिष्टहेतुबोधकत्वरूपोपनयलक्षणाभावाच्चेति शङ्का। समाधानं तु– उक्तस्थलयोः पाककृतिव्याप्यवानिति वा इतरभेदव्याप्यवानिति वा नोपनयः। अपि तु तथा चायमित्येव उपनयः। तथाशब्दस्य विषयतासंबन्धेन पाकविशिष्टकृतिनिरूपितव्याप्तिविशिष्टपाकसामग्रीरूपहेतुमानिति अनुयोगिता-संबन्धेनेतरविशिष्टभेदनिरूपितव्याप्तिविशिष्टहेतुमानिति चार्थः। तथा च प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुबोधकत्वरूपोपनय-लक्षणसत्वेन उपनयसंभवान्न दोष इति।

***अर्थान्तरप्रसङ्गादिति***– यद्रूपावच्छिन्नसाध्यबोधिका प्रतिज्ञा तद्रूपावच्छिन्न-साध्यनिरूपितव्याप्तिविशिष्टस्यैव उपनयेन बोधनीयत्वात् इति भावः। ननु घटो नेतराणीत्यत्र इतरपदोत्तरप्रथमायाः अनुयोगित्वमर्थः। तस्य निरूपकतासंबन्धेन भेदेऽन्वयात् अनुयोगित्वस्य साध्यशरीरे न संबन्धविधया प्रवेश इत्याशङ्क्य

***नव्यानामिति।*** ननु तत्पदेन यथोपदर्शितसाध्यस्येव तादृशसाध्यव्याप्तिविशिष्टहेतोरपि परामर्शसम्भव इति व्याप्त्यादिपदप्रयोगवैयर्थ्यमित्याशयेनाह – ***तद्वान्वेति।*** ननु पक्षादेरपि प्रक्रान्तत्वात्तस्यैव कथं नोपनयस्थतच्छब्देन परामर्श इत्यत आह – ***योग्यतेति।*** तात्पर्यवशादित्यर्थः। व्याप्तिविशिष्टहेतुमत्त्वस्यैवाकांक्षितत्वेन तत्परताया एव तत्र ग्रहादिति भावः। ***तदा*** तच्छब्देन **साध्यस्येति** प्रथमकल्पं तद्व्याप्यस्येति द्वितीयकल्पमभिप्रेत्य।

---

तत्र प्रथमायाः नानुयोगित्वार्थकत्वम्। प्रातिपदिकार्थस्य इतरस्यानुयोगित्वसंबन्धेन नञर्थे भेदेऽन्वयसम्भवात्। निपातातिरिक्तनामार्थयोः भेदसंबन्धेन अन्वयस्यैवाव्युत्पन्नतया नञ्रूपनिपातार्थ– इतरपदार्थयोः भेदसंबन्धेन अन्वये बाधकाभावादित्याह– ***निपातार्थेनेति।***

***वितर्क्येति।*** तस्मात्तथेति निगमने यदि तथाशब्दस्य प्रक्रान्तं यद्विशेष्यं स एवार्थः तदा उपनयजन्यबुद्धौ हेतुमत एव विशेष्यत्वेन प्रक्रान्तत्वात् तस्माद्धेतुमानित्यर्थः स्यात्। तथा सत्यनन्वयः, न हि हेतुमत्त्वात् हेतुमानित्यन्वितम्। यदि प्रक्रान्तप्रकारोऽर्थः तदा उपनयजन्यबोधविशेष्यस्य पक्षस्य सामान्यरूपेण अन्वयव्याप्तौ प्रवेशेन प्रकारतया तत्प्रकारान्वयः तत्रैवेत्यनन्वयः। यदि प्रक्रान्तसादृश्यमर्थः तदा अभिधेयं प्रमेयं ज्ञेयत्वादित्यादौ प्रक्रान्तं यत् उपनयजन्यबोधविशेष्यमभिधेयं तद्भेदघटितसादृश्याप्रसिद्धिरिति वितर्क्य तस्माद्वह्निमानित्यादिरेवोदाहरणमित्युक्तम्। एवमेव तथापदघटितोपनयेऽपि वितर्कप्रसक्त्या तथा चायमिति नोपनयवाक्यशरीरम्, अपि तु तद्व्याप्यहेतुमान् इति वा तद्वानिति वा उपनयः। आद्ये तच्छब्दः साध्यं परामृशति, द्वितीये साध्यव्याप्यं परामृशति। न च उदाहरणवाक्ये पक्षादेरपि प्रक्रान्तत्वात् उक्तोपनयस्थतच्छब्देन कथं साध्यस्यैव परामर्श इति वाच्यम्। साध्यव्याप्यहेतुमत्त्वस्यैवाकाङ्क्षतत्वेन व्याप्त्यन्वययोग्यसाध्यस्यैव तच्छब्देन परामर्शादिति भावः।

तादात्म्येन वह्निमतः साध्यतायामेव पर्वतो वह्निमानिति प्रतिज्ञा। वह्नेः साध्यतायां तु पर्वतस्तथा इत्याकारिका। तथा च यादृशेत्यादिविवक्षां विनापि यथाश्रुतान्यूनानतिरिक्तविषयकत्वघटितप्रतिज्ञालक्षणमेव पर्वतो वह्निमानित्यादि– प्रतिज्ञायामस्तीति वदतां मतं **केचित्तु** इत्यादिना दीधितावनूदितम्। तं दीधितिग्रन्थमवतारयति–***पर्वत*** इति। पर्वतो वह्निमान्न वेति विप्रतिपत्तिवाक्यश्रवणेन यस्य पर्वतो वह्निमान्न वेति संशयो वर्तते तदधीना चान्यतरकोटिजिज्ञासा तं

**केचित्तु वह्निमान्नवेति विप्रतिपत्तौ संशये च वह्निमत्तदन्योन्याभावयोस्तादात्म्य-विशेषणत्वाभ्यां कोटित्वेन जिज्ञासितत्वादिति तादात्म्येन वह्निमानेव साधयितुमुचितः। न तु वह्निरजिज्ञासितत्त्वात्। तथाचायमित्याकारको वह्निमद्व्याप्यधूमवांश्चायमित्याकारको वा उपनयः। न तु वह्निव्याप्यधूमवांश्चाय-मित्याकारकः अर्थान्तरत्वादिति प्राहुः। यत्र चान्तरा तादृशबोधो न जनितस्तत्रापि तादृशाकांक्षायोग्यतादिशालित्वरूपं तज्जननयोग्यत्वमक्षतम्,**

---

पर्वतो वह्निमानित्यादेर्न्यायस्य वह्निसाध्यकत्वं निराकृत्य वह्निव्याप्यधूमवांश्चाय-मित्याद्याकारकोपनयं निराकुर्वतां मतमाह–***केचित्त्विति।*** विप्रतिपत्तौ कोटित्वं तज्जन्य-स्मृतिविषयत्वं तज्जन्यप्रत्येकशाब्दबोधप्रकारत्वं वा न तु तदधीनसंशयप्रकारत्वम्। अतो न संशये चेत्यस्य वैयर्थ्यम्। तत्प्रदर्शनं च संशये कोटितानिर्वाहकत्वेन तस्य स्वतो जिज्ञासायामतन्त्रत्वादित्यवधेयम्। यद्यपि वह्निमत उपस्थितिदशायां वह्नेरप्युपस्थिततया तादृशविप्रतिपत्तिवाक्याद्वह्निकोटिकसंशयो भवितुमर्हति। तथापि स्वातन्त्र्येण कोट्युपस्थितिस्संशये प्रयोजिकेत्यभिप्रायेणेदमित्यवधेयम्। अथवा विप्रतिपत्तिवाक्याच्छाब्द एव संशय इति मतानुसारेणेदम्। वस्तुतो वह्न्यभावस्य कोटितायामेव वह्निकोटिकसंशय उपपद्यते। न तु वह्निमद्भेदस्य स्वस्वाभावप्रकारकज्ञानस्यैव स्वसंशयत्वात्। प्रकृते च वह्न्यभावो नोपस्थितः अपि तु तद्वद्भेद एवेति वह्न्यभावस्य कोटित्वासम्भवात् वह्निसंशयो न सम्भवतीत्यभिप्रायः। एतत्सूचनायैव च वह्निमद्भेदस्य कोटित्वमभिहितम्। तदभिधानस्य प्रयोजनान्तराभावात्। यद्वा धर्मिणि तत्प्रकारकबोधौपयिकाकांक्षावत्पदजन्यतदुपस्थितिरेव धर्मिणि तत्कोटिक-संशयजनिका। पर्वतो वह्निरभाव इत्यादितो वाक्याद्वह्न्याद्युपस्थितौ पर्वतादौ वह्न्यादिसंशयानुदयात्। तथा च पर्वतो वह्निमानित्यादिवाक्यस्थवह्न्यादिपदमपि न पर्वतादौ वह्न्यादे-र्भेदान्वयौपयिकाकांक्षावदिति न तादृशविप्रतिपत्तिवाक्याद्वह्न्यादिकोटिकसंशय इति परमार्थः। नवीनमतमनुसृत्याह – ***वह्निमद्व्याप्येति। प्राहुरिति।*** प्रशब्देनात्रास्वरसाभावस्सूचितः।

---

प्रति हि पर्वतो वह्निमान् इत्यादिन्यायप्रयोगः क्रियते। विप्रतिप्रत्तिवाक्यात् पर्वतो वह्निमदभिन्नो न वेत्येव शाब्दबोधो जायते। तादृशशाब्दबोधे यः प्रकारः स एव संशयेऽपि प्रकारः। तादृशप्रकारनिश्चयायैव प्रतिज्ञावाक्यं प्रयुज्यते। एवं च विप्रतिपत्तिजन्यबोधे अभेदसंबन्धेन वह्निमतः वह्निमद्भेदस्य चैव प्रकारत्वात् प्रतिज्ञयापि स एव साध्यत्वेन विवक्षितः। वह्निमत्साध्यकानुमित्युत्पत्त्यैव जिज्ञासानिवृत्तिसम्भवात् अनुमितावपि तस्यैव साध्यत्वमिति

फलोपधायकतारूपजनकतानिवेशशङ्कया प्रसक्तां तादृशशाब्दबोधानुपधायक-प्रतिज्ञायामव्याप्तिं योग्यताविवक्षया निराकरोति **यत्र चेति। अन्तरेति।** हेत्वर्थादिविषयकशाब्दबोधसामग्र्यनुत्तरमित्यर्थः। एतेन फलोपधानविवक्षणे अवयवान्तरार्थ-विषयकशाब्दबोधमात्रोपधायकप्रतिज्ञायामप्यव्याप्तिः प्रसज्यते। अनतिरिक्तविषयकशाब्द-बोधानुपधायकत्वादिति सूचितम्। **तादृशेति** – तादृशशाब्दबोधजनकज्ञानविषयेत्यर्थः। अकांक्षानिवेशात् पर्वतो वह्निस्सम्बन्धीत्यादिनिराकाङ्क्षावाक्यव्युदासः। न च पर्वतो वह्निमानित्यादिशाब्दं प्रति निराकाङ्क्षतादृशवाक्यविषयकज्ञानत्वेनाजनकत्वात्तादृशशाब्द-बोधकजनकतावच्छेदकविषयताकत्वनिवेशनेनैवोपपत्तावाकाङ्क्षानिवेशनमफलमिति वाच्यम्।

---

उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वसत्त्वात् प्रतिज्ञालक्षणसमन्वयः। उपनयवाक्यमपि वह्निमद्व्याप्यधूमवानित्याकारकं तत्समानार्थकं तथा चायमित्याकारकं वा, न तु वह्निव्याप्यधूमवांश्चायमित्याकारकमिति भावः।

**फलोपधायकतेति।** यत्र पर्वतो वह्निमानिति वाक्यात् प्रतिबन्धकवशात् प्रकृतानुमित्यन्यूनानतिरिक्तविषयकः शाब्दबोधो न जातः तत्र फलोपधायकतारूपायाः शाब्दबोधजनकतायाः लक्षणे निवेशे अव्याप्तिर्भवति। तद्वारणाय तादृशशाब्दबोधजननयोग्यत्वं निवेशनीयम्। तच्च तादृशशाब्दबोधौपयिकाकाङ्क्षा-योग्यतावत्त्वरूपम्, तदनुपधायकप्रतिज्ञायामप्यक्षतमिति नाव्याप्तिरिति भावः। ननु यया प्रतिज्ञया अवयवान्तरसहकारेणैव बोधो जनितः तादृशप्रतिज्ञायामतिरिक्त-विषयकबोधजनकत्वात् प्रसक्ताया अव्याप्तेर्दीधितावनुक्तत्वात् न्यूनतेत्याशङ्क्य तादृशाव्याप्तेः संग्रहार्थमन्तरापदस्यार्थमाह–**हेत्वर्थेति।** दीधितिस्थतादृशशब्दस्य शाब्दबोधजनकार्थकत्वे आकाङ्क्षाज्ञानस्य योग्यताज्ञानस्य च शाब्दबोधजनकत्वेऽपि आकाङ्क्षायोग्यतयोः शाब्दबोधजनकत्वाभावात् लक्षणासंभव इत्यतो व्याचष्टे–***तादृशशाब्दबोधजनकज्ञानविषयेत्यर्थ*** इति। तथा च प्रकृतन्यायावयवत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकज्ञानविषयाकाङ्क्षायोग्यताशालिवर्ण-समुदायत्वं प्रतिज्ञालक्षणमिति भावः। आकाङ्क्षायाः लक्षणेऽनिवेशे 'पर्वतः वह्निः सम्बन्धी' इति वाक्यस्यापि पर्वतो वह्निमानित्यनुमितिसमानविषयकशाब्दज्ञानजनक-ज्ञानविषययोग्यताशालिवर्णसमुदायवत्त्वात्तत्र प्रतिज्ञालक्षणस्यातिव्याप्तिः। तद्वारणाय आकाङ्क्षानिवेशः। पर्वतो वह्निमानिति वाक्यस्यैव तादृशशाब्दबोधप्रयोजकाकाङ्क्षा-शालित्वमिति नातिव्याप्तिरित्याह – ***आकाङ्क्षानिवेशादिति।*** आकाङ्क्षा च वह्निमत्पदसमभिव्याहृतपर्वतपदत्वादिः।

पर्वतो वह्निमानित्यादिवाक्यानुपूर्वीप्रकारकभ्रमात्मकतादृशनिराकाङ्क्षविषयकज्ञानस्यापि तथाविधशाब्दधीजनकतया तदीयविषयताया अपि जनकतावच्छेदकत्वेन तज्जनकतावच्छेदकप्रकारताश्रयानुपूर्वीरूपाकाङ्क्षाशालित्वनिवेशस्यावश्यकत्वात्। तच्छालित्वं च तद्घटितवर्णसमुदायत्वम्। तज्जनकतावच्छेदकीभूतभ्रमान्ययत्किंचिज्ज्ञानवृत्तिविषयता-निरूपकवर्णसमुदायत्वमिति तु पर्यवसितोऽर्थः। ह्रदो वह्निमानित्यादिभ्रमानुमिति-

---

ननु तादृशशाब्दज्ञानजनकतावच्छेदकविषयताश्रयवाक्यत्वमित्येव लक्षणमस्तु, आकाङ्क्षाया निवेशो मास्तु। तावतापि पर्वतो वह्निमानिति शाब्दबोधं प्रति 'पर्वतो वह्निःसम्बन्धी' इति निराकाङ्क्षवाक्यज्ञानस्याजनकतया निराकाङ्क्षवाक्यनिरूपितविषयितायाः जनकतावच्छेदकत्वविरहादेव निराकाङ्क्ष-वाक्येऽतिव्याप्तिवारणसम्भवादिति शङ्कते – **न चेति**। यस्य पुरुषस्य 'पर्वतो वह्निः सम्बन्धी' इति निराकाङ्क्षवाक्ये 'पर्वतो वह्निमान्' इति साकाङ्क्षवाक्यत्वभ्रमः अस्ति तदीयस्य तद्भ्रमस्यापि 'पर्वतो वह्निमान्' इति शाब्दबोधजनकतया निराकाङ्क्षवाक्यविषयितायाः अपि जनकतावच्छेदकतया निराकाङ्क्षवाक्ये जनकतावच्छेदकविषयिताकत्वसत्त्वेन अतिव्याप्तिवारणासम्भवात् तादृशशाब्द-बोधजनकतावच्छेदकप्रकारताश्रयानुपूर्वीघटितवर्णसमुदायत्वं विवक्षणीयम्। निराकाङ्क्षवाक्यस्यापि पर्वतो वह्निमानित्यानुपूर्वीप्रकारेण ज्ञानस्यैव पर्वतो वह्निमानिति शाब्दबोधजनकतया जनकतावच्छेदकप्रकारताश्रयतादृशानुपूर्व्याश्रयवर्ण-समुदायत्वं पर्वतो वह्निमानिति वाक्य एवास्ति न तु 'पर्वतः वह्निः सम्बन्धी' इति वाक्य इति न तत्रातिव्याप्तिरिति समाधत्ते– ***पर्वतो वह्निमानित्यादि वाक्येति।*** तादृशसाकाङ्क्षवाक्यानुपूर्वीप्रकारकभ्रमरूपं यत् तादृशनिराकाङ्क्षवाक्य-विशेष्यकं ज्ञानं तस्यापीत्यर्थः। तादृशानुपूर्वीरूपाकाङ्क्षाशालित्वस्य अन्तिमवर्ण एव विश्रान्तेरसंभव इत्यत आह–***तच्छालित्वं चेति।*** पर्वतो वह्निमानित्यादिशाब्दबोधजनकतावच्छेदकीभूता भ्रमान्ययत्किंचिज्ज्ञानवृत्तिर्या विषयिता तन्निरूपकतावच्छेदकवर्णत्वव्यापकसमुदायत्वं प्रतिज्ञात्वमित्यर्थः। एतावतैव निराकाङ्क्षवाक्यवारणसंभवात् आनुपूर्वीरूपाकाङ्क्षा लक्षणे न निवेश्या गौरवात् इत्यवधेयम्। भ्रमावृत्तित्वनिवेशे साकाङ्क्षप्रतिज्ञाविषयिताया अपि भ्रमवृत्तित्वात् लक्षणासंभव इत्यतो भ्रमान्यवृत्तित्वनिवेशः।

समानविषयकतादृशबोधजनकवाक्यस्य वारणाय योग्यता निवेशनीया। योग्यत्वं चाबाधितार्थकत्वं प्रकृतसाध्यविशिष्टप्रकृतपक्षबोधकत्वमिति यावत्। वैशिष्ट्यं च वास्तवं न तु वैज्ञानिकम्।

---

लक्षणे योग्यतानिवेशस्य प्रयोजनमाह– ***ह्रदो वह्निमानिति।*** वह्न्यभाववति ह्रदे वह्निप्रकारकभ्रमरूपा या ह्रदो वह्निमानित्यनुमितिः तत्समानविषयकशाब्द–बोधजनकज्ञानविषयाकाङ्क्षावत्त्वस्य ह्रदो वह्निमानिति वाक्ये सत्त्वात् तत्र प्रतिज्ञालक्षणस्यातिव्याप्तिवारणाय योग्यतायाः निवेशः। ह्रदो वह्निमानितिवाक्ये अबाधितार्थकत्वरूपयोग्यताविरहान्नातिव्याप्तिः इति भावः। ननु वह्नित्वविशिष्ट–वह्निरूपाबाधितार्थकत्वस्य तादृशवाक्येऽपि सत्त्वात्कथमतिव्याप्तिवारणमित्यत आह–***प्रकृतसाध्यविशिष्टेति।*** प्रकृतसाध्यविशिष्टो यः पक्षः तद्विषयकबोधजनकत्वं प्रकृते योग्यता। वह्निविशिष्टह्रदस्याप्रसिद्धतया च नातिव्याप्तिरिति भावः।

ननु प्रकृतसाध्यविशिष्टप्रकृतपक्षबोधकत्वं नाम प्रकृतसाध्यनिष्ठप्रकारता–निरूपितप्रकृतपक्षनिष्ठविशेष्यताशालिबोधजनकत्वम्। ह्रदो वह्निमानिति भ्रमात्मकशाब्दबोधस्यापि वह्निनिष्ठप्रकारतानिरूपितह्रदनिष्ठविशेष्यतानिरूपकतया तज्जनके ह्रदो वह्निमानिति वाक्येऽपि निरुक्तयोग्यतासत्त्वादतिव्याप्ति–रित्यत्राह–***वैशिष्ट्यं चेति। वास्तवं***–वस्तुतो विद्यमानम्। ***वैज्ञानिकं*** –ज्ञानविषयीभूतं वस्तुतोऽविद्यमानम्। तथा च वस्तुतः प्रकृतसाध्यविशिष्टो यः पक्षः तद्विषयकबोधजनकत्वं योग्यता। वह्निविशिष्टस्य ह्रदस्याप्रसिद्धतया निरुक्तयोग्यता ह्रदो वह्निमानिति वाक्ये नास्तीति नातिव्याप्तिरिति भावः।

ननु प्रकृतानुमित्यन्यूनानातिरिक्तविषयकशाब्दज्ञानजनकज्ञानविषयत्वनिवेशे धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ अनुमित्यन्यूनानातिरिक्तविषयकस्य प्रतिज्ञाजन्यबोधस्य धूमनिष्ठहेतुत्वरूपहेतुवाक्यार्थविषयकतया तादृशबोधनिष्ठ–हेतुनिष्ठहेतुत्वविषयकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रयज्ञानविषयत्वस्य हेतुवाक्ये सत्त्वादतिव्याप्तेर्वारणाय प्रकृतसाध्यविशिष्टप्रकृतपक्षविषयकत्वरूपान्यून–विषयकत्वावच्छिन्नजन्यतानिरूपितजनकता लक्षणे निवेशनीया। तत्र च वास्तवस्य साध्यवैशिष्ट्यस्य निवेशे वह्निशून्यपर्वते वह्न्यवगाहिभ्रमात्मक–पर्वतो वह्निमानिति बोधजनके पर्वतो वह्निमानिति वाक्येऽव्याप्तिरिति वैज्ञानिकमेव वैशिष्ट्यं निवेशनीयमिति ह्रदो वह्निमानिति वाक्येऽतिव्याप्तिः

**तल्लाभश्च जातिविशेषोपस्थापकशाब्दवाक्यपदयोरनुसन्धानादेवेति। *अन्यूनेत्यादि।***

---

यद्यपि स्वातन्त्र्येण योग्यतानिवेशो निरर्थकः अन्यूनविषयकत्वावच्छिन्नजन्यताप्रतियोगिक- जनकताया अवश्यं विवक्षणीयतया वास्तववैशिष्ट्यघटितसाध्यविशिष्टपक्षविषयकत्व- रूपान्यूनविषयकत्वनिवेशासम्भवेऽपि अयोग्यवाक्यप्रतिपाद्यविशिष्टार्थाप्रसिद्ध्या सम्प्रदायसिद्धप्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधानिवर्त्यसंशयानिवर्तकत्वरूपानतिरिक्तविषयकत्व- घटितलक्षणस्य तत्रातिव्याप्त्यप्रसक्तेः। तथापि वास्तववैशिष्ट्यघटितानतिरिक्तविषयकत्व- निवेशसूचनाय योग्यतोपादानम्। आदिपदात्तात्पर्यविशेषपरिग्रहः। तेन निस्तात्पर्यकस्य शुकाद्युच्चरितप्रतिज्ञासमानाकारकवाक्यस्यार्थान्तरपरतादृशवाक्यस्य च व्युदासः। नन्वाकाङ्क्षादिनिवेशे शाब्दवाक्यपदयोर्वैयर्थ्यं आकाङ्क्षादेर्ज्ञानान्तरौपयिकत्वविरहात् वाक्यातिरिक्तेऽसत्त्वाच्च अनुमितिजनकपरामर्शादौ शाब्दधीजनकयोग्यताज्ञानादावति- प्रसङ्गानवकाशादित्यत आकाङ्क्षादिमत्त्वलाभार्थकतया तादृशपदोपादानं सार्थकयति-

---

प्रसजति। तद्वारणाय प्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधानिवर्त्यसंशयानिवर्तकत्वरूपा- नतिरिक्तविषयकत्वशरीरे वास्तववैशिष्ट्यघटितः प्रकृतसाध्यविशिष्टपक्षरूपः विशिष्टार्थो निवेशनीयः। ह्रदो वह्निमानित्यत्र तादृशविशिष्टार्थाप्रसिद्ध्या नातिव्याप्तिः। पर्वतो वह्निमानिति भ्रमात्मकबोधे वस्तुतो वह्निविशिष्ट- पर्वतविषयकबोधानिवर्त्यसंशयानिवर्तकत्वसद्भावान्नाव्याप्तिः। इत्थं च उक्तबोधजननयोग्यत्वशरीरे आकाङ्क्षामात्रं निवेश्यं न तु योग्यतापीत्याशङ्क्य अनतिरिक्तविषयकत्वशरीरे वास्तवैशिष्ट्यनिवेशसूचनायैव योग्यतोपादानमिति समाधत्ते–***यद्यपि स्वातन्त्र्येणेत्यादिना। अयोग्यवाक्येति।*** ह्रदो वह्निमानित्यादि- वाक्येत्यर्थः। तत्र अयोग्यवाक्ये। ***तादृशवाक्यस्य*** – प्रतिज्ञासमानाकारकवाक्यस्य।

तथा च प्रकृतसाध्यनिष्ठप्रकारतानिरूपितप्रकृतपक्षनिष्ठविशेष्यता- शालित्वावच्छिन्ना या प्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधानिवर्त्यसंशयानिवर्तकबोधनिष्ठा जन्यता तन्निरूपितजनकताश्रयज्ञानविषयाकाङ्क्षातात्पर्यविशेषवद्वाक्यत्वं प्रतिज्ञात्वम्।

***नन्वाकाङ्क्षादिनिवेश*** इति। शाब्दपदवाक्यपदयोरनुपादाने प्रकृतानुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकत्वं प्रतिज्ञालक्षणमित्युक्तौ ज्ञानपदेन पर्वतो वह्निमानित्यनुमितिमादाय तज्जनकत्वस्य पर्वतो वह्निव्याप्यधूमवानिति परामर्शे सत्त्वात्तत्रातिव्याप्तिः। एवं पर्वतो वह्निमानिति शाब्दज्ञानजनके

***तल्लाभश्चेति। तल्लाभः*** शाब्दबोधं प्रति आकाङ्क्षादिमत एव वाक्यस्य जनकतया आकाङ्क्षादिमत्त्वलाभः। तादृशपदद्वयोपादानादिति भावः। शाब्दपदस्य योगेन शब्दजन्यार्थकत्वे, न तल्लाभः आकाङ्क्षादिरहितस्यापि शब्दस्य शब्दजन्यस्मृतिहेतुत्वादतो **जातिविशेषोपस्थापकेति।** रूढ्यानुभवनिष्ठशाब्दत्वरूपजात्यवच्छिन्नोपस्थापकार्थकम्। शाब्दबोधं प्रति आकाङ्क्षादि-रहितस्यापि योग्यताज्ञानादेर्हेतुतया वाक्यपदानुपादाने केवलशाब्दपदान्न तल्लाभ इति वाक्यपदोपादानापेक्षेति भावः। **यत्तु तल्लाभश्चेति।** अन्यून (नानतिरिक्त) विषयकशाब्दत्वावच्छिन्नौपयिकाकाङ्क्षादिमत्त्वलाभश्चेत्यर्थः। शाब्दपदस्यावयवशक्त्या शब्दजन्यज्ञानत्वावच्छिन्नार्थकत्वे शब्दजन्यतावच्छेदकजातिविशेषानुपस्थित्या तदवच्छिन्न-जन्यताप्रतियोगिकजनकतालाभो न भवतीत्युक्तं ***जातिविशेषस्थापकेति।*** तथा च कार्यदिशि शाब्दपदेन शाब्दत्वजातेः कारणदिशि च वाक्यपदेनाकाङ्क्षादिमत्त्वस्य लाभात्तादृशशाब्दत्वा-वच्छिन्नौपयिकाकाङ्क्षादिमत्त्वलाभ इति भाव इति व्याख्यानम्-तदसत्। अवच्छेदकतापर्याप्त्य-निवेशान्निरुक्तान्यूनविषयकत्वावच्छिन्नजन्यतानिवेशमात्रेणैवोपपत्त्या शाब्दत्वनिवेशने प्रयोजनाभावात्तदुपस्थितेरप्रयोजकत्वात्। न च तत्तदर्थविषयकत्वस्य शाब्दत्वनिष्ठजन्यता-वच्छेदकतायामेवावच्छेदकतया जन्यतायां तदवच्छिन्नत्वविरहात् अन्यूनविषयक-शाब्दत्वावच्छिन्नत्वेनैव जन्यता निवेशनीयेति वाच्यम्। विनिगमनाविरहेण शाब्दत्वविशिष्टतत्तदर्थविषयकत्वस्यापि जन्यतावच्छेदकत्वात्।

---

योग्यताज्ञानादावतिव्याप्तिः। तयोरुपादाने च अनुमितेः शाब्दत्वाभावात् योग्यताज्ञानादेः वाक्यत्वाभावाच्च नातिव्याप्तिरिति वक्तव्यम्। यदि च तादृशशाब्दज्ञानौपयिकाकाङ्क्षादिमत्त्वं लक्षणे निवेश्यते तदा शाब्दपदं वाक्यपदं च व्यर्थम्, अनुमित्यौपयिकत्वस्याकाङ्क्षायामभावेन ज्ञानपदेन अनुमितेः, आकाङ्क्षादिमत्त्वस्य वाक्यातिरिक्तयोग्यताज्ञानादावभावेन शाब्दज्ञानजनकपदेन योग्यताज्ञानादेश्च उपादातुमशक्यतया उक्तातिव्याप्त्यप्रसक्तेरिति शङ्का। शाब्दवाक्यपदयोरुपादानादेव आकाङ्क्षादिमत्त्वलाभात् न वैयर्थ्यमिति समाधानम्।

***यत्त्वित्यादि।*** प्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्दत्वावच्छिन्न-जन्यतानिरूपितजनकतावच्छेदकप्रकारताश्रयानुपूर्वीरूपाकाङ्क्षादिमत्त्वं लक्षणतया विवक्षितम्। शाब्दपदोपादानमहिम्ना शाब्दत्वरूपजातिविशेषावच्छिन्नत्वलाभः। वाक्यपदमहिम्ना आकाङ्क्षादिमत्त्वलाभ इति **यत्तु**काराणां मतम्। स्वमते तु शाब्दपदवाक्यपदयोरुभयोरेव आकाङ्क्षादिमत्त्वलाभार्थकत्वमिति विशेषः।

**अन्यूनानतिरिक्तपदं विहाय लिङ्गाविषयकत्वं वा ज्ञानविशेषणम्। तेनोदाहरणादिव्युदासः। निगमनं च परामर्शहेतुः। अबाधितासत्प्रतिपक्षितत्वज्ञानजनकत्वात्।**

---

**तथा चोद्देश्यानुमितिसमानविषयकलिङ्गाविषयकशब्दज्ञानजनकन्यायावयवत्वमर्थः। व्यतिरेकिणि ह्रदो निर्धूम इत्यादौ निर्वह्नित्वहेतुके यथा ह्रदभिन्नमित्यादिदृष्टान्तवतो ह्रदावृत्तिधर्मशून्यत्वादिहेतुके वा उदाहरणस्य वारणाय समानविषयकान्तं पक्षमुख्यविशेष्यकार्थकम्। उपनयवारणाय *लिङ्गाविषयकेति।***

---

नन्वन्यूनानतिरिक्तपदपरित्यागे अनुमितिविषयकशाब्दधीजनकमित्यवशिष्यते। तथा च पर्वतो वह्निमानित्यादिप्रतिज्ञावाक्यस्यानुमित्यबोधकतया अव्याप्तिरित्याशङ्कां परिजिहीर्षुरनुमितिविषयो विषयो यस्येति मध्यमपदलोपिसमासाभिप्रायेण समुदितलक्षणपर्यवसितार्थं व्याचष्टे– ***तथाचेति। दृष्टान्तवत*** इति। अस्याग्रिमेणोदाहरणस्येत्यादिनाऽन्वयः। अन्वय्युदाहरणस्य लिङ्गबोधकत्वाद्व्यतिरेकिपर्यन्तानुधावनम्। यो यो धूमवान् स वह्निमानिति व्यतिरेक्युदाहरणस्य वह्न्यभावादिरूपलिङ्गाबोधकत्वात् पक्षविषयकत्वमात्रनिवेशेनैव तादृशोदाहरणवारणसम्भवेन पक्षमुख्यविशेष्यकत्वपर्यन्तस्य विवक्षणीयस्य व्यावृत्तिदानाय यथा ह्रदभिन्नमित्यादिदृष्टान्तघटिततदनुसरणम्। दृष्टान्ताघटितोदाहरणे व्यावृत्तिमाह – ***ह्रदावृत्तीति। उपनयवारणायेति।***

---

उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकवाक्यत्वमिति मणिस्थं प्रतिज्ञालक्षणवाक्यम्। तत्र अन्यूनानतिरिक्तपदं विहाय लिङ्गाविषयकत्वं ज्ञानविशेषणं दीयते चेत् उद्देश्यानुमितिविषयकलिङ्गाविषयकशाब्दज्ञानजनकत्वं लक्षणं स्यात्। तथा सति पर्वतो वह्निमानिति प्रतिज्ञायामव्याप्तिः। तस्य वाक्यस्य वह्निमत्पर्वतविषयकबोधजनकत्वेऽपि अनुमितिविषयकबोधाजनकत्वात्। न त्वसंभवः, अनुमितिर्ज्ञानमिति प्रतिज्ञायां लक्षणगमनात् इत्याशङ्कासमाधानार्थं ***तथा चेति*** दीधितिग्रन्थः प्रवृत्त इत्याह–***नन्वन्यूनानतिरिक्तेति।***

***अनुमितिविषयकेति*** मध्यमपदलोपी समासः। अनुमितिविषयविषयकेत्यर्थः। अनुमितिसमानविषयकेति यावत्। तथा च प्रकृतानुमितिसमानविषयकलिङ्गाविषयकशाब्दज्ञानजनकत्वे सति न्यायावयवत्त्वं प्रतिज्ञायाः लक्षणम्। समानविषयकान्तानिवेशे लिङ्गाविषयकशाब्दज्ञानजनकत्वमित्येतावन्मात्रोक्तौ

व्यतिरेक्यनुमाने ह्रदो निर्धूमः निर्वह्नित्वादित्यत्र 'यो यो धूमवान् स वह्निमान् यथा ह्रदभिन्नः' इत्युदाहरणवाक्ये निर्वह्नित्वरूपलिङ्गाविषयक-शाब्दज्ञानजनकत्वसत्त्वात् अतिव्याप्तिः। समानविषयकान्तनिवेशे तु तस्य पक्षमुख्यविशेष्यकार्थकतया पक्षमुख्यविशेष्यकलिङ्गाविषयकशाब्दज्ञानजनकत्वं प्रतिज्ञालक्षणमिति उक्तोदाहरणवाक्ये पक्षमुख्यविशेष्यकबोधजनकत्वा-भावान्नातिव्याप्तिः। ह्रदरूपपक्षस्य भेदविशेषणतया शाब्दज्ञाने भानेन मुख्यविशेष्यतया अभानात्। दृष्टान्ताघटित 'यो यो धूमवान् स वह्निमान्' इति उदाहरणवाक्यजन्यबोधस्य पक्षविषयकत्वाभावात् बोधे पक्षविषयकत्वनिवेशेनापि तस्य वाक्यस्य वारणं संभवति। अतः पक्षमुख्यविशेष्यकत्वसार्थक्याय यथा ह्रदभिन्न इति दृष्टान्तघटितोदाहरणवाक्ये व्यावृत्तिः प्रदर्शिता। तत्र हि ह्रदरूपपक्षविषयकबोधजनकत्वसद्भावात् तावन्मात्रेणातिव्याप्तिर्वारयितुमशक्या। 'यो यो निर्धूमः स स निर्वह्निः यथा ह्रदः' इत्यन्वय्युदाहरणस्य निर्वह्नित्वरूपलिङ्गविषयकबोधजनकत्वात् लिङ्गाविषयकबोधजनकत्वाभावे-नातिव्याप्त्यप्रसक्त्या तत्प्रसञ्जनाय व्यतिरेक्युदाहरणानुधावनम्। दृष्टान्ताघटितोदाहरणेऽपि व्यावृत्तिप्रदर्शनाय **ह्रदावृत्तिधर्मशून्यत्वादिहेतुके** इत्युक्तम्। तथा च पक्षमुख्यविशेष्यकत्वानुपादाने ह्रदो निर्धूमः ह्रदावृत्तिधर्मशून्यत्वात् इत्यत्र 'यो यो धूमवान् स ह्रदवृत्तिधर्मवान्' इत्युदाहरणवाक्ये ह्रदावृत्तिधर्मशून्यत्वरूपलिङ्गाविषयकबोधजनकत्वसद्भावात् अतिव्याप्तिः। तदुपादाने तु तस्य वाक्यस्य ह्रदमुख्यविशेष्यकबोधजनकत्वाभावान्नातिव्याप्तिः। बोधे लिङ्गाविषयकत्वानुपादाने पक्षमुख्यविशेष्यकबोधजनकत्वमित्येतावन्मात्रोक्तौ पर्वतो वह्निमान् धूमादित्यत्र 'वह्निव्याप्यधूमवांश्चायम्' इति उपनयवाक्यस्य अयंपदार्थपर्वतमुख्यविशेष्यकबोधजनकतया तत्रातिव्याप्तिः। अतो लिङ्गाविषयकत्वनिवेशः। तन्निवेशे उपनयजन्यबोधस्य धूमरूपलिङ्गविषयकतया नातिव्याप्तिरिति भावः।

ननु तस्माद्वह्निमानिति निगमनस्यापि वह्निमत्त्वेन रूपेण पर्वतरूप-पक्षमुख्यविशेष्यकबोधजनकत्वसद्भावात् तत्रातिव्याप्तिवारणमपि लिङ्गाविषयकत्व-निवेशस्य प्रयोजनं सम्भवतीति तदुपेक्षा न युक्ता। न च

पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशस्य प्रयोजनान्तरविरहेऽप्येतदर्थमेव निगमनोपेक्षा। तस्मात् तन्निवेशेऽननुषङ्गपक्षे निगमनातिव्याप्तिर्न सम्भवतीत्यभिप्रायेण निगमनसामान्ये इतरेभ्यो भिद्यत इत्यादिनिगमनस्य पक्षविशेष्यकबोधजनकत्वाभावान्निगमनसामान्ये

---

पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वपर्यन्तं निवेशनीयम्, अन्यथा यो यो धूमवान् स वह्निमानित्युदाहरणे धूमवत्त्वादिना पर्वतविशेष्यकबोध-जनकेऽतिव्याप्त्यापत्तेः। तथा च तस्माद्वह्निमानिति निगमनवाक्ये पर्वतत्वावच्छिन्नमुख्यविशेष्यकबोधजनकत्वाभावात् अतिव्याप्त्यप्रसक्त्या निगमने व्यावृत्तिप्रदर्शनोपेक्षेति वाच्यम्। लिङ्गाविषयकत्वदलेनैव यो यो धूमवान् स वह्निमानित्युदाहरणेऽतिव्याप्तिनिरासात् पक्षतावच्छेदकावच्छिन्नत्वानिवेशात्। तथा च निगमनोपेक्षा न युक्तेत्याशङ्क्य तर्हि निगमनेऽतिव्याप्तिवारणायैव पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वनिवेशस्यावश्यकत्वात्। तथा च लिङ्गाविषयकत्वानिवेशे पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वनिवेशेनैव निगमनातिव्याप्तिवारणं शक्यम्। उपनये तु तन्निवेशमात्रेण अतिव्याप्तिवारणमशक्यम्। तस्य पर्वतत्वावच्छिन्नमुख्यविशेष्यकबोधजनकत्वात्। अतो लिङ्गाविषयकत्वनिवेशः। यद्यपि निगमने उपनयस्थस्य अयंपदस्यानुषङ्ग इति पक्षे तस्यापि पर्वतत्वावच्छिन्नमुख्यविशेष्यकबोधजनकत्वमस्ति। तथापि तदननुषङ्गपक्षे तत् नास्तीति तात्पर्यं मनसि निधायाह–गादाधर्यां ***पक्षतावच्छेदकावच्छिन्नपक्षेति। प्रयोजनान्तरविरहेऽपीति।*** लिङ्गाविषयकत्वनिवेशात् पश्चादिति शेषः। इदमापाततः – ***वस्तुत*** इत्यादिना वक्ष्यमाणोदाहरणेऽतिव्याप्तिवारणरूपप्रयोजनसत्त्वात्। ***एतदर्थमेवेति।*** निगमनेऽतिव्याप्तिवारणायैवेत्यर्थः। एवकारेणोपनयेऽतिव्याप्ति-वारणव्यवच्छेदः। ***तन्निवेशे*** –पक्षतावच्छेदकावच्छिन्नत्वनिवेशे।

निगमने उपनयस्थायंपदाननुषङ्गपक्षेऽपि तस्माद्वह्निमानित्यादिनिगमनविशेषे पक्षविशेष्यकबोधजनकत्वेनातिव्याप्तिसंभवेऽपि निगमनसामान्येऽतिव्याप्तिर्न संभवति, 'पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यत्र 'तस्मादितरेभ्यो भिद्यते' इति निगमनवाक्यस्य अख्यातार्थाश्रयत्वमुख्यविशेष्यकबोधजनकस्य पक्षभूतपृथिवीमुख्यविशेष्यकबोधजनकत्वाभावात्। अतः निगमनमुपेक्ष्य उपनये लिङ्गाविषयकत्वप्रयोजनप्रदर्शनमिति पक्षान्तरमाह–***तस्मादितरेभ्य*** इत्यादिना।

नातिव्याप्तेस्सम्भव इत्यभिप्रायेण वा। वस्तुतः पक्षमुख्यविशेष्यकत्वनिवेशेऽपि गोत्वं सास्नाभाववत् गोत्वाभावादित्यत्र यत्र सास्ना तत्र गोत्वमित्युदाहरणे पक्षमुख्यविशेष्यबोधजनकेऽतिव्याप्तिर्दुर्वारैव। पक्षमात्रमुख्यविशेष्यकत्वनिवेशे च विश्वपक्षकस्थले मात्रार्थाप्रसिद्ध्याऽव्याप्तिरिति पक्षतावच्छेदकावच्छिन्न मुख्यविशेष्यत्वा-निरूपकत्वमेव विवक्षणीयम्। तथा च निगमनेऽननुषङ्गपक्षेऽतिव्याप्तिर्न सम्भवत्येवेत्यवधेयम्।

---

तस्मादित्यस्य गन्धवत्त्वादित्यर्थः। ***निगमनसामान्ये नातिव्याप्तिसंभव*** इति। उपनयस्य तु इदंपदघटितस्य पक्षविशेष्यकबोधजनकत्वादुपनयसामान्येऽति-व्याप्तिर्भवत्येवेति भावः। अत्र पक्षे पक्षतावच्छेदकावच्छिन्नत्वं न निवेश्यते।

**वस्तुतस्त्वित्यादि।** पक्षमुख्यविशेष्यकलिङ्गाविषयकबोधजनकवाक्यत्वं प्रतिज्ञात्वमित्युक्तौ गोत्वं सास्नाभाववत् गोत्वाभावादित्यत्र 'यत्र सास्ना तत्र गोत्वम्' इति व्यतिरेक्युदाहरणे गोत्वाभावरूपलिङ्गाविषयकगोत्वरूप-पक्षमुख्यविशेष्यकबोधजनकेऽतिव्याप्तिः। न च पक्षमात्रमुख्यविशेष्यकत्वं निवेशनीयम्। उक्तोदाहरणजन्यबोधे पक्षातिरिक्तसास्नाया अपि मुख्यविशेष्यत्वान्नातिव्याप्तिरिति वाच्यम्। पक्षमात्रमुख्यविशेष्यकत्वं हि पक्षेतराविशेष्यकत्वे सति पक्षविशेष्यकत्वम्। तथा च विश्वपक्षकस्थले सर्वमभिधेयं प्रमेयत्वादित्यत्र विश्वेतराप्रसिद्ध्या अव्याप्तेः। तस्मात् पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वमेव बोधे निवेश्यम्। यत्र सास्ना तत्र गोत्वमित्युदाहरणे गोत्वत्वानवच्छिन्नसास्नात्त्वावच्छिन्नविशेष्यता-निरूपकबोधजनकत्वमेवास्तीति नातिव्याप्तिः। विश्वपक्षकस्थले सर्वत्वानवच्छिन्न-घटत्वाद्यवच्छिन्नविशेष्यत्वानिरूपकबोधजनकत्वसद्भावात् विश्वमभिधेयमिति प्रतिज्ञायां नाव्याप्तिः। एवं च अननुषङ्गपक्षे तस्माद्वह्निमानिति निगमने नातिव्याप्तिः प्रसजति, पर्वतत्वावच्छिन्नमुख्यविशेष्यतानिरूपकबोधजनकत्वस्यैव सद्भावात् तदनिरूपकबोधजनकत्वस्याभावात्। उपनये तु पर्वतत्वानवच्छिन्नमुख्य-विशेष्यत्वानिरूपकबोधजनकत्वसद्भावात् अतिव्याप्तिः संभवतीति निगमनमुपेक्ष्य उपनये लिङ्गाविषयकत्वनिवेशस्य व्यावृत्तिप्रदर्शनमिति भावः।

**यद्यपि प्रकृतलिङ्गाविषयकत्वं पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् गन्धवती वा तथा गन्धादित्यादावव्यापकम्।**

---

लिङ्गत्वस्य केवलान्वयितया सामान्यतो लिङ्गाविषयकत्वं ज्ञानेऽप्रसिद्धमिति प्रकृतलिङ्गाविषयकत्वं विवक्षणीयम्, तथापि न निस्तार इत्याशयेनाह – ***यद्यपि प्रकृतेति।***

---

एतवता पक्षमुख्यविशेष्यकलिङ्गाविषयकशाब्दज्ञानजनकन्यायावयवत्त्वं प्रतिज्ञायाः लक्षणमिति स्थितम्। तत्र सर्वेषामपि पदार्थानां किञ्चित्साध्यकलिङ्गतया लिङ्गत्वं केवलान्वयि। अतः लिङ्गाविषयकशाब्दबोध एवाप्रसिद्ध इत्यसम्भवः। तद्वारणाय प्रकृतलिङ्गाविषयकत्वस्य लक्षणे निवेशः कार्यः। पर्वतो वह्निमानिति बोधस्य प्रकृतधूमरूपलिङ्गाविषयकतया तज्जनकत्वमादाय प्रतिज्ञायां समन्वयः कार्यः। एवं विवक्षणेऽपि दोषं शङ्कते दीधितौ ***यद्यपीत्यादिनेत्याह*** गादाधर्या– ***लिङ्गत्वस्य केवलान्वयितयेति।*** यद्यपीत्यादि 'अतिव्यापकं चोपनयस्य' इत्यन्तदीधितेरयमर्थः– पक्षमुख्यविशेष्यकप्रकृतलिङ्गाविषयकबोधजनकत्वे सति प्रकृतन्यायावयवत्त्वं प्रतिज्ञाया लक्षणमित्युक्तावपि पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् इत्यत्र प्रतिज्ञायामव्याप्तिः। तज्जन्ये पृथिवी इतरभेदाश्रय इति बोधे पृथिवीत्वरूपलिङ्गस्य विषयतया लिङ्गाविषयकत्वाभावात्। न च प्रकृतलिङ्गतावच्छेदकावच्छिन्नाविषयकत्वं विवक्षणीयम्, उक्तप्रतिज्ञाजन्यबोधे पृथिवीत्वस्य पक्षविशेषणतया स्वरूपत एव भानेन पृथिवीत्वत्वरूपलिङ्गता–वच्छेदकावच्छिन्नाविषयकत्वस्याक्षतत्वादिति वाच्यम्। एवमपि गन्धवती इतरेभ्यो भिद्यते गन्धादित्यत्र प्रतिज्ञायामव्याप्तेः। प्रतिज्ञाजन्यबोधे जात्यखण्डोपाध्यतिरिक्तस्य गन्धस्य गन्धत्वेनैव भानात् प्रकृतलिङ्गतावच्छेदक–गन्धत्वावच्छिन्नाविषयकत्वस्याभावात्। न च गन्धवती इतरेभ्यो भिद्यते गन्धादित्यादिन्यायप्रयोग एव न सम्भवति। तत्रोपनयवाक्यस्यायोगात्। तथा चेयमिति हि तत्रोपनयः प्रयोक्तव्यः। उपनयस्थेदंशब्दः प्रकृतपक्षतावच्छेदका–वच्छिन्नपरामर्शी। तथाशब्दः हेतुमत्त्वपरामर्शी। एवं च गन्धवती गन्धवदभिन्ना इति उपनयाच्छाब्दबोधः वाच्यः। स च न संभवति उद्देश्यतावच्छेदक–विधेयतावच्छेदकयोरैक्येऽभेदान्वयबोधानभ्युपगमात्। घटो घट इत्यभेदान्वय–

बोधवारणाय तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नविधेयतानिरूपितोद्देश्यता-वच्छेदकतासम्बन्धेन शाब्दबोधे तद्धर्मभेदस्य कारणत्वादिति वाच्यम्। केवलव्यतिरेक्युपनयस्थले तथाशब्दस्य साध्याभावव्यापकीभूता-भावाभाववानित्यर्थः। तथा चोक्तस्थले इतरभेदाभावव्यापकीभूतगन्धाभावाभाववती गन्धवती इति उपनयवाक्याच्छाब्दबोधः। तत्र गन्धस्य गन्धत्वेनोद्देश्यतावच्छेदकत्वम्, गन्धाभावाभावत्वेन विधेयतावच्छेदकत्वमिति उद्देश्यतावच्छेदकतावच्छेदक-विधेयतावच्छेदकतावच्छेदकरूपयोर्भेदात् शाब्दबोधानुपपत्त्यभावात्। तथा च गन्धवती इतरेभ्यो भिद्यते गन्धात् इत्यादिन्यायप्रयोगसंभवात् तत्रत्यप्रतिज्ञायामव्याप्तिः। यद्यपि अन्वयिस्थले तथा चायमित्युपनयात् तथाशब्दस्य हेतुतावच्छेदकरूपेणैव हेतुबोधकत्वम्, तथापि व्यतिरेकिस्थले 'न च नेयं पृथिवी' 'न च नेयं गन्धवती' इत्यादिरेवोपनयः। तत्र च हेतुतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वेन रूपेण हेतुबोधो नानुपपन्न इति।

ननु 'न च नेयं पृथिवी' इत्याद्याकारक उपनयो न संभवति। नञर्थाभावस्य प्रतियोग्यनुयोगिभ्यां विशिष्टतयैव शाब्दबोधे भानात् अन्योन्याभावबोधे समानविभक्तिकाभ्यां प्रतियोग्यनुयोगिवाचकपदाभ्यां समभिव्याहारस्यापेक्षितत्वात्, संसर्गाभावबोधे च सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारस्यापेक्षितत्वाच्च प्रकृते अनुयोगिवाचकपदाभावेन पृथिवीभेदस्य गन्धाभावस्य च बोधासंभवात्। तस्मात् व्यतिरेकिस्थलेऽपि 'तथा चायम्' इत्येवोपनयः। तथाशब्दस्य साध्याभावव्यापकीभूताभावप्रतियोगिपृथिवीत्वादिमानित्यर्थः। तत्र चोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यात् शाब्दबोधासंभवात् उपनयासंभवेन पृथिवी इतरेभ्यो भिद्यत इत्यादिप्रतिज्ञाघटितन्यायप्रयोग एव न संभवतीति चेत्-न। दण्डवान् रक्तदण्डवान् इत्यादौ विधेयांशेऽधिकावगाहिनः शाब्दबोधस्येष्टत्वेन पृथिवीत्वगन्धादिरूपविधेयांशे साध्याभावव्यापकीभूताभाव-प्रतियोगित्वमधिकमवगाहमानः तथा चायमित्युपनयजन्यः शाब्दबोधः संभवति। तस्मात् पृथिवी इतरेभ्यो भिद्यत इत्यादिन्यायसंभवात् तत्रत्यप्रतिज्ञायां पूर्वोक्तरीत्या अव्याप्तिर्दुर्वारा।

ननु लिङ्गाविषयकत्वमित्यनेन पक्षाविशेषणतया या लिङ्गविषयता

तच्छून्यत्वं विवक्षणीयम्। तेन पक्षनिरूपितविशेषणताभिन्ना या लिङ्गविषयता तच्छून्यबोधजनकवाक्यत्वं प्रतिज्ञात्वमिति फलितम्। तथा च 'पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इत्यत्र प्रतिज्ञाजन्यबोधे पृथिवीत्वरूपलिङ्गनिष्ठविषयतायाः पृथिवीनिरूपितविशेषणतारूपत्वात् तद्भिन्नविषयताशून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति प्रतिज्ञायां नाव्याप्तिः इति चेत्–न। एवमपि अयं वह्निसामग्रीमान् वह्नेरित्यादौ प्रतिज्ञायां अव्याप्तेः। तत्रत्यप्रतिज्ञाजन्यबोधे वह्निरूपलिङ्गस्य सामग्र्यां विशेषणत्वेऽपि पक्षविशेषणत्वाभावेन वह्निनिष्ठविषयतायाः पक्षनिरूपितविशेषणता–भिन्नत्वात् पक्षविशेषणताभिन्नविषयताशून्यत्वं बोधे नास्तीति।

यदि च पक्षाविशेषणतया साध्याविशेषणतया च यल्लिङ्गविषयत्वं तच्छून्यत्वं लिङ्गाविषयकत्वम्। तथा च पक्षनिरूपितविशेषणताभिन्ना साध्यनिरूपितविशेषणताभिन्ना च या लिङ्गनिष्ठविषयता तदनिरूपकबोधजनकत्वे सति प्रकृतन्यायावयवत्त्वं प्रतिज्ञाया लक्षणम्। 'अयं वह्निसामग्रीमान् वह्नेरि'त्यादिन्यायान्तर्गतप्रतिज्ञाजन्यबोधीयवह्निरूपलिङ्गनिष्ठविषयतायाः पक्षनिरूपित–विशेषणताभिन्नत्वेऽपि साध्यनिरूपितविशेषणताभिन्नत्वं नास्ति, सामग्रीरूपसाध्य–विशेषणत्वात् वह्नेः। तथा च लिङ्गाविषयकबोधजनकत्वसद्भावान्नाव्याप्तिः इत्युच्यते, तदा दधि द्रव्यं दध्नः इत्यादावव्याप्तिः। प्रतिज्ञाजन्यबोधे दधिरूपस्य लिङ्गस्य मुख्यविशेष्यत्वात् पक्षे साध्ये चाविशेषणत्वात् पक्षाविशेषणतया साध्याविशेषणतया च लिङ्गविषयकत्वमेवास्ति, न तु तच्छून्यत्वमिति। एवम् उपनयवाक्येऽतिव्याप्तिः। तज्जन्यबोधे लिङ्गस्य पक्षविशेषणतयैव भानात् पक्षाविशेषणत्वेन लिङ्गाविषयकत्वसद्भावादिति।

अथ गदाधरग्रन्थो व्याख्यायते। ***लिङ्गत्वस्य केवलान्वयितया*** इति। सर्वेषामपि वस्तूनां यत्किञ्चित्साध्यसाधकतया लिङ्गत्वावच्छिन्नाविषयकत्वरूपं लिङ्गाविषयकत्वं ज्ञानेऽप्रसिद्धम्। ज्ञानविषयस्य पदार्थस्य यत्किञ्चिल्लिङ्गत्वनियमात्। अतःप्रकृतलिङ्गाविषयकत्वं विवक्षणीयम्। तथापि 'पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इत्यादौ प्रतिज्ञाजन्यशाब्दबोधस्य 'पृथिवी इतरभिन्ना' इत्याकारकस्य पृथिवीत्वरूपप्रकृतलिङ्गविषयकत्वात् लिङ्गाविषयकशाब्दबोधजनकत्वं प्रतिज्ञायां नास्तीति अव्याप्तिरिति भावः। ***सामान्यत*** इति। लिङ्गत्वेन रूपेण इत्यर्थः।

लिङ्गतावच्छेदकावच्छिन्नाविषयकत्वविवक्षणे पृथिवी इतरेभ्यो भिद्यत इत्यादिप्रतिज्ञाया नासंग्रहः तज्जन्यबोधे स्वरूपत एव पृथिवीत्वादिरूपलिङ्गभानादित्याशयेन स्थलान्तरे दोषमाह–**गन्धवतीति। तथेति। तथा** इतरेभ्योभिद्यते। **उपनयासम्भव** इति। तथाच तादृशप्रतिज्ञादिघटितन्याय एव न सम्भवतीति क्वाव्याप्तिशङ्केति भावः। **इदमा–**इदंशब्देन। **गन्धवत्त्वेनेति।** उपनयस्थेदंशब्दस्य प्रतिज्ञोपदर्शितपक्षतावच्छेदकावच्छिन्नपरत्वादिति भावः। **गन्धवत्त्वान्वयेति।** गन्धवदभेदान्वयस्येत्यर्थः। **अयोगादिति।** उद्देश्यत्वविधेयत्वा–

---

**लिङ्गतावच्छेदकेत्यादि।** लिङ्गतावच्छेदकावच्छिन्नाविषयकशाब्दज्ञानजनकत्वम् इति विवक्षणे 'पृथिवी इतरेभ्यो भिद्यते' इति वाक्यजन्यशाब्दबोधे पृथिवीत्वस्य स्वरूपतो भानेन पृथिवीत्वत्वरूपलिङ्गतावच्छेदकावच्छिन्नाविषयकत्वं शाब्दबोधेऽस्तीति अव्याप्तेः वारणेऽपि स्थलान्तरे अव्याप्तिमाहेत्यर्थः।

**तथा चेति।** 'गन्धवती इतरेभ्यो भिद्यते, गन्धात्' इत्यादि न्यायप्रयोगः न संभवति, तत्रत्य 'तथा चेयम्' इत्युपनयेन 'गन्धवती गन्धवती' इति शाब्दबोधस्यैव वक्तव्यतया तत्र च गन्धस्यैव उद्देश्यतावच्छेदकत्वात् विधेयतावच्छेदकत्वाच्च अभेदान्वयबोधे उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः भेदस्य अपेक्षिततया आकाङ्क्षाविरहेण शाब्दबोधासंभवात् उपनयवाक्यासंभवात् तादृशन्यायप्रयोगस्यैव असंभवेन कथम् अव्याप्तिशङ्केति भावः। **अव्युत्पन्नत्वादिति।** 'घटो घटः' इत्यादिशाब्दबोधवारणाय तद्धर्मावच्छिन्नाभेदसंबन्धावच्छिन्न–विधेयतानिरूपितउद्देश्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणम् इति कार्यकारणभावस्य वक्तव्यतया गन्धवत्त्वावच्छिन्नाभेदसंबन्धा–वच्छिन्नविधेयतानिरूपितउद्देश्यतावच्छेदकतासंबन्धेन उपनयजन्यशाब्दबोधः गन्धवत्त्वे वक्तव्यः। तत्र गन्धवत्त्वभेदो नास्तीति भावः। **अन्वयबोधप्रसङ्गादिति।** घटत्वावच्छिन्नोद्देश्यकघटत्वावच्छिन्नविधेयक–अभेदसंसर्गकबोधप्रसङ्गादित्यर्थः। **साध्याभावव्यापक** इति। इतरभेदाभावव्यापकः यो गन्धाभावः तदभावत्वेनेत्यर्थः। **भिन्नरूपेणेति।** गन्धत्वेन गन्धस्य उद्देश्यतावच्छेदकत्वम्। गन्धाभावाभावत्वेन गन्धस्य विधेयतावच्छेदकत्वम्। तथा च उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः ऐक्येऽपि उद्देश्यतावच्छेदकतावच्छेदकविधेयतावच्छेदकतावच्छेदकयोः भेदात् शाब्दबोधानुपपत्तिर्नास्ति। 'गन्धवती गन्धाभावाभाववती' इति शाब्दबोधे

**न चात्रोपनयासम्भवः। इदमा गन्धवत्त्वेन परामृष्टे हेतुभूतगन्धवत्त्वान्वयायोगादिति वाच्यम्। साध्याभावव्यापकगन्धाभावाभावत्त्वेनान्वयात्।**

**अत एव व्यतिरेकिणि न च नेयं पृथिवीत्यादिकः प्राचां प्रयोगः।**

---

वच्छेदकयोरैक्ये अभेदस्यान्वयबोधस्याव्युत्पन्नत्वात्। अन्यथा घटो घट इत्यादावन्वयबोधप्रसङ्गादिति भावः। ***साध्याभावेति।*** साध्याभावव्यापको यो गन्धाभावः तदभावत्वेनेत्यर्थः। तथा च भिन्नरूपेण गन्धादेरुद्देश्यत्वविधेयत्वावच्छेदकगर्भेऽन्तर्भावान्नान्वयवोधानुपपत्तिरिति भावः।

ननु हेत्वभावाभावत्वेन हेतूपस्थापकपदाभावात्कथमुपनयवाक्यात्तेन रूपेण पक्षे हेतुभानमत आह – ***अत एवेति।*** साध्याभावव्यापकतावच्छेदकहेत्वाभावत्वाद्यवच्छिन्नाभावत्वेनहेत्वन्वयबोधादेवेत्यर्थः। ***न च नेयं पृथिवीति।*** नञ्द्वयेनाभावाभावत्वेन हेतुबोधनादिति भावः। यद्यपि पृथिवीत्वहेतुकस्थले तादृशोपनयप्रयोगो न युज्यते, पृथिवीपदात्स्वरूपत

---

बाधकाभावात्। एवञ्च एतदनुसारेण तद्धर्मावच्छिन्नावच्छेदकतानिरूपित-अभेदसंबन्धावच्छिन्नविधेयतानिरूपित-उद्देश्यतावच्छेदकतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणमिति कार्यकारणभावो वक्तव्यः। अतो न निराकाङ्क्षत्वमिति तात्पर्यम्।

***हेतूपस्थापकपदाभावादिति।*** उपनयघटक 'तथा' शब्दस्य हेतुतावच्छेदकरूपेण हेतुपरतया हेत्वभावाभावत्वेन हेतूपस्थापकत्वाभावात् इति भावः। ***साध्याभावेत्यादि।*** साध्याभावव्यापकतावच्छेदकं यत् हेत्वभावत्वं तदवच्छिन्नाभावत्वेन रूपेण हेतोः अन्वयानुरोधादित्यर्थः। ***अभावाभावत्वेनेति।*** हेत्वभावाभावत्वेनेत्यर्थः।

***यद्यपीत्यादि।*** 'पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इत्यत्र 'न च नेयं पृथिवी' इत्युपनयवाक्यात् पृथिवीत्वाभावाभावत्वेन पृथिवीत्वबोधनमशक्यम्। प्रथमनञर्थेऽत्यन्ताभावे पृथिवीपदार्थतावच्छेदकस्य पृथिवीत्वस्य प्रतियोगितासंबन्धेन अन्वयः यदि संभवेत्, तदा पृथिवीत्वाभावस्य द्वितीयनञर्थे प्रतियोगितासंबन्धेन अन्वयेन पृथिवीत्वाभावाभावबोधः संभवेत्। परन्तु एकत्र विशेषणत्वेन उपस्थितस्य अन्यत्र विशेषणत्वेनान्वयस्य अव्युत्पन्नतया पृथिवीपदार्थे पृथिव्यां विशेषणस्य पृथिवीत्वस्य नञर्थेऽन्वयासंभवात् पृथिवीत्वाभावाभावत्वेन पृथिवीत्वबोधः कथं 'न च नेयं पृथिवी' इति वाक्यात् भवेत् इति भावः।

एवोपस्थितस्य पृथिवीत्वरूपपदार्थतावच्छेदकस्य नञर्थाभावे अन्वयासम्भवेन हेत्वभावाभावत्वेन हेत्वलाभात्। न च हेतुमद्भेदाभावोऽपि हेतुरेवान्योन्याभावाभावस्य प्रतियोगितावच्छेदकरूपत्वात्। एवं (च) हेतुमद्भेद एव साध्याभावव्यापकता यत्र नेतरभेदस्तन्न पृथिवीत्युदाहरणेन बोध्या इति पृथिवीभेदाभावत्वेन पृथिवीत्वबोधकस्तादृशोपनयो युज्यत एवेति वाच्यम्। एवमपि

---

किञ्च किञ्चिद्रूपेण उपस्थितस्यैव पदार्थस्य पदार्थान्तरेऽन्वयः व्युत्पन्नः। पृथिवीपदात् स्वरूपेणोपस्थितस्य पृथिवीत्वस्य नञर्थाभावेऽन्वयोऽशक्यः। तदुक्तं ***स्वरूपतएवोपस्थितस्येति। पदार्थतावच्छेदकस्येति।*** पृथिवीपदार्थे विशेषणस्य इत्यर्थः। अनेन एकत्र विशेषणतया अन्वितस्य अन्यत्र विशेषणतया अन्वयः व्युत्पत्तिविरुद्ध इति सूचितः। ***हेत्वलाभादिति।*** पृथिवीत्वस्य अबोधादित्यर्थः।

***न च हेतुमद्भेद*** इति। 'न च नेयं पृथिवी' इत्येव उपनयवाक्यम्। तत्र एकस्य नञः भेदोऽर्थः। तत्र पृथिवीपदार्थस्य पृथिवीत्वावच्छिन्नस्य प्रतियोगितासंबन्धेन अन्वयः। अपरस्य नञः अत्यन्ताभावोऽर्थः। तत्र प्रथमनञर्थस्य भेदस्य प्रतियोगितासंबन्धेन अन्वयः। अत्यन्ताभावस्य च इदंपदार्थपृथिव्यामन्वयः। तथा च 'इयं पृथिवीत्वावच्छिन्नप्रतियोगिताक-भेदाभाववती' इति उपनयवाक्यात् शाब्दबोधः। पृथिवीत्वावच्छिन्नप्रतियोगिताकभेदा-भावस्य पृथिवीत्वस्वरूपतया तादृशभेदाभावत्वेन रूपेण पृथिवीत्वरूपहेतोः उपनयजन्यबोधे भानम्। अतः 'न च नेयं पृथिवी'ति उपनयो युज्यत इति भावः। ***एवमपीत्यादि।*** हेतुमद्भेदे हेत्वभावे वा साध्याभावव्यापकता व्यतिरेकिस्थले उदाहरणवाक्यात् बोध्यते। उपनयवाक्याच्च साध्याभावव्यापकः यः हेतुमद्भेदः हेत्वभावो वा तदभाववत्त्वम् इदंपदार्थे बोधनीयम्। तत्रापि हेतुवाक्यात् येन रूपेण हेतुः उपस्थितो भवति, तद्रूपावच्छिन्नवद्भेदे तद्रूपावच्छिन्नप्रतियोगिता-कात्यन्ताभावे वा साध्याभावव्यापकता आकाङ्क्षिता इति उदाहरणेन तथैव बोधो वक्तव्यः। तदनुसारेण उपनयवाक्यादपि तद्रूपविशिष्टवद्भेदत्वावच्छिन्न-प्रतियोगिताकाभावत्वेन वा तद्रूपावच्छिन्नप्रतियोगिताकाभावाभावत्वेन वा हेतुर्बोधनीयः।'यत्र नेतरभेदः तत्र न पृथिवीत्वम्' इति वा 'यत्र नेतरभेदः तन्न पृथिवी' इति वा उदाहरणवाक्यम्। 'न च नेयं पृथिवी' इति उपनयवाक्यं तु न संभवति। पृथिवीत्वस्य पृथिवीत्वत्वेन रूपेण हेतुवाक्यात् बुद्धतया पृथिवीत्वत्वविशिष्टपृथिवीत्ववद्भेदाभावस्य उक्तोपनयवाक्यात् बोधयितुमशक्यत्वात्

पृथिवीत्वादिहेतुवाक्योपस्थितपृथिवीत्वत्वविशिष्टहेतुकानुमित्यौपयिकतद्रूपविशिष्ट-वद्भेदत्वावच्छिन्नेसाध्याभावव्यापकताया एवाकाङ्क्षततया तस्या एव यत्रेतरभेदाभावस्तन्न पृथिवीत्युदाहरणेनोपदर्शनीयतया यद्रूपविशिष्टवद्भेदत्वावच्छिन्नाभावत्वेन हेतुमत्ताया एवोपनेयत्वात्तादृशोपनयासङ्गतेः। अन्यथा पृथिवीतरेभ्यो भिद्यते गन्धसमवायिकारणतावच्छेदक-रूपवत्त्वादित्यादावपि तथोपनयप्रयोगापत्तेरिति। तथापि तादात्म्येन पृथिवीहेतुकस्थलाभिप्रायेणेदम्। आदिपदान्न च नेयं गन्धवतीत्याकारकस्य न च नात्र गन्ध इत्याकारस्योपनयस्य परिग्रहः। अत्र हेत्वाभावादौ साध्याभावव्यापकत्वाभानेऽपि न क्षतिः। प्राचीनमते उदाहरणादेव व्याप्तिलाभेन पक्षधर्मतामात्रस्य उपनेयत्वादत एव प्राचामित्युक्तम्। साध्याभावव्यापकेत्यादौ च व्यापकान्तमुपलक्षणार्थकम्।

---

पृथिवीपदात् पृथिवीत्वस्य स्वरूपत एव उपस्थितत्वात्। तथा च पृथिवीत्वत्वावच्छिन्नहेतुकस्थले 'न च नेयं पृथिवी' इति उपनयः न संभवति। अपि तु 'न च नेयं पृथिवीत्ववती' इति वा 'न च नात्र पृथिवीत्वम्' इति वा उपनयः संभवतीति भावः। औपयिकेत्यस्य व्यापकतायामन्वयः **तद्रूपविशिष्टेति।** पृथिवीत्वत्वविशिष्टवद्भेदत्वावच्छिन्नेत्यर्थः। **हेतुमत्ताया एवेति।** पृथिवीत्ववत्ताया एवेत्यर्थः। एवकारेण स्वरूपतः पृथिवीत्वघटितपृथिवी-भेदत्वावच्छिन्नाभावत्वेन पृथिवीत्ववत्ताया व्यवच्छेदः। **उपनेयत्वादिति।** उपनयजन्यशाब्दबोधविषयत्वात् इत्यर्थः। **तादृशोपनयासङ्गतेरिति।** स्वरूपतः पृथिवीत्वोपस्थापकस्य 'न च नेयं पृथिवी' इत्युपनयस्य असङ्गतेरित्यर्थः। **अन्यथेति।** येन रूपेण यस्य हेतुवाक्यात् उपस्थितिः तद्रूपविशिष्टवद्भेदत्वावच्छिन्नाभावत्वेन रूपेण हेतुमत्तैव उपनयेन बोधनीया इति नियमानङ्गीकारे इत्यर्थः। **तथोपनयप्रयोगापत्तेरिति।** न च नेयं पृथिवीति उपनयप्रयोगापत्तेरित्यर्थः।

एतावता पृथिवीत्वत्वावच्छिन्नहेतुकस्थले 'न च नेयं पृथिवी'ति उपनयप्रयोगासंभवात् 'प्राचां प्रयोगः' इति दीधितिग्रन्थोऽसङ्गत इत्याशङ्का यद्यपीत्यादिना उत्थापिता। तां समाधत्ते- **तथापीति।** 'पृथिवी इतरेभ्यो भिद्यते, पृथिव्याः' इत्येवं तादात्म्यसंबन्धेन पृथिवीहेतुकन्यायप्रयोगस्थले न च नेयं पृथिवीति उपनयः संभवति। हेतुवाक्यादपि स्वरूपेणैव पृथिवीत्वस्य उपस्थित्या पृथिवीभेदे एव साध्याभावव्यापकतायाः आकाङ्क्षतायाः उदाहरणेन बोधात्

**यदि च दण्डवान्रक्तदण्डवानित्यस्यान्वयो नानुपपन्नः, तद्विशिष्टे शुद्ध-तद्विशिष्टान्वयस्यैवाव्युत्पन्नत्वादित्युच्यते। तदा नानुपपत्तिगन्धोऽपि।**

---

ननु न च नेयं पृथिवीत्यादिकः प्राचीनानुमतोपनयोऽसङ्गतः। नञर्थाभावस्य प्रतियोग्यनुयोग्युपरागेणैव शाब्दानुभवे भानादन्योन्याभावबोधे समानविभक्तिकप्रतियोग्यनु-योगिवाचकपदसमभिव्याहारस्य, संसर्गाभावबोधे च सप्तम्यन्तानुयोगिवाचक-पदसमभिव्याहारस्यापेक्षितत्वात्। प्रकृते चानुयोगिवाचकपदाभावेन पृथिवीभेदगन्धाभावादि-बोधासम्भवादिति नवीनानुमत इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती तादृशगन्धवती चेयमित्याद्याकारकोपनय एवादरणीयः। तत्र हेतोः पक्षतावच्छेदकत्वे दर्शितव्युत्पत्तिविरोधो दुष्परिहर एवेत्यालोच्य नव्यमते समाधानमाह – ***यदि चेति। उच्यत*** इत्यग्रिमेणान्वयः।

---

उपनयेनापि स्वरूपतः पृथिवीत्वघटितपृथिवीभेदाभावत्वेन रूपेण पृथिवीत्वरूपहेतोः बोधनसंभवात् नानुपपत्तिरिति भावः। इदमपि भेदाभावः यथा प्रतियोगितावच्छेदकस्वरूपः तथा प्रतियोगिस्वरूपोऽपि इति मतमवलम्ब्य उक्तम्।

नन्वेवमपि साध्याभावव्यापकीभूतहेतुमद्भेदाभावस्यैव उपनयेन बोधनीयतया साध्याभावव्यापकत्वोपस्थापकपदाभावेन न च नेयं पृथिवीति उपनयोऽसङ्गतः इत्यत्राह– ***अत्र हेत्वभावादाविति।*** आदिपदेन हेतुमद्भेदः ग्राह्यः। उपनयेन हेत्वभावाभावो वा हेतुमद्भेदाभावो वा पक्षे बोध्यते। हेत्वभाव–हेतुमद्भेदयोः साध्याभावव्यापकत्वं तु उदाहरणादेव लभ्यत इति उपनयात् न बोध्यते। अतः नानुपपत्तिरिति भावः। ***प्राचीनमत*** इति। यथा अन्वयिस्थले उपनयवाक्यं हेतोः पक्षधर्मतामात्रं बोधयति, तथा व्यतिरेकिस्थलेऽपि हेत्वभावाभावे हेतुमद्भेदाभावे वा पक्षधर्मत्वमात्रम् उपनयाद्बोधनीयम्, न तु व्यापकत्वमपीति प्राचीनानां मतम्। नन्वेवं सति साध्याभावव्यापकगन्धाभावाभावत्वेनान्वयात् इति दीधितिग्रन्थासङ्गतिरित्यत आह–***साध्याभावव्यापकेत्यादौ*** चेति।

'यदि चेति' ग्रन्थमवतारयति ***ननु न च नेयमित्यादिना।*** अयं भावः– पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वात्' इत्यादौ 'न च नेयं पृथिवी' इत्यादिकः उपनयः असङ्गतः। प्रतियोग्यनुयोगिविशिष्टतयैव नञर्थाभावस्य शाब्दबोधे भानमिति नियमात् अन्योन्याभावविषयकशाब्दबोधं प्रति समानविभक्तिकप्रतियोग्यनु-

पक्षाविशेषणत्वेन तदविषयकत्वञ्चायं वह्निसामग्रीमान् वह्नेरित्यादौ

---

तद्विशिष्ट इति। तद्धर्मं धर्मितावच्छेदकीकृत्य इतराविशेषिततद्धर्मावच्छिन्नभेदान्वयबोधस्यैव व्युत्पत्तिविरुद्धत्वादित्यर्थः। **नानुपपत्तीति।** प्रकृते उद्देश्यतावच्छेदकाद्यघटकव्याप्तेर्विधेयता-

---

योगिवाचकपदसमभिव्याहारस्य संसर्गाभावविषयकशाब्दबोधं प्रति च सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारस्य अपेक्षितत्वात् नञर्थस्य पृथिवीभेदस्य यः अनुयोगी तद्वाचकपदस्य 'न च नेयं पृथिवी' इति उपनयवाक्ये अभावात्, एवं पृथिवीत्वाभावस्य यः अनुयोगी तद्वाचकस्य पदस्य 'न च नात्र पृथिवीत्वम्' इति उपनयवाक्ये अभावाच्च पृथिवीभेदगन्धाभावविषयकशाब्दबोधासंभवात्। तस्मात् इतरभेदाभावव्यापकीभूत–अभावप्रतियोगिपृथिवीत्ववती इयं तादृशगन्धवती च इयं इत्याकारकः नवीनसम्मतः उपनय एव आदरणीयः। तत्र पक्षतावच्छेदकस्य हेतोश्च एकत्वेन उद्धेश्यतावच्छेदकविधेयतावच्छेदकयोः भेदाभावात् शाब्दबोधासंभवः। तथा च न्यायप्रयोगस्यैव असम्भवात् अव्याप्तिशङ्का न युज्यत इति आलोच्य नव्यमते उपनयस्य साधुत्वसंपादनार्थं ***यदि चेति*** ग्रन्थः प्रवृत्त इति। ***दर्शितव्युत्पत्तिविरोध*** इति। तद्धर्मावच्छिन्नाभेदसंबन्धावच्छिन्नविधेयतानिरूपित – उद्देश्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणम् इति यः कार्यकारणभावः तद्विरोध इत्यर्थः। ***तद्धर्मं धर्मितावच्छेदकीकृत्येति।*** घटत्वावच्छिन्नविशेष्यताकः विशेषणान्तराविशेषित–घटत्वावच्छिन्नप्रकारकः अभेदान्वयबोधः व्युत्पत्तिविरुद्धः। परन्तु 'घटो नीलघटः' इत्यादौ घटत्वावच्छिन्नविशेष्यकनीलत्वविशिष्टघटत्वावच्छिन्नप्रकारकः अभेदान्वयबोधः अनुभवसिद्धः। एवं दण्डवत्त्वावच्छिन्ने रक्तदण्डवत्त्वावच्छिन्न–प्रकारकाभेदान्वयबोधः 'दण्डवान्, रक्तदण्डवान्' इत्यादौ अनुभवसिद्धः। तदनुसारेण विशेषणान्तरानवच्छिन्न–तद्धर्मावच्छिन्न–विधेयतानिरूपित–उद्देश्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणमिति कार्यकारणभावः कल्पनीयः। तथा च गन्धांशे इतरभेदाभावव्यापकीभूताभावप्रतियोगित्वरूप–विशेषणमवगाहमानः गन्धवदभेदान्वयबोधः न व्युत्पत्तिविरुद्ध इति नवीनमतानुसारेण उपनयसंभवात् तद्घटितन्यायान्तर्गतप्रतिज्ञायाम् अव्याप्तिशङ्का युक्तैवेति भावः। एवञ्च उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः ऐक्येऽपि विधेयतावच्छेदके

वच्छेदकघटकतया भानादिति भावः। तथा च गन्धवतीतरेभ्यो भिद्यते गन्धादित्यादिन्यायस्यापि निष्प्रत्यूहतया लिङ्गविषयकतादृशन्यायान्तर्गतप्रतिज्ञायामव्याप्तिर्दुर्वारैवेति भावः।

ननु पक्षाविशेषणतया यल्लिङ्गविषयकत्वं तच्छून्यत्वं विवक्षणीयमतो नोक्ताव्याप्तिरुक्तस्थले पक्षविशेषणतयैव लिङ्गविषयतासत्त्वेन विशिष्टाभावसत्त्वादित्यत आह – **पक्षाविशेषणत्वेनेति। अयं वह्निसामग्रीमान्वह्नेरित्यादाविति।** अव्यापकमित्यग्रिमेणान्वयः।

---

अधिकविशेषणावगाही अभेदान्वयबोधः संभवत्येवेति फलितम्। ***विधेयतावच्छेदकघटकतयेति।*** विधेयतावच्छेदकविशेषणतया इत्यर्थः।

**'पक्षाविशेषणत्वेनेति'** दीधितिमवतारयति– ***ननु पक्षाविशेषणत्वेनेति।*** लिङ्गाविषयकशाब्दबोधजनकत्वं प्रतिज्ञालक्षणमित्युक्तौ 'गन्धवती इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यत्र प्रतिज्ञाजन्यबोधे गन्धरूपस्य लिङ्गस्य पक्षतावच्छेदकविधया भानात् लिङ्गाविषयकत्वं नास्तीति तत्रत्यप्रतिज्ञायाम् अव्याप्तिः या शङ्किता सा पक्षाविशेषणतया यत् लिङ्गविषयत्वं तच्छून्यत्वं लिङ्गाविषयकत्वं इति विवक्षया वारयितुं शक्यते। पक्षनिरूपितविशेषणताभिन्ना या लिङ्गनिष्ठा विषयता तच्छून्यशाब्दबोधजनकत्वे सति प्रकृतन्यायावयवत्वं प्रतिज्ञालक्षणं फलितम्। 'गन्धवती इतरेभ्यो भिद्यते' इति प्रतिज्ञाजन्यबोधे या गन्धनिष्ठा विषयता सा पक्षनिरूपितविशेषणतारूपा। तत्र गन्धस्य पक्षे विशेषणत्वात्। अतः पक्षनिरूपितविशेषणताभिन्ना लिङ्गविषयता निरूपकतासंबन्धेन हेतुवाक्यजन्यबोध एव वर्तते। तच्छून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति तज्जनकत्वमादाय प्रतिज्ञायां लक्षणसमन्वयात् नाव्याप्तिरिति यद्युच्यते, तदा 'अयं वह्निसामग्रीमान् वह्नेः' इत्यादिन्यायान्तर्गतप्रतिज्ञायामव्याप्तिः। तादृशप्रतिज्ञाजन्यबोधे वह्निरूपस्य लिङ्गस्य सामग्रीविशेषणतया भानेऽपि अयंपदार्थपक्षविशेषणतया अभानात् पक्षाविशेषणतया यल्लिङ्गविषयकत्वं तच्छून्यत्वाभावात् इति भावः। **उक्तस्थले** – गन्धवती इतरेभ्यो भिद्यते इति प्रतिज्ञायाम्। **पक्षविशेषणतयैव** – इति 'एव' कारेण पक्षाविशेषणत्वस्य व्यवच्छेदः। तेन पक्षविशेषणताभिन्नत्वरूप-विशेषणाभावसत्त्वं सूचितम्।

***विशिष्टाभावसत्त्वात्*** इति। पक्षनिरूपितविशेषणताभिन्नत्व-रूपविशेषणाभावप्रयुक्तः यः पक्षनिरूपितविशेषणताभिन्नत्वविशिष्टलिङ्गविषयत्वाभावः तस्य सत्त्वात् इत्यर्थः। ***अव्यापकमि***त्यस्य अव्याप्तमित्यर्थः। इदंपदार्थे पक्षे

अथ पक्षाविशेषणत्वं पक्षनिरूपितविशेषणताभिन्नत्वं, तस्य लिङ्गविषयताविशेषणत्वे चायं वह्निसामग्रीमान्वह्नेरित्यादावव्याप्त्याशङ्कानवकाशः। तत्रापि पक्षविशेषणतापन्नसाध्यनिरूपित-विशेषणतात्मकलिङ्गविषयतायाः परम्परया पक्षनिरूपितत्वात्। गन्धवती पृथिवीतरेभ्यो भिद्यत इत्यादावपि मत्वर्थसम्बन्धांशे विशेषणीभूतगन्धविषयतायाः गन्धसमानकालीनरूपवती पृथिवी इतरेभ्यो भिद्यते इत्यादौ तद्विषयतायाः साक्षात्पक्षनिरूपितविशेषणत्वानात्मकत्वेन साक्षात्परम्परासाधारणनिरूपितत्वस्यैव निवेशनीयत्वादिति चेन्न। पक्षाविशेषणत्वं यद्युक्तार्थकं

---

विशेषणीभूतायां सामग्र्यां वह्नेः विशेषणत्वेऽपि साक्षात् पक्षेऽविशेषणतया पक्षाविशेषणतया यल्लिङ्गविषयकत्वं तदभावस्य प्रतिज्ञाजन्यबोधेऽभावात् लक्षणमव्याप्तमित्यर्थः।

शङ्कते– ***अथेत्यादिना।*** पक्षाविशेषणत्वमित्यस्य पक्षनिरूपितविशेषणता-भिन्नत्वमित्यर्थः। तच्च लिङ्गविषयतायां विशेषणम्। पक्षनिरूपितविशेषणताभिन्न-लिङ्गविषयताशून्यशाब्दबोधजनकत्वं प्रतिज्ञालक्षणं पर्यवसितम्। तत्र पक्षनिरूपितत्वं यदि साक्षात् इत्युच्यते तदा 'गन्धवती इतरेभ्यो भिद्यते' इत्यत्र प्रतिज्ञाजन्यबोधे गन्धरूपस्य लिङ्गस्य पक्षविशेषणीभूतः यः मतुबर्थःसंबन्धः तद्विशेषणत्वेऽपि साक्षात् पक्षविशेषणत्वाभावेन गन्धनिष्ठायां विषयतायां साक्षात्पक्षनिरूपितत्वाभावात् पक्षनिरूपितविशेषणताभिन्नैव गन्धविषयता तच्छून्यत्वं शाब्दबोधे नास्तीति अव्याप्तिः। एवं गन्धसमानकालीनरूपवती 'इतरेभ्यो भिद्यते गन्धात्' इत्यादौ प्रतिज्ञाजन्यबोधे गन्धरूपस्य लिङ्गस्य साक्षात् पक्षविशेषणत्वाभावात् साक्षात् पक्षनिरूपितविशेषणताभिन्नलिङ्गविषयतैव अस्ति न तु तच्छून्यत्वमिति तत्रत्यप्रतिज्ञायामव्याप्तिः। यदि तु परम्परया पक्षनिरूपितत्वं निवेश्यते तदा 'अयं वह्निसामग्रीमान्' इत्यत्र अव्याप्त्यभिधानमसङ्गतम्। वह्निनिष्ठविषयतायाः परम्परया पक्षनिरूपितत्वेन पक्षनिरूपितविशेषणताभिन्नत्वविरहात् भिन्नत्वविशिष्ट-लिङ्गविषयताशून्यत्वस्य शाब्दबोधे सत्त्वेन लक्षणसङ्गमनात्। तस्मात् साक्षात्परम्परासाधारणं पक्षनिरूपितत्वं यदि विवक्ष्यते तदा 'गन्धवती इतरेभ्यः' इत्यत्र अव्याप्तिवारणेऽपि 'अयं वह्निसामग्रीमान्' इत्यत्र लक्षणसमन्वयात् अव्याप्त्यभिधानम् असङ्गतमेव इति आक्षेपस्य सारः।

***पक्षविशेषणतापन्नेत्यादि।*** पक्षः अयं पदार्थः। तद्विशेषणतापन्नं साध्यं सामग्री तन्निरूपितविशेषणतात्मिका वह्निरूपलिङ्गनिष्ठा विषयता तस्या इत्यर्थः।

तदा निगमनातिव्याप्तिः। न च निगमने अयं पदानुषङ्गपक्षे उक्तयुक्त्या पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताकान्यत्वपर्यन्तस्य एतदनुरोधेनैव वा पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वस्य विषयकान्तार्थस्य विवक्षणीयतया नातिव्याप्तिरिति वाच्यम्। एवमप्यनुषङ्गपक्षे तत्रातिव्याप्तेर्दुर्वारत्वात्। अतः पक्षतावच्छेदकप्रकारकतानिरूपकविशेष्यतानिरूपितप्रकारतान्यत्वमेव तदर्थो वाच्यः। पक्षतावच्छेदकप्रकारतान्तःपातिनी

---

***परम्परया पक्षनिरूपितत्वादिति।*** तथा च पक्षनिरूपितविशेषणताभिन्नलिङ्गविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधे सत्त्वेन अव्याप्तिविरहात् अव्याप्त्याशङ्कायाः अनवकाश इति भावः। साक्षात् पक्षनिरूपितविशेषणताभिन्नत्वं निवेश्य उक्तस्थले अव्याप्तेः सङ्गमने तु 'गन्धवती इतरेभ्यः भिद्यत' इत्यत्र अव्याप्तिमाह – ***साक्षात् पक्षनिरूपितविशेषणत्वानात्मकत्वेनेति।*** तादृशविशेषणताभिन्नत्वेनेत्यर्थः। तथा च साक्षात् पक्षनिरूपितविषयताभिन्नलिङ्गविषयताशून्यत्वविरहात् प्रसक्तायाः अव्याप्तेः वारणाय साक्षात्परम्परासाधारणस्य निरूपितत्वस्य निवेशे 'अयं वह्निसामग्रीमान्' इति प्रतिज्ञायाम् अव्याप्तिशङ्का न सङ्गच्छत इति भावः।

समाधत्ते – ***पक्षविशेषणत्वमित्यादिना। उक्तार्थकमिति।*** साक्षात्परंपरासाधारणपक्षनिरूपितविशेषणताभिन्नार्थकमित्यर्थः। ***निगमनातिव्याप्तिरिति।*** निगमनवाक्यजन्यशाब्दबोधे 'धूमज्ञानज्ञाप्यवह्निमान् पर्वतः' इत्याकारके या धूमरूपलिङ्गविषयता तस्याः परम्परया पक्षनिरूपिततया पक्षनिरूपितविशेषणताभिन्नत्वविरहात् तद्भिन्नविषयताशून्यत्वस्य शाब्दबोधे सद्भावेन तज्जनकनिगमनवाक्ये अतिव्याप्तिरित्यर्थः।

***न च निगमने इत्यादि।*** उद्देश्यानुमितिसमानविषयकेत्यस्य पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यताकान्येत्यर्थः। अथ वा पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकेत्यर्थः। तथा च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकलिङ्गविषयकबोधजनकत्वं पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यताकान्यलिङ्गविषयकबोधजनकत्वं वा प्रतिज्ञालक्षणघटकम्। अयंपदाननुषङ्गपक्षे निगमनवाक्यजन्यबोधे पर्वतत्वावच्छिन्नमुख्यविशेष्यकत्वस्य अभावात् न निगमने अतिव्याप्तिः इति भावः। ***उक्तयुक्त्या*** इति। यत्र सास्ना तत्र गोत्वमित्यत्र

अतिव्याप्तिभयेनेत्यर्थः। ***विषयकान्तार्थस्य चेति।*** उद्देश्यानुमितिसमानविषयकान्त–भागार्थस्य इत्यर्थः। ***एवमपीति।*** निगमने अयंपदानुषङ्गपक्षे निगमनजन्यशाब्दबोधे पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वम् अस्तीति अतिव्याप्तिर्दुर्वारैवेति भावः। ***अत*** इत्यादि। निगमनेऽतिव्याप्तिवारणाय पक्षाविशेषणतया इत्यस्य पक्षतावच्छेदकनिष्ठप्रकारतानिरूपकविशेष्यतानिरूपितप्रकारताभिन्नत्वमित्यर्थः। तथा च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वे सति पक्षतावच्छेदकनिष्ठ–प्रकारतानिरूपकविशेष्यतानिरूपितप्रकारताभिन्नलिङ्गनिष्ठविषयत्वानिरूपको यो बोधः तज्जनकत्वं प्रतिज्ञालक्षणम्। पक्षतावच्छेदकतद्विशेषणपदार्थनिष्ठा प्रकारता सर्वापि पक्षतावच्छेदकनिष्ठप्रकारतानिरूपकविशेष्यतानिरूपिता भवति। इयांस्तु विशेषः – तत्र काचित् प्रकारता साक्षाद्विशेष्यतानिरूपिता, काचित्तु परंपरया निरूपिता इति। विधेयकोटिप्रविष्टपदार्थनिष्ठप्रकारता च न धर्मितावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपिता। तथा हि– 'पर्वतो वह्निमान्' इत्यत्र पर्वते पर्वतत्वं वह्नित्वं च प्रकारः। पर्वतनिष्ठा विशेष्यता पर्वतत्वनिष्ठप्रकारतानिरूपिता वह्निनिष्ठप्रकारतानिरूपिता च। परन्तु वह्निनिष्ठप्रकारतानिरूपिता पर्वतनिष्ठविशेष्यता पर्वतत्वावच्छिन्ना। पर्वतत्वनिष्ठप्रकारतानिरूपितविशेष्यता तु न पर्वतत्वावच्छिन्ना। स्वस्य स्वविशेष्यतावच्छेदकत्वविरहात्। किन्तु निरवच्छिन्ना। तथा च निरवच्छिन्नत्व–सावच्छिन्नत्वाभ्यां विशेष्यताभेदः आवश्यक इति पक्षतावच्छेदकपर्वतत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितत्वं पक्षकोटिप्रविष्ट–पदार्थप्रकारतायामेव वर्तते। एवञ्च निगमनवाक्यजन्यशाब्दबोधीय–विधेयकोटिप्रविष्टलिङ्गनिष्ठविषयतायाः अयंपदानुषङ्गपक्षेऽपि पक्षतावच्छेदकनिष्ठ–प्रकारतानिरूपकविशेष्यतानिरूपितविशेषणतारूपत्वं नास्तीति तादृशविशेषणताभिन्नैव लिङ्गनिष्ठविषयता। तच्छून्यत्वं निगमनजन्यशाब्दबोधे नास्तीति न निगमनेऽतिव्याप्तिः। एवञ्च 'अयं वह्निसामग्रीमान् वह्नेः' इत्यत्र प्रतिज्ञाजन्यबोधीयायाः वह्निरूपलिङ्गविषयतायाः विधेयकोटिप्रविष्टपदार्थनिष्ठतया पक्षतावच्छेदकनिष्ठ–प्रकारतानिरूपकविशेष्यतानिरूपितविशेषणताभिन्नत्वात् तद्भिन्नविषयताशून्यत्वं प्रतिज्ञाजन्यशाब्दबोधे नास्तीति तत्रत्यप्रतिज्ञायामव्याप्तिः प्रसज्यत एव इति भावः।

सर्वैव प्रकारता तादृशविशेष्यतानिरूपिता। इयांस्तु विशेषः – क्वचित्साक्षात्क्वचित्परम्परया तथेति विधेयकोटिप्रविष्टपदार्थप्रकारता च न धर्मितावच्छेदकप्रकारतानिरूपित-विशेष्यतानिरूपिता। विधेयनिरूपितविशेष्यताया धर्मितावच्छेदकावच्छिन्नतया धर्मितावच्छेदक-प्रकारतानिरूपितविशेष्यतायाश्च स्वस्य स्वधर्मितानवच्छेदकत्वेन तदनवच्छिन्नतया विधेयधर्मितावच्छेदकप्रकारतानिरूपक विशेष्यतयोर्भेदादिति निगमनादिजन्यबोधीयविधेय-कोटिप्रविष्टलिङ्गविषयता न पक्षतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितविशेषणतात्मिकेति न निगमनाद्यतिव्याप्तिः। एवं च वह्निसामग्रीमान्वह्नेरित्यादावव्याप्तिः प्रसज्यत एवेति। एतेन पर्वतो वह्निमान् धूमादित्यादिप्रसिद्धन्यायान्तर्गतोपनयेऽतिव्याप्तिप्रसञ्जकत्वेन नैतद्विवक्षणं शङ्कापथमारोहति। न चायं दोषोऽतिव्यापकं चोपनयस्येत्यनेन स्वयमेव वक्ष्यत इति नानुपपत्तिरिति वाच्यम्। उपनयवारणार्थकतयैव लिङ्गाविषयकत्वविशेषणस्य स्वयं प्राग्व्याख्याततया उपनयमात्र एव यादृशविवक्षायामतिव्याप्तिः तादृशविवक्षायां सन्दर्भविरोधस्य जागरूकत्वादित्यपि समाहितं–न चैवमतिव्यापकञ्चोपनयस्येति ग्रन्थासङ्गतिः। तादृशग्रन्थस्य

---

**तदर्थो वाच्य** इति। पक्षाविशेषणतयेत्यस्य अर्थो वक्तव्य इत्यर्थः। **तथेतीति।** पक्षतावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितेत्यर्थः। **तदनवच्छिन्नतयेति।** धर्मितावच्छेदकानवच्छिन्नतयेत्यर्थः। ***विधेयतद्धर्मितावच्छेदक-प्रकारतानिरूपकविशेष्यतयोर्भेदादिति।।*** विधेयनिष्ठप्रकारतानिरूपकविशेष्यतायाः विधेयनिरूपितधर्मितावच्छेदकनिष्ठप्रकारतानिरूपकविशेष्यतायाश्च भेदादित्यर्थः। ***अव्याप्तिः प्रसज्यत एव*** इति। विधेयकोटिप्रविष्टलिङ्गनिष्ठविषयतायाः पक्षतावच्छेदकनिष्ठप्रकारतानिरूपकविशेष्यतानिरूपितप्रकारताभिन्नत्वात् इति भावः।

**एतेनेति** – समाहितमित्यनेन अन्वयः। पक्षाविशेषणत्वं यथाश्रुतमेवेति अभिमानेन कैश्चिदुक्तं दूषणम्, एतेन समाहितमित्यर्थः। **एतेन** इत्यस्य पक्षतावच्छेदकनिष्ठप्रकारतानिरूपकविशेष्यतानिरूपितप्रकारताभिन्नत्वनिवेशेनेत्यर्थः। यदि पक्षाविशेषणत्वं यथाश्रुतं तदा 'पर्वतो वह्निमान् धूमात्' इत्यादि प्रसिद्धन्यायान्तर्गतोपनयवाक्येऽतिव्याप्तिः। तज्जन्यशाब्दबोधे 'धूमवाँश्चायम्' इत्याकारके पक्षविशेषणतयैव लिङ्गस्य विषयत्वात्। अतः पक्षाविशेषणतया लिङ्गाविषयकत्वं न विवक्षितुं शक्यम्। न चायं दोषः 'अतिव्यापकञ्च उपनयस्य' इत्यनेन स्वयमेव वक्ष्यते, अतो नानुपपत्तिः इति वाच्यम्।

धूमवान् वह्निमान् धूमादित्यादिन्यायान्तर्गतोपनयविशेषपरत्वात्। तत्र हेतोरेव पक्षतावच्छेदकतया पक्षतावच्छेदकावच्छिन्नांशे यद्विशेषणत्वं तस्यापि पक्षतावच्छेदकप्रकारतानिरूपक-

---

'उपनयवारणाय लिङ्गविषयके'ति पूर्वग्रन्थे उपनयवारणफलकतयैव लिङ्गविषयकत्वनिवेशस्य स्वयमुक्ततया उपनयेऽतिव्याप्तिप्रसञ्जकार्थविवक्षायाः सन्दर्भविरुद्धत्वात् इति कैश्चिदुक्तं दूषणं पूर्वोक्तनिष्कृष्टार्थे न भवति। उपनयजन्यबोधीयलिङ्गनिष्ठविषयतायाः विधेयकोटिप्रविष्टपदार्थनिष्ठायाः पक्षतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितप्रकारताभिन्नत्वेन तच्छून्यबोधजनकत्वाभावात् उपनयेऽतिव्याप्त्यप्रसक्तेः उक्तविवक्षणस्य संभवात् इति भावः। ***अतिव्याप्तिप्रसञ्जकत्वेनेति।*** सर्वत्रैव उपनयजन्यबोधे लिङ्गस्य पक्षविशेषणतयैव भानादिति भावः। ***एतद्विवक्षणमिति।*** पक्षनिरूपितविशेषणतान्यत्व-विवक्षणमित्यर्थः। ननु निरवच्छिन्नविशेष्यताघटितपरिष्कारेण उपनयातिव्याप्तिवारणे 'अतिव्यापकञ्च उपनयस्य' इति ग्रन्थेन उक्तपरिष्कारस्य उपनयातिव्याप्ति-प्रसञ्जकत्वकथनं विरुद्ध्येत इति शङ्कते–***न चैवमिति।*** समाधत्ते–***तादृशग्रन्थस्येति।*** उपनयातिव्याप्तिप्रसञ्जकदीधितिग्रन्थस्येत्यर्थः। 'धूमवान् वह्निमान् धूमात्' इत्यादि न्यायान्तर्गतोपनयविशेषे अतिव्याप्तिप्रदर्शकः दीधितिग्रन्थः। तादृशोपनयजन्यशाब्दबोधे 'धूमवान् धूमव्यापकवह्निसमानाधिकरणधूमवान्' इत्याकारके धूमस्य धर्मितावच्छेदकतया विधेयतावच्छेदकतया च द्विधा भानेन लिङ्गविषयतापदेन धर्मितावच्छेदकधूमनिष्ठविषयताया अपि उपादातुं शक्यतया तस्याश्च पक्षतावच्छेदकधूमनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारतात्मकतया तद्भिन्नत्वविरहात् तद्भिन्नत्वविशिष्टलिङ्गविषयताशून्यत्वरूपविशिष्टाभावस्य शाब्दबोधे सत्त्वेन तज्जनकत्वमादाय उपनयविशेषे अतिव्याप्तिः प्रसञ्जिता। एवं तत्रैव शाब्दबोधे व्यापकताघटकसामानाधिकरण्यघटकधूमनिष्ठप्रकारतायाः पक्षतावच्छेदकनिष्ठप्रकारतापदेन उपादातुं शक्यतया तस्याश्च धूमात्मकपक्षतावच्छेदकनिष्ठप्रकारतानिरूपकाधिकरणनिष्ठविशेष्यतानिरूपित-प्रकारतारूपतया तद्भिन्नत्वविरहात् अतिव्याप्तिः प्रसजति। ***पक्षतावच्छेदकावच्छिन्नांशे यद्विशेषणत्वमिति।*** पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितं विधेयत्वरूपं

पक्षाविशेषणत्वेन साध्याविशेषणत्वेन तदविषयकत्वञ्च, दधि द्रव्यं दध्नः **प्रमेयत्वमभिधेयं प्रमेयत्वात् गोत्वाभावो न सास्नादिमान् गोत्वाभावादित्यादावव्यापकमतिव्यापकं चोपनयस्य।**

---

विशेष्यतानिरूपितत्वात्। एवं व्यापकनिरूपकतया हेतुविषयतया अपि स्वात्मकपक्षतावच्छेदकप्रकारतानिरूपकाधिकरणनिष्ठविशेष्यतानिरूपितप्रकारतात्मकतया अतिव्याप्तिसङ्गतेः। यत्तु पक्षतावच्छेदकहेतुकव्यतिरेक्युपनयपर्यन्तपरतया तादृशग्रन्थसंगमनमप्यन्वय्युपनयजन्यबोधे व्याप्तिघटकतया लिङ्गविषयत्वसत्त्वेनातिव्याप्तिर्न-सम्भवतीत्यभिमानेन केषाञ्चिन्मतम्। तदेतेन न श्रद्धेयम्। ***पक्षाविशेषणत्वेन साध्याविशेषणत्वेन चेति।*** पक्षतावच्छेदकप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारताभिन्नत्वे सति

---

प्रकारत्वमित्यर्थः। तथा च विधेयभूतधूमस्य पक्षतावच्छेदकतया पक्षतावच्छेदकनिष्ठप्रकारतेत्यनेन धूमनिष्ठविधेयतायाः ग्रहणसंभवात्। यद्यपि धूमनिष्ठविधेयतायाः धूमनिष्ठविधेयतात्वेन रूपेण धूमनिष्ठप्रकारता-निरूपकविशेष्यतानिरूपितत्वं न सम्भवति, तथापि धूमनिष्ठप्रकारतात्वेन रूपेण तन्निरूपितत्वं सम्भवतीति तात्पर्यम्। ***व्यापकत्वनिरूपकतयेति।*** धूमाधिकरण–वृत्ति–अत्यन्ताभाव–अप्रतियोगित्वरूपव्यापकत्वशरीरे अधिकरणांशे धूमस्य विशेषणतया धूमनिष्ठा प्रकारता स्वनिष्ठप्रकारतानिरूपकाधि- करणनिष्ठविशेष्यतानिरूपिता भवतीत्याशयः।

पक्षाविशेषणत्वं यथाश्रुतमेवेत्यभिमानवतां केषांचित् मतं दूषयति–**यत्तु** इत्यादिना। अन्वय्युपनयजन्यबोधे हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्ति-घटकतया लिङ्गविषयकत्वसत्त्वात् लिङ्गाविषयकत्वाभावेन अन्वय्युपनयेऽतिव्याप्तिर्न संभवति। गन्धवती इतरेभ्यो भिद्यते गन्धवत्त्वात् इति पक्षतावच्छेदक-हेतुकव्यतिरेक्युपनयजन्यबोधे साध्याभावव्यापकगन्धाभावाभाववती इत्याकारके लिङ्गतावच्छेदकावच्छिन्नाविषयकत्वसत्त्वेन तज्जनके व्यतिरेक्युपनयेऽतिव्याप्तिः संभवतीति तादृशोपनयपरः 'अतिव्यापकं चोपनयस्य' इति ग्रन्थ इति **यत्तु**काराः। तन्न। पक्षतावच्छेदकनिष्ठप्रकारतानिरूपकविशेष्यतानिरूपितप्रकारतान्यत्वं लिङ्गाविषयकत्वमिति विवक्षणेन अन्वय्युपनयेऽप्यतिव्याप्तिसंभवादिति भावः।

एतावता पक्षाविशेषणत्वेन यल्लिङ्गविषयत्वं तच्छून्यत्वनिवेशेऽपि 'अयं

साध्यतावच्छेदकप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारताभिन्नं यल्लिङ्गविषयत्वं तच्छून्यत्वमित्यर्थः। साध्याविशेषणतयेत्यस्य यथाश्रुतार्थकत्वे निगमने परम्परया साध्य-विशेषणतयैव लिङ्गभानादतिव्याप्त्यापत्तेः। न चैवमपि ज्ञानविषयवान् धूमादित्यादिन्यायान्तर्गत-निगमनेतिव्याप्तिस्तदवस्थैव, ज्ञानविषयत्वरूपसाध्यतावच्छेदकप्रकारतानिरूपकविशेष्यता-निरूपितत्वस्य हेतुप्रकारतायां सत्त्वात्। एवं वह्निसाध्यके निगमनजन्यबोधीयहेतुज्ञानज्ञाप्यत्व-विशिष्ट वह्नित्वादिप्रकारतायां साध्यतावच्छेदकादिप्रकारतात्वस्याधिकं त्वित्यादिन्यायेनाक्षततया तादृशप्रकारकताघटकहेतुविषयतायाः निरुक्तविशेष्यतानिरूपितप्रकारताकान्यत्वविरहात्तत्राप्यति-व्याप्तितादवस्थ्यमिति वाच्यम्। शुद्धसाध्यतावच्छेदकप्रकारतानिरूपकविशेष्यताया एव

---

वह्निसामग्रीमान्, वह्नेः' इत्यादौ प्रतिज्ञायामव्याप्तिः उक्ता। तद्वारणार्थं पक्षाविशेषणत्वेन साध्याविशेषणत्वेन च लिङ्गविषयकत्वं निवेशनीयमिति दीधितावुक्तम्। तत् परिष्करोति- ***पक्षतावच्छेदकप्रकारतानिरूपितेत्यादिना।*** पक्षतावच्छेदकनिष्ठप्रकारतानिरूपित - विशेष्यतानिरूपित - प्रकारताभिन्नत्वे सति साध्यतावच्छेदकनिष्ठप्रकारतानिरूपित- विशेष्यतानिरूपित- प्रकारताभिन्नं यत् लिङ्गविषयत्वं तच्छून्यपक्षमुख्यविशेष्यकशाब्दज्ञानजनकप्रकृतन्यायावयवत्वं प्रतिज्ञालक्षणम्। तत्र सत्यन्तेन 'पृथिवी इतरेभ्यो भिद्यते' इत्यादिप्रतिज्ञायाम् अव्याप्तेः वारणम्। विशेष्यदलेन 'अयं' वह्निसामग्रीमान् वह्नेः इत्यत्र प्रतिज्ञायामव्याप्तिवारणम्। तत्र हि वह्नेः पक्षाविशेषणत्वेऽपि साध्याविशेषणत्वं नास्ति। सामग्रीरूपसाध्ये विशेषणत्वात्। अतः साध्याविशेषणतया यल्लिङ्गविषयकत्वं तच्छून्यत्वं शाब्दबोधेऽस्तीति नाव्याप्तिः। साध्याविशेषणतया इत्यस्य साध्यनिरूपितविशेषणताभिन्नत्वरूपयथाश्रुतार्थकत्वे निगमनेऽतिव्याप्तिः। निगमनजन्यशाब्दबोधे लिङ्गस्य परंपरया साध्यविशेषणतयैव भानात् साध्यविशेषणताभिन्नायाः लिङ्गविषयताया अभावात्। अतः यथाश्रुतार्थं परित्यज्य साध्यतावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारताभिन्नत्वमित्यर्थः उक्तः। तथा सति साध्यतावच्छेदकघटकेषु पदार्थेष्वेव तादृशप्रकारतायाः सद्भावात् तदघटकलिङ्गनिष्ठविषयतायां तादृशप्रकारताभिन्नत्वमेवास्तीति तद्भिन्नलिङ्गविषयताशून्यत्वस्य निगमनजन्यशाब्दबोधेऽभावात् नातिव्याप्तिः।

न ***चैवमपीति।*** साध्यतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपित-प्रकारताभिन्नत्वनिवेशेऽपि 'अयं ज्ञानविषयवान् धूमात्' इत्यादिन्यायान्तर्गत

निगमनवाक्येऽतिव्याप्तिः। तत्रत्यनिगमनवाक्यात् 'अयं ज्ञानविषयव्याप्यधूमज्ञान-जन्यज्ञानविषयज्ञानविषयवान्' इति शाब्दबोधः। तत्र ज्ञानविषयत्वान्तं विधेयम्। ज्ञानविषयरूपं साध्यं उद्देश्यम् विधेयमेव प्रकृते साध्यतावच्छेदकम्। तथा च ज्ञानविषयत्वरूपसाध्यतावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितत्वं साध्यतावच्छेदकरूप विधेयकोटिप्रविष्टपदार्थनिष्ठप्रकारतायाम् अक्षतमिति लिङ्गनिष्ठप्रकारतायामपि लिङ्गस्य विधेयकोटिप्रविष्टतया वर्तते। अतः लिङ्गविषयतायां उक्तप्रकारताभिन्नत्वविरहात् उक्तप्रकारताभिन्नत्वविशिष्ट-लिङ्गविषयताशून्यत्वस्य शाब्दबोधे सत्त्वात् तत्रत्यनिगमनेऽतिव्याप्तिः। एवं प्रसिद्धवह्न्यादिसाध्यकस्थलेऽपि निगमने अतिव्याप्तिः वक्तुं शक्यते। धूमज्ञानज्ञाप्यत्वविशिष्टवह्निमान् पर्वतः इत्याकारकः निगमनजन्यबोधः। तत्र विशिष्टवह्नित्वं विधेयतावच्छेदकम्। तद्धटकहेतुनिष्ठविषयतायां साध्यतावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितत्वं 'अधिकं तु प्रविष्टं चेत् न तद्धान्यै' इति न्यायेन अक्षतमिति निरुक्तविशेष्यतानिरूपितप्रकारताभिन्नत्वं हेतुविषयतायां नास्तीति तद्भिन्नलिङ्गविषयताशून्यत्वस्य शाब्दबोधे सद्भावात् इति ***न चैवमित्यादिना*** आशङ्का। तस्याः समाधानं तु- शुद्धसाध्यतावच्छेदकनिष्ठप्रकारता-निरूपकविशेष्यतैव निवेशनीया। अतः विशिष्टं साध्यतावच्छेदकमादाय प्रसक्तः दोषः नास्ति इति।

पक्षाविशेषणत्वेन साध्याविशेषणत्वेन च लिङ्गाविशेषणत्वनिवेशेऽपि 'दधि द्रव्यं दध्नः' इत्यत्र प्रतिज्ञायां अव्याप्तिः। प्रतिज्ञाजन्यबोधे लिङ्गाभिन्नस्य पक्षस्य दध्नः मुख्यविशेष्यतया पक्षाविशेषणतया साध्याविशेषणतया च विषयत्वात् इति दीधितिकारस्य आशयः। अयं च दोषः पक्षधर्मीलिङ्गाविषयकत्वविवक्षणेन वारयितुं शक्यते। 'दधि द्रव्यम्' इति प्रतिज्ञाजन्ये दधित्वेन रूपेण दधिद्व्यणुकविशेष्यके द्रव्यत्वप्रकारके शाब्दबोधे पक्षधर्मीलिङ्गविषयकत्वं नास्ति। पक्षपदेन पक्षतावच्छेदकावच्छिन्नं विवक्षितम्। दधिद्व्यणुकं यद्यपि परमाणोः धर्मः तथापि परमाणौ दधित्वजातिः नास्ति। द्रव्यत्वव्याप्यव्याप्यजातेः परमाणौ अनङ्गीकारात्। तथा च दधित्वावच्छिन्नसमवेतत्वं दधिद्व्यणुकस्य नास्तीति पक्षधर्मीलिङ्गपदेन दधिद्व्यणुकं न ग्रहीतुं शक्यते। किन्तु दधित्र्यणुकादिकमेव ग्राह्यम्। तदविषयकत्वं च दधिद्व्यणुकविशेष्यके

विवक्षणीयत्वात्। ननु पक्षधर्मीलिङ्गाविषयकत्वविवक्षणे दधि द्रव्यं दध्न इत्यादौ नाव्याप्त्यवकाशः। दधि द्रव्यमिति बोधस्य दधिद्व्यणुकविषयकस्य दधिसमवेतदध्यविषयकत्वसम्भवादतः स्थलान्तरमाह-**प्रमेयत्वमिति।** ननु प्रमेयत्वं प्रमाविषयत्वं, तच्च विषयभेदाद्भिन्नं, एवं च घटादिनिष्ठप्रमेयत्वविषयकस्य प्रमेयत्वमभिधेयमिति बोधस्य प्रमेयत्वरूपपक्षनिष्ठप्रमेयत्वाविषयकस्य सम्भवान्न तत्राव्याप्तिरतः स्थलान्तरमनुसरति-**गोत्वाभाव** इति। ननु पक्षतावच्छेदकविशिष्टपक्षविषयतानन्तःपातिलिङ्गविषयताशून्यत्वनिवेशेनोपदर्शितहेतुपक्षकप्रतिज्ञाया असंग्रहः। तदन्तःपातित्वं च पक्षतावच्छेदकप्रकारतानिरूपितसंसर्गतानिरूपकत्वं पक्षतावच्छेदकप्रकारतापक्षविशेष्यतासाधारणमित्यालोच्य अतिव्याप्तिमाह – **अतिव्यापकं चेति।**

---

शाब्दबोधेऽस्तीति तज्जनकत्वमादाय 'दधि द्रव्यम्' इति प्रतिज्ञायां लक्षणसमन्वयसम्भवात् इत्यालोच्य स्थलान्तरे अव्याप्तिरुक्ता इत्याह-**ननु पक्षधर्मेत्यादिना।**

'प्रमेयत्वम् अभिधेयम् प्रमेयत्वात्' इत्यादौ प्रतिज्ञाजन्यशाब्दबोधे प्रमेयत्वरूपं लिङ्गं भासते। प्रमेयत्वं च प्रमेयत्वरूपपक्षधर्मोऽपि भवति। प्रमेयत्वे प्रमाविषयत्वसद्भावात्। तथा च पक्षधर्मीलिङ्गविषयक एव प्रतिज्ञाजन्यशाब्दबोधः, न तु तदविषयक इति तत्राव्याप्तिरिति भावः। **ननु प्रमेयत्वमिति।** प्रमेयत्वं प्रमाविषयत्वम्। विषयत्वञ्च विषयभेदात् भिन्नम्। एवञ्च घटनिष्ठं यत् प्रमाविषयत्वं तदविषयकस्य प्रमेयत्वमिति शाब्दबोधस्य पक्षनिष्ठलिङ्गाविषयकस्य संभवात् तज्जनकत्वमादाय लक्षणसमन्वयात् नाव्याप्तिरित्यालोच्य स्थलान्तरमनुसरति इत्यर्थः।

पक्षधर्मीलिङ्गाविषयकत्वनिवेशेऽपि 'गोत्वाभावः न सास्नादिमान्, गोत्वाभावात्' इत्यादौ गोत्वाभावः न सास्नादिमान् इति प्रतिज्ञायामव्याप्तिः। तत्र लिङ्गस्य पक्षस्य च एकत्वात् प्रतिज्ञाजन्यबोधे गोत्वाभावरूपं लिङ्गं पक्षतया भासते। गोत्वाभावश्च गोत्वाभावधर्मः। गोत्वाभावे गोत्वस्य अभावात्। तथा च प्रतिज्ञाजन्यशाब्दबोधः पक्षधर्मीलिङ्गविषयक एव भवति, न तु तदविषयक इति अव्याप्तिरिति भावः।

इयं चाव्याप्तिः पक्षतावच्छेदकविशिष्टपक्षविषयतानन्तःपातिनी या लिङ्गविषयता तच्छून्यत्वनिवेशे वारयितुं शक्यते। तथा हि-

**तथापि पक्षतावच्छेदकविशिष्टे पक्षे यत्साध्यतावच्छेदकविशिष्टसाध्य-वैशिष्ट्यावगाहित्वं तद्बहिर्भावेन लिङ्गविषयकत्वाभावो वाच्यः।**

---

***पक्षतावच्छेदकविशिष्टे*** इति। पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितवैशिष्ट्यविषयता तद्बहिर्भूत-

---

पक्षतावच्छेदकविशिष्टपक्षविषयतान्तःपातित्वं च पक्षतावच्छेदकनिष्ठ-प्रकारतानिरूपितसंसर्गतानिरूपकत्वम्। तथा च पक्षतावच्छेदकनिष्ठ-प्रकारतानिरूपित-संसर्गतानिरूपकभिन्नलिङ्गविषयताशून्यशाब्दबोधजनकत्वं प्रतिज्ञायाः लक्षणम्। पक्षतावच्छेदकस्य पक्षस्य च यः संसर्गः तन्निष्ठा संसर्गता पक्षतावच्छेदकनिष्ठप्रकारतानिरूपिता पक्षनिष्ठविशेष्यतानिरूपिता च भवति। अतः पक्षतावच्छेदकनिष्ठप्रकारतानिरूपितसंसर्गतानिरूपकत्वं पक्षतावच्छेदक-निष्ठप्रकारतायाः पक्षनिष्ठविशेष्यतायाश्च साधारणम्। उक्तप्रतिज्ञाजन्यबोधीया या गोत्वाभावरूपलिङ्गनिष्ठा विशेष्यता सा गोत्वाभावत्व-रूपपक्षतावच्छेदकनिष्ठप्रकारतानिरूपितसंसर्गतानिरूपिका भवति। अतः उक्तसंसर्गतानिरूपकभिन्नत्वं नास्तीति तद्विशिष्टलिङ्गविषयताशून्यत्वस्य प्रतिज्ञाजन्यशाब्दबोधे सत्त्वात् नाव्याप्तिरित्यालोच्य उपनयेऽतिव्याप्तिरूपं दोषमाह–***दीधितौ – अतिव्यापकञ्चोपनयस्येति।***

'पर्वतो वह्निमान्' इत्यादौ उपनयवाक्यजन्यशाब्दबोधे लिङ्गस्य विषयत्वेऽपि तन्निष्ठा विषयता न पक्षतावच्छेदकविशिष्टपक्षविषयतान्तःपातिनी इति तदनन्तःपातिलिङ्गविषयताशून्यशाब्दबोधः उपनयजन्यः शाब्दबोधः। तज्जनकत्वमुपनयेऽस्ति इति तत्र अतिव्याप्तिरिति भावः।

एतावता लिङ्गाविषयकत्वघटितं प्रतिज्ञालक्षणं न सङ्गच्छत इति यद्यपीत्यादिशङ्काग्रन्थस्य सारः। तत्समाधानमुक्तम् ***दीधितौ पक्षतावच्छेदकविशिष्टपक्षे*** इत्यादिना। तस्य ग्रन्थस्य विवक्षितमर्थमाह–**गादाधर्याम्–*पक्षतावच्छेदकावच्छिन्नेत्यादिना।*** तथा च पक्षतावच्छेदका– वच्छिन्नपक्षनिष्ठ-विशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारता निरूपितवैशिष्ट्यविषयता तद्बहिर्भूतलिङ्गविषयताशून्यशाब्दबोधजनकन्यायावयवत्त्वं

लिङ्गविषयताशून्यत्वमित्यर्थः। अथ तद्बहिर्भूतत्वं न साक्षात्परम्परासाधारणं यत्तन्निरूपकत्वं तच्छून्यत्वम्। पक्षतावच्छेदकप्रकारताया उक्तयुक्त्या तदनिरूपकत्वात् कथंचिन्निरूपकत्वोपपादनेऽपि यत्र संयोगेन वह्नेस्साध्यता वह्निसंयोगत्वेन हेतुता तत्रत्यप्रतिज्ञायामव्याप्तिः। हेतुभूतवैशिष्ट्यविषयतायाः स्वनिरूपकत्वविरहात्, एवं साक्षात्परम्परासाधारणानुगतनिरूप्यनिरूपकभावोऽपि दुर्वचः। परम्परया निरूपितत्त्वस्य तन्निरूपितनिरूपितत्वाद्यात्मकत्वात्। एतेन तादृशवैशिष्ट्यविषयतानिरूपकविषयत्वानिरूपितत्वं तादृशविषयताबहिर्भूतत्वं, तच्च वैशिष्ट्यविषयतासाधारणं तन्निरूपकप्रकारताविशेष्यतानिरूपितत्वमादाय तन्निरूपकविशेष्यता

---

प्रतिज्ञायाः लक्षणम्। उक्तस्थलेषु प्रतिज्ञाजन्यबोधीया लिङ्गविषयता बहिर्भूतान्तविशेषणविशिष्टा न भवति। अतः बहिर्भूतलिङ्गविषयताशून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति नाव्याप्तिः। बहिर्भूता लिङ्गविषयता च हेतुवाक्यजन्यशाब्दबोधे प्रसिद्धा। तच्छून्यत्वमादाय प्रतिज्ञायां लक्षणसमन्वयः कार्यः।

अथ बहिर्भूतत्वं परिष्कर्तुमारभते – ***अथ तद्बहिर्भूतत्वमित्यादिना।*** पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित–साध्यतावच्छेदकावच्छिन्न–प्रकारतानिरूपितवैशिष्ट्यविषयतानिरूपकत्वशून्यत्वं वहिर्भूतत्वम्। निरूपकत्वं च साक्षात्परंपरासाधारणम्। 'गोत्वाभावः न सास्नादिमान्' इत्यत्र लिङ्गविषयतायाः साक्षात् वैशिष्ट्यविषयतानिरूपकत्वम्। 'पृथिवी इतरेभ्यो भिद्यते' इत्यत्र पृथिवीत्वरूपलिङ्गविषयतायाः परंपरया वैशिष्ट्यविषयतानिरूपकत्वम्। अतः स्थलद्वयसङ्ग्रहाय साक्षात्परंपरासाधारणं निरूपकत्वं निवेशितम्। एवं निवेशे कृतेऽपि 'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्' इत्यादौ पक्षतावच्छेदकहेत्वोः यत्र एकता तत्र प्रतिज्ञाजन्यबोधीया या पक्षतावच्छेदकपृथिवीत्वरूप–लिङ्गनिष्ठा प्रकारताख्यविषयता तस्याः निरवच्छिन्नपक्षनिष्ठविशेष्यतानिरूपित–वैशिष्ट्यविषयतानिरूपकत्वेऽपि पक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यता–निरूपित–वैशिष्ट्यविषयतानिरूपकत्वं नास्तीति तदनिरूपकविषयतैव सा, तच्छून्यत्वं शाब्दबोधे नास्तीति तत्र प्रतिज्ञायामव्याप्तिः। यदि तु धर्मितावच्छेदकनिष्ठायाः प्रकारतायाः तद्भिन्नप्रकारतायाश्च ऐक्यमङ्गीकृत्य वैशिष्ट्यविषयतानिरूपकत्वं धर्मितावच्छेदकविषयतायामस्तीति नाव्याप्तिरित्युच्यते तदा 'पर्वतः संयोगेन वह्निमान्, वह्निसंयोगात्' इत्यादि न्यायान्तर्गतप्रतिज्ञायामव्याप्तिः। तत्र प्रतिज्ञाजन्यबोधे पर्वतः विशेष्यः वह्निः प्रकारः संयोगः संसर्गः। संयोग

प्रकारतासाधारणं चेत्युक्तावपि न निस्तार इति चेन्न। तथाविधवैशिष्ट्यविषयताशालि-निश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकत्वमेव तद्बहिर्भूतत्वम्। निगमनजन्यबोधीयहेतुविषयता

---

एव वैशिष्ट्यपदेन ग्राह्यः। संयोगनिष्ठा विषयता पक्षतावच्छेदकपर्वतत्वावच्छिन्न-विशेष्यतानिरूपिता साध्यतावच्छेदकवह्नित्वावच्छिन्नप्रकारतानिरूपिता च भवति। तत्र संयोगस्यैव लिङ्गत्वात् संयोगनिष्ठा सांसर्गिकविषयता लिङ्गविषयतापदेन ग्रहीतुं शक्यते। तस्याञ्च वैशिष्ट्यरूपसंयोगनिष्ठविषयत्वानिरूपकत्वं नास्ति। स्वस्य स्वनिरूपकत्वासंभवात्। तथा च वैशिष्ट्यविषयतानिरूपकभिन्नलिङ्गविषयतैव शाब्दबोधे वर्तते। तच्छून्यशाब्दबोधजनकत्वं तत्रत्यप्रतिज्ञायां नास्तीत्यव्याप्तिः।

एवं साक्षात्परंपरासाधारणं निरूपितत्वं दुर्वचम्। परंपरया निरूपितत्वस्य तन्निरूपितनिरूपितत्वरूपत्वात्। साक्षान्निरूपितत्वस्य तद्भिन्नत्वात् इति भावः।

'पर्वतो वह्निमान् वह्निसंयोगात्' इत्यत्र अव्याप्तिमुद्धरतां मतमनूद्य दूषयति – ***एतेनेति।*** साक्षात्परंपरासाधारणनिरूप्यनिरूपकभावस्य दुर्वचत्वेनेत्यर्थः। ***तादृशवैशिष्ट्यविषयतेत्यादि।*** पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपिता साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपिता च या वैशिष्ट्यविषयता तन्निरूपकविषयत्वानिरूपितत्वं तादृशविषयताबहिर्भूतत्वम्। वैशिष्ट्यविषयता-निरूपकत्वञ्च साक्षात्परंपरासाधारणम्। एवं अनिरूपितत्वमित्यत्र निरूपितत्वमपि साक्षात्परंपरासाधारणम्। संयोगनिष्ठविषयतानिरूपकत्वम् संयोगनिष्ठविषयतायां परंपरया भवति। संयोगनिष्ठविषयतानिरूपकप्रकारताविशेष्यताभ्यां निरूपितत्वात्। एवं पक्षनिष्ठविशेष्यतायां साध्यनिष्ठप्रकारतायां च संयोगरूपवैशिष्ट्यविषयता-निरूपकत्वं साक्षात् भवति। एवञ्च वैशिष्ट्यविषयतानिरूपकविषयता संयोगनिष्ठविषयता पर्वतनिष्ठविशेष्यता वह्निनिष्ठप्रकारता च। तन्निरूपितत्वं संयोगरूपलिङ्गनिष्ठविषयतायां वर्तते। विशेष्यताप्रकारताभ्यां साक्षान्निरूपितत्वम्। संयोगनिष्ठविषयतया स्वनिरूपकविशेष्यताप्रकारतानिरूपितत्वरूपं परंपरया निरूपितत्वम्। एवञ्च संयोगरूपलिङ्गनिष्ठविषयतायां वैशिष्ट्यविषयतानिरूपक-विषयत्वानिरूपितत्वविरहात् अनिरूपितत्वविशिष्टलिङ्गविषयताशून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति तज्जनकत्वमादाय लक्षणसमन्वयसंभवात् नाव्याप्तिरिति केषाञ्चिन्मतम्। तत् साक्षात्परंपरासाधारणस्य निरूपकत्वस्य निरूपितत्वस्य च दूर्वचत्वात् न युक्तमिति भावः। एवञ्च विषयत्वानिरूपितेत्यत्र परंपरया

निरूपितत्वस्य प्रवेशे गोत्वाभावपक्षकप्रतिज्ञायाम् अव्याप्तिः। साक्षान्निरूपितत्वस्य च प्रवेशे 'गन्धसमानकालीनरूपवती पृथिवी'ति प्रतिज्ञायामव्याप्तिः। साक्षात्परंपरासाधारणं निरूपितत्वं तु दुर्वचमिति तात्पर्यम्। तस्मात् बहिर्भूतत्वस्य निर्वक्तुमशक्यतया तद्घटितं प्रतिज्ञालक्षणं न युक्तमिति पूर्वपक्षः।

अस्मिन् पूर्वपक्षे समाधानमाह – ***तथाविधवैशिष्ट्यविषयताशालीति।*** तथा च पक्षमुख्यविशेष्यकत्वे सति पक्षतावच्छेदकावच्छिन्नविशेष्यता–निरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितवैशिष्ट्यविषयताशालि–निश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकलिङ्गविषयताशून्यः यः शाब्दबोधः तज्जनकप्रकृतन्यायावयववाक्यत्वं प्रतिज्ञालक्षणम्। 'पर्वतो वह्निमान्' इति निश्चयनिष्ठा 'पर्वतो वह्निमान्नवे'ति संशयनिरूपिता प्रतिबन्धकता तादृशनिश्चयत्वसमनियतप्रतिबन्धकता। तदनवच्छेदकीभूतलिङ्गविषयता धूमविषयता। तच्छून्यत्वं 'पर्वतो वह्निमान्' इति शाब्दबोधे। तज्जनकत्वं 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्येऽस्तीति लक्षणसमन्वयः।

'पर्वतः संयोगेन वह्निमान्, वह्निसंयोगात्' इत्यत्र संयोगरूपलिङ्गनिष्ठविषयता सांसर्गिकविषयताविधया प्रतिबन्धकतावच्छेदिकैव भवति। अतः प्रतिबन्धकतानवच्छेदकत्वरूपविशेषणाभावप्रयुक्तं प्रतिबन्धकतानवच्छेदक–लिङ्गविषयताशून्यत्वं प्रतिज्ञाजन्यशाब्दबोधेऽस्तीति नाव्याप्तिः। निगमनजन्यः यः बोधः 'धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतः' इत्याकारकः तदीयायाः हेतुविषयतायाः 'धूमव्याप्यवह्निमान्न वा पर्वतः' इति संशयप्रतिबन्धकतावच्छेदककोटिप्रविष्टतया तादृशनिश्चयत्वव्याप्यतया च तादृशप्रतिबन्धकतायाः तदनवच्छेदकीभूत–विषयताशून्यबोधजनकत्वसत्त्वात् निगमनेऽतिव्याप्तिः। तद्वारणाय निश्चयत्वव्यापकत्वनिवेशः। तन्निवेशे च 'धूमज्ञानज्ञाप्यवह्निमान् न वा' इति संशयनिरूपिता या प्रतिबन्धकता तस्याः पक्षे साध्यवैशिष्ट्यावगाहि–निश्चयत्वव्यापकत्वं नास्ति। हेत्वविषयकपर्वतो वह्निमान् इति निश्चयेऽपि प्रतिबन्धकतायाः सद्भावात् इति नातिव्याप्तिः। तादृशनिश्चयत्वव्याप्यत्वानिवेशे 'धूमात् आलोकवान् पर्वतो वह्निमान् धूमात्' इत्यत्र हेत्ववयवे अतिव्याप्तिः। धूमरूपहेतुनिष्ठायाः 'हेतुत्वं धूमीयम्' इत्याकारकहेतुवाक्यजन्यबोधनिरूपित–

च यादृशप्रतिबन्धकतावच्छेदककोटौ निवेश्यते तादृशी न कापि प्रतिबन्धकता तथाविधनिश्चयत्वव्यापिका। हेत्वविषयकतादृशवैशिष्ट्यविषयताशालिज्ञानसाधारण्यात्। अतस्तथाविधहेतुविषयतायास्तद्बहिर्भूतत्वोपपत्तिरित्यनुषङ्गपक्षेऽपि निगमनातिव्याप्तिः। तादृशनिश्चयत्वव्यापकत्वमात्रस्य प्रतिबन्धकताविशेषणत्वे धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेत्ववयवेऽतिव्याप्तिः। तादृशहेतुनिष्ठायाः हेतुत्वं धूमीयं न वेति संशयप्रतिबन्धकतावच्छेदकतादृशबोधविषयताया निरूक्तविषयताबहिर्भूतत्वानुपपत्तेः।

---

विषयतायाः पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयत्वव्यापकप्रतिबन्धकतावच्छेदकत्वात् हेतुत्वं धूमीयमिति निश्चयः यथा 'हेतुत्वं धूमीयं न वेति' संशयप्रतिबन्धकः, तथा 'धूमनिष्ठहेतुतानिरूपकालोकवान् पर्वतः वह्निमान्' इति निश्चयोऽपि तादृशसंशयप्रतिबन्धकः। अतः पक्षे साध्यवैशिष्ट्यावगाहि-निश्चयत्वव्यापकप्रतिबन्धकता 'हेतुत्वं धूमीयं न वेति' संशयनिरूपिता प्रतिबन्धकता। तदवच्छेदकविषयता धूमनिष्ठविषयता। तदनवच्छेदकविषयताशून्यत्वं 'हेतुत्वं धूमीय'मिति बोधे वर्तते। तज्जनकत्वं धूमात् इति हेतुवाक्ये वर्तत इति अतिव्याप्तिः। अतः तादृशनिश्चयत्वव्याप्यत्वनिवेशः। तन्निवेशे तु पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयत्वशून्ये हेतुत्वं धूमीयमिति निश्चयेऽपि 'हेतुत्वं धूमीयं न वे'ति संशयनिरूपितप्रतिबन्धकतायाः सद्भावात् तादृशनिश्चयत्वव्याप्यत्वं प्रतिबन्धकतायां नास्तीति नातिव्याप्तिः।

***हेत्वविषयकेति***। तस्मादिति पञ्चम्यन्तार्थाविषयकेत्यर्थः। ***तादृशवैशिष्ट्यविषयताशालिज्ञानसाधारण्यादिति***। पक्षे साध्यवैशिष्ट्यावगाहि-निश्चयवृत्तित्वादित्यर्थः। ***अतः-*** तादृशनिश्चयत्वव्यापकत्वविरहात्। ***तथाविधहेतुविषयताया*** इति। निगमनजन्यबोधीयहेतुविषयताया इत्यर्थः। ***तद्बहिर्भूतत्वोपपत्तिरिति***। पक्षे साध्यवैशिष्ट्यविषयताशालिनिश्चयत्वसमनियतप्रति-बन्धकतानवच्छेदकत्वोपपत्तिरित्यर्थः। अयंपदाननुषङ्गपक्षे पक्षमुख्यविशेष्यकत्व-विरहेण अतिव्याप्त्यप्रसक्तेः, अनुषङ्गपक्षेऽपि इत्युक्तम्। ***न निगमनातिव्याप्तिरिति***। निगमनजन्यबोधस्य तादृशप्रतिबन्धकतानवच्छेदकलिङ्गविषयताशून्यत्वविरहात् इति भावः। ***तादृशनिश्चयत्वव्यापकत्वमात्रस्येति***। पक्षे साध्यवैशिष्ट्यविषयताशालि-निश्चयत्वव्यापकत्वमात्रस्येत्यर्थः। मात्रपदेन निश्चयत्वव्याप्यत्वस्य व्यवच्छेदः। ***तादृशबोधविषयताया*** इति। 'हेतुत्वं धूमीयम्' इति बोधनिरूपितविषयताया

अतस्तादृशनिश्चयत्वव्याप्यत्वमपि प्रतिबन्धकताविशेषणम्। न च पक्षतावच्छेदकावच्छिन्न-मुख्यविशेष्यताकत्वनिवेशस्यावश्यकतया नैतादृशातिव्याप्तिसम्भावनेति व्यर्थं व्याप्यत्व-निवेशनमिति वाच्यम्। तथाप्यनुषङ्गपक्षे धूमाद्वह्निमतस्सधर्मा पर्वतो वह्निमान् धूमादित्यादिन्यायस्थलीयनिगमने हेतुत्वं प्रमेयाद्वाच्यत्ववत् प्रमेयादित्यादिन्यायस्थलीय-हेत्ववयवे चातिव्याप्तेर्दुर्वारत्वात्तन्निवेशस्यावश्यकत्वादिति। न च धर्मितावच्छेदकनिष्ठं प्रकारत्वं न प्रतिबन्धकतावच्छेदकमपि तु तत्तन्निष्ठविशेष्यतावच्छेदकत्वमेव, तथा च गन्धवतीतरेभ्यो भिद्यते इत्यादिप्रतिज्ञाजन्यबोधीयहेतुप्रकारतायास्तद्बहिर्भूतत्वादव्याप्तिरिति

---

इत्यर्थः। ***निरुक्तविषयताबहिर्भूतत्वानुपपत्तेरिति।*** पक्षे साध्यवैशिष्ट्यविषयताशालि-निश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकत्वानुपपत्तेरित्यर्थः। तथा च तादृशप्रतिबन्धकतानवच्छेदकलिङ्गविषयताशून्यबोधजनकत्वात् हेतुवाक्येऽतिव्याप्तिरिति भावः। ***अत*** इति। हेतुवाक्येऽतिव्याप्तिवारणाय इत्यर्थः। ***तादृशनिश्चयत्वव्याप्यत्वमपीति।*** पक्षे साध्यवैशिष्ट्यविषयताशालि-निश्चयत्वव्याप्यत्वमित्यर्थः।

***न चेति।*** लिङ्गाविषयकबोधे पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताकत्व-रूपस्य प्रकृतानुमितिसमानविषयकत्वस्य व्यतिरेक्युदाहरणे अतिव्याप्तिवारणाय पूर्वं निवेशितत्वात् 'हेतुत्वं धूमीयम्' इति हेतुवाक्यजन्यबोधस्य पक्षमुख्यविशेष्यकत्वविरहात् तज्जनके हेतुरूपेऽवयवे अतिव्याप्त्यप्रसक्तेः तादृशनिश्चयत्वव्याप्यत्वविशेषणं व्यर्थमिति शङ्का। समाधत्ते-***तथापीति।*** पक्षमुख्यविशेष्यकत्वनिवेशेऽपि निगमने अयंपदानुषङ्गपक्षे 'धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान् धूमात्' इत्यादिन्यायान्तर्गते निगमनवाक्ये अतिव्याप्तिः। निगमनजन्यबोधस्य पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकवैशिष्ट्यावगाहि-निश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकलिङ्गविषयताशून्यत्वात्। तत्र पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयस्य 'हेतुत्वं धूमीयं न वे'ति संशयप्रतिबन्धकतया धूमनिष्ठविषयतायाः तादृशनिश्चयत्वव्यापकप्रतिबन्धकतावच्छेदकत्वनियमात्। एवं हेतुत्वं प्रमेयाद्वाच्यत्ववत्, प्रमेयात् इत्यादिन्यायान्तर्गतहेतुवाक्ये अतिव्याप्तिः। प्रमेयरूपलिङ्गनिष्ठविषयतायाः पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयेऽपि सत्त्वेन तस्याः तादृशनिश्चयत्वव्यापकप्रतिबन्धकतावच्छेदकत्वनियमात् तादृशप्रतिबन्धकतानवच्छेदकलिङ्गविषयताशून्यत्वस्य हेतुजन्यबोधे सद्भावात्।

वाच्यम्। विशेष्यतावच्छेदकताया एव प्रकारतात्वोपगमेन तादृशबोधे तदन्यप्रकारतानभ्युपगमात्। एवं सति प्रसक्तस्य भूतलं घटवदित्यादिज्ञानस्य भूतलत्वांशे तद्धर्मितावच्छेदकत्वस्य प्रकारान्तरेण वारणसम्भवात्। अस्तु वा विशेष्यतावच्छेदकताख्यविषयता प्रकारतातोऽन्यैव,

---

**न च धर्मितावच्छेदकनिष्ठमिति।** केवलं "गन्धवती" इति ज्ञानस्य कुत्रापि अप्रतिबन्धकत्वात् धर्मितावच्छेदकनिष्ठा प्रकारता न प्रतिबन्धकतावच्छेदिका। किन्तु धर्मितावच्छेदकनिष्ठा विशेष्यतावच्छेदकतैव प्रतिबन्धकतावच्छेदिका। तथा च 'गन्धवती इतरेभ्यो भिद्यते, गन्धवत्त्वात्' इत्यादौ प्रतिज्ञाजन्यबोधीया या गन्धरूपहेतुनिष्ठा प्रकारता तस्याः प्रतिबन्धकतानवच्छेदकत्वात् प्रतिबन्धकतानवच्छेदकप्रकारतारूपा हेतुविषयतैव प्रतिज्ञाजन्यबोधे वर्तते, न तु तच्छून्यत्वमिति तत्र प्रतिज्ञायाम् अव्याप्तिरिति भावः।

**तत्तन्निष्ठविशेष्यतावच्छेदकत्वमिति।** प्रतिबन्धकतावच्छेदकमिति शेषः। **तद्बहिर्भूतत्वादिति।** प्रतिबन्धकतानवच्छेदकत्वात् इत्यर्थः। **विशेष्यतावच्छेदकताया एवेति।** धर्मितावच्छेदकनिष्ठा या विशेष्यतावच्छेदकता सैव तन्निष्ठा प्रकारता न तु तदन्या। तथा च विशेष्यतावच्छेदकतायाः प्रतिबन्धकतावच्छेदकत्वे तदभिन्नायाः लिङ्गनिष्ठप्रकारताया अपि प्रतिबन्धकतावच्छेदकत्वमावश्यकमिति प्रतिबन्धकतानवच्छेदकलिङ्गविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधे सद्भावात् नोक्तस्थलीयप्रतिज्ञायाम् अव्याप्तिरिति भावः। **तादृशबोध** इति। प्रतिज्ञाजन्यबोध इत्यर्थः। **तदन्यप्रकारतानभ्युपगमादिति।** विशेष्यतावच्छेदकताभिन्नायाः प्रकारताया अनङ्गीकारात् इत्यर्थः।

**एवं सतीति।** प्रकारतायाः विशेष्यतावच्छेदकतारूपत्वे सतीत्यर्थः। यदि प्रकारता विशेष्यतावच्छेदकता च अभिन्ना तर्हि 'भूतलं घटवदि'ति ज्ञाने घटधर्मितावच्छेदकत्वं भूतलत्वे यथा अस्ति तथा भूतलत्वधर्मितावच्छेदकत्वमपि भूतलत्वे स्यात्। तन्निष्ठप्रकारतानिरूपितविशेष्यतानिरूपितावच्छेदकताया एव तद्धर्मितावच्छेदकत्वरूपत्वात्। घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यता–निरूपितावच्छेदकत्वात् भूतलत्वस्य घटधर्मितावच्छेदकत्वमिव भूतलत्वनिष्ठावच्छेदकतारूपप्रकारतानिरूपितभूतलनिष्ठविशेष्यतानिरूपिता–वच्छेदकतायाः भूतलत्वे सत्त्वात् तस्य भूतलत्वधर्मितावच्छेदकतापत्तिः इति

तथापि न क्षतिः। तादृशविषयताबहिर्भूतविषयताशून्यत्वं विशेषणमुपेक्ष्य तादृशबहिर्भूतविषयतानवच्छिन्नजन्यतानिरूपितजनकताया वाक्यविशेषणत्वोपगमेन विशेष्यतावच्छेदकताभिन्नगन्धादिविषयतायाः प्रतिज्ञाजन्यबोधे सत्त्वेऽपि तस्याः

---

शङ्का। समाधानं तु–तद्धर्मितावच्छेदकत्वं तन्निष्ठप्रकारतानिरूपितविशेष्यतानिरूपित–तदन्यवृत्त्यवच्छेदकत्वम्। भूतलत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतायाः भूतलत्वान्यवृत्तित्वाभावात् न भूतलत्वस्य भूतलत्वधर्मितावच्छेदकत्वम्। घटनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतायाः घटान्यभूतलत्ववृत्तित्वात् भूतलत्वस्य घटधर्मितावच्छेदकत्वम् इति भावः।

विशेष्यतावच्छेदकतायाः प्रकारतातः भिन्नत्वं नास्तीति स्वीकृत्य 'गन्धवती इतरेभ्यो भिद्यते' इति प्रतिज्ञायामव्याप्तिः वारिता। इदानीं विशेष्यतावच्छेदकतायाः प्रकारतातः भिन्नत्वेऽपि अव्याप्तिं वारयितुं प्रकारान्तरं अवलम्बते – ***अस्तु वेत्यादिना। तथापि न क्षतिरिति।*** अन्यत्वेऽपि नाव्याप्तिरित्यर्थः। ***तादृशविषयतेत्यादि।*** पक्षे साध्यवैशिष्ट्यविषयताबहिर्भूतविषयताशून्यत्वरूपं विशेषणं परित्यज्य तादृशबहिर्भूतविषयतानवच्छिन्नजन्यता निरूपितजनकतायाः वाक्यविशेषणत्वम् अङ्गीक्रियते। तथा च पक्षतावच्छेदकावच्छिन्न–विशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितवैशिष्ट्यविषयताशालि–निश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकविषयत्वानवच्छिन्नजन्यतानिरूपित–जनकत्वे सति प्रकृतन्यायावयवत्वे सति वाक्यत्वं प्रतिज्ञायाः लक्षणम्। 'गन्धवती इतरेभ्यो भिद्यते' इति प्रतिज्ञाजन्यबोधे गन्धनिष्ठायाः विशेष्यतावच्छेदकताभिन्नायाः प्रकारतायाः निरूपकतासंबन्धेन सत्त्वेऽपि प्रतिज्ञावाक्यस्य गन्धनिष्ठावच्छेदकता–निरूपितविशेष्यतानिरूपितइतरभेदनिष्ठप्रकारताशालिबोधत्वावच्छिन्नं प्रति जनकत्वात् प्रतिज्ञावाक्यजन्यतावच्छेदककोटौ गन्धनिष्ठायाः अवच्छेदकताया एव निवेशेन गन्धनिष्ठायाः प्रकारताख्यविषयतायाः जन्यतानवच्छेदकतया तादृशविषयतायाः उक्तनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकत्वेऽपि तदनवच्छिन्नजन्यता–निरूपितजनकत्वं प्रतिज्ञावाक्येऽस्तीति नाव्याप्तिरिति भावः। ***तादृशबहिर्भूतेति।*** पक्षे साध्यवैशिष्ट्यविषयताशालिनिश्चयत्वसमनियतप्रतिबन्धकता–नवच्छेदकेत्यर्थः। ***तस्याः*** गन्धनिष्ठप्रकारतायाः। ***तत्र*** – प्रतिज्ञाजन्यतावच्छेदककोटौ।

प्रतिज्ञाजन्यतावच्छेदककोटिनिवेशे प्रयोजनाभावेन तन्निष्ठधर्मितावच्छेदकताया एव तत्र निवेशनीयतया अव्याप्त्यनवकाशात्। तादृशबहिर्भूतविषयतासामान्यशून्यत्वनिवेशे अनुमितिसमानविषयकत्वनिवेशनस्य मूलोपात्तस्य वैयर्थ्यप्रसङ्ग इति ईदृशलिङ्गविषयता-शून्यत्वनिवेशनम्। अखण्डाभावस्य घटकतया न लिङ्गांशवैयर्थ्यम्।

---

***अव्याप्त्यनवकाशादिति।*** तादृशप्रतिबन्धकतानवच्छेदकगन्धप्रकारत्वानवच्छिन्न-जन्यतानिरूपितजनकतासत्त्वादिति भावः। ननु निरुक्तविषयताबहिर्भूत-विषयताशून्यत्वनिवेशेनैव सामञ्जस्ये लिङ्गपदं व्यर्थमित्यत आह-***तादृशबहिर्भूतविषयतासामान्यशून्यत्वनिवेश*** इति। तथा च लिङ्गपदानुपादाने पक्षमुख्यविशेष्यकत्वात्मकस्य अनुमितिसमानविषयकत्वस्य निवेशनं व्यर्थं स्यात्। 'ह्रदो धूमाभाववान्, वह्न्यभावात्' इत्यत्र 'यः धूमवान् स वह्निमान्' इत्युदाहरणे अतिव्याप्तिवारणाय हि तदुपात्तम्। उक्तपरिष्कारे तु 'ह्रदो धूमाभाववान्' इति निश्चयनिष्ठा या 'ह्रदो धूमाभाववान् न वेति' संशयनिरूपिता प्रतिबन्धकता तदनवच्छेदकत्वं उदाहरणजन्यबोधीय- धूमनिष्ठविषयतायामस्तीति तादृशबोधे तच्छून्यत्वविरहादेव उदाहरणेऽतिव्याप्तिवारणसंभवात्। लिङ्गपदोपादाने तु तत्र धूमस्य वह्नेर्वा लिङ्गत्वाभावात् तन्निष्ठविषयतायाः लिङ्गविषयतापदेन ग्रहीतुमशक्यतया तादृशबहिर्भूतलिङ्गविषयताशून्यत्वं आदाय प्रसक्ताया अतिव्याप्तेर्वारकतया अनुमितिसमानविषयकत्वनिवेशनं सार्थकमिति भावः।

***ईदृशलिङ्गविषयतेति।*** निरुक्तप्रतिबन्धकतानवच्छेदकलिङ्गविषयतेत्यर्थः।

ननु प्रक्षालनाद्धि' इति न्यायेन लिङ्गपदमपि मास्तु। अनुमितिसमानविषयकत्वनिवेशनमपि मास्तु इत्यत आह-***अखण्डाभावस्येति।*** उक्तप्रतिबन्धकतानवच्छेदकविषयत्वाभावापेक्षया उक्तप्रतिबन्धकता-नवच्छेदकलिङ्गविषयत्वाभावस्य अतिरिक्ततया लिङ्गपदवैयर्थ्यं नास्तीति भावः। एवञ्च अखण्डाभावघटकतया लिङ्गपदसार्थक्ये उदाहरणातिव्याप्तिवारकतया समानविषयकत्वनिवेशस्यापि सार्थक्यमिति भावः।

कल्पान्तरमवतारयति - ***उक्तरीत्येति।*** अस्य आयासेऽन्वयः। ***विद्वेषादिति।*** अस्मिन् कल्पान्तरे बहिर्भूतत्वानिवेशादिति भावः।

**वस्तुतो लिङ्गं लिङ्गत्वम्। तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्व्याप्तिविषयकत्वं तच्छून्यत्वमर्थः**

---

उक्तरीत्या बहिर्भूतत्वनिर्वचनायासविद्वेषात्कल्पान्तरमाश्रयते – **वस्तुत** इति। ***लिङ्गत्वमिति*** – व्याप्तिरित्यर्थः। नन्वत्राननुगतयोरन्वयव्यतिरेकव्याप्त्योस्तद्घटकव्यापकतयोर्वा एकतरमात्रविषयताया उपादाने अन्यतरबोधकोपनयाद्यतिव्याप्तिरित्याशङ्कया तादृशव्याप्तिघटकव्यापकताद्वयविषयत्वयोरनुगतरूपेणाभावं निवेशयति – ***तथा चेति।*** **प्रकृतहेतुतावच्छेदकावच्छिन्नस्येति** गमकत्वान्वितम्। व्याप्तिविषयकत्वमित्यत्र व्याप्तिपदं व्यापकत्वविषयतानिष्ठसाध्यतावच्छेदकादिविषयताव्यावृत्तविलक्षणौपयिकतानिवेशसूचनाय।

---

***व्याप्तिरित्यर्थ*** इति। लिङ्गं व्याप्यम्। लिङ्गनिष्ठो धर्मः लिङ्गत्वम्। तच्च व्याप्तिरेवेति भावः। तथा च लिङ्गाविषयकेत्यस्य व्याप्त्यविषयकेत्यर्थः। व्याप्त्यविषयकबोधजनकत्वे सति न्यायावयवत्त्वं प्रतिज्ञालक्षणम्। हेत्वन्यत्वमपि विशेषणीयम्। अतः हेतुवाक्ये नातिव्याप्तिः। उदाहरणादीनां व्याप्तिविषयकबोधजनकत्वात् तेष्वपि नातिव्याप्तिः। प्रतिज्ञायामेव व्याप्त्यविषयकबोधजनकत्वसत्त्वात् नाव्याप्तिः।

*तथा चेति* ग्रन्थमवतारयति – ***नन्वत्रेति।*** व्याप्त्यविषयकत्वं हि व्याप्तिनिष्ठविषयत्वानिरूपकत्वम्। तत्र व्याप्तिपदेन अन्वयव्याप्तिग्रहणे तदविषयकव्यतिरेकव्याप्तिबोधकोपनयादावतिव्याप्तिः। व्यतिरेकव्याप्तेः उपादाने तदविषयकान्वयव्याप्तिबोधजनकोपनयादावतिव्याप्तिः। उभयोः व्याप्त्योस्तु अनुगतरूपाभावात् एकरूपेण निवेशः न सम्भवति इत्याशङ्क्य अन्वयव्याप्तिव्यतिरेकव्याप्त्योः घटकीभूते ये द्वे व्यापकते तदुभयविषयकत्वयोः अनुगतरूपेण अभावं निवेश्य परिष्करोति–***तथा चेत्यादिना*** इत्यर्थः। उदाहरणेन साध्ये हेतुव्यापकत्वं हेत्वभावे साध्याभावव्यापकत्वं वा बोध्यते, न तु हेतौ व्याप्तिः इति पक्षे, व्याप्त्यविषयकबोधजनकत्वस्य उदाहरणे सत्त्वात् तत्र अतिव्याप्तिरित्यालोच्य तद्घटकव्यापकतयोः इत्युक्तम्। अन्वयव्याप्तिघटकीभूता या साध्यनिष्ठा हेतुव्यापकता व्यतिरेकव्याप्तिघटकीभूता या हेत्वभावनिष्ठा

अथ किमिदं तादृशगमकतौपयिकत्वम्? न तावत्प्रकृतहेतुतावच्छेदकावच्छिन्न-हेतुकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमितित्वावच्छिन्नजनकतावच्छेदकत्वम्, पक्षधर्मत्वाविषयकोदाहरणजन्यबोधीयव्यापकत्वादिविषयताया अनुमितिजनकतावच्छेदकोटच-

---

साध्याभावव्यापकता तयोरित्यर्थः। तथा च तयोः व्यापकतयोः अनुगतरूपाभावात् एकतरव्यापकत्वविषयकत्वाभावनिवेशे व्यापकत्वान्तरबोधकोपनयादौ अतिव्याप्तिरिति भावः।

***व्यापकताद्वयविषयत्वयोरिति।*** साध्ये हेतुव्यापकत्वविषयतायाः हेत्वभावे साध्याभावव्यापकत्वविषयतायाश्च अनुगतं यद्रूपं तदवच्छिन्नप्रतियोगिताकाभावं निवेश्य लक्षणं परिष्करोति इत्यर्थः। ***गमकत्वान्वितमिति।*** प्रकृतहेतुता-वच्छेदकावच्छिन्ननिष्ठं यत् प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकत्वं तदौपयिकं यत् व्याप्तिविषयकत्वं तच्छून्यत्वम् बोधस्य विशेषणम्। तत्र व्याप्तिपदं किमर्थमिति शङ्कायामाह– ***व्याप्तिविषयकत्वमित्यत्रेति।*** तथा च व्याप्तिपदानुपादाने पूर्वोक्तगमकतौपयिकविषयताशून्यत्वं यदि बोधविशेषणं स्यात् तर्हि प्रतिज्ञाजन्यबोधे साध्यतावच्छेदकविषयतायाः गमकतौपयिकायाः निरूपकतासंबन्धेन सत्त्वात् तच्छून्यत्वं नास्तीति प्रतिज्ञायामसंभवः। तद्वारणार्थं व्याप्तिपदोपादाने तु व्यापकत्वविषयतानिष्ठायाः साध्यतावच्छेदकविषयताव्यावृत्तायाः औपयिकताया एव लक्षणे निवेशनीयतया तादृशौपयिकत्वविशिष्टव्यापकत्वविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधे सद्भावात् नासंभवः। तथा च व्यापकत्वविषयतानिष्ठायाः विलक्षणौपयिकतायाः सूचनाय व्याप्तिपदं इति भावः।

गमकत्वं अनुमितिजनकत्वम्। औपयिकत्वं अवच्छेदकत्वम् इत्याशयेनाह–***न तावदिति।*** तथा च गमकतौपयिकत्वं यदि अनुमितिजनकतावच्छेदकत्वरूपं तदा प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुक-प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकअनुमितिजनकतावच्छेदकविषयताशून्यशाब्द-बोधजनकत्वं प्रतिज्ञालक्षणम्। एवं सति पक्षधर्मत्वविषयक-हेतुव्यापकसाध्यसमानाधिकरणहेतुमान् पक्षः इत्याकारकज्ञानीयायाः व्यापकत्वविषयताया एव प्रकृतानुमितिजनकतावच्छेदकत्वात् पक्षधर्मत्वाविषयक-

प्रविष्टतया तत्रातिव्याप्तेः। न च हेतुव्यापकत्वादिविषयतात्वेनैव तद्विषयतानां जनकतावच्छेदककोटौ निवेशादनुमित्यजनकस्यापि तादृशज्ञानस्य विषयतानां तादृशरूपाक्रान्तानां तथात्वमक्षतमेवेति वाच्यम्। तादृशविषयतात्वेन पक्षविशेषणतापन्नहेतुविशेषणतापन्न सामानाधिकरण्यविशेषणतापन्नसाध्यादिविषयतानिरूपितव्यापकत्वविषयताया एव

---

उदाहरणजन्यहेतुव्यापकसाध्यवान् इति बोधीयव्यापकत्वविषयतायाः अनुमितिजनकतावच्छेदकत्वविरहात् अनुमितिजनकतावच्छेदकविषयताशून्यत्वं उदाहरणजन्यबोधेऽस्तीति तज्जनके उदाहरणेऽतिव्याप्तिः इति भावः। अतिव्याप्तिं परिहर्तुं शङ्कते– **न च हेतुव्यापकत्वादीति।** हेतुव्यापकत्वादिविषयतानां हेतुव्यापकत्वादिविषयतात्वेनैव अनुमितिजनकतावच्छेदकत्वम्, न तु पक्षधर्मत्वविषयकज्ञानीयविषयतात्वादिना। तथा च अनुमित्यजनक–उदाहरणजन्यबोधीयव्यापकत्वविषयताया अपि अनुमितिजनकतावच्छेदकता–वच्छेदकविषयतात्वाक्रान्ततया अनुमितिजनकतावच्छेदकत्वं अक्षतमिति अनुमितिजनकतावच्छेदकविषयताशून्यत्वस्य उदाहरणजन्यबोधेऽभावात् न उदाहरणेऽतिव्याप्तिरिति भावः।

अतिव्याप्तिं समर्थयति – ***तादृशविषयतात्वेनेति।*** हेतुव्यापक–साध्यसमानाधिकरणहेतुमान् पक्षः इति ज्ञानमेव अनुमितिजनकम्। तस्मिन् ज्ञाने पक्षे हेतुर्विशेषणम्, हेतौ सामानाधिकरण्यं विशेषणम्, सामानाधिकरण्ये साध्यं विशेषणम्, साध्ये हेतुव्यापकत्वं विशेषणम्। अतः हेतुव्यापकत्वविषयतात्वेन पक्षविशेषणतापन्न–हेतुविशेषणतापन्नसामानाधिकरण्यविशेषणतापन्न–साध्यविषयतानिरूपित–व्यापकत्वविषयताया एव अनुमितिजनकतावच्छेदकत्वम्। उदाहरणजन्यबोधीया व्यापकत्वविषयता तु अतादृशी। अतः तस्याः व्यापकविषयतात्वाक्रान्तत्वेऽपि न अनुमितिजनकतावच्छेदकत्वम्। तथा च अनुमितिजनकतावच्छेदकविषयताशून्य एव उदाहरणजन्यबोधः। तज्जनकत्वात् उदाहरणेऽतिव्याप्तिः इति भावः। ***अतादृश्या*** इति। पक्षविशेषणतापन्नेत्यादि विशेषणानाक्रान्तायाः व्यापकत्वविषयताया इत्यर्थः। ***तदवच्छेदकत्वाभावात्*** इति। अनुमितिजनकतावच्छेदकत्वाभावात् इत्यर्थः।

कारणतावच्छेदकघटकत्वादतादृश्यास्तदवच्छेदकत्वाभावात्। यद्रूपावच्छिन्नविषयिता जनकतावच्छेदिका तद्रूपावच्छिन्नविषयताशून्यत्वनिवेशे च साध्यतावच्छेदकाद्यवच्छिन्नविषयताया अप्यनुमितिजनकतावच्छेदककोटिप्रविष्टतया तादृशविषयताशून्यत्वस्य तादृशप्रतिज्ञाजन्य-बोधेऽप्यसत्त्वादसम्भवः। यद्रूपावच्छिन्ननिरूपितव्यापकत्वविषयिता जनकतावच्छेदिका तद्रूपावच्छिन्ननिरूपितव्यापकत्वानवगाहित्वनिवेशे च किञ्चिद्रूपावच्छिन्नव्यापकत्वं साध्यस्य पक्षस्य वा घटकं यत्र तत्स्थलीयप्रतिज्ञाया असङ्ग्रहः यत्त्वतत्त्वनिवेशादनुगमानवकाशश्चेति चेन्न।

---

ननु यद्रूपावच्छिन्नविषयता अनुमितिजनकतावच्छेदिका तद्रूपावच्छिन्न-विषयताशून्यत्वं बोधे निवेशनीयम्। यद्रूपपदेन हेतुव्यापकत्वविषयतात्वस्य उपादाने तदवच्छिन्नायाः पक्षविशेषणताद्यापन्नव्यापकत्वविषयताया अनुमितिजनकता-वच्छेदकत्वात् तद्रूपावच्छिन्नविषयताशून्यत्वं उदाहरणजन्यबोधे नास्ति। हेतुव्यापकत्वविषयतात्वावच्छिन्नव्यापकत्वविषयताया एव तत्र सद्भावात्। अतः नोदाहरणेऽतिव्याप्तिः इत्याशङ्क्य एवं निवेशे यद्रूपपदोपादेय-साध्यतावच्छेदकाद्यवच्छिन्नविषयताया अपि अनुमितिजनकतावच्छेदक-कोटिप्रविष्टतया तद्रूपसाध्यतावच्छेदकाद्यवच्छिन्नविषयताशून्यत्वस्य प्रतिज्ञा-जन्यबोधेऽभावात् प्रतिज्ञायामसंभवः। ननु यद्रूपावच्छिन्ननिरूपितव्यापकत्वविषयिता अनुमितिजनकतावच्छेदिका तद्रूपावच्छिन्ननिरूपितव्यापकत्वविषयिताशून्यबोध-जनकत्वं प्रतिज्ञालक्षणम्। यद्रूपपदेन हेतुतावच्छेदकं अन्वयव्याप्तिस्थले ग्राह्यम्। साध्याभावत्वं व्यतिरेकव्याप्तिस्थले ग्राह्यम्। तथा च हेतुतावच्छेदकावच्छिन्ननिरूपितव्यापकत्वविषयिता अनुमितिजनकतावच्छेदिका। तद्रूपावच्छिन्ननिरूपितव्यापकत्वविषयताशून्यत्वञ्च प्रतिज्ञाजन्यबोधेऽस्तीति न प्रतिज्ञायामसंभव इत्याशङ्क्य स्थलान्तरे दोषमाह–'पर्वतः 'आलोकव्यापक-द्रव्यकालीनवह्निमान्,' 'आलोकव्यापकद्रव्यवान् पर्वतः वह्निमान्' इत्यादिप्रतिज्ञायामव्याप्तिः। तत्र साध्ये पक्षे च आलोकत्वावच्छिन्न-निरूपितव्यापकतायाः प्रवेशात् साध्यतावच्छेदकावच्छिन्नविषयतायाः पक्षतावच्छेदकावच्छिन्नविषयतायाश्च अनुमितिजनकतावच्छेदकत्वनियमात् साध्यतावच्छेदकपक्षतावच्छेदककोटिप्रविष्ट–आलोकत्वावच्छिन्ननिरूपित-व्यापकत्वविषयताया अपि अनुमितिजनकतावच्छेदकतया आलोकत्वावच्छिन्न–

पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयतानिरूपिता या विषयता तन्निरूपितविषयतानिरूपितविषयतांशे विशेषणविधया प्रकृतानुमितिजनकतावच्छेदकता-वच्छेदकतायाःपर्याप्त्यधिकरणधर्मवत्त्वेन हेतुव्यापकताविशिष्टसाध्यविषयत्वसाध्याभाव-व्यापकत्व विशिष्टहेत्वभावविषयत्वे अनुगमय्य तदभावस्य निवेशनेनानुपपत्त्यभावात्। तथाहि प्रकृतानुमितिजनकतावच्छेदिकायाः अन्वयिपरामर्शीयहेतुव्यापकत्वावच्छिन्नसाध्य-विषयतायाः पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुविषयतानिरूपिताधेयत्वविषयिता-निरूपिताधिकरण- विषयतानिरूपितत्ववत् व्यतिरेकिपरामर्शीयसाध्याभावव्यापकत्वावच्छिन्न-हेत्वाभावविषयताया अपि तादृशविशेष्यतानिरूपितसंसर्गीयविषयतानिरूपितहेतुविषयतानिरूपित-प्रतियोगित्वविषयतानिरूपितत्वेन साध्याभावव्यापकताविशिष्टहेत्वभावविषयतात्वस्यापि हेतुव्यापकताविशिष्टसाध्यविषयतात्ववन्निरुक्तविषयत्वे विशेषणविधया अनुमितिजनकता-वच्छेदेकतावच्छेदकतायाः पर्याप्त्यधिकरणत्वात्।

---

निरूपितव्यापकत्वविषयताशून्यत्वं तत्रत्यप्रतिज्ञाजन्यबोधे नास्तीति अव्याप्तिरिति भावः। तथा च गमकतौपयिकत्वं निर्वक्तुमशक्यमिति तद्घटितः परिष्कारः न युक्त इति आक्षेपः।

तं पञ्चमविषयताघटितं परिष्कारं कुर्वन् समाधत्ते- ***पक्षतावच्छेदकावच्छिन्नेत्यादिना।*** तथा च पक्षतावच्छेदकावच्छिन्नमुख्य-विशेष्यतानिरूपितविषयतानिरूपित- विषयतानिरूपित - विषयतानिरूपित - विषयताविशेषणतापन्नः यः प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकता-पर्याप्त्यधिकरणधर्मः तद्वत्विषयताशून्यशाब्दबोधजनकत्वे सति न्यायावयवत्त्वं प्रतिज्ञायाः लक्षणम्। अनुमितिं प्रति अन्वयव्याप्तिविषयकपरामर्शस्य यथा हेतुत्वम्, तथा व्यतिरेकव्याप्तिविषयकपरामर्शस्यापि हेतुत्वम्। अतः अन्वयव्याप्तिघटकहेतुव्यापकत्वविशिष्टसाध्यविषयतायाः साध्याभावव्यापकत्व-विशिष्टहेत्वभावविषयतायाश्च अनुमितिजनकतावच्छेदकत्वमस्ति। अनयोः विषयतयोः अनुगतधर्मः पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित-विषयतानिरूपित- विषयतानिरूपित- विषयतानिरूपित - विषयताविशेषणतापन्नः प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकधर्मः। स च धर्मः अन्वयव्याप्तिस्थले पक्षनिष्ठविशेष्यतानिरूपित-हेतुनिष्ठविषयतानिरूपित - आधेयत्वनिष्ठविषयता-निरूपितअधिकरणनिष्ठविषयतानिरूपितत्वम्। व्यतिरेकिस्थले पक्षनिष्ठविशेष्यता-

निरूपित–संसर्गनिष्ठविषयतानिरूपित–हेतुनिष्ठविषयतानिरूपित–प्रतियोगित्व–निष्ठविषयतानिरूपित–साध्याभावव्यापकताविशिष्टहेत्वभावविषयतात्वम्। तथा च पञ्चमविषयतानिष्ठप्रकृतानुमितिजनकतावच्छेदकतावच्छेदकता–पर्याप्त्यधिकरणधर्मवत्त्वेन रूपेण हेतुव्यापकताविशिष्टसाध्यविषयतायाः साध्याभावव्यापकताविशिष्टहेत्वभावविषयतायाश्च अनुगमः। अन्वयव्याप्तिस्थले पक्षस्य हेतोश्च यः सम्बन्धः तद्विषयतामनन्तर्भाव्य हेतुव्यापकत्व–विशिष्टसाध्यविषयतायाः पञ्चमविषयतात्वम्। व्यतिरेकव्याप्तिस्थले पक्षहेत्वोः यः सम्बन्धः तद्विषयतामन्तर्भाव्य साध्याभावव्यापकत्वविशिष्टहेत्वभावविषयतायाः पञ्चमविषयतात्वम्। तथा च विनिगमनाविरहेण पक्षविशेष्यता–निरूपितहेतुविषयतेत्यादिक्रमेण हेतुव्यापकत्वविशिष्टसाध्यविषयताशालिज्ञानत्वेन पक्षविशेष्यतानिरूपित – संसर्गविषयतानिरूपित– हेतुविषयतेत्यादिक्रमेण साध्याभावव्यापकत्वविशिष्टहेत्वभावविषयताशालिज्ञानत्वेन च अनुमितिपरामर्शयोः कार्यकारणभावात् अनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मः पञ्चमविषयताविशेषणतापन्नः उभयोरपि हेतुव्यापकताविशिष्ट–साध्यविषयत्व–साध्याभावव्यापकत्वविशिष्टहेत्वभावविषयत्वयोरस्तीति तादृशधर्मवद्विषयताद्वयशून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति तज्जनकत्वमादाय प्रतिज्ञायां लक्षणसमन्वयः इति भावः।

***विषयतांश*** इति। विशेषणविधयेत्यस्य पर्याप्तावन्वयः। विषयतांशविशेषणतापन्नः सन् यः अनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणधर्मः तद्वत्त्वेनेत्यन्वयः। ***तदभावस्य–***हेतुव्यापकत्वविशिष्टसाध्यविषयकत्वाभावस्य, साध्याभावव्यापकत्व–विशिष्टहेत्वभावविषयकत्वाभावस्य च इत्यर्थः। ***अनुपपत्त्यभावादिति*** – उक्ताव्याप्तेरभावादित्यर्थः।

ननु पक्षहेत्वोः यः संसर्गः तद्विषयतायाः पञ्चमविषयतामध्येऽनिवेशे व्यतिरेकपरामर्शीयहेत्वभावविषयतायाः पञ्चमीत्वानुपपत्तिः तन्निवेशे अन्वयपरामर्शीयसाध्यविषयतायाः षष्ठत्वापत्त्या असङ्ग्रहः इत्यत आह–***तथाहीति। निरूपितत्ववदिति।*** व्यतिरेकपरामर्शीयपञ्चमविषयतायाः चतुर्थविषयता–निरूपितत्वेऽन्वयपरामर्शीयचतुर्थविषयतानिरूपितत्वं दृष्टान्तः। तथा च

यद्यपि यथा परम्परया पक्षविशेष्यतया अनिरूपितोदोहारणजन्यबोधीयहेतुव्यापकता-विशिष्टसाध्यादिविषयता नानुमितिजनकतावच्छेदिका तथा तन्निरूपितव्यापकत्वादिविषयतापि न तथेति तदीयसाध्यादिविषयताविशेषणतया व्यापकत्वविषयत्वनिरूपितत्वस्यानुमिति-जनकतावच्छेदकतावच्छेदकप्रवेशो न सम्भवति। जनकतावच्छेदकविषयतावृत्तेरेव धर्मस्य तादृशविषयताविशेषणतया जनकतावच्छेदकतावच्छेदकत्वसम्भवादिति निरुक्तपक्षविषयता पञ्चमविषयतांशे विशेषणतया अवच्छेदकत्वपर्याप्त्यधिकरणं यत्साधनादिव्यापकत्वविषयतानिरूपितत्वसहितं साध्यादिविषयतात्वं तन्नोदाहरणजन्यबोधीय-

---

अन्वयपरामर्शीयहेतुव्यापकसाध्यविषयतानिष्ठस्य पक्षविशेष्यतेत्यादि अधिकरणविषयतानिरूपितत्वस्य यथा वा अनुमितिजनकतावच्छेदकता-वच्छेदकतापर्याप्त्यधिकरणत्वं तथा व्यतिरेकपरामर्शीयसाध्याभावव्यापक-हेत्वभावविषयतानिष्ठस्य पक्षविशेष्यतानिरूपितसंसर्गनिरूपितविषयतेत्यादिहेत्वभाव-विषयतात्वस्यापि अनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणत्वम् इति वाक्यार्थः।

उक्तरीत्या अनुगमं कृत्वा परिष्कारेऽपि · · उदाहरणेऽतिव्याप्ति-माशङ्कते–**यद्यपीत्यादिना।** 'धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः' इति ज्ञानमेव 'पर्वतो वह्निमान्' इत्यनुमितिजनकम्। तत्र परम्परया पक्षविशेष्यतानिरूपिता या हेतुव्यापकत्वविशिष्टसाध्यविषयता सैव अनुमितिजनकतावच्छेदिका। उदाहरणवाक्यात् 'महानसं धूमवत् धूमव्यापकवह्निमच्च', 'महानसान्यत् धूमवत्, धूमव्यापकवह्निमच्च' इत्याकारको बोधः। तदीया धूमव्यापकत्वविशिष्टवह्निविषयता न अनुमितिजनकतावच्छेदिका। तस्याः परम्परया पक्षविशेष्यत्वानिरूपितत्वात्। एवं उदाहरणजन्यबोधीय-हेतुव्यापकत्वविषयतापि न अनुमितिजनकतावच्छेदिका। परंपरया पक्षविशेष्यतानिरूपितसाध्यविषयतानिरूपिताया एव हेतुव्यापकत्वविषयतायाः अनुमितिजनकतावच्छेदकत्वात्। एवञ्च उदाहरणजन्यबोधीयसाध्य-विषयताविशेषणतापन्नस्य हेतुव्यापकत्वविषयतानिरूपितत्वस्य न अनुमितिजनकता-वच्छेदकतावच्छेदकत्वम्। जनकतावच्छेदकवृत्तेरेव धर्मस्य विषयताविशेषणतया जनकतावच्छेदकतावच्छेदकत्वसंभवात्। तस्मात् पक्षविशेष्यतानिरूपित-पञ्चमविषयतांशविशेषणतया अनुमितिजनकतावच्छेदकतावच्छेदकता-

साध्यादिविषयतासाधारणम्। तथा चोदाहरणेऽतिव्याप्तिर्दुर्वारैव। तथापि निरुक्तजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयत्वावच्छिन्ना या प्रतिबन्धकता तदवच्छेदकविषयतात्वेनोदाहरणजन्यबोधीयहेतुव्यापकसाध्यादिविषयतायाः सङ्ग्रहो बोध्यः।

---

पर्याप्त्यधिकरणभूतो यो धर्मः हेतुव्यापकत्वविषयतानिरूपितत्वसहितसाध्यविषयतात्वरूपः सः हेतुव्यापकसाध्यसमानाधिकरणहेतुमान् पक्ष इति परामर्शीयसाध्यविषयतायामेवास्ति, न तु उदाहरणजन्यबोधीयसाध्यविषयतायामिति अनुमितिजनकतावच्छेदकतावच्छेदकधर्मवद्विषयताशून्यत्वस्य उदाहरणजन्यबोधे सद्भावात् तज्जनके उदाहरणेऽतिव्याप्तिरिति भावः।

यद्यपि उदाहरणजन्यबोधीयसाध्यविषयतायाः जनकतावच्छेदकत्वविरहादेव तद्गतव्यापकत्वविषयतानिरूपितत्वसाध्यविषयतात्वयोः जनकतावच्छेदकतावच्छेदकत्वं नास्तीति एतावन्मात्रकथनमपि उदाहरणेऽतिव्याप्तिसंपादकम्। मध्ये व्यापकत्वविषयतायाः जनकतानवच्छेदकत्वकथनं किमर्थमिति शङ्का जायते। तथापि परामर्शीयव्यापकत्वविषयतायाः अनुमितिजनकतावच्छेदकतया उदाहरणजन्यबोधीयायाः व्यापकत्वविषयतायाः परामर्शीयविषयतानतिरिक्तत्वभ्रमवतः तद्विशिष्टसाध्यविषयतायाः जनकतावच्छेदकप्रवेशशङ्का स्यात्। तद्वारणाय तन्निरूपितव्यापकत्वविषयतापि न तथेत्युक्तम् इति ध्येयम्।

***तन्निरूपितेति।*** परंपरया पक्षविषयत्वानिरूपितसाध्यविषयतानिरूपितेत्यर्थः। तथा च यथा परंपरया पक्षविषयत्वानिरूपितहेतुव्यापकताविशिष्टसाध्यविषयता न अनुमितिजनकतावच्छेदिका, तथा पक्षविषयत्वानिरूपित–साध्यविषयतानिरूपित–व्यापकत्वविषयतापि न जनकतावच्छेदिकेति भावः। ***तदीयेति।*** उदाहरणजन्यबोधीयेत्यर्थः।

समाधत्ते–***तथापीत्यादिना।*** प्रकृतपक्षक–प्रकृतसाध्यक– अनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं यः पूर्वोक्तपञ्चमविषयताविशेषणतापन्नः हेतुव्यापकत्वविषयतानिरूपितत्वसहितसाध्यविषयतात्वरूपो धर्मः तदवच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयताशून्य–बोधजनकत्वे सति न्यायावयवत्वं प्रतिज्ञायाः लक्षणम्। उक्तधर्मावच्छिन्नविषयत्वावच्छिन्ना प्रतिबन्धकता हेतुव्यापकसाध्यसमानाधिकरणहेतुमान् पक्ष इति परामर्शनिष्ठा

अनुमितिजनकतावच्छेदकपरामर्शीयसाध्यादिविषयतायाः हेतुव्यापकत्वादिविषयतानिरूपित-साध्यादिविषयतात्वेन साध्यं हेतुव्यापकं नवेत्यादिसंशयप्रतिबन्धकतावच्छेदकत्वात् तादृशप्रतिबन्धकतायां तादृशरूपेणोदाहरणजन्यबोधीयसाध्यादिविषयताया अप्यवच्छेदकत्वात्। मुख्यविशेष्यतानिवेशाद्गोत्वाभावः प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान् गोत्वाभावादित्यत्र तादृशविशिष्टसाध्यकप्रकृतानुमितिजनकपरामर्शीयस्वात्मकपक्षविशेषणतापन्न गोत्वाभावविषयता-निरूपिताधेयत्वविषयतानिरूपिताधिकरण विषयतानिरूपित सास्नाभावविषयता निरूपितविषयतांशे विशेषणविधया अवच्छेदकतावच्छेदकतायाः पर्याप्त्यधिकरणधर्मवत् प्रमेयत्वव्यापकवाच्यत्व-विषयतायाः प्रतिज्ञाजन्यबोधे सत्त्वेऽपि न क्षतिः। (जनकता च साध्यव्याप्यत्वावच्छिन्न-धर्मिताकान्यपरामर्शीया ग्राह्या। तेन तद्धर्मिकपरामर्शमादायापि नोक्तप्रतिज्ञायामव्याप्तिः।)

---

'साध्यं हेतुव्यापकं न वा' इति संशयनिरूपिता प्रतिबन्धकता तदवच्छेदकविषयता हेतुव्यापकत्वविशिष्टसाध्यविषयता। तच्छून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति तज्जनकत्वमादाय प्रतिज्ञायां लक्षणसमन्वयः। उदाहरणजन्यबोधीयसाध्यविषयताया अपि हेतुव्यापकत्वविषयतानिरूपितसाध्यविषयतात्वेन रूपेण 'साध्यं हेतुव्यापकं न वेति' संशयप्रतिबन्धकतावच्छेदकत्वात् प्रतिबन्धकतावच्छेदकविषयताशून्यत्वम् उदाहरणजन्यबोधे नास्तीति न उदाहरणेऽतिव्याप्तिरिति।

उदाहरणजन्यबोधीयविषयतायाः सङ्ग्रहमेव प्रतिपादयति***अनुमितीति***। ***तादृशप्रतिबन्धकतायामिति***। संशयनिरूपितप्रतिबन्धकतायामित्यर्थः। ***तादृशरूपेणेति***। हेतुव्यापकत्वविषयतानिरूपितसाध्यविषयतात्वेनेत्यर्थः। मुख्यविशेष्यतानिवेशस्य प्रयोजनमाह– ***मुख्यविशेष्यतानिवेशात्*** इत्यादिना। मुख्यविशेष्यत्वमनुपादाय पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितेत्यादिरीत्या पञ्चमविषयतापर्यन्तं निवेश्य तदंशे विशेषणविधया प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणो यो धर्मः तद्वद्विषयताशून्यबोधजनकत्वं प्रतिज्ञात्वमित्युक्तौ 'गोत्वाभावः प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान्, गोत्वाभावात्' इत्यत्र प्रतिज्ञायामव्याप्तिः। तथा हि–'गोत्वाभावव्यापकप्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभावसमानाधिकरण गोत्वाभाववान् गोत्वाभावः' इत्याकारकः परामर्शः। पक्षविषयतापदेन पक्षात्मकहेतुनिष्ठविषयता ग्राह्या। तथा च हेतुभूतगोत्वाभावविषयतानिरूपित-वृत्तित्वविषयतानिरूपित- अधिकरणविषयतानिरूपित–सास्नाभावविषयतानिरूपित-प्रमेयत्वव्यापकवाच्यत्वविषयतावृत्तेः प्रमेयत्वव्यापकवाच्यत्वविषयतात्वस्य

अनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणतया तद्विषयत्वावच्छिन्ना या 'वाच्यत्वं प्रमेयत्वव्यापकं न वा' इति संशयनिरूपिता प्रतिबन्धकता तदवच्छेदकप्रमेयत्वव्यापकवाच्यत्वविषयतायाः प्रतिज्ञाजन्यबोधे सत्त्वात् तादृशविषयताशून्यबोधजनकत्वं प्रतिज्ञायां नास्तीति अव्याप्तिः।

मुख्यविशेष्यत्वनिवेशे तु गोत्वाभावत्वावच्छिन्नपक्षनिष्ठविशेष्यताया एव मुख्यविशेष्यतापदेन ग्राह्यतया तन्निरूपितपञ्चमविषयतापदेन प्रकृतहेतुव्यापकत्व-विशिष्ट- साध्यनिष्ठविषयताया एव ग्राह्यतया तद्विशेषणतापन्नधर्मवद्विषयता च गोत्वाभावव्यापकत्वविशिष्ट-प्रकृतसाध्यविषयतैव। तच्छून्यत्वं प्रतिज्ञाजन्यबोधेऽस्तीति नाव्याप्तिरिति भावः।

***जनकता चेति।*** प्रकृतलक्षणघटकानुमितिजनकतायां साध्यव्याप्यत्वा-वच्छिन्नधर्मिताकान्यपरामर्शीयत्वं निवेशनीयम्। अन्यथा 'गोत्वाभावः प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान्' इति पूर्वोक्तप्रतिज्ञायामव्याप्तिः। तथाहि-'प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभावव्याप्यवान् गोत्वाभावः, साध्यव्याप्यहेतुमान्' इति परामर्शीया या गोत्वाभावत्वावच्छिन्नमुख्यविशेष्यता तन्निरूपितव्याप्यत्वावच्छिन्नव्याप्यनिष्ठविषयतानिरूपितव्याप्तिनिष्ठ-विषयता-निरूपितसास्नाभावविषयतानिरूपितवाच्यत्वविषयतांशे (पञ्चमविषयतायां) विशेषणविधया जनकतावच्छेदकतावच्छेदकः यः धर्मः प्रमेयत्वव्यापक-वाच्यत्वविषयतात्वरूपः। तद्वत्विषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधेऽभावात् अव्याप्तिः। व्याप्यत्वावच्छिन्नधर्मिकान्यपरामर्शीयत्वस्य जनकतायां निवेशे तु तद्धर्मिकपरामर्शीयजनकतायाः उपादातुमशक्यतया पूर्वोक्तरीत्या गोत्वाभावत्वावच्छिन्नधर्मिकपरामर्शीयजनकतामादाय लक्षणसमन्वयसंभवात् नाव्याप्तिरिति भावः।

***न च साध्याभावव्यापकेति।*** 'वह्न्यभावव्यापकप्रमेयत्ववान्' 'पर्वतः वह्निमान् धूमात्' इत्यादौ 'वह्न्यभावव्यापक-अभावप्रतियोगि-धूमवान्' इति व्यतिरेकव्याप्तिविषयकपरामर्शीयपक्षनिष्ठविशेष्यतानिरूपित- धूमनिष्ठविषयता-निरूपित-प्रतियोगित्वनिष्ठविषयतानिरूपित-अभावनिष्ठविषयतानिरूपित-व्यापकत्वविषयताया अपि पञ्चमविषयतापदेन ग्रहीतुं शक्यतया तत्र

न च साध्याभावव्यापकहेत्वभावप्रतियोगिहेतुमानिति परामर्शीयपक्षविशेष्यतानिरूपितहेतु-विषयतानिरूपित प्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितव्यापकत्वविषयताया अपि निरुक्तविषयतात्वात् तादृशविषयत्वविशेषणतयाऽवच्छेदकीभूतं साध्याभावव्यापक-विषयतात्वमपीति वह्न्यभावव्यापकप्रमेयत्ववान्पर्वतो वह्निमानित्यादिप्रतिज्ञायामव्याप्तिरिति वाच्यम्। किञ्चिद्व्यापकत्वविशिष्टविषयतांशे विशेषणतयाऽवच्छेदकत्वस्यैव निवेशनीयत्वात्। वस्तुतस्तु चतुर्थविषयतायां अभावनिष्ठप्रकारताभिन्नत्वस्य निवेशनीयत्वान्न कोऽपि दोषः। व्यापकत्वविषयतायाश्चातथात्वात् व्यतिरेकपरामर्शीयपञ्चमविषयताया एव अभावप्रकारता-

---

विशेषणविधया अनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मः वह्न्यभावव्यापकत्वविषयतात्वमपि। तद्वद्विषयताशून्यत्वं उक्तप्रतिज्ञाजन्यबोधे नास्ति। पक्षतावच्छेदककोटिप्रविष्टतया वह्न्यभावव्यापकत्वस्यापि तत्र विषयत्वात् इति अव्याप्तिरिति भावः।

अव्याप्तिं परिहरति-*किञ्चिद्व्यापकत्वविशिष्टेति*। किञ्चिद्व्यापकत्व-विषयतानिरूपितविषयतांशे विशेषणविधया जनकतावच्छेदकतावच्छेदको यो धर्मः तद्वद्विषयताशून्यत्वं बोधे निवेशनीयम्। उक्तव्यतिरेकव्याप्तिविषयकपरामर्शीय-साध्याभावव्यापकत्वविषयतायाः किञ्चिद्व्यापकत्वविषयतानिरूपितत्वविरहेण पञ्चमविषयतापदेन ग्रहीतुमशक्यतया हेतुपक्षयोः संसर्गविषयतामन्तर्भाव्य पञ्चमविषयतैव ग्राह्या। तथा हि-पक्षनिष्ठविशेष्यतानिरूपित-संसर्गनिष्ठविषयतानिरूपित-हेतुनिष्ठविषयतानिरूपित-प्रतियोगित्वनिष्ठविषयतानिरूपित-हेत्वभावनिष्ठविषयतैव किञ्चिद्व्यापकत्वविषयतानिरूपितपञ्चमविषयता। तस्यां विशेषणविधया अनुमितिजनकतावच्छेदकतावच्छेदकधर्मः साध्याभावव्यापकत्व-विशिष्टहेत्वभावविषयतात्वम्। तदवच्छिन्नविषयताशून्यत्वं उक्तप्रतिज्ञाजन्य-बोधेऽस्त्येव। वह्न्यभावव्यापकस्य प्रमेयत्वस्य अत्र विषयत्वेऽपि वह्न्यभावव्यापकस्य धूमाभावस्य तत्राविषयत्वात्। अतो नाव्याप्तिरिति भावः। एतावता पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपित-विषयतानिरूपित-विषयतानिरूपित-विषयतानिरूपित-किञ्चिद्व्यापकत्वविशिष्टविषयतांशविशेषणतापन्न-प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मवद्विषयताशून्यबोधजनक-न्यायावयवत्वं प्रतिज्ञालक्षणं संपन्नम्।

*व्यतिरेकपरामर्शीयेति*। संसर्गविषयतामनन्तर्भाव्य पक्षविशेष्यतानिरूपिता

**तच्च हेतौ साध्यव्याप्यत्वागाहित्वं हेतुभूताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्याभावव्यापकत्वावगाहित्वञ्च।**

---

रूपत्वात् अन्वयव्यतिरेकव्याप्तिघटकव्यापकताद्वयविषयतयोर्विशिष्याभावद्वयनिवेशपरो नायं ग्रन्थः, तथा च सति प्रकृतहेतुतावच्छेदकेत्यनुगतशब्देनोभयोत्कीर्तनवैयर्थ्यापातात् विशिष्यापि तदुभयावगाहित्वस्य ***तच्चेत्यादिना*** दर्शनीयतया प्रथमत एव विशिष्य-तदुभयावगाहित्वार्थकत्वोपवर्णनानौचित्यात्। ***तच्चेति*** –तादृशगमकत्वौपयिकविषयत्वं चेत्यर्थः।

---

या पञ्चमी व्यापकत्वविषयता तस्याः **अतथात्वात्**–व्यापकत्वविशिष्टविषयता-रूपत्वाभावात्। लाघवादाह– ***वस्तुतस्त्विति।*** तथा च पक्षतावच्छेदकावच्छिन्न-मुख्यविशेष्यतानिरूपित–विषयतानिरूपित–विषयतानिरूपिता या अभावनिष्ठप्रकारताभिन्ना विषयता तन्निरूपितविषयतांशे विशेषणविधया अनुमितिजनकतावच्छेदकतावच्छेदको यो धर्मः तद्वद्विषयताशून्यबोधजनकत्वं प्रतिज्ञायाः लक्षणम्। 'वह्न्यभावव्यापकप्रमेयत्ववान् पर्वतः वह्निमान्' इत्यादौ व्यतिरेकव्याप्तिविषयकपरामर्शीयपक्षविशेष्यतानिरूपित–हेतुविषयतानिरूपित–प्रतियोगित्वविषयतानिरूपिता या चतुर्थी अभावनिष्ठा विषयता तस्याः अभावनिष्ठप्रकारताभिन्नत्वविरहात् तन्निरूपितव्यापकत्वविषयतां पञ्चमविषयतापदेन गृहीत्वा या अव्याप्तिरुक्ता सा न प्रसज्यते। किन्तु संसर्गविषयतामन्तर्भाव्य अभावनिष्ठप्रकारताभिन्नचतुर्थीविषयतापदेन प्रतियोगित्वविषयतैव ग्राह्या। तन्निरूपितहेत्वभावनिष्ठविषयतांशे विशेषणतापन्नो यो धर्मः साध्याभावव्यापकत्व-विशिष्टहेत्वभावविषयतात्वरूपः तद्वद्विषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधे सत्त्वात् तज्जनकत्वमादाय तत्र प्रतिज्ञायां लक्षणसमन्वयः कार्य इति भावः।

कैश्चित् ***तथाचेत्यादि*** दीधितिग्रन्थः अन्वयव्यतिरेकव्याप्तिघटक-व्यापकताद्वयविषयतयोः हेतुव्यापकत्वविषयतात्वेन साध्यव्यापकत्वविषयतात्वेन च विशेषरूपेण अभावद्वयनिवेशतात्पर्यकतया व्याख्यातः। तद्व्याख्यानं न युक्तम्। अनुगतशब्देन विषयताद्वयसङ्कीर्तनस्य व्यर्थत्वात्। विशिष्य अभावद्वयावगाहित्वस्य ***तच्चेत्यादिना*** अनन्तरं प्रदर्शयिष्यमाणतया पूर्वमपि तथा निवेशे पौनरुक्त्यापाताच्च इत्याह– ***अन्वयव्यतिरेकव्याप्तीति।***

***हेताविति।*** हेतुव्यापकताविशिष्टसाध्यविषयत्वमित्यर्थः। अतो नोक्तानुगम-विरोधः। ***हेतुभूताभावप्रतियोगितावच्छेदकेति।*** तादृशप्रतियोगितावच्छेदकञ्च धूमादिभाव-हेतुकस्थले धूमाभावत्वादिकं वह्न्यभावादिहेतुकस्थले च वह्नित्वादिकं एतदसङ्ग्रहभयेनैव हेत्वभावत्वावच्छिन्न इति नोक्तम्। तथा सति अयं निर्धूमो निर्वह्नित्वादित्यादौ यत्र धूमस्तत्रवह्निर्धूमव्यापकवह्न्यभाववांश्चायमित्याद्याकारकयोरेवोदाहरणोपनययोः प्रयोगाद्वह्नित्वाद्य-वच्छिन्न एव साध्याभावव्यापकतायास्ततः प्रतीतिर्न तु वह्न्यभावाद्यभावत्वाद्यवच्छिन्न इति

---

***तादृशगमकत्वौपयिकविषयत्वमिति।*** प्रकृतहेतुतावच्छेदकावच्छिन्न-हेतुकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकअनुमितिजनकतावच्छेदकं-विषयत्वमित्यर्थः। यथाश्रुतार्थपरित्यागे बीजमाह– ***अतो नोक्तानुगमविरोध*** इति। ***हेतुभूताभावप्रतियोगितावच्छेदकेति।*** हेतुभूतो यः अभावः हेत्वभावाभावः तत्प्रतियोगितावच्छेदकं यत् हेत्वभावत्वादि तदवच्छिन्ने इत्यर्थः। 'पर्वतो वह्निमान् धूमात्' इत्यादौ हेतुभूतः अभावः धूमाभावाभावः। तत्प्रतियोगितावच्छेदकं धूमाभावत्वम्। 'ह्रदो धूमाभाववान्, वह्न्यभावात्' इत्यादौ हेतुभूतः अभावः वह्न्यभावः। तत्प्रतियोगितावच्छेदकं वह्नित्वम्। तदाह–***तादृशप्रतियोगिता-वच्छेदकञ्चेति। एतदसङ्ग्रहभयेनेति।*** वह्न्यभावहेतुकस्थलासङ्ग्रहभयेनेत्यर्थः। ***तथा सतीति।*** हेत्वभावत्वावच्छिन्ने इत्युक्तौ यत्र 'अयं निर्धूमः निर्वह्नित्वात्' इत्यादौ 'यत्र धूमः तत्र वह्निः' इत्याकारकस्य उदाहरणस्य 'धूमव्यापकवह्न्यभाववाँश्चायम्' इत्याकारकस्य उपनयस्य च प्रयोगात् ताभ्यां वह्नित्वावच्छिन्ने एव साध्याभावधूमव्यापकताप्रतीतिः, न तु वह्न्यभावाभावत्वावच्छिन्ने इति हेत्वभावाभावत्वावच्छिन्ने साध्याभावव्यापकत्वाविषयकत्वात् तज्जन्यशाब्दबोधयोः तत्र लक्षणगमनेन अतिव्याप्तेरेव सद्भावात् तत्र अतिव्याप्त्यभावस्य अप्रतिपादनेन न्यूनता स्यात्। हेतुभूताभावप्रतियोगिता-वच्छेदकावच्छिन्नेत्युक्तौ तु हेतुभूतो यः वह्न्यभावः तत्प्रतियोगितावच्छेदक-वह्नित्वावच्छिन्ने साध्याभावव्यापकत्वविषयकत्वमेव उदाहरणोपनय-जन्यशाब्दबोधयोरस्तीति तदविषयकत्वविरहात् नातिव्याप्तिः इत्येवं तत्र अतिव्याप्त्यभावस्य लाभात् न न्यूनतेति भावः। एतदुक्तं भवति–लिङ्गत्वाविषयकत्वं हि शाब्दबोधे उदाहरणोपनययोः अतिव्याप्तिवारणाय उपात्तम्। अभावहेतुकस्थले तादृशविशेषणे दत्तेऽपि अतिव्याप्तौ सत्यां क्वचित्

**द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववान् गुणात्, गुणव्याप्यरूपवानयं स्पर्शवान् रूपादित्यादौ प्रतिज्ञासङ्ग्रहायावच्छेदकद्वयोपादानम्।**

---

तत्रातिव्याप्त्यभावाप्रतिपादनेन न्यूनतापत्तेः। हेतुतावच्छेदकसाध्यतावच्छेदकनिवेशनप्रयोजनमाह- ***द्रव्यत्वेति। प्रतिज्ञासङ्ग्रहायेति।*** प्रथमोपदर्शितप्रतिज्ञाविषयसंयोगत्वावच्छिन्ननिरूपितव्यापकताया अपि संयोगत्वेन गुणहेतुकद्रव्यत्वत्वावच्छिन्नानुमितेर्द्वितीयप्रतिज्ञाविषयगुणत्वावच्छिन्नव्यापकताया गुणत्वेन स्पर्शसाध्यकरूपत्वावच्छिन्नहेतुकानुमितेः प्रयोजकतयाऽवच्छेदकद्वयानुपादाने तत्र तत्राव्याप्तेरिति भावः।

---

अतिव्याप्त्यभावः नास्तीति न्यूनता स्यात्। सर्वत्र उदाहरणोपनययोः अतिव्याप्त्यभावलाभे तु न न्यूनता इति। ***इत्याकारकयोरेवेति।*** 'एव' कारेण 'यत्र धूमाभावाभावः तत्र वह्न्यभावाभावः,' 'एवं धूमाभावाभावव्यापक-वह्न्यभावाभाववाँश्चायम्' इत्युदाहरणोपनययोः व्यवच्छेदः। ***हेतुतावच्छेदकेति।*** हेतुतावच्छेदकानुपादाने प्रकृतहेतुकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानु-मितिजनकतावच्छेदकं यद्विषयकत्वं तच्छून्यत्वं बोधे निवेश्यते चेत् 'द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववान् गुणात्' इत्यादौ प्रतिज्ञाजन्यबोधीयायाः पक्षतावच्छेदकशरीरप्रविष्टद्रव्यत्वनिष्ठसंयोगरूपगुण-व्यापकतायाः संयोगत्वेन संयोगरूपानुमितिजनकतावच्छेदकविषयिता-निरूपकत्वेन संयोगव्यापकत्वविषयकत्वशून्यत्वस्य प्रतिज्ञाजन्यबोधेऽभावात् प्रतिज्ञायामव्याप्तिः। अतः हेतुतावच्छेदकावच्छिन्नत्वनिवेशः। तन्निवेशे संयोगत्वावच्छिन्ननिरूपितद्रव्यत्वनिष्ठव्यापकत्वविषयतायाः गुणत्वावच्छिन्न-हेतुकानुमितिजनकतावच्छेदकत्वविरहात् जनकतावच्छेदकविषयताशून्यत्वस्य बोधे सत्त्वात् नाव्याप्तिः। साध्यतावच्छेदकावच्छिन्नत्वानिवेशे 'गुणव्याप्यरूपवानयम् स्पर्शवान् रूपात्' इत्यादौ पक्षतावच्छेदकशरीरे गुणनिष्ठा या रूपत्वावच्छिन्ननिरूपितव्यापकता तद्विषयकत्वं रूपत्वावच्छिन्नहेतुकगुण-साध्यकानुमितिजनकतावच्छेदकम्। स्पर्शस्यापि गुणत्वात् गुणत्वेन रूपेण स्पर्शसाध्यकानुमितिजनकतावच्छेदकमिति जनकतावच्छेदकविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधेऽभावात् अव्याप्तिः। साध्यतावच्छेदकनिवेशे तु रूपनिरूपितव्यापकत्वविशिष्टगुणत्वावच्छिन्नविषयकत्वस्य स्पर्शत्वावच्छिन्न-

अन्यूनानतिरिक्तेति **च** मूलमुद्देश्यानुमित्यन्यूनानतिरिक्तभागपरम्। हेतुत्वमभिधेयं प्रमेयत्वादित्यादौ **पञ्चम्यर्थपक्षकहेतुवारणाय पञ्चम्यन्तान्यत्वस्य** हेत्वन्यत्वस्य **वाऽवश्यं वाच्यत्वात्।**

---

नन्वेवं लिङ्गत्वाविषयकत्वविशेषणेनैव उदाहरणस्यापि वारणे पूर्वोक्तानुमितिसमानविषयकत्वविशेषणस्य व्यावृत्तिर्न सङ्गच्छत इति सत्यन्तोत्तरविषयान्तभागपरित्यागस्यैवाऽवश्यकत्वेनान्यूनानतिरिक्तपदमात्रपरित्यागपरमूलविरोध इत्यालोच्य तादृशमूलस्य च तथाविधसमुदायपरित्यागपरत्वमेवाह– ***अन्यूनेति।*** नन्वेतत्कल्पे हेतुवारणायैव पक्षविशेष्यकत्वपर्यवसितेतादृशविशेषणोपादानमावश्यकं तज्जन्यबोधस्य व्यापकत्वाविषयत्वेन लिङ्गत्वाविषयकत्वदानेनावारणादिति कथं समुदायपरित्याग इत्यत आह – **हेतुत्वमिति पञ्चम्यर्थपक्षक** इति। तथा च पक्षमुख्यविशेष्यकत्वमपि तादृशहेतुजन्यबोधे अक्षतमिति

---

साध्यकानुमितिजनकतावच्छेदकत्वं नास्तीति अनुमितिजनकतावच्छेदकविषयताशून्यत्वस्य शाब्दबोधे सद्भावात् नाव्याप्तिः। द्रव्यत्वव्याप्यसंयोगवत्त्वं नाम संयोगव्यापकद्रव्यत्वसमानाधिकरणसंयोगवत्त्वम्। एवं गुणव्याप्यरूपवत्त्वं रूपव्यापकगुणसमानाधिकरणरूपवत्त्वम्। अतः साध्यनिष्ठहेतुव्यापकतायाः प्रतिज्ञाजन्यबोधे विषयत्वात् अतिव्याप्तेः प्रसक्तिः। ***प्रथमोपदर्शितप्रतिज्ञेति।*** द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयम् इति प्रतिज्ञेत्यर्थः। ***द्वितीयप्रतिज्ञेति।*** गुणव्याप्यरूपवानयं स्पर्शवानिति प्रतिज्ञेत्यर्थः।

***नन्वेवमिति।*** लिङ्गविषयकेत्यत्र लिङ्गपदं लिङ्गत्वपरम्। लिङ्गत्वं च व्याप्तिः। तथा च लिङ्गाविषयकेत्यस्य व्याप्त्यविषयकेति अर्थस्वीकारे उदाहरणजन्यस्य शाब्दबोधस्य व्याप्तिविषयकत्वादेव उदाहरणेऽतिव्याप्तिवारणसंभवात् तद्वारणाय उपात्तं अनुमितिसमानविषयकत्वविशेषणं व्यर्थमिति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकान्तभागत्यागस्यैव आवश्यकत्वेन अन्यूनानतिरिक्तपदमात्रत्यागपरस्य ***अन्यूनानतिरिक्तपदं विहाय*** इति मणिग्रन्थस्य असङ्गतिरित्याशङ्क्य मणिग्रन्थस्थान्यूनानतिरिक्तपदमित्यस्यापि उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकभागे तात्पर्यम्। तथा च विषयकान्तसमुदायत्याग एव मूलस्यापि अभिप्रेतः। अतो नानुपपत्तिः इत्याहेत्यर्थः। ***सत्यन्तोत्तरविषयान्तभागपरित्यागस्यैवेति।*** सत्यन्तादुत्तरं विद्यमानः यः विषयकान्तो भागः तत्परित्यागस्य इत्यर्थः। 'किन्तु

**संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यत्वेनैवान्वयात्।**

---

न तेन तद्वारणसम्भव इति भावः। पञ्चम्यन्तान्यत्वस्य निवेशे घटो दण्डात् पटो न दण्डादित्यादि प्रतिज्ञाया असंग्रहमालोच्य कल्पान्तरमाह–***हेत्वन्येति। अवश्यं वाच्यत्वादिति।*** तथा च अत एव सकलहेतुवारणे उक्तसमुदायदळपरित्यागो न क्षतिमावहतीति भावः।

नन्‍ु ज्ञापकत्वं पञ्चम्यर्थः। स च प्रकृत्यर्थस्य विशेषणतयैव भासते न तु विशेष्यतया। तथा च कथं पञ्चम्यर्थपक्षकन्यायान्तर्गतहेतोः पक्षमुख्यविशेष्यकबोधजनकत्वमत आह–***संख्येति।*** विभक्त्यर्थस्यैकत्वादेः प्रकृत्यर्थस्य विशेषणतया बोध आनुभविकः। तस्य विशेष्यत्वे घटमित्यादित एकत्वं कर्मत्वं च घटीयमित्याकारकस्य

---

उद्देश्यानुमितिचरमकारणलिङ्गे'त्यादि मणिग्रन्थः अत्र स्मर्तव्यः। ***तादृशमूलस्य चेति। अन्यूनानतिरिक्तपदं विहाय*** इति मूलग्रन्थस्येत्यर्थः। ***तथाविधसमुदायेति।*** उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकसमुदायेत्यर्थः। तेन जनकत्वे सतीत्यस्य न परित्यागः। सत्यन्तस्य न्यायावयवत्त्वमर्थः। तथा च न्यायावयवत्त्वे सति लिङ्गत्वाविषयकशाब्दबोधजनकवाक्यत्वं प्रतिज्ञालक्षणम्। ***एतत्कल्प*** इति। लिङ्गत्वाविषयकत्वघटितलक्षणे इत्यर्थः। तथा च हेतुवाक्यजन्यशाब्दबोधस्यापि व्याप्तिरूपलिङ्गत्वाविषयकतया तज्जनके हेतुवाक्येऽतिव्याप्तिवारणाय पक्षमुख्यविशेष्यकत्वार्थकस्य अनुमितिसमानविषयकपदस्य आवश्यकतया कथं समुदायपरित्यागः इति भावः। ***तादृशविशेषणेति।*** अनुमितिसमानविषयकत्वेत्यर्थः। ***तथा चेत्यादि।*** पञ्चम्यर्थहेतुत्वपक्षकस्थले 'हेतुत्वमभिधेयम् प्रमेयत्वात्' इत्यादौ हेतुवाक्यजन्यस्य 'प्रमेयत्वनिष्ठं हेतुत्वम्' इत्याकारकशाब्दबोधस्य लिङ्गत्वाविषयकत्वात् हेतुत्वाख्यपक्षमुख्यविशेष्यकत्वाच्च तज्जनके हेतुवाक्ये पक्षमुख्यविशेष्यकत्वविशेषणे दत्तेऽपि अतिव्याप्तिः दुर्वारा। तद्वारणाय पञ्चमीविभक्त्यन्तान्यत्वस्य वा हेतुवाक्यान्यत्वस्य वा अवश्यं निवेशनीयतया तेनैव सर्वेष्वपि हेतुवाक्येषु अतिव्याप्तिवारणसंभवात् पक्षमुख्यविशेष्यकत्व-विशेषणमनावश्यकमिति भावः। कल्पान्तरानुसरणे बीजमाह – ***पञ्चम्यन्तान्यत्वस्य निवेश*** इति। 'घटो दण्डात्' इति प्रतिज्ञायां पञ्चम्यन्तायां पञ्चम्यन्तान्यत्वविरहात् अव्याप्तिः स्यात् इत्यालोच्य हेत्वन्यत्वमिति कल्पान्तरानुसरणम्।

***संख्यातिरिक्तेति*** दीधितिमवतारयति – ***ननु ज्ञापकत्वमिति।*** पञ्चमी-

प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च साक्षाद्भेदेनान्वयस्याव्युत्पत्तेर्वक्ष्यमाणत्वात्।

---

सर्वानुभवविरुद्धसमूहालम्बनबोधस्य आपत्तेः। अतः संख्यातिरिक्तेति सुबर्थविशेषणम्। लिङ्र्थस्य इष्टसाधनत्वादेः प्रकृत्यर्थस्य विशेषणतया भानात् प्रत्ययार्थसामान्योपेक्षा। विशेष्यत्वेनैवेत्यत्र युक्तिमाह– ***प्रातिपदिकार्थयोरिति।*** समानविभक्तिकनामार्थयोः क्रियाविशेषणीभूतद्वितीयान्तनामार्थधात्वर्थयोश्चाभेदान्वयबोधोत्पत्त्या ***भेदेनेति।*** तयोरपि विभक्त्यर्थमन्तराकृत्य परम्परया भेदान्वयबोधात्साक्षादिति। ***अव्युत्पत्तेर्वक्ष्यमाणत्वादिति।***

---

विभक्तेः ज्ञापकत्वमर्थः। स च प्रकृत्यर्थे आश्रयत्वसंबन्धेन अन्वेति। तथा च 'प्रमेयत्वात्' इति हेतुवाक्यात् 'ज्ञापकत्वविशिष्टं प्रमेयत्वम्' इत्याकारकः पञ्चम्यर्थप्रकारकः प्रकृत्यर्थमुख्यविशेष्यकः शाब्दबोधो जायते। ज्ञापकत्वरूपपक्षमुख्यविशेष्यकबोधो न जायते। एवञ्च पञ्चम्यर्थपक्षक-न्यायान्तर्गतहेतोः पक्षमुख्यविशेष्यकबोधजनकत्वाभावात् अतिव्याप्त्यभावात् पञ्चम्यन्तान्यत्वं न निवेशनीयम्। अतः तन्निवेशस्य आवश्यकत्वोक्तिः न सङ्गच्छते। अत एव समुदायत्यागकथनमपि असङ्गतमिति आशङ्कापरिहाराय ***संख्यातिरिक्तसुबर्थस्येति*** दीधितिः प्रवृत्ता। संख्यातिरिक्तः सुब्विभक्त्यर्थः प्रकृत्यर्थं प्रति विशेष्यतयैव भासते। संख्या तु प्रकृत्यर्थविशेषणतया भासते, एवञ्च 'प्रमेयत्वात्' इति हेतुवाक्यात् एकत्वविशिष्टप्रमेयत्वनिष्ठं ज्ञापकत्वमिति पक्षमुख्यविशेष्यक एव बोधो जायते। अतः तावन्मात्रेण तत्रत्यहेतौ अतिव्याप्तिवारणासंभवात् हेत्वन्यत्वविशेषणमावश्यकमिति भावः।

संख्यातिरिक्तप्रत्ययार्थस्येत्यनुक्त्वा सुबर्थस्येति कथनस्य तात्पर्यमाह– ***लिङर्थस्येति।*** 'स्वर्गकामो यजेत' इत्यादौ लिङर्थः इष्टसाधनत्वम्। तस्य प्रकृतिभूतधात्वर्थे विशेषणतया अन्वयः। यागः इष्टसाधनमिति बोधः। तथा च लिङादिविभक्त्यर्थस्य प्रकृत्यर्थविशेषणतया भानात् प्रत्ययार्थस्य प्रकृत्यर्थविशेष्यत्वेनैव अन्वयः इत्युक्तौ लिङ्स्थले तादृशनियमभङ्गः स्यादिति सुबर्थस्येत्युक्तम्। तदुक्तौ च संख्यातिरिक्तः सर्वोऽपि सुबर्थः प्रकृत्यर्थविशेष्यत्वेनैव भासत इति नियमः। अस्य तु कुत्रापि भङ्गो नास्तीति भावः।

दीधितौ ***प्रातिपदिकार्थयोरिति।*** निपातातिरिक्तेत्यपि विशेषणीयम्। निपातातिरिक्त– प्रातिपदिकार्थयोः धात्वर्थप्रातिपदिकार्थयोश्च अभेदातिरिक्तसंबन्धेन

भूतलं घट इत्यादावाधाराधेयभावादिसम्बन्धेन घटभूतलाद्योः तण्डुलः पचतीत्यादौ च क्रियाकर्मादिभावेन तण्डुलपाकाद्योरन्वयबोधानुदयादिति भावः। तथा च संख्यातिरिक्तसुबर्थस्य

---

अन्वयबोधो नास्तीत्यर्थः। निपातातिरिक्तत्वविशेषणात् 'घटःपटो न' इत्यत्र नञर्थभेदे पटस्य अभेदातिरिक्तप्रतियोगितासंबन्धेन अन्वयेऽपि न नियमक्षतिः। भेदेनेत्यस्य फलमाह- ***समानविभक्तिकनामार्थयोरिति।*** 'नीलो घटः' इत्यादौ नीलघटाद्योरित्यर्थः। अस्य अभेदेन अन्वयबोधोत्पत्त्या इत्यनेनान्वयः। ***क्रियाविशेषणीभूतेति।*** क्रियाविशेषणीभूतः यः द्वितीयाविभक्त्यन्तनामार्थः तस्य धात्वर्थस्य च स्तोकं पचतीत्यादौ अभेदेन अन्वय-बोधोत्पत्त्येत्यर्थः।***विभक्त्यर्थमन्तराकृत्येति।*** 'राज्ञः पुरुषः' इत्यादौ षष्ठीविभक्त्यर्थसंबन्धं द्वारीकृत्य राजपुरुषयोः प्रातिपदिकार्थयोः भेदसंबन्धेनान्वयबोधात् इत्यर्थः। राज्ञः निरूपितत्वसंबन्धेन षष्ठ्यर्थस्वत्वे तस्य स्वरूपसंबन्धेन पुरुषेऽन्वयात् निरूपितत्वसंबन्धेन 'राजविशिष्टस्वत्ववान् पुरुषः' इति बोधो जायते। तथा च विशेष्यतासंबन्धेन निपातातिरिक्तनामार्थनिष्ठाभेदसंबन्धावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति विशेष्यतासंबन्धेन निपातातिरिक्तनामपदजन्योपस्थितिः कारणम् इति भावः।

***अव्युत्पत्तेर्वक्ष्यमाणत्वात्*** इत्यस्य बोधाभावस्य वक्ष्यमाणत्वादित्यर्थः। नामार्थयोः नामार्थधात्वर्थयोश्च भेदेनान्वयबोधाभावं प्रदर्शयति-**भूतलं घट इत्यादाविति।** आधारतासंबन्धेन 'घटविशिष्टम् भूतलमि'ति वा आधेयतासंबन्धेन 'भूतलविशिष्टो घट' इति वा 'भूतलं घट' इत्यादौ शाब्दबोधो न जायते। एवं 'तण्डुलः पचति' इत्यादौ कर्मतासंबन्धेन तण्डुलविशिष्टः पाकः इति बोधो न जायते। अतः तादृशबोधापत्तिवारणाय द्वयोः प्रातिपदिकार्थयोः प्रातिपदिकार्थधात्वर्थयोश्च भेदसंबन्धेन बोधो न जायत इति स्वीकार्यम्। तदनुसारेण च विशेष्यतासंबन्धेन नामार्थनिष्ठभेदसंबन्धावच्छिन्नप्रकारताकशाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणम् इति कार्यकारणभावः आवश्यकः। तेन नामार्थं प्रति धात्वर्थं प्रति वा प्रत्ययार्थ एव भेदसंबन्धेन विशेष्यः। न तु नामार्थान्तरम् धात्वर्थो वा इति सिद्धम्। ***इत्याशय*** इति। एवञ्च "हेतुत्वमभिधेयं प्रमेयत्वात्" इत्यत्र पञ्चम्यर्थविशेष्यकबोध एव

प्रातिपदिकार्थविशेषणत्वे विभक्त्यर्थस्यान्तराऽभानेन प्रातिपदिकार्थस्य भूतलतण्डुलादेः घटपाकादावाधाराधेयत्व-कर्मत्वादिसम्बन्धेन साक्षादेवान्वयबोधस्य भूतले घटः तण्डुलं पच्चतीत्यादितः स्वीकरणीयतया तादृशव्युत्पत्तिविरोध इत्याशयः। न च भूतले घट इत्यादौ घटाधिकरणं भूतलमित्याद्याकारक एवान्वयबोध उपेयते नात उपदर्शितव्युत्पत्तिविरोध इति वाच्यम्। तथा सति शाब्दबोधेऽनुभवसिद्धस्य प्रथमान्तार्थमुख्यविशेष्यकत्वस्य भङ्गप्रसङ्गात्।

ननु विभक्त्यर्थः संसर्गतयैव भासते न तु विशेष्यतया घटादावाधेयत्वादिसम्बन्धेन भूतलादिप्रकारकबोधे च सप्तम्यादिविभक्त्यन्तभूतलादिवाचकपदसमभिव्याहारस्य नियामकत्वान्नोक्तातिप्रसङ्गः, न चैवं भूतले धूमादित्यादिभागमात्रस्यानानुभावकत्वप्रसङ्गः।

---

हेतुवाक्याज्जायत इति स्वीकरणीयतया पक्षमुख्यविशेष्यकबोधजनकत्वात् हेतौ प्रतिज्ञालक्षणस्य अतिव्याप्तिः। तद्वारणाय हेत्वन्यत्वविशेषणमावश्यकम्। तेनैव इतरसकलहेतुषु अतिव्याप्तिवारणसंभवात् पक्षमुख्यविशेष्यकत्वं व्यर्थमिति समुदायदलपरित्यागः युक्त एवेति सिद्धम्। सप्तम्यर्थः अधिकरणत्वम्। तत्र घटस्यान्वयः। अधिकरणत्वस्य प्रकृत्यर्थे भूतलेऽन्वयः। तथा च 'भूतले घटः' इत्यादौ घटाधिकरणं भूतलमित्येव शाब्दबोधः। नामार्थयोः साक्षाद्भेदेन अनन्वय इति व्युत्पत्तिविरोधो नास्ति। विभक्त्यर्थद्वारैव अन्वयादिति भावः। तथा सति व्युत्पत्तिविरोधाभावेऽपि अनुभवविरोधात् तथा अन्वयबोधो न संभवतीति भावः।

'भूतले घटः' इत्यादौ आधेयतासंबन्धेन घटादौ भूतलादेः अन्वयबोधः स्वीक्रियते। विभक्तेः अर्थः नास्ति। साधुत्वार्थमेव सर्वत्र विभक्तेः प्रयोगः। आधेयत्वसंसर्गकभूतलप्रकारकशाब्दबोधं प्रति सप्तम्यन्तभूतलपदसमभिव्याहारस्य हेतुत्वात् 'भूतलं घट', इत्यादौ न तादृशो बोधः इत्याशयेन शङ्कते – **ननु *विभक्त्यर्थ*** इति। ***न चैवमिति।*** विभक्तेः साधुत्वमात्रार्थकत्वे भूतले इत्यादिभागस्य अननुभावकत्वप्रसङ्गः। विभक्तेः सार्थकत्वे तु भूतलनिरूपितमाधेयत्व-मित्याकारकानुभवजनकत्वं संभवतीति शङ्कायां विभक्तेः साधुत्वमात्रार्थ-कत्वमते अननुभावकत्वम् इष्टमेवेति समाधानमिति भावः।

ननु प्रकृत्यर्थे विशेषणतयैव विभक्त्यर्थो भासते। तथा च 'भूतले' इत्यादिभागमात्रादपि 'अधिकरणतावद्भूतलम्' इति बोधः। एवं 'धूमात्' इत्यादौ 'ज्ञापकतावान् धूमः' इत्याकारको बोधः। 'भूतले घटः', 'धूमात् वह्निमान्'

इष्टत्वात्। अस्तु वा विभक्त्यर्थाधिकरणत्वज्ञापकत्वादिविशेषितस्यैव प्रकृत्यर्थस्य तुल्यवित्तिवेद्याधेयत्वज्ञाप्यत्वादिसम्बन्धेनान्वयः इत्यतो विभक्त्यर्थस्याविशेष्यत्वे नेदं मैत्रस्येत्यादौ मैत्रादिविशेषितस्वत्वादिरूपस्य अभावप्रतियोगिनः अवान्तरवाक्यादनुपस्थित्या नञर्थान्वयबोधानुपपत्तिमाह– **चैत्रस्येदमित्यादि।** मैत्रादेरभावो नञा बोध्यते न तु स्वत्वस्येत्याशङ्का निराचिकीर्षुणा तदुपगमे चैत्रीयधनेऽपि संयोगसमवायादिना चैत्राद्यभावसत्त्वेन यत्र चैत्रस्येदमिति व्यवहारः तत्र न चैत्रस्येत्यपि व्यवहारः स्यादिति सूचितुं चैत्रस्येत्युक्तम्।

---

इत्यादिपदान्तरसमभिव्याहारस्थले अधिकरणत्वज्ञापकत्वविशिष्टधूमादेः तुल्यवित्तिवेद्याधेयत्वज्ञाप्यत्वादिसंबन्धेन घटवह्न्यादौ अन्वयबोधः। तथा च निपातातिरिक्तनामार्थयोः धात्वर्थनामार्थयोश्च तुल्यवित्तिवेद्यसंबन्धातिरिक्तभेदसंबन्धेन साक्षान्नान्वयः इति व्युत्पत्तिः। एवञ्च हेतुवाक्यजन्यबोधस्य पक्षमुख्यविशेष्यकत्वविरहादेव अतिव्याप्तिवारणसंभवात् हेत्वन्यत्वविशेषणम् व्यर्थमित्याशयेन शङ्कते – ***अस्तु वा*** इत्यादिना। ***तुल्यवित्तिवेद्येति।*** यस्मिन् ज्ञाने भूतले घटाधिकरणत्वं भासते तस्मिन्नेव ज्ञाने अर्थात् घटे भूतलाधेयत्वं भासते इत्यर्थः। ***इत्यतः*** इत्यादि। विभक्त्यर्थस्य अविशेष्यत्वे 'भूतले घट' इत्यादौ अनुपपत्त्यभावेऽपि 'नेदं मैत्रस्य' इत्यादौ नञर्थान्वयबोधानुपपत्तिः। विभक्त्यर्थस्य विशेष्यत्वे मैत्रनिरूपितस्वत्वस्य अभावः नञा इदंपदार्थे बोधयितुं शक्यते। स्वत्वस्य अविशेष्यत्वे तु षष्ठ्यन्तेन मैत्रनिरूपितस्वत्वस्य अनुपस्थित्या तदभावः बोधयितुं न शक्यते इति भावः।

***मैत्रादेरभाव*** इत्यादि। 'न मैत्रस्य' इत्यत्र षष्ठ्यर्थस्वत्वस्य मैत्रेऽन्वयः। मैत्रस्य च नञर्थेऽभावेऽन्वयः। नञर्थस्य च इदंपदार्थेऽन्वयः। तथा च 'स्वत्वविशिष्टमैत्राभाववदिदम्' इति बोधे का अनुपपत्तिः इति चेत्, तथा सति चैत्रीयधने स्वत्वविष्टिस्य चैत्रस्य संयोगसमवायादिना अभावसत्त्वात् यत्र चैत्रस्येदमिति व्यवहारः तत्र नेदं चैत्रस्य इति व्यवहारः स्यात् इति सूचनार्थ 'नेदं मैत्रस्य' इत्येतावन्मात्रमनुक्त्वा 'चैत्रस्येदम्, न मैत्रस्येति' उक्तम्। एवञ्च षष्ठ्यन्तार्थमैत्रादिस्वत्वाभाव एव नञा बोधनीयः। चैत्रीयधने चैत्रस्वत्वस्य सद्भावात् तदभावबाधात् 'नेदं चैत्रस्ये'ति न व्यवहारापत्तिः। मैत्रादिस्वत्वाभावश्च सुबर्थस्य प्रकृत्यर्थं प्रति विशेष्यत्वे सत्येव बोधयितुं शक्यत इति भावः।

**चैत्रस्येदं न मैत्रस्य, मैत्रस्येदं न चैत्रस्य द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादिसम्बन्धाभावबोधस्य विभक्त्यर्थविशेष्यतां विनानुपपत्तेः।**

---

ननु चैत्रप्रतियोगिकाभावबोधने प्रथमान्तचैत्रपदसमभिव्याहार एव नियामक इत्यत आह– *मैत्रस्येदमित्यादि।* न च स्वत्वादिसम्बन्धेनैव प्रकृत्यर्थस्याभावो दर्शितस्थले नञा बोध्यते तथा च नोक्तातिप्रसङ्ग इति वाच्यम्। वृत्त्यनियामकतया स्वत्वादेरभावप्रतियोगितावच्छेदक-सम्बन्धत्वाभावात्, नामार्थप्रतियोगिकाभावस्यानुयोगिनि सप्तमीं विना नञा बोधयितुमशक्यत्वाच्च।

वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वोपगमेऽपि स्वत्वादिसम्बन्धा-वच्छिन्नाभावस्य षष्ठ्याद्यन्तसमभिव्याहृतनञा बोधने अनुयोगिनि सप्तम्यनपेक्षणेऽपि

---

चैत्रीयधने न चैत्रस्येति व्यवहारः आपादयितुं न शक्यते। चैत्रप्रतियोगिकाभावबोधने प्रथमान्तचैत्रपदसमभिव्याहारस्य अपेक्षितत्वात् इत्याशङ्कायां 'मैत्रस्येदं न चैत्रस्य' इति प्रयोगान्तरं धृतम्। तथा च मैत्रीयधने चैत्रात्यन्ताभावबोधस्वीकारे प्रथमान्तत्वव्युत्पत्तिः नापेक्षिता षष्ठ्यन्तस्थलेऽपि तदभावबोधात् इति भावः।

ननु षष्ठ्यर्थस्वत्वविशिष्टस्य चैत्रस्य संयोगसमवायादिना अभावः यद्यपि चैत्रीयधने वर्तते, अथापि स्वत्वसंबन्धेन चैत्राभावः नास्ति। षष्ठ्यन्तसमभिव्याहृतनञा स्वत्वादिसंबन्धेनैव प्रकृत्यर्थस्याभावः बोध्यत इति स्वीकारे चैत्रसंबन्धिनि न चैत्रस्येति व्यवहारः न आपादयितुं शक्यते इति शङ्कितुराशयः।

समाधानं तु – वृत्त्यनियामकसंबन्धस्य अभावप्रतियोगितावच्छेदकत्वा-नङ्गीकारात् स्वत्वस्य वृत्त्यनियामकत्वात् स्वत्वसंबन्धावच्छिन्नप्रतियोगिताक-चैत्राभावस्याप्रसिद्ध्या तादृशाभावबोधनं 'न चैत्रस्ये'त्यादौ अशक्यम्। अतः चैत्रनिरूपितस्वत्वाभाव एव बोधनीयः। स च बोधः सुबर्थस्य प्रकृत्यर्थ-विशेष्यत्वे एव सङ्गच्छत इति भावः।

***नामार्थप्रतियोगिकस्येति।*** किञ्च प्रातिपदिकार्थप्रतियोगिकः अभावः अनुयोगिवाचकपदे सप्तमीविभक्तिसत्त्वे एव बोध्यते। यथा 'भूतले न घटः' इत्यादौ भूतलानुयोगिकः घटाभावः। 'चैत्रस्येदं न मैत्रस्ये'त्यादौ अनुयोगिवाचकपदस्य प्रथमान्ततया तत्र नामार्थाभावः बोधयितुमशक्यः। प्रत्ययार्थाभावबोधे तु

द्वयोरिदं नेदमेकस्येत्यादावगतेश्च। तथाहि– स्वत्वस्य विशेष्यत्वे स्वनिरूपकनिष्ठ–भेदाप्रतियोगिनिरूपितं यत् स्वत्वं तदभावो धननिष्ठः तत्र प्रतीयते। अप्रतियोग्यन्तमेकपदार्थः। सर्वत्र समभिव्याहृतपदार्थसंसर्गिनिष्ठभेदाप्रतियोगित्वरूपसजातीयद्वितीयरहितत्वस्यैकपदार्थत्वात् स्वत्वं षष्ठ्यर्थः। तथाविधं चैकमात्रनिरूपितं स्वत्वं न तूभयनिरूपितं तन्निरूपकस्यैकपुरुषस्य तन्निरूपकपुरुषान्तरनिष्ठभेदप्रतियोगितया तथाविधभेदाप्रतियोग्यप्रसिद्धेरिति तादृशस्वत्वाभाव

---

अनुयोगिनि सप्तमी नापेक्षिता इति भावः।

***वृत्त्यनियामकसंबन्धस्ये***त्यादिग्रन्थस्यायं प्रघट्टकार्थः– वृत्त्यनियामकसंबन्ध–स्याभावप्रतियोगितावच्छेदकत्वे अनुयोगिनि सप्तम्या अनपेक्षणेऽपि च चैत्रस्येदं न मैत्रस्येत्यादौ न चैत्रस्येति नापत्तिः। स्वत्वसंबन्धावच्छिन्नचैत्रनिष्ठ–प्रतियोगिताकस्याभावस्य चैत्रीयधनेऽभावात् यत्र चैत्रस्येति व्यवहारः तत्र न चैत्रस्येतिव्यवहारापत्त्यसंभवात्। तथापि द्वयोरिदं नैकस्येदमित्यादावगतिः। तथा हि– यदा स्वत्वं षष्ठ्यर्थः, स च प्रकृत्यर्थस्य विशेष्यः तदा स्वनिरूपकनिष्ठभेदाप्रतियोगि एकपदार्थः। तस्य निरूपितत्वसंबन्धेन षष्ठ्यर्थस्वत्वेऽन्वयः। स्वत्वस्य नञर्थेऽभावे प्रतियोगितासंबन्धेनान्वयः। अभावस्येदंपदार्थे धनेऽन्वयः। द्वयोरिति षष्ठ्यन्तार्थः उभयनिरूपितस्वत्वम् तस्येदंपदार्थेऽन्वयः। तथा च उभयनिरूपितस्वत्ववदिदं स्वनिरूपकनिष्ठ–भेदाप्रतियोगिनिरूपितस्वत्वाभाववदिति बोधः। तत्र एकपदोत्तरषष्ठ्यर्थस्वत्वं एकमात्रनिरूपितस्वत्वमेव। न तूभयनिरूपितस्वत्वम्। तस्य स्वनिरूपकनिष्ठभेदा–प्रतियोग्यप्रसिद्ध्या प्रकृत्यर्थनिरूपितत्वबाधात्। तथा हि– उभयनिरूपितस्वत्वस्य निरूपकः चैत्रः तन्निष्ठो यो भेदः मैत्रभेदः तत्प्रतियोगिमैत्रनिरूपितं, एवं तस्य निरूपकः मैत्रः तन्निष्ठभेदप्रतियोगिचैत्रनिरूपितं च चैत्रमैत्रोभयनिरूपितं स्वत्वं भवतीति स्वनिरूपकनिष्ठभेदाप्रतियोगिरूपप्रकृत्यर्थनिरूपितत्वं तत्र बाधितम्। चैत्ररूपैकमात्रनिरूपितस्वत्वं तु स्वनिरूपकचैत्रनिष्ठभेदाप्रतियोगिचैत्रनिरूपितं भवतीति न बाधः। तथा च एकमात्रनिरूपितस्वत्वाभावः उभयनिरूपितस्वत्ववति धनेऽस्तीति वाक्यार्थस्य सङ्गतिः। यदा तु स्वत्वसंबन्धेन एकपदार्थस्याभावः नञा बोध्यते, तदा एकपदार्थाप्रसिद्धिः। एकपदार्थो हि स्वस्वामिनिष्ठभेदा–प्रतियोगी। तत्र स्वपदेन अनुयोगिन उभयस्वामिकधनस्य ग्रहणे

उभयधने अबाधितः। स्वत्वसम्बन्धेन एकपदार्थस्याभावो यदि नञा बोध्यते तदा तु स्वस्वामिनिष्ठभेदाप्रतियोग्येकपदार्थो वाच्यस्तत्र यदि स्वमभावस्यानुयोगिधनम् तदाऽप्रसिद्धिः। प्रमेयमात्रस्यैवोभयस्वामिकं यद्धनं तत्स्वामिनिष्ठभेदप्रतियोगित्वात्, यदि धनान्तरमेकमात्र-निरूपितस्वत्ववत् तदा तस्य समभिव्याहृतपदार्थत्वाभावादेकपदस्य तादृशार्थसम्बन्धि-निष्ठभेदाप्रतियोगिबोधकत्वव्युत्पत्तिभङ्गः। एकमात्रस्वत्ववद्धनान्तरस्वामिचैत्रमैत्रोभयधने नेदमेकस्येति व्यवहारानुपपत्तिश्च। एतदभिप्रायेणैव द्वयोरिदमित्याद्यनुसृतम्।

---

तत्स्वामिनिष्ठभेदप्रतियोगित्वस्य उभयघटकप्रत्येकव्यक्तिनिष्ठत्वेन सुतरां स्वस्वामिनिष्ठभेदाप्रतियोगिनोऽप्रसिद्धेः। स्वपदेन प्रमेयमात्रनिष्ठत्वात् एकमात्रनिरूपितधनान्तरस्य ग्रहणे एकपदार्थप्रसिद्धावपि तस्य समभिव्याहृत-पदार्थत्वाभावेन एकपदस्य स्वसमभिव्याहृतपदार्थसम्बन्धिनिष्ठभेदा-प्रतियोगिबोधकत्वमिति व्युत्पत्तिविरोधः। अतः स्वत्वं विभक्त्यर्थः। तदभाव एव नञा बोध्यत इति स्वीकार्यम्। एकपदसमभिव्याहृतषष्ठ्यर्थः स्वत्वम्। तत्संबन्धि (तन्निरूपक) निष्ठभेदाप्रतियोगिबोधकतया एकशब्दस्य व्युत्पत्तिविरोधोऽपि नास्तीति। ***स्वनिरूपकेति। स्वं*** – विशेष्यभूतं स्वत्वम्। ***तत्र प्रतीयत*** इति। ***तत्र*** –उभयस्वामिकधने। ***सर्वत्रेति।*** अयमेको गच्छतीत्यादौ समभिव्याहृतपदार्थः गमनकर्तृत्वम्। तत्संसर्गी इदंपदार्थः। तन्निष्ठभेदाप्रतियोगित्वस्य चैत्रे सत्त्वात् इत्यर्थः। तथा च स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नउद्देश्यतानिरूपित – विधेयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवन्निष्ठभेदाप्रतियोगित्वावच्छिन्ने एकपदस्य शक्तिः। ***स्वं*** – एकपदम्। ***तथाविधं चेति।*** स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपितं चेत्यर्थः। ***तन्निरूपकस्येति*** – उभयनिरूपितस्वत्वनिरूपकस्येत्यर्थः। ***तथाविधभेदेति।*** स्वनिरूपकनिष्ठभेदेत्यर्थः। ***तादृशस्वत्वाभावेति।*** एकमात्रनिरूपितस्वत्वाभावेत्यर्थः। ***अबाधित*** इति। तथा च उभयनिरूपितस्वत्ववदिदं स्वनिरूपकनिष्ठभेदा-प्रतियोगिनिरूपितस्वत्वाभाववदिति 'द्वयोरिदं, नेदमेकस्य' इति वाक्याद्बोधः स्वत्वस्य विशेष्यत्वपक्षे। स्वत्वस्य संसर्गत्वपक्षे अगतिं दर्शयति- ***स्वत्वसंबन्धेनेत्यादिना। स्वस्वामिनिष्ठेति।*** निरूपकपदस्थाने स्वामिपदं योजनीयम् इति भावः। ***तत्रेति।*** एकपदार्थघटकमित्यर्थः। ***प्रमेयमात्रस्यैवेति।*** अस्य प्रतियोगित्वादित्यनेन अन्वयः। ***यदीति।*** स्वमिति अनुवर्तते। ***व्युत्पत्तिभङ्ग*** इति। इदंपदेन तस्य अबोधनादिति भावः।

**चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुयोगिनि सप्तमीं सुबर्थस्याप्यभावान्वयात्।**

इदमत्रावधेयम्। नेदमेकस्येत्यत्र स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपित-यत्किञ्चित्स्वत्वस्याभावबोधने एकमात्रधनेऽपि तथाविधधनान्तरनिष्ठस्वत्वाभावसत्त्वा-त्तादृशप्रयोगप्रसङ्गः। तादृशस्वत्वसामान्यस्य चैकाभावो न सम्भवति। प्रतियोगितावच्छेदकस्य स्वत्वघटितत्वेनाननुगमात् अभावकूटस्य चासर्वज्ञदुर्ज्ञेयत्वमित्येकत्वसंख्यावच्छिन्न एकपदार्थः। तदन्वितस्वत्वस्य चोभयस्वत्वानिरूपितविशेषणताविशेषेण स्वत्वस्य समवेतत्वे तादृशसमवायेन वाऽभावः प्रतीयत इत्युपगन्तव्यम्, तथा च उभयानिरूपितस्वत्वसम्बन्धेन प्रकृत्यर्थाभावबोधोऽपि सम्भवति। उभयानिरूपितत्वं च स्वनिरूपितत्वस्वभिन्ननिरूपितत्वोभयसम्बन्धेन किञ्चिद्विशिष्टं यत्तदन्यत्वमिति।

---

यदि संबन्धभूतस्वत्वाश्रयस्वामिनिष्ठभेदाप्रतियोगि एकपदार्थः तदाप्याह—**एकमात्रेति।** किञ्चिद्धनं प्रत्येकासाधारणम्। किञ्चिच्च उभयसाधारणम्। तत्र असाधारणधननिष्ठस्वत्वाश्रयस्वामिनिष्ठभेदाप्रतियोगी एकोऽपि भवति। स्वत्वसंबन्धेन तदभावः उभयधने वाधित इति तत्र नेदमेकस्येति व्यवहारानुपपत्तिरिति भावः। ननु एतावता षष्ठ्यर्थस्य प्रकृत्यर्थविशेष्यतया भानसिद्धावपि पञ्चम्यर्थहेतुत्वस्य तथा भानं नायातम् इत्यत आह दीधितौ—**इत्यादाविति।** आदिपदेन 'पर्वतो वह्निमान् धूमात्, न तु जलात्' इति स्थलस्य परिग्रहः। तत्र वह्नौ जलज्ञाप्यत्वाभावबोधानुसारेण ज्ञाप्यत्वस्य पञ्चम्यर्थत्वं प्रकृत्यर्थं प्रति विशेष्यत्वं च आवश्यकमिति भावः।

**इदमत्रावधेयमित्यादि।** नेदमेकस्येत्यत्र एकपदस्य स्वनिरूपकनिष्ठ-भेदाप्रतियोगीति अर्थं स्वीकृत्य तन्निरूपितषष्ठ्यर्थस्वत्वाभावः नञा बोध्यते इति स्वीकारे अनुपपत्तिरस्ति। तथा हि– स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपित-यत्किञ्चित्स्वत्वाभावः बोध्यते वा, तादृशस्वत्वसामान्याभावः बोध्यते वा। आद्ये एकमात्रस्वामिकधनेऽपि धनान्तरनिष्ठस्वत्वाभावसत्त्वात् नेदमेकस्येति प्रयोगापत्तिः। तादृशस्वत्वसामान्यस्य च एकः अभावः न सम्भवति। स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपितस्वत्वत्वस्य प्रतियोगितावच्छेदकस्य स्वत्वघटितत्वेन अननुगमात् प्रतियोगितावच्छेदकभेदेन तदवच्छिन्न-प्रतियोगिताकाभावस्य भेदावश्यंभावात्। यदि तु प्रतियोगितावच्छेदकभेदभिन्नस्वत्वा-

ननु स्वत्वस्य विशेष्यत्वेऽपि नेदं मैत्रस्येत्यादितः कथं स्वत्वसंसर्गाभावबोधः। संसर्गाभावबोधमात्र एव नञाऽनुयोगिनि सप्तम्यपेक्षणादित्यत आह – **चैत्रो न पचतीति।** यथाश्रुतलिङ्गाविषयकत्व-नामार्थप्रतियोगिकाभावबोध एवानुयोगिनस्सप्तम्यपेक्षणादिति भावः।

---

भावकूटस्य नञा बोधः तदा असर्वज्ञदुर्ज्ञेयत्वमिति दोषः। तस्मात् एकपदस्य स्वनिरूपकनिष्ठभेदाप्रतियोगी नार्थः। किन्तु एकत्वविशिष्टसंख्या एवार्थः। तन्निरूपितस्य षष्ठ्यर्थस्वत्वस्य उभयनिरूपितस्वत्वानिरूपितविशेषणता-विशेषसंबन्धावच्छिन्नप्रतियोगिताकाभावः नञा बोध्यते। स्वत्वस्य समवेतत्वे तु उभयस्वत्वानिरूपितसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावः बोध्यत इत्यङ्गीकरणीयम्। एवमेव स्वत्वस्य संसर्गतावादिनापि उभयानिरूपितस्वत्वसंबन्धेन प्रकृत्यर्थस्य एकत्वसंख्याविशिष्टस्य अभावः नञा बोध्यत इति स्वीकारे 'उभयोरिदम्, नेदमेकस्य' इति प्रयोगः उपपद्यत एव। तथा च दीधितिकारीयं स्वत्वसंसर्गतादूषणम् असङ्गतमिति गदाधरभट्टाचार्यणामाशयः। अतः वृत्तिनियामकसंबन्धस्य अभावप्रतियोगितावच्छेदकत्वमसङ्गतमिति स्वीकृत्य वा व्युत्पत्तिवादोक्तयुक्त्यन्तरैर्वा स्वत्वस्य संसर्गत्वं दूषयित्वा विभक्त्यर्थत्वं स्थापनीयम्।

***उभयानिरूपितत्वञ्चेति।*** चैत्रमैत्रोभयस्वामिकधननिष्ठं स्वत्वम् स्वनिरूपितत्वस्वभिन्नमैत्रनिरूपितत्वोभयसंबन्धेन चैत्रविशिष्टं भवति। तदन्यत् चैत्रमात्रस्वामिकधननिष्ठं स्वत्वम्।

**ननु स्वत्वस्येति।** स्वत्वस्य षष्ठ्यर्थत्वं स्वीकृत्य प्रकृत्यर्थ-विशेष्यत्वाङ्गीकारेऽपि 'नेदं मैत्रस्य' इति वाक्यात् मैत्रनिरूपितस्वत्वाभावबोधः कथं भवितुमर्हति। संसर्गाभावविषयकबोधं प्रति अनुयोगिवाचकपदे सप्तमीविभक्तेः अपेक्षणात् प्रकृते अनुयोगिवाचकस्य इदंपदस्य प्रथमान्तत्वात् इति शङ्का। समाधानं तु दीधितौ **चैत्रो न पचतीत्यादा**वित्यादिना कथ्यते। चैत्रपदस्य अनुयोगिवाचकस्य प्रथमान्तत्वेऽपि तिङर्थकृतेः अभावः यथा नञा बोध्यते, तथा अनुयोगिनि सप्तमीं विनापि सुबर्थस्य स्वत्वस्याभावः बोधयितुं शक्य इति।

***स्वत्वसंसर्गाभाव*** इति। स्वत्वप्रतियोगिकः संसर्गाभावः। अन्योन्याभावभिन्नोऽभावः अत्यन्ताभाव इति यावत्। ***नामार्थप्रतियोगिकाभावबोध***

**हेतुविषयकज्ञानजनकत्वव्याप्यावयवतावच्छेदकरूपशून्यत्वे सत्युदाहरणान्य-न्यायावयवत्वं तत्त्वम्। तादृशावच्छेदकं** हेतुत्वादिकमिति **केचित्।**

---

निवेशे गन्धवतीतरेभ्यो भिद्यते गन्धादित्यादावव्याप्तिं प्रकारान्तरेण वारयतां मतमाह-**हेतुविषयकेति।** कासांचित्प्रतिज्ञानां हेतुविषयकज्ञानजनकत्वेऽपि प्रतिज्ञात्वस्य

---

***एवेति*** एवकारेण विभक्त्यर्थप्रतियोगिकाभावबोधस्य व्यवच्छेदः।

***हेतुविषयकेति*** दीधितिमवतारयति-***यथाश्रुतेति।*** लिङ्गविषयकज्ञानजनकत्व-मित्युक्तौ 'गन्धवती इतरेभ्यो भिद्यते गन्धात्' इत्यादौ 'गन्धवती इतरभिन्ना' इत्याकारके प्रतिज्ञाजन्यबोधे गन्धरूपलिङ्गविषयकत्वस्यैव सत्त्वात् प्रसक्ता अव्याप्तिः लिङ्गपदस्य लिङ्गत्वपरतामाश्रित्य दीधितिकारैः परिहृता। अथ प्रकारान्तरेण तां परिहरतां मतमाह-**हेतुविषयकेत्यादिना।** हेतुविषयक-ज्ञानजनकत्वव्याप्यानि यानि अवयवतावच्छेदकरूपाणि तच्छून्यत्वे सति उदाहरणान्यत्वे सति न्यायावयवत्वं प्रतिज्ञायाः लक्षणम्। हेतूपनयनिगमनवाक्यानि हेतुविषयकबोधजनकानि तज्जन्यबोधेषु 'हेतुनिष्ठं हेतुत्वं' साध्यव्याप्यहेतुमान् पक्षः''साध्यव्याप्यहेतुमत्त्वात् साध्यवानयम्' इत्याकारकेषु नियमेन हेतोरपि विषयत्वात्। तथा च हेतुविषयकज्ञानजनकत्वव्याप्यानि अवयवतावच्छेदकरूपाणि हेतुत्व-उपनयत्व- निगमनत्वानि तच्छून्यत्वं प्रतिज्ञायामस्तीति लक्षणसमन्वयः। अवयवतावच्छेदकरूपे हेतुविषयकज्ञानजनकत्वसमानाधिकरणत्वमात्रनिवेशे 'गन्धवती इतरेभ्यो भिद्यते' इति प्रतिज्ञायां गन्धरूपहेतुविषयकज्ञानजनकत्वसत्त्वात् प्रतिज्ञात्वस्य च सत्त्वात् प्रतिज्ञात्वं हेतुविषयकज्ञानजनकत्वसमानाधिकरणम्। तच्छून्यत्वं च प्रतिज्ञायां नास्तीति असंभवः स्यात्। तद्वारणाय समानाधिकरणत्वमुपेक्ष्य व्याप्यत्वनिवेशः। तन्निवेशे च हेतुविषयकज्ञानजनकत्वशून्येषु 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञावाक्येष्वपि प्रतिज्ञात्वसत्त्वेन प्रतिज्ञात्वं न हेतुविषयक-ज्ञानजनकत्वव्याप्यम्। अपि तु हेतुत्वादिकमेव। तच्छून्यत्वं प्रतिज्ञायामस्तीति नासंभवः।

रूपे अवयवतावच्छेदकत्वानिवेशे 'धूमात् आलोकवान् पर्वतो वह्निमान्' इति हेतुविषयकप्रतिज्ञानिष्ठतत्प्रतिज्ञात्वरूपः धर्मः हेतुविषयकज्ञानजनकत्वव्याप्यः।

हेतुविषयकज्ञानजनकत्वानियतत्वात्तन्नियतन्यायावयवतावच्छेदकानि हेतुत्वोपनयत्व-निगमनत्वान्येव न तु प्रतिज्ञात्वमिति नाव्याप्तिः। हेतुबोधकप्रतिज्ञानिष्ठतत्प्रतिज्ञात्वादेस्तादृशज्ञान-जनकत्वनियतत्वादव्याप्तितादवस्थ्यमतोऽवयवतावच्छेदकेति। अभावहेतुकव्यतिरेक्युदाहरणस्य लिङ्गाविषयकज्ञानजनकस्य सम्भवादुदाहरणत्वस्य तादृशज्ञानजनकत्वानियतत्वादुदाहरणा-तिव्याप्तिरत ***उदाहरणान्येति।*** प्रतिज्ञात्वादेर्हेतुपक्षसाध्यभेदेन भिन्नत्वाद्गन्धवतीतरेभ्यो भिद्यते गन्धादित्यादावव्याप्तिः तदवस्थैव। तादृशप्रतिज्ञानिष्ठप्रतिज्ञात्वस्य हेतुविषयकज्ञानजनकत्व-

---

तच्छून्यत्वं तत्प्रतिज्ञायां नास्तीति अव्याप्तिः स्यात्। अवयवतावच्छेदकत्वनिवेशे तु तत्प्रतिज्ञात्वं न अवयवतावच्छेदकम्। किन्तु प्रतिज्ञात्वसामान्यमेव। तत्तु हेतुविषयकज्ञानजनकत्वव्याप्यं न भवति, किन्तु हेतुत्वादिकम्। तच्छून्यत्वं हेतुबोधकप्रतिज्ञायामप्यस्तीति नाव्याप्तिः।

'ह्रदः निर्धूमः निर्वह्नेः' इत्यादि अभावहेतुकस्थले 'यत्र धूमः तत्र वह्निः' इति व्यतिरेक्युदाहरणस्य लिङ्गाविषयकज्ञानजनकस्यापि सद्भावात् उदाहरणत्वसामान्यं न हेतुविषयकज्ञानजनकत्वव्याप्यम्। किन्तु हेतुत्वादिकमेव। तच्छून्यत्वं उदाहरणेऽस्तीति तत्र अतिव्याप्तिः स्यात्। तद्वारणाय उदाहरणान्यत्वनिवेशः। दीधितौ– ***तादृशावच्छेदकमिति।*** हेतुविषयकज्ञानजनकत्वव्याप्यावयवता-वच्छेदकमित्यर्थः। गादाधर्या–***कासांचित् प्रतिज्ञानामिति।*** 'गन्धवती इतरेभ्यो भिद्यते' इत्यादिप्रतिज्ञानामित्यर्थः। ***अनियतत्वात्*** इति। अव्याप्यत्वात् इत्यर्थः। ***तन्नियतेति।*** हेतुविषयकज्ञानजनकत्वव्याप्यानि न्यायावयवतावच्छेदकानि इत्यर्थः। ***हेतुबोधकप्रतिज्ञेति।*** 'धूमात् आलोकवान् पर्वतो वह्निमान्' इत्यादिप्रतिज्ञेत्यर्थः। ***तादृशज्ञानेति।*** हेतुविषयकज्ञानेत्यर्थः। ***अभावहेतुकव्यतिरेक्युदाहरणस्येति।*** 'ह्रदः निर्धूमः निर्वह्नेः' इत्यत्र 'यत्र धूमः तत्र वह्निः' इत्युदाहरणस्येत्यर्थः।

'केचित्' इत्यनेन सूचितम् अस्वरसं आह–***प्रतिज्ञात्वादेः*** इत्यादिना। पक्षसाध्यहेतुभेदेन प्रतिज्ञात्वादिकं भिन्नभिन्नम्। सकलप्रतिज्ञादिसाधारणम् अनुगतं प्रतिज्ञात्वादिकं दुर्वचम्। तथा च 'गन्धवती इतरेभ्यो भिद्यते, गन्धात्' इत्यादौ प्रतिज्ञायामव्याप्तिः तदवस्थैव। तादृशप्रतिज्ञानिष्ठतत्प्रतिज्ञात्वस्य हेतुविषयकज्ञानजनकत्वव्याप्यत्वात् तच्छून्यत्वस्य च तत्रत्यप्रतिज्ञायाम् अभावात्।

यदि तु हेतुसाध्यादिभेदेन प्रतिज्ञात्वादीनाम् न भेदः किन्तु अभेद एव

**हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा।**

---

**हेत्वभिधानेति जिज्ञासाजनकत्वं तद्योग्यता। *वाक्यत्वम्* - न्यायावयवत्त्वम्।**

---

नियतत्वात्। हेत्वादिभेदेन प्रतिज्ञात्वाद्यभेदे तु प्रकृतहेतुविषयकज्ञानजनकत्वनियतावयवता-वच्छेदेकस्यैवाप्रसिद्धिर्नानाहेतुकहेत्ववयवादिसाधारणहेतुत्वादेरप्यतथात्वादित्यस्वरससूचनाय ***केचिदिति।***

जिज्ञासाफलोपधायकत्वस्याव्याप्तिमाशंक्याह–***जिज्ञासेति।*** उदासीनातिव्याप्तिवारणाय न्यायावयवत्वस्यावश्यं निवेशनीयतया वाक्यभिन्नातिव्याप्त्यप्रसक्तेर्वाक्यपदोपादानमनर्थक-मित्याशङ्कायां वाक्यपदस्यैव न्यायावयवार्थकतामाह ***वाक्यत्वमिति।***

---

इत्याग्रहः तदा प्रकृतहेतुविषयकज्ञानजनकत्वनियतावयवतावच्छेदकम् अप्रसिद्धम्। प्रकृतहेतुविषयताज्ञानजनकत्वशून्ये प्रकृतसाध्यसाधकहेत्वन्तरबोधकवाक्येऽपि हेतुत्वसद्भावात् इति अस्वारस्यं सूचयितुं दीधितौ ***'केचित्'*** इत्युक्तमिति भावः।

मणौ ***हेत्वभिधाने***त्यादिना प्रतिज्ञायाः लक्षणान्तरमुक्तम्। हेतुवाक्यकथनस्य हेतुभूता या जिज्ञासा कुतः इत्याकारकाकाङ्क्षा तज्जनकवाक्यं प्रतिज्ञा। प्रतिज्ञावाक्यात् पर्वतो वह्निमानिति बोधानन्तरं कुतो वह्निमानित्याकाङ्क्षा जायते, ततो हेतुवाक्यं प्रयुज्यते। तथा च हेतुवाक्यप्रयोगहेतुभूता या जिज्ञासा तज्जनकत्वं प्रतिज्ञायामस्तीति लक्षणसमन्वयः। यादृशप्रतिज्ञाजन्यबोधानन्तरं कुत इति जिज्ञासा न जायते तादृशप्रतिज्ञायां जिज्ञासोपधायकत्वविरहादव्याप्तिरित्यालोच्य जिज्ञासाजनकत्वं तद्योग्यतेत्युक्तं दीधितौ। हेत्वभिधानप्रयोजकजिज्ञासाजनकता-वच्छेदकानुपूर्वीमत्त्वमिति फलितोऽर्थः। ***उदासीनेत्यादि।*** प्रतिज्ञावाक्यसमानाकारके न्यायानन्तर्गते प्रतिज्ञावाक्येऽतिव्याप्तिवारणाय न्यायावयवत्त्वमवश्यं निवेश्यम्। वाक्यातिरिक्तस्य च वाक्यसमुदायरूपन्यायावयवत्त्वाभावादेवातिव्याप्त्य-प्रसक्तेर्वाक्यपदं व्यर्थमित्याशङ्क्य मूलस्थं वाक्यपदमेव न्यायावयवार्थकम्। अतः पृथक् न्यायावयवत्त्वं न निवेश्यत इत्याशयेन ***वाक्यत्वं न्यायावयवत्त्वमित्युक्तं*** दीधिताविति भावः।

**लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयववाक्यत्वं वा। इतरावयवानां लिङ्गविषयकज्ञानजनकत्वादिति।**

---

लिङ्गेत्यादि लिङ्गाविषयकेति **पूर्वोपदर्शितार्थकम्। अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गि इति। लिङ्गि साध्यं तद्विशेष्यकं तद्वद्विशेष्यकम्।**

---

गन्धवतीतरेभ्यो भिद्यते गन्धादित्यादावव्याप्तिवारणाय ***लिङ्गाविषयकेतीति। पूर्वोपदर्शितार्थकमिति।*** साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्न-पक्षविषयताबहिर्भूतलिङ्गविषयताशून्यार्थकमित्यर्थः। ***अभावहेतुकेति।*** वह्न्यभावहेतुकेत्यर्थः। यो धूमवान् स वह्निमानित्युदाहरणस्य लिङ्गाविषयकत्वादिति भावः। भावहेतुकस्य व्यतिरेक्युदाहरणस्य हेत्वभावत्वेनैव व्यतिरेकबोधकतया न लिङ्गाविषयकत्वसम्भवः। एवमभावहेतुकस्यान्वय्युदाहरणस्य न तथात्वसम्भवः इत्यभावहेतुकत्वव्यतिरेकित्वानुधावनम्।

---

***लिङ्गाविषयकेत्यादिना*** मणिग्रन्थेन प्रतिज्ञायाः लक्षणान्तरमुक्तम्। लिङ्गाविषयकं साध्यविषयकं च यत् ज्ञानं तज्जनकत्वे सति न्यायावयवत्वं प्रतिज्ञायाः लक्षणम्। साध्यविषयकज्ञानजनकत्वस्योदाहरणादावपि सद्भावात् तत्रातिव्याप्तिवारणाय ***लिङ्गाविषयकेत्युक्तम्।*** अभावहेतुकव्यतिरेक्युदाहरणे 'ह्रदो निर्धूमो निर्वह्नेरि'त्यत्र 'यो धूमवान् स वह्निमानि'त्याकारके वह्न्यभावरूपलिङ्गाविषयक-बोधजनकत्वसत्त्वात् तत्रातिव्याप्तिवारणाय साध्यविषयकत्वनिवेशः। तस्योदाहरणस्य धूमाभावरूपसाध्यविषयकबोधजनकत्वं नास्तीति नातिव्याप्तिः।

लिङ्गिविषयकमित्यस्य साध्यविषयकमिति यथाश्रुतार्थं परित्यज्य साध्यवद्विशेष्यक- मित्यर्थकथनस्य प्रयोजनं **तेनेदं जलमित्यादिना** दीधितौ प्रदर्शितम्। इदंपदार्थः पक्षः जलत्वं साध्यम्। निःस्नेहत्वप्रकारकप्रमाविशेष्यत्वाभावो हेतुः। निःस्नेहत्वं स्नेहाभावः। स्नेहवति जले स्नेहाभाववदिदमिति प्रमा न संभवतीति स्नेहाभावप्रकारकप्रमाविशेष्यत्वाभावो जलेऽस्ति। हेतोः पक्षमात्रवृत्तित्वात् केवलव्यतिरेक्यनुमानमेतत्। तत्र 'यन्न जलं तत् स्नेहाभावप्रकारकप्रमाविषय' इति व्यतिरेक्युदाहरणम्। तज्जन्यबोधे स्नेहाभावप्रकारकप्रमाविशेष्यत्वाभावरूपं लिङ्गं न विषय इति लिङ्गाविषयकत्वमस्ति, जलत्वरूपसाध्यविषयकत्वं चास्तीति तज्जनके तस्मिन्नुदाहरणेऽतिव्याप्तिः। साध्यवन्मुख्यविशेष्यकेत्युक्तौ जलत्ववन्मुख्यविशेष्यकत्वं तस्य बोधस्य नास्ति जलत्ववद्भिन्नस्य यत्पदार्थस्यैव

***लिङ्गि साध्यमिति।*** लिङ्गमस्यास्तीति व्युत्पत्या लिङ्गिपदस्य लिङ्गत्वनिरूपकार्थकत्वादिति भावः। वक्ष्यमाणोदाहरणे साध्यविषयकत्वसत्त्वादतिव्याप्तेराह – ***तद्विषयकत्वमिति।*** ***तद्वद्विशेष्यकम्*** – तद्वन्मुख्यविशेष्यकम् निस्सनेहत्वशून्यत्वं स्नेह एव तद्धेतुत्वे उदाहरणजन्यबोधस्य न लिङ्गाविषयकत्वसंभव इति तत्प्रकारकप्रमाविषयत्वशून्यत्वानुधावनम्। तच्च भावप्रतियोगिकतया अतिरिक्तमिति हृदयम्। जलत्वसन्देहदशायां जलान्यत्वस्य सन्दिग्धतया तत्प्रकारकप्रमाविषयत्वमपि सन्दिग्धमिति तच्छून्यत्वस्य हेतुतया उपन्यासो न सम्भवतीति प्रथमसाध्ये तदुपेक्षितम्। उत्पत्तिकाले जलस्यापि निस्स्नेहतया द्रव्यत्वसाध्यकजलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वहेतुकस्थलान्तरमनुसृतम्। अत्रोक्तयुक्त्या जलत्वसाध्योपेक्षा। यत्तु, जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वमपि लाघवाज्जलत्वस्वरूपमेवेति जलत्वस्य साध्यत्वेनोदाहरणजन्यबोधस्य साध्यविषयकस्य लिङ्गविषयकत्वसम्भव इति

---

मुख्यविशेष्यत्वात् इति नातिव्याप्तिः। अत्र निःस्नेहत्वशून्यत्वस्य हेतुत्वे तस्य स्नेहरूपतया यन्न जलं तन्निःस्नेहमित्युदाहरणस्य प्रतियोगिविधया स्नेहरूपलिङ्गविषयकत्वात् लिङ्गाविषयकत्वाभावान्नातिव्याप्तिसंभव इत्यालोच्य निःस्नेहत्वप्रकारकप्रमाविशेष्यत्वशून्यत्वस्य हेतुत्वानुसरणम्। एवं स्नेहवत्वप्रकारकप्रमाविशेष्यत्वस्य हेतुत्वे तदभावविषयकस्योदाहरणस्य लिङ्गविषयकतया लिङ्गाविषयकत्वाभावादेव नातिव्याप्तिसंभव इति निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावो हेतुरुक्तः।

एवं साध्यवन्मुख्यविशेष्यकत्वाविवक्षायां 'इदं द्रव्यं जलान्यत्वप्रकारक–प्रमाविषयत्वशून्यत्वादि'त्यत्र 'यन्न द्रव्यं तत् जलान्यत्वप्रकारकप्रमाविषय' इत्युदाहरणेऽतिव्याप्तिः।। तज्जन्यबोधे लिङ्गाविषयकत्वसत्त्वात्।

***प्रथमसाध्य*** इति। जलत्वसाध्य इत्यर्थः। ***तदुपेक्षितमिति।*** जलान्यत्वप्रकारक–प्रमाविषयत्वशून्यत्वमुपेक्षितमित्यर्थः। ***निःस्नेहतयेति।*** तथा चोत्पत्तिकालावच्छेदेन जले निःस्नेहत्वप्रकारकप्रमाविषयत्वसत्त्वेन तदभावरूपहेतोरभावात् भागासिद्धिरिति स्थलान्तरानुसरणम् इति भावः। ***उक्तयुक्त्येति।*** साध्यभूतजलत्वस्य सन्दिग्धत्वे जलान्यत्वस्यापि सन्दिग्धतया सन्दिग्धो हेतुरिति युक्त्या। द्रव्यत्वसाध्यकस्थलानुसरणे अन्यैरुक्तं बीजान्तरमनूद्य खण्डयति – ***यत्तु*** इत्यादिना। यथा जलत्वाभावाभावः जलत्वस्वरूपः तथा जलान्यत्वप्रकारकप्रमाविषयत्वाभावोऽपि जलत्वस्वरूपः। अतिरिक्तत्वकल्पनापेक्षया लाघवात्। तथा च जलत्वस्य साध्यत्वे

**तेनेदं जलं निस्नेहत्वप्रकारकप्रमाविषयत्वशून्यत्वात्, इददं द्रव्यं जलान्यत्वप्रकारक-प्रमाविषयत्वशून्यत्वादित्यादौ यन्न जलं तन्निस्नेहत्वप्रकारकप्रमाविषयः इत्युदाहरणे नातिप्रसंङ्गः।**

---

द्रव्यत्वसाध्यकानुधावनिमिति। तन्न, जलाद्यन्यत्वप्रकारकप्रमाविषयत्वशून्यत्वस्य जलत्वस्वरूपत्वे यन्न द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषय इत्युदाहरणजन्यबोधस्याप्यन्यत्वप्रतियोगिता-वच्छेदकतया लिङ्गविषयकत्वेनासङ्गतेः। पूर्ववद्व्याप्त्यविषयकत्वस्य लिङ्गविषयकपदार्थत्वे उदाहरणस्य व्याप्तिबोधकतया तत्र लिङ्गिविषयकत्वविशेषणव्यावृत्तिर्न सम्भवतीत्याशयेन तन्मते स्थलान्तरे व्यावृत्तिमाह। ***लिङ्गेति। पूर्वोक्तेति*** -उक्तानुगतरूपावच्छिन्नेत्यर्थः।

---

उदाहरणजन्यबोधस्य जलत्वरूपसाध्यविषयकस्य तद्रूपलिङ्गविषयकत्वात् लिङ्गविषयकत्वं न सम्भवतीति अतिव्याप्तेः अप्रसक्त्या जलत्वसाध्यमुपेक्ष्य द्रव्यत्वसाध्यकस्थलानुधावनम् इति भावः। ***तन्नेत्यादि।*** जलान्यत्वप्रकारक-प्रमाविषयत्वाभावः यदि जलत्वस्वरूपः तर्हि द्रव्यत्वसाध्यकस्थलानुधावनेऽपि यत् न द्रव्यम् तत् जलान्यत्वप्रकारकप्रमाविषयः इति उदाहरणजन्यबोधे अन्यत्वप्रतियोगितावच्छेदकतया जलत्वरूपलिङ्गविषयकत्वेन लिङ्गविषयकत्वा-भावादेव अतिव्याप्तिवारणसंभवात् साध्यवन्मुख्यविशेष्यकत्वपरतया व्याख्यानस्य असङ्गत्यापत्तेः।

दीधितौ ***नातिप्रसङ्ग*** इति। तथा चोक्तस्थले 'यत् न द्रव्यम् तत् जलान्यत्वप्रकारकप्रमाविषयः' इत्युदाहरणस्य द्रव्यत्वरूपसाध्यविषयकबोध-जनकत्वेऽपि द्रव्यत्ववन्मुख्यविशेष्यकबोधजनकत्वाभावात् नातिव्याप्तिरिति भावः। गादाधर्या-***पूर्ववदित्यादि।*** लिङ्गविषयकत्वं व्याप्त्यविषयकत्वमिति पूर्वलक्षणवत् अत्र लक्षणेऽपि विवक्षायां उदाहरणस्य व्याप्तिविषयकबोधजनकतया व्याप्त्यविषयकबोधजनकत्वाभावात् अतिव्याप्त्यप्रसक्त्या लिङ्गिविषयकत्व-विशेषणव्यावृत्तिः न संभवतीत्याशयेन तथाविवक्षायामपि स्थलान्तरे व्यावृत्तिमाह इत्यर्थः। तथा च हेतुवाक्यस्य व्याप्त्यविषयकबोधजनकत्वात् तत्र अतिव्याप्तिवारणाय लिङ्गिविषयत्वं बोधस्य विशेषणम्। हेतुजन्यबोधस्य साध्यविषयकत्वाभावात् नातिव्याप्तिरिति भावः। ***अनुगतरूपावच्छिन्नेत्यर्थ*** इति। प्रकृतपक्षसाध्यकानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्म-

**लिङ्गिविषयकेत्यस्य पूर्वोक्तव्याप्यत्वाविषयकार्थकत्वे तु हेतुवारणाय लिङ्गीति। लिङ्गिविषयकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भावेण वाच्यम्। तेन वह्निमान् वह्निसामग्रीमत्वात् अयं हेतुरिदं वा हेतुत्वं तत्त्वेन प्रतीयमानत्वादित्यादौ हेतौ नातिप्रसङ्गः।**

---

***हेतुवारणायेति।*** इतरेषां त्रयाणां व्याप्तिविषयकत्वेनैव वारणादिति भावः। ***प्रकृतेति।*** हेतुतावच्छेदकहेतुत्वविषयतानां भेदनिवेशे साध्यस्य हेतुतावच्छेदकादिरूपत्वे हेतुतावच्छेदकादिविषयताभिन्नसाध्यविषयत्वाप्रसिद्ध्याव्याप्तिरिति विशिष्टविषयताबहिर्भावनिवेशः। तादृशविषयताबहिर्भावः पूर्ववन्निर्वाच्यः। न च तादृशविषयताबहिर्भूतविषयतामात्रनिवेशेनैव हेतुवारणसम्भवे साध्यांशनिवेशनं व्यर्थमिति वाच्यम्। तादृशविषयतान्तर्भूतसाध्यविषयता-

---

विशिष्टेत्यर्थः।

***इतरेषां त्रयाणामिति।*** उदाहरणोपनयनिगमनानामित्यर्थः। ***व्याप्तिविषयकत्वे-नैवेति।*** व्याप्तिविषयकबोधजनकत्वेनैवेत्यर्थः।

ननु साध्यवद्विषयकत्वरूपस्य लिङ्गिविषयकत्वस्य निवेशे घटः प्रमेयो द्रव्यत्वादित्यादौ हेतावतिव्याप्तिः। तज्जन्ये द्रव्यत्वनिष्ठं हेतुत्वमिति बोधे प्रमेयत्वरूपसाध्यवतो हेतुत्वस्य विषयत्वादित्याशङ्क्याह–दीधितौ ***लिङ्गिविषयकत्वं चेति।*** तथा च हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्यविषयता-निरूपकबोधजनकत्वं प्रतिज्ञालक्षणम्। उक्तस्थले हेतुवाक्यजन्यबोधीय-हेतुत्वविषयतायाः बहिर्भूतान्तविशेषणविरहान्नातिव्याप्तिरिति भावः।

ननु किं हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भूतत्वनिवेशेन, तद्भिन्नत्वमेव निवेश्यताम्। तथा च हेतुतावच्छेदकविषयताभिन्नत्वे सति हेतुविषयताभिन्नत्वे सति हेतुत्वविषयताभिन्ना या साध्यविषयता तच्छालिबोधजनकत्वं प्रतिज्ञात्वमित्याशङ्क्य, तथा सति यत्र साध्यमेव हेतुतावच्छेदकं भवति तत्र अयं वह्निमान् वह्निसामग्रीमत्त्वादित्यादौ प्रतिज्ञायामव्याप्तिः। प्रतिज्ञाजन्यबोधीय-साध्यवह्निविषयतायाः हेतुतावच्छेदकविषयताभिन्नत्वविरहात्, अतो बहिर्भूतत्वमेव निवेश्यमित्याह–गादाधर्या ***हेतुतावच्छेदकेति।*** न च साध्यविषयतायां हेतुतावच्छेदकादिविषयताभिन्नत्वनिवेशेऽव्याप्तिप्रसक्तावपि साध्यवद्विषयतायां तन्निवेशे नोक्तदोष इति वाच्यम्। अस्मिन् बहिर्भूतत्वनिवेशपक्षे साध्यविषयताया

भिन्नत्वस्यैवात्र बहिर्भावेणेत्यन्तेन विवक्षिततया दर्शितहेतौ तादृशसाध्यविषयताभिन्न-
भिन्नत्वस्यैवात्र बहिर्भावेणेत्यन्तेन विवक्षिततया दर्शितहेतौ तादृशसाध्यविषयताभिन्न-
हेतुत्वादिविषयतामादायातिप्रसङ्गस्य वारकतया तत्सार्थक्यात्। भेदप्रतियोगिकोटौ निविष्टस्य
साध्यांशस्य चाखण्डाभावघटकतयाऽवैयर्थ्यात्। यत्र च प्रकृतहेतुतावच्छेदकविशिष्टहेतुविशिष्ट-
हेतुत्वविषयतान्तर्भूतसाध्यविषयताया अप्रसिद्धिः तत्र बहिर्भूतत्वान्तमनुपादेयमेव शब्दैक्यस्य
अविवक्षितत्वात् इति नाव्याप्तिः। तादृशविषयतान्तर्भूतत्वसाध्योयत्व उभयाभाव एव वा

---

एव लिङ्गिविषयतापदेन विवक्षितत्वात्। स्पष्टीभविष्यति चेदमुपरिष्टात्।

***पूर्ववन्निर्वाच्य*** इति। प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्व-
विशेष्यताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकत्वं बहिर्भूतत्वमित्यर्थः।
प्रतिज्ञाजन्यबोधीयसाध्यविषयतायां हेतुविशिष्टं हेतुत्वमिति निश्चयनिष्ठा या
हेतुत्वं हेतुविशिष्टं न वेति संशयनिरूपिता प्रतिबन्धकता तदनवच्छेदकत्वसत्त्वात्
लक्षणसमन्वयः।

***न च तादृशविषयतेति।*** तथा च हेतुतावच्छेदकावच्छिन्नहेतुविशिष्ट-
हेतुत्वविषयताबहिर्भूतविषयताशालिबोधजनकत्वं प्रतिज्ञालक्षणमस्तु। साध्यपदं
मास्तु। हेतुवाक्यजन्यबोधे उक्तबहिर्भूतविषयताविरहान्न हेतावतिव्याप्तिः।
प्रतिज्ञाजन्यबोधे तादृशसाध्यविषयतायाः सत्त्वान्नाव्याप्तिरिति भावः। ***विषयतामात्रेति।***
मात्रपदेन साध्यांशनिवेशव्यावृत्तिः। ***तादृशविषयतान्तर्भूतेति।*** तथा च
हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भूतसाध्यविषयताभिन्नसाध्य-
विषयताशालिबोधजनकत्वं प्रतिज्ञालक्षणम्। साध्यपदानुपादाने अयं 'वह्निमान्
वह्निसामग्रीमत्त्वादि'त्यत्र हेतुवाक्यजन्यबोधीयहेतुत्वविषयतायाः हेतुतावच्छेदक-
विशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्गतसाध्यविषयताभिन्नत्वात् तच्छालिबोध-
जनकत्वमादाय तत्रत्यहेतावतिव्याप्तिः प्रसज्यते। साध्यपदोपादाने तु
तदीयसाध्यविषयतायां साध्यविषयताभिन्नत्वविरहान्नातिव्याप्तिः। तथा च
हेतावतिव्याप्तिवारकतया भेदानुयोगिनि साध्यपदसार्थक्यम्। भेदप्रतियोगिकोटौ
साध्यनिवेशस्तु अखण्डाभावघटकतया सार्थकनीय इति भावः।

ननु 'अयं वह्निमान् वह्निसामग्रीमत्त्वादि'त्यादौ हेतुतावच्छेदककोटौ
साध्यस्य प्रवेशात् हेतुतावच्छेदकविशिष्टहेतुविषयतान्तर्भूतायाः साध्यविषयतायाः
प्रसिद्धावपि 'अयं वह्निमान् धूमादि'त्यादौ तदन्तर्भूतायाः साध्यविषयतायाः

बहिर्भावेणेत्यन्तार्थः हेतुतावच्छेदकहेतुहेतुत्वानां निवेशस्य प्रयोजनं क्रमशः प्रदर्शयति - **तेनेति। तत्त्वेनेति-** हेतुत्वेन हेतुत्वत्वेन चेत्यर्थः। हेतुत्वहेतुत्वत्वयोस्तादात्म्यसम्बन्धेन साध्यत्वं बोध्यम्। हेतुत्वावच्छिन्नसाध्यकस्थले हेतुत्वेन प्रमीयमानत्वरूपप्रकृतहेतोरपि साध्यतावच्छेदकाक्रान्ततया हेतुजन्यबोधस्य साध्यविषयकत्वमक्षतमेव, साध्यतावच्छेदक-विशिष्टनिरूपितविषयतापर्यन्तस्य अविवक्षितत्वादिति हेतुविषयताबहिर्भावनिवेशव्यावृत्तिसङ्गतिः।

---

अप्रसिद्ध्या अव्याप्तिरित्याशङ्क्याह - **यत्र चेति।**

सर्वत्र एकशब्दाभिलप्यं लक्षणमाह-**तादृशविषयतान्तर्भूतत्वेति।** तथा च हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयतान्तर्भूतत्वसाध्यनिष्ठत्वोभया-भाववत्साध्यनिष्ठविषयताशालित्वं लिङ्गिविषयकत्वम्। तदाश्रयबोधजनकत्वं प्रतिज्ञालक्षणम्। 'अयं वह्निमान् धूमादि'त्यादौ प्रतिज्ञाजन्यबोधीयसाध्यनिष्ठविषयतायां साध्यनिष्ठत्वसत्त्वेऽपि उक्तहेतुत्वविषयतान्तर्भूतत्वविरहात् उभयाभावोऽस्तीति तच्छालिबोधजनकत्वात् लक्षणसमन्वयः। 'अयं वह्निमान् वह्निसामग्रीमत्त्वादि'त्यादौ हेतुवाक्यजन्यबोधीयवह्निनिष्ठविषयतायामुभयमेवास्ति नोभयाभाव इति प्रतिज्ञाजन्यबोधीयसाध्यविषयतैव उभयाभाववती तच्छालिबोधजनकत्वं न हेताविति नातिव्याप्तिरिति भावः।

**क्रमशः** इति। हेतुतावच्छेदकानिवेशे 'अयं वह्निमान् वह्निसामग्रीमत्त्वादि'त्यत्र हेतुघटकसाध्यविषयतायाः हेतुविशिष्टहेतुत्वविषयताबहिर्भूतत्वात् तच्छालि-बोधजनके हेतावतिव्याप्तिः। तन्निवेशे तु तस्याः हेतुतावच्छेदकविशिष्ट-हेतुविशिष्टहेतुत्वविषयताबहिर्भूतत्वं नास्ति, तच्छालिनिश्चयनिष्ठप्रतिबन्धकता-वच्छेदककोटिप्रविष्टत्वादिति नातिव्याप्तिः। हेतोरनिवेशे हेतुतावच्छेदकविषयता-हेतुत्वविषयताबहिर्भूतत्वमात्रनिवेशे 'अयं हेतुः हेतुत्वेन प्रतीयमानत्वादि'त्यत्र हेतुवाक्येऽतिव्याप्तिः। अत्र तादात्म्येन हेतुः साध्यः। हेतुजन्यबोधीयहेतुत्वेन प्रतीयमानत्वरूपहेतुरूपसाध्यविषयतायाः प्रतीयमानत्वत्वरूपहेतुतावच्छेदक-विषयताहेतुत्वविषयताबहिर्भूतत्वात्। अतः हेतुविषयताबहिर्भावस्यापि निवेशः। तन्निवेशे च उक्तस्थले प्रतीयमानत्वरूपहेतोः हेतुत्वरूपसाध्यतावच्छेदकाक्रान्ततया तद्विषयतायाः साध्यविषयतारूपत्वेऽपि तस्या हेतुविषयताबहिर्भूतत्वविरहान्नातिव्याप्तिः।

हेतुत्वविषयताबहिर्भावानिवेशे 'इदं हेतुत्वं हेतुत्वत्वेन प्रतीयमानत्वादि'त्यत्र

साध्यतावच्छेदकविशिष्टविषयकत्वनि[illegible]व
न च हेतुविषयिताबहिर्भूतत्वनिवेशापेक्षया साध्यतावच्छेदकविशिष्टविषयकत्वनिवेशस्य लाघवेनोचितमिति वाच्यम्। विशिष्टविषयताबहिर्भावे निवेशनीये हेतुविषयताबहि[illegible]स्य स्वातन्त्र्येण अनिवेशनीयतया गौरवानवकाशात्। हेत्वंशमनिवेश्य विशिष्टस्य दुर्निवेशतया हेत्वंशाप्रवेश एव हेतुतावच्छेदकविषयत्वहेतुत्व-विशिष्टनिवेशेनैव तन्निवेशात् एवं च प्रमेयत्वाद्यवच्छिन्नसाधनक-विषयत्वयोर्बहिर्भावस्य पृथङ्निवेशनीयतया गौरवात्। एवं च प्रमेयत्वाद्यवच्छिन्नसाधनक- स्थलेऽपि हेत्वंशनिवेशेन प्रयोजनसम्भवादयं हेतुरित्युपलक्षणपरं बोध्यम्। लिङ्गिविषय[illegible]स्य पूर्ववत्साध्यवद्विशेष्यकार्थकत्वोपगमे वह्निमान्वह्निसामग्रीमत्वादयं हेतुः तत्त्वेन प्रमीयमानत्वात् अनयोरतिप्रसङ्गवारणसम्भवेऽपि इदं हेतुत्वमित्यादौ पञ्चम्यर्थस्य तादात्म्यसम्बन्धेन साध्यवत्तया साध्यप्रकारतानिरूपितविशेष्यतार्थकत्वेऽपि स्वरूपसम्बन्धेन हेतुत्वत्वसाध्यकस्थले निरूपितत्वसम्बन्धेन ज्ञानत्वावच्छिन्नसाध्यकजनकतात्वावच्छिन्नपक्षकस्थले च हेतावतिव्याप्तिवारणं न सम्भवतीति गुरुतरारम्भः।

---

पञ्चम्यर्थहेतुत्वविषयतायां साध्यविषयतारूपायां हेतुतावच्छेदकविशिष्टहेतुविषयता-बहिर्भूतत्वसत्त्वात् तादृशसाध्यविषयताशालिबोधजनकत्वस्य हेतुवाक्ये सत्त्वात् अतिव्याप्तिः। तन्निवेशे च हेतुविषयतायां हेतुत्वविषयताबहिर्भूतत्वविरहान्नातिव्याप्तिरिति भावः।

ननु साध्यविषयतापदेन साध्यतावच्छेदकविशिष्टनिरूपितविषयिता विवक्षिता। 'अयं हेतुः हेतुत्वेन प्रतीयमानत्वात्' इत्यत्र हेतुत्वेन प्रतीयमानत्वविषयकबोधस्य हेतुत्वविशिष्टविषयकत्वविरहात् अतिव्याप्त्यप्रसक्तेः तत्र हेतुविषयताबहिर्भावनिवेशस्य प्रयोजनकथनमसंगतमित्यत आह– ***साध्यतावच्छेदकविशिष्टनिरूपितेति। लाघवेनेति।*** हेतुविषयताशालिनिश्चयत्व-व्यापकप्रतिबन्धकतानवच्छेदकत्वापेक्षया साध्यतावच्छेदकविशिष्ट-साध्यनिरूपितत्वस्य लघुत्वादित्यर्थः।

विशिष्टविषयताबहिर्भावश्च न बहिर्भावत्रयम्, किं तु एक एव। तथा च साध्यतावच्छेदकविशिष्टविषयतानिवेशमते हेतुतावच्छेदकबहिर्भूतत्व-हेतुत्वबहिर्भूतत्वयोरावश्यकत्वेन गौरवमिति एकधा विशिष्टविषयताबहिर्भावनिवेश एव लघुरित्याशयेनाह– ***विशिष्टविषयताबहिर्भावे निवेशनीय*** इति। ***एवं चेति।*** 'अयं प्रमेयः धूमादि'त्यादौ तादात्म्येन प्रमेयसाध्यकस्थले हेतुजन्यबोधीयधूमविषयतायाः

साध्यविषयतारूपायाः धूमत्वविषयता–हेतुत्वाविषयताबहिर्भूतत्वात् तत्र हेतावतिव्याप्तिः, तद्वारणायापि हेतुविषयताबहिर्भावनिवेश इति भावः।

***लिङ्गिविषयकेत्यस्येति।*** तथा च लिङ्गिविषयकेत्यस्य साध्यविषयकेत्यर्थकत्वे यद्यपि 'अयं वह्निमान् वह्निसामग्रीमत्त्वात्,' 'अयं हेतुः हेतुत्वेन प्रतीयमानत्वात्' इति स्थलयोः अतिव्याप्तिः भवति, तथापि साध्यवन्मुख्यविशेष्यकत्वार्थकत्वे हेतुजन्यबोधयोः साध्यवन्मुख्यविशेष्यकत्वविरहान्नातिव्याप्तिः इत्यतः इदं हेतुत्वमिति स्थलान्तरानुसरणम्। अत्र पञ्चम्यर्थहेतुत्वं तादात्म्यसंबन्धेन हेतुत्वरूपसाध्यवदिति पञ्चम्यर्थविशेष्यकबोधस्य साध्यवन्मुख्यविशेष्यकत्वमस्तीति तज्जनके हेतावतिव्याप्तिः प्रसज्यते। तद्वारणाय विशिष्टबहिर्भूतत्वनिवेशः इति भावः।

ननु लिङ्गिविषयकेत्यस्य साध्यनिष्ठप्रकारतानिरूपितविशेष्यताशालीत्यर्थः। इदं हेतुत्वं हेतुत्वत्वेन प्रतीयमानत्वादित्यत्र पञ्चम्यर्थस्य हेतुत्वस्य वस्तुतः साध्यवत्त्वेऽपि तन्निष्ठविशेष्यतायाः साध्यनिष्ठप्रकारतानिरूपितत्वं नास्ति, पञ्चम्यर्थहेतुत्वे हेतुत्वस्याप्रकारत्वादिति नातिव्याप्तिप्रसङ्ग इत्यतः तथा विवक्षायामपि स्थलान्तरेऽतिव्याप्तिवारकतया बहिर्भावनिवेशं सार्थकयति–***साध्यप्रकारतानिरूपितेत्यादिना।*** हेतुत्वं हेतुत्वत्ववत् हेतुत्वत्वेन प्रतीयमानत्वादित्यत्र हेतुवाक्यजन्यबोधे हेतुत्वत्वनिष्ठप्रकारताकप्रतीतिविषयत्वनिष्ठं हेतुत्वमित्याकारके हेतुत्वत्वरूपसाध्यनिष्ठप्रकारतानिरूपिता या तृतीयविभक्त्यर्थे प्रकारत्वे विद्यमाना विशेष्यता तच्छालित्वात् हेतावतिव्याप्तिः। तद्वारणाय विशिष्टविषयताबहिर्भूतत्वनिवेश आवश्यक इति भावः।

ननु साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपित–विशेष्यताशालित्वविवक्षायां नोक्तदोषः प्रसजति, हेतुत्वत्वनिष्ठाधेयत्वसंबन्धा–वच्छिन्नप्रकारतानिरूपितप्रकारत्वनिष्ठविशेष्यताकत्वेऽपि हेतुजन्यबोधस्य स्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताकत्वविरहात् इत्यतः स्थलान्तरमनुधावति–***निरूपितत्वसंबन्धेनेति।*** तथा च 'जनकत्वं निरूपितत्वसंबन्धेन ज्ञानवत् तत्त्वेन प्रतीयमानत्वात्' इति स्थले हेतुवाक्येऽतिव्याप्तिः। तज्जन्यबोधे पञ्चम्यर्थः विशेष्यः। पञ्चम्यर्थश्च हेतुत्वं तच्च ज्ञापकत्वं निरूपितत्वसंबन्धेन

**लिङ्गविषयकज्ञानजनकत्वानियतलिङ्गिविषयकज्ञानजनकत्वनियतावयवतावच्छेदकरूपवत्त्वं तत्त्वमित्यादिकं तु तादृशरूपान्तरापरिचये दुर्ग्रहत्वादनुपादेयम्।**

**इति दीधितौ प्रतिज्ञालक्षणम्।**

---

लिङ्गिविषयतायाः पूर्वोपदर्शितविषयिताया वहिर्भावनिवेशनं लिङ्गपदस्य धर्मपरतां च विनैव लिङ्गबोधकप्रतिज्ञाविशेषेऽव्याप्तिं लिङ्गिपदविषयपदयोः साध्यवद्विशेष्यपरतां विनैव दर्शितव्यतिरेक्युदाहरणेऽतिव्याप्तिं प्रकारान्तरेण वारयतां मतमुपन्यस्य दूषयति–*लिङ्गेति।* निगमनस्योदाहरणस्य च वारणाय नियतान्तद्वयमवयवतावच्छेदकविशेषणम्। प्रतिज्ञात्वोदाहरणत्वयोरपि लिङ्गलिङ्गिविषयकज्ञानजनकत्वसमानाधिकरणतया असम्भवातिप्रसङ्गौ।

---

ज्ञानविशिष्टजनकत्वरूपम्। तद्विषयकबोधस्य ज्ञानरूपसाध्यनिष्ठनिरूपितत्वसंबन्धावच्छिन्नप्रकारतानिरूपितजनकत्वनिष्ठविशेष्यताशालित्वात् तज्जनकत्वस्य हेतुवाक्ये सत्त्वात्। अतस्तत्रातिव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भूतत्वनिवेश इति भावः।

***लिङ्गिविषयिताया*** इति। लिङ्गिविषयितायां हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयिताबहिर्भूतत्वनिवेशनमित्यर्थः। ***धर्मपरतामिति।*** लिङ्गत्वपरतामित्यर्थः। ***लिङ्गबोधकप्रतिज्ञाविशेष*** इति। 'गन्धवती इतरेभ्यो भिद्यते गन्धवत्त्वादि'त्यादिस्थलीयप्रतिज्ञायामित्यर्थः। ***दर्शितव्यतिरेक्युदाहरण*** इति। यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषयः इत्यत्र यन्न द्रव्यं तत् जलान्यत्वप्रकारकप्रमाविषयः इत्यत्र च।

***लिङ्गविषयकेत्यादि।*** लिङ्गविषयकज्ञानजनकत्वाव्याप्यं साध्यवद्विषयकज्ञानजनकत्वव्याप्यं च यत् अवयवतावच्छेदकं रूपं तद्वत्त्वं प्रतिज्ञायाः लक्षणम्। प्रतिज्ञाजन्यबोधे लिङ्गं न नियमेन विषयः, साध्यवांश्च नियमेन विषयः, अतः अवयवतावच्छेदकं प्रतिज्ञात्वं लिङ्गविषयकज्ञानजनकत्वाव्याप्यं साध्यवद्विषयकज्ञानजनकत्वव्याप्यं च भवतीति तद्वत्त्वमादाय प्रतिज्ञायां समन्वयः। निगमनजन्यबोधे नियमेन साध्यवतो विषयत्वात् निगमनत्वं साध्यवद्विषयकबोधजनकत्वव्याप्यं भवतीति तद्वति निगमनेऽतिव्याप्तिः। तद्वारणाय लिङ्गविषयकज्ञानजनकत्वाव्याप्यत्वनिवेशः। तन्निवेशे च निगमनजन्यबोधे नियमेन लिङ्गस्यापि विषयत्वात् निगमनत्वं लिङ्गविषयकबोधजनकत्वव्याप्यं

अतस्सामानाधिकरण्यमुपेक्ष्योभयत्र नियतत्वप्रवेशनम्। उदाहरणविशेषत्वमादायातिप्रसङ्गवारणाय-वच्छेदकान्तम्। आदिपदात्पञ्चमीविभक्तिमत्त्वानियतलिङ्गिविषयकज्ञानजनकत्व नियतावयवता-वच्छेदकरूपवत्त्वादिपरिग्रहः। **रूपान्तरेति।** यद्यपि निरुक्तस्यापि रूपस्यापरिचयादन्तरमनर्थकम्। तथाप्यात्माश्रयभयेन तथाविधरूपान्तरपरिचयोऽपेक्षणीयः। तच्च रूपमनुमित्यन्यूनानतिरिक्त-विषयकशाब्दधीजनकवाक्यत्वादिकमेव। तथा च तस्यैव तद्घटकस्य लक्षणत्व-सम्भवाद्व्यर्थविशेषणता। न च तस्य विशिष्याघटकत्वान्न व्यर्थविशेषणतेति वाच्यम्।

---

न तु तदव्याप्यमिति नातिव्याप्तिः। अभावसाध्यकव्यतिरेक्युदाहरणस्य लिङ्गविषयकज्ञानाजनकतया उदाहरणत्वं लिङ्गविषयकज्ञानजनकत्वाव्याप्यमिति तद्वति उदाहरणेऽतिव्याप्तिः। तद्वारणाय लिङ्गिविषयकज्ञानजनकत्वव्याप्यत्वनिवेशः। तन्निवेशे उदाहरणत्वस्य साध्यवद्विषयकज्ञानजनकत्वव्याप्यत्वं नास्ति। अभावसाध्यकव्यतिरेक्युदाहरणजन्यबोधे साध्यवतोऽभानात् नातिव्याप्तिः।

अव्याप्यत्वस्थाने असामानाधिकरण्यनिवेशे 'गन्धवती इतरेभ्यो भिद्यते गन्धवत्त्वादि'त्यादिस्थलीयप्रतिज्ञाविशेषस्य लिङ्गविषयकबोधजनकतया तत्साधारणं प्रतिज्ञात्वं लिङ्गविषयकबोधजनकत्वसमानाधिकरणमेव भवति, न तु तदसमानाधिकरणमिति असंभवः स्यात्। तद्वारणाय अव्याप्यत्वनिवेशः। लिङ्गविषयकबोधजनकत्वशून्यायां 'पर्वतो वह्निमानित्यादि'प्रतिज्ञायामपि प्रतिज्ञात्वसत्त्वात् प्रतिज्ञात्वं लिङ्गविषयकबोधजनकत्वव्याप्यं न भवतीति तदव्याप्यमेवेति नासंभवः।

एवं साध्यवद्विषयकबोधजनकत्वसामानाधिकरण्यनिवेशे भावसाध्यक-स्थलीयान्वय्युदाहरणस्य साध्यवद्विषयकबोधजनकतया तत्समानाधिकरणम् उदाहरणत्वमिति तद्वति उदाहरणेऽतिव्याप्तिः। अतः सामानाधिकरण्यमुपेक्ष्य व्याप्यत्वोपादानम्। तदुपादाने च साध्यवद्विषयकबोधजनकत्वशून्ये अभावसाध्यकव्यतिरेक्युदाहरणेऽपि उदाहरणत्वसत्त्वेन उदाहरणत्वं न साध्यवद्विषयकबोधजनकत्वव्याप्यमिति नातिव्याप्तिः।

रूपे अवयवतावच्छेदकत्वानिवेशे 'इदं जलं निःस्नेहत्वप्रकारक-प्रमाविषयत्वाभावादि'त्यादौ 'यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषय 'इत्युदाहरणे

**प्रतिज्ञात्वं जातिः अनुगताननतिप्रसक्ततान्त्रिकव्यवहारादिति केचित्; तन्न। देवदत्तप्रभवत्वादिना जातिसङ्करप्रसङ्गात्।**

---

प्रतिज्ञात्वे हेतुत्वादिसाधारणस्यावच्छेदकत्वस्य दुर्घटतया विशिष्यैव तन्निवेशनस्यावश्यकत्वादित्येतल्लाभायान्तरपदम्। अत्र च साध्यादिभेदेनाभिन्नप्रतिज्ञात्वं यद्यवच्छेदकत्वेन निवेश्यते तदा तस्य प्रकृतसाध्यविषयकत्वनियतत्वासम्भवादप्रसिद्धिः। यदि च साध्यादिभेदेन भिन्नं तत् तदा यादृशसाध्यपक्षकप्रतिज्ञायाः प्रकृतलिङ्गबोधकत्वं नियतं तत्राव्याप्तिरित्यपि दूषणं बोध्यम्।

***इति गदाधरीये प्रतिज्ञालक्षणम्।***

---

तदुदाहरणत्वरूपविशेषधर्मस्य लिङ्गविषयकज्ञानजनकत्वाव्याप्यत्वात् साध्यवद्विषयकज्ञानजनकत्वव्याप्यत्वाच्चातिव्याप्तिः। तन्निवेशे तु तदुदाहरणत्वस्य अवयवतावच्छेदकत्वविरहात् नातिव्याप्तिः।

सर्वमिदमभिसन्धायाह– ***निगमनस्योदाहरणस्य चेत्यादिना।*** शिष्टं स्पष्टम्।

केचित्तु साध्यपक्षविशेषघटितं न प्रतिज्ञात्वम्, तथा सति प्रतिज्ञापदस्य नानार्थताप्रसङ्गात्। अपि तु प्रतिज्ञात्वं जातिविशेषः। प्रतिज्ञापदशक्यतावच्छेदकतया तत्सिद्धेरिति वदन्ति। तन्मतं दूषयति मूले ***प्रतिज्ञात्वमिति।*** अत्र प्रतिज्ञात्वं पक्षः। जातित्वं साध्यम्। अनुगताननतिप्रसक्ततान्त्रिकव्यवहारो हेतुः। प्रतिज्ञात्वमित्यस्य प्रतिज्ञापदप्रवृत्तिनिमित्तमित्यर्थः। प्रतिज्ञापदप्रवृत्तिनिमित्तत्वं पक्षतावच्छेदकम्। तच्चोभयवादिसिद्धम्। जातित्वे उपाधित्वे च विवादः। अतो नाश्रयासिद्धिः। जातित्वादिना पक्षस्यासिद्धावपि प्रतिज्ञापदप्रवृत्तिनिमित्तत्वेन सिद्धेः। ***अनुगतेति।*** प्रतिज्ञेत्याकारकहेत्वादिव्यावृत्ततान्त्रिकानुगतबुद्धिजनकत्वादित्यर्थः। ***अनतिप्रसक्त–***पदोपादानं च न्यायबहिर्भूतप्रतिज्ञासमानाकारकवाक्यवारणाय। ***तान्त्रिकेति।*** शक्यतावच्छेदकतैव जातिसाधिका। तान्त्रिकेषु प्रसिद्धो व्यवहारस्तत्र मूलम्।

**देवदत्तप्रभवत्वादिनेति।** देवदत्तप्रभवतावच्छेदकवैजात्येनेत्यर्थः। पुरुषविशेषजन्यतावच्छेदकवैजात्येनेति यावत्। एतादृशं वैजात्यं देवदत्तप्रभवपञ्चाशद्वर्णानुगतम्। तथा चैतत् वैजात्यं विहाय प्रतिज्ञात्वं यज्ञदत्तोच्चरितप्रतिज्ञायाम्, प्रतिज्ञात्वं विहाय निरुक्तवैजात्यमुदासीनवर्णे. देवदत्तोच्चरितप्रतिज्ञायां तदुभयसमावेश इति संकर इति भावः।

प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकवाक्यं प्रतिज्ञेत्यपि न। तज्जनकत्वं जनकत्वज्ञानं वा नानुगतरूपमन्तरेण सम्भवतीत्युक्तस्यानुसरणीयत्वात्।

एतेन शब्दोऽनित्य इति लिङ्गिधीपरवाक्यजन्यज्ञानवृत्तिकृतकत्वा-दित्यादि वाक्यजन्यज्ञानवृत्तिजातिप्रतियोगिज्ञानजनकवाक्यं प्रतिज्ञेति निरस्तम्। ननु प्रतिज्ञा न साधनाङ्गम्। विप्रतिपत्तेः पक्षपरिग्रहे तत्र प्रमाणाकांङ्क्षायां हेत्वभिधानस्य प्राथम्यादिति चेन्न। विप्रतिपत्त्यग्रे हि समयबन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वा आकांङ्क्षायां शब्दानित्यत्वं साध्यम्। न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे। न च वादिवाक्येऽनुपस्थितमपि

---

***व्यवहारादिति।*** विजातीयज्ञानतात्पर्येणैव प्रतिज्ञावाक्यप्रयोगादित्यर्थः। ***तज्जनकमिति।*** विजातीयज्ञानजनकमित्यर्थः। ***उक्तस्येति।*** अस्मदुक्तलक्षणस्येत्यर्थः। ***एतेनेति।*** अनुगतजनकतावच्छेदकरूपं विना तज्जनकत्वतद्ग्रहयोरसंभवेनेत्यर्थः। ***लिङ्गि*** –साध्यवत्पक्षः। साध्यवत्पक्षविषयकज्ञानतात्पर्यकवाक्यजन्यज्ञानवृत्तिः, हेत्वादिवाक्यजन्यज्ञानावृत्तिश्च या जातिः तद्विशिष्टं यत् ज्ञानं तज्जनकं वाक्यं प्रतिज्ञेत्यर्थः। वृत्त्यन्तम् अवृत्त्यन्तं च जातेः परिचायकम्। तेन प्रतिज्ञैकदेशस्य प्रतिज्ञातदितरसमुदायस्य च व्युदासः।

प्रतिज्ञाख्यो न्यायावयवो मास्त्विति शङ्कते–***ननु प्रतिज्ञेति। साधनाङ्गमिति।*** न्यायावयव इत्यर्थः। ***विप्रतिपत्तेः***–विरुद्धकोटिद्वयप्रतिपादकवाक्यद्वयात्। ***पक्षपरिग्रहे***– पक्षे साध्यग्रहे। शब्दानित्यत्वादिकोटिपरिग्रहे सतीति यावत्। *तत्र*–साध्ये, कोटौ। ***प्रमाणाकाङ्क्षायां***– ज्ञापकं किमिति जिज्ञासायाम्। ***प्राथम्यात्*** – प्रथममुचितत्वात्।

समाधत्ते–***विप्रतिपत्त्यग्र*** इति। विप्रतिपत्त्यनन्तरमित्यर्थः। ***समयबन्धः***– सदृष्टान्तोदाहरणेन शब्दानित्यत्वं साधनीयमित्यादिसंकेतः। ***शब्दानित्यत्वं साधयेत्याकाङ्क्षायां***– शब्दानित्यत्वं कथमिति प्रश्ने। ***वादिनः***–प्रतिवादिनः। ***साध्यम्*** –हेतूपन्यासेन साधनीयम्। ***साध्यनिर्देशम्*** – प्रतिज्ञाम्। ***निष्प्रतियोगिकं*** –निर्निरूपकम्। तथा च हेतुनिष्ठज्ञापकत्वरूपस्य हेत्ववयवार्थस्य निरूपके साध्येऽन्वयं विना

**योग्यतयाऽन्वेति। अतिप्रसङ्गात्। न च विप्रतिपत्तितः साध्योपस्थितिः। तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थया चान्तरितत्वात्। परविप्रतिपत्तिं समयबन्धञ्च विना स्थापनाया अभावात्। विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च।**

**आवृत्तौ तु सैव प्रतिज्ञा। न चावयवान्तरात् हेत्वन्वययोग्या साध्योपस्थितिः। (पञ्चम्यर्थान्वययोग्यपक्षान्वितसाध्याबोधकत्वात्।) नाप्यवयवान्तरेणाक्षेपात्। साध्यान्वये तदभिधानं तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात्। तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेपः।**

---

जिज्ञासानिवृत्त्यसंभवात् साध्योपस्थित्यर्थं प्रतिज्ञा आवश्यकीति भावः। ***अतिप्रसङ्गादिति।*** पदादनुपस्थितस्यापि विशेष्यतयान्वये द्रव्यत्वावच्छिन्नेऽपि धूमादिति हेत्ववयवार्थान्वयप्रसङ्गादित्यर्थः।

ननु हेतुवाक्यार्थान्वयार्थं साध्योपस्थापकप्रतिज्ञावाक्यं नापेक्षितम्। विप्रतिपत्तिवाक्योपस्थिते साध्ये हेत्वर्थान्वयसंभवादिति शङ्कां समाधत्ते – ***न च विप्रतिपत्तितः साध्योपस्थितिरिति।*** विप्रतिपत्तिवाक्यैकदेशात् साध्योपस्थितिरिति नाशङ्कनीयमित्यर्थः। कुत इत्यत्राह–***तस्या*** इति। ***तस्याः***– साध्योपस्थापकविप्रतिपत्त्येकदेशस्येत्यर्थः। ***प्रतिवादिविप्रतिपत्त्या***– साध्यविरुद्धोप–स्थापकंप्रतिवादिकथितविप्रतिपत्त्येकदेशवाक्यादित्यर्थः। ***प्रमाणादिव्यवस्थयेति।*** न्यायमतेन मया शब्दनित्यत्वे प्रमाणं वक्तव्यमित्यादिसंकेतेनेत्यर्थः। ***अन्तरितत्वादिति।*** व्यवहितत्वादित्यर्थः। प्रतिवादिविप्रतिपत्तिप्रमाणादिव्यवस्थयोरावश्यकत्वमुपपादयति– ***परविप्रतिपत्तिमिति।*** प्रतिवादिविप्रतिपत्तिमित्यर्थः। ***समयबन्धम्*** – प्रमाणादिव्यवस्थाम्। ***पर्यवसिततया*** – शान्ततया।

ननु 'पक्षः साध्यवान्न वे'ति विप्रतिपत्त्येकदेशस्य पक्षः साध्यवानिति भागस्य पुनरावर्तनं कृत्वा तदर्थे हेत्वर्थान्वयो वक्तव्य इति प्रतिज्ञावाक्यं विफलमित्याशङ्क्याह ***आवृत्तौ तु*** इति। ***सैवेति।*** आवृत्तिरेवेत्यर्थः।

शङ्कते–***न चेति। अवयवान्तरात्***– प्रतिज्ञातिरिक्तात् अवयवात् उदाहरणादितः।

अन्ये तु शब्दानित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः तथापि प्रमाणमात्रे नाकांङ्क्षा किन्तु विशिष्टे विशिष्टंविशेषणं साध्यमनभिधाय न शक्याभिधानम्। न च वस्तुतो यत्साध्यं तत्र प्रमाणं वदेति मध्यस्थनियोगः। वादिद्वयमध्ये तदसम्भवात्। तस्मात्साध्याभिधानं विना न हेतोराकांङ्क्षा न वाऽन्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति॥

*॥इति तत्त्वचिन्तामणौ प्रतिज्ञालक्षणम्॥*

---

***हेत्वन्वययोग्या*** – हेतुवाक्यार्थान्वययोग्या। ***अवयवान्तरेण*** –उपनयेन। ***आक्षेपात्***–साध्यं विना हेतुमत्त्वानुपपत्तिरूपात्। समाधत्ते ***साध्यान्वय*** इति। साध्ये हेत्ववयवार्थान्वये उदाहरणानन्तरं साध्यव्याप्यवान् क इत्याकाङ्क्षया उपनयाभिधानमित्यर्थः। ***तस्मादिति***। उपनयरूपादवयवान्तरादित्यर्थः। यद्वा अन्योन्याश्रयादित्यर्थः। ***प्रतीत्यनुपपत्तिः***– उपनयजन्यायाः हेतुमत्त्वप्रतीतेः साध्यवत्त्वप्रतीतिं विनानुपपत्तिः। ***प्रतीतानुपपत्तिः***– उपनयप्रतीतस्य हेतुमत्त्वस्य साध्यवत्त्वं विनानुपपत्तिः। ***अनुयोगः***– प्रश्नः। ***नाकाङ्क्षा*** – न प्रश्नः। ***विशिष्टे***– शब्दानित्यत्वग्राहकत्वविशिष्टे। ***वादिद्वयमध्य*** इति। वादिप्रतिवादिनोः साध्यविवादे वस्तुगत्या यत् साध्यं तत्प्रश्नाभावात्, द्वयोरेकस्यावश्यं बाधितत्वादिति भावः।

न च शब्दानित्यत्वे प्रमाणं वदेति प्रश्नवाक्यादेव साध्योपस्थितिर्भविष्यति, किं प्रतिज्ञयेति वाच्यम्। तदा धूमादिति पञ्चमी न स्यात्, किं तु धूमः इत्येव स्यात् इत्यपि बोध्यम्।

*॥इति भावदीपिकायां प्रतिज्ञालक्षणम्॥*

## अथ हेतुलक्षणम्

**साध्यनिर्देशानन्तरं कुत इत्याकांक्षायां साधनताव्यञ्जकविभक्ति-मल्लिङ्गवचनमेवोचितम्। अन्यथाऽनाकांक्षिताभिधाने निग्रहापत्तेः। लोके तथैवाकांक्षानिवृत्तिरिति व्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यासः। हेतुत्वञ्चानुमितिकारणीभूतलिङ्गपरामर्शप्रयोजक-शाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम्।**

---

**अनुमितीत्यादि जनकान्तं न्यायावयवार्थकम्। निगमनवारणाय *साध्याविषयकेत्यादि।* साध्याविषयकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्न-हेतुविशिष्टहेतुत्वविषयताबहिर्भावेण पूर्वोपदर्शितसाक्षात्परम्परासाधारण-प्रकृतपक्षविशेषणत्वेन वा। तेन पूर्वोपदर्शितहेतौ नाव्याप्तिः।**

---

ननु प्रतिज्ञोत्तरं हेतुरेवोद्भाव्यते नोदाहरणादिकमित्यत्र किं नियामकमत आह–***साध्यनिर्देशानन्तरमिति।*** प्रतिज्ञावाक्यात् पक्षतावच्छेदक-विशिष्टे साध्यबोधानन्तरम्। ***साधनताभिव्यञ्जकेति।*** ज्ञापकताबोधकेत्यर्थः। साधनत्वबोधकपञ्चमीविभक्तिमल्लिङ्गप्रतिपादकवाक्यमेव प्रयोक्तुं युक्तमित्यर्थः। अतो धूमेनेति प्रयोगनिरासः। अन्यथेत्यस्य विवरणम् ***अनाकाङ्क्षिताभिधान*** इति। साध्यनिर्देशानन्तरमुदाहरणाद्यभिधान इति यावत्। ***निग्रहापत्तेरिति।*** अप्राप्तकालाख्यनिग्रहस्थानापत्तेरित्यर्थः। ननु प्रतिज्ञोत्तरमुदाहरणादेरिव हेतोरप्यनाकाङ्क्षितत्वमविशिष्टमत आह–***लोक*** इति। ***तथैव*** – साधनताभिव्यञ्जकविभक्तिमल्लिङ्गवचनेनैव कुत इत्याकाङ्क्षानिवृत्तिरित्यनु-भवसिद्धत्वादिति भावः।

हेतुवाक्यस्य लक्षणमाह– ***हेतुत्वं चेत्यादिना।*** अनुमितिकारणीभूतः यः लिङ्गपरामर्शः तत्प्रयोजकं यत् शाब्दज्ञानं तज्जनकत्वे सति साध्याविषयकशब्दज्ञानजनकहेतुविभक्तिमान् यः शब्दः तत्त्वं हेतुवाक्यस्य लक्षणम्। हेतुविभक्तिरित्यस्य हेत्वर्थकविभक्तिरित्यर्थः। सत्यन्तस्य न्यायावयवत्वमित्यर्थः। तथा च न्यायावयवत्वे सति साध्याविषयकशाब्द-

*निगमनवारणायेति।* प्रतिज्ञोदाहरणोपनयविशेषाणां विवक्षणीयहेतुविभक्तिमत्त्व-विशेषणेन वारणसम्भवान्न तदुक्तम्। ननु साध्याविषयकबोधजनकत्वनिवेशे वह्निमान्वह्नि- सामग्रीमत्त्वादित्याद्युक्तहेतावव्याप्तिरत आह- *साध्याविषयकत्वं चेति। बहिर्भाविणेति।* विवक्षणीयमिति शेषः। साध्यांशोपादानं हेतुविभक्तिमत्त्वदलसार्थक्याय।

---

ज्ञानजनकहेतुविभक्तिमच्छब्दत्वं हेतुत्वम्। हेतुसमानानुपूर्वीकोदासीनवाक्ये अतिव्याप्तिवारणाय सत्यन्तम्। न्यायान्तर्गतत्वमात्रोक्तौ निगमनैकदेशे 'तस्मात्' इति भागे 'धूमादालोकवान् पर्वतो वह्निमान्' इति प्रतिज्ञैकदेशे 'धूमात्' इति भागे च अतिव्याप्तिः। तद्वारणाय न्यायान्तर्गतत्वमुपेक्ष्य न्यायावयवत्वं निवेशितम्। प्रतिज्ञादौ अतिव्याप्तिवारणाय विशेष्यम्। तत्र साध्याविषयकेति अनुपादाने निगमनेऽतिव्याप्तिः स्यात्। तत्रापि हेतुविभक्तेः सद्भावात्। अतः साध्याविषयकशाब्दधीजनकेत्युक्तम्। निगमनजन्यबोधे साध्यस्यापि विषयत्वात् साध्याविषयकज्ञानजनकत्वं नास्तीति निगमने नातिव्याप्तिः।

ननु 'हेतुविभक्तिमत्त्वम्' इत्यस्य हेतुत्वबोधकविभक्तिमत्त्वमित्यर्थः। तत्र 'धूमादालोकवान् पर्वतो वह्निमान्' इति प्रतिज्ञायां, 'पर्वतो वह्निमान्' इति स्थलीये 'यो यो धूमवान् स स वह्निमान्, यथा 'धूमाद्वह्निमान् महानसम्' इत्युदाहरणे 'पर्वतः धूमादालोकवद्वृत्तिवह्निमान्' इत्यादिस्थलीय 'धूमादालोकवद्वृत्तिवह्निव्याप्यधूमवान्' इत्युपनये च हेतुविभक्तिमत्त्वसद्भावेन साध्याविषयकेत्यनुक्तौ दर्शितप्रतिज्ञोदाहरणोपनयेष्वपि अतिव्याप्तिसम्भवेन तदकथनेन न्यूनता इत्याशङ्क्याह–***प्रतिज्ञोदाहरणोपनयविशेषणामिति।*** दर्शितप्रतिज्ञाविशेष–उदाहरणविशेष–उपनयविशेषाणामित्यर्थः। ***विवक्षणीयेति।*** प्रकृतसाध्यान्वितार्थोपस्थितिजनकहेतुविभक्तिमत्त्वमिति विवक्षणे उक्तस्थलेषु प्रकृतसाध्यान्वितार्थोपस्थापकत्वं हेतुविभक्तेः नास्तीति अतिव्याप्तेरप्रसक्त्या दीधितौ निगमनेऽतिव्याप्तिकथनमिति भावः।

ननु साध्याविषयकत्वनिवेशेऽपि 'पर्वतो वह्निमान्, वह्निसामग्रीमत्त्वात्' इत्यत्र हेतुवाक्येऽव्याप्तिः। तज्जन्ये 'वह्निसामग्रीनिष्ठं हेतुत्वम्' इति बोधे 'वह्निरूपसाध्यस्य विषयत्वात्' इत्यत आह दीधितौ ***साध्याविषयकत्वञ्चेति।*** तथा च हेतुतावच्छेदकावच्छिन्नहेतुविशिष्ट–

एतत्कल्पे तादृशसाध्याविषयकत्वप्रतियोगिकोटौ साध्यांशमुपादाय दळान्तरोपादानं प्रक्षाळनाद्धीति– न्यायेन सन्दर्भविरुद्धमतः कल्पान्तरमाश्रयति– **पूर्वेति।**

---

हेतुत्वविषयताबहिर्भूतं यत् साध्यविषयत्वं तच्छून्यबोधजनकत्वं विवक्षणीयम्। उक्तस्थलीयहेतुजन्यबोधीयसाध्यविषयतायाः हेतुविशिष्टहेतुत्व-विषयतान्तर्भूतत्वेन तद्बहिर्भूतत्वाभावात् तद्बहिर्भूता साध्यविषयता प्रतिज्ञाजन्यबोधीया साध्यविषयतैव। तच्छून्यत्वं हेतुजन्यबोधेऽस्तीति नाव्याप्तिः।

ननु तादृशविषयताबहिर्भूतविषयताशून्यत्वमेवास्तु, किं साध्यांशनिवेशेनेत्यत आह – ***साध्यांशोपादानमिति। हेतुविभक्तिमत्त्वदल-सार्थक्यायेति।*** साध्याविषयकबोधजनके व्यतिरेक्युदाहरणादौ अतिव्याप्तिवारणाय हेतुविभक्तिमत्त्वं निवेशितम्। यदि तु साध्यांशमनिवेश्य हेतुविशिष्टहेतुत्वविषयताबहिर्भूतविषयताशून्यत्वं बोधविशेषणं स्यात् तर्हि व्यतिरेक्युदाहरणादौ निरुक्तविषयताबहिर्भूतविषयतावत्त्वादेव अतिव्याप्ति-वारणसंभवात् हेतुविभक्तिमत्त्वदलं व्यर्थं स्यात्। अतः साध्यांशोपादानम्। तदुपादाने च हेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्यविषयताशून्यबोधजनकत्वस्य व्यतिरेक्युदाहरणे सद्भावेन तत्रातिव्याप्तिवारकतया हेतुविभक्तिमत्त्व-दलसार्थक्यमिति भावः।

***एतत्कल्प*** इति। साध्यपदमुपादाय अतिव्याप्तिं संपाद्य तद्वारकतया हेतुविभक्तिमत्त्वदलोपादानं 'प्रक्षालनाद्धि पङ्कस्ये'ति न्यायविरुद्धमित्याशयेन कल्पान्तरमाश्रयतीत्यर्थः।

दीधितौ ***पूर्वोपदर्शितेति।*** प्रतिज्ञालक्षणोपदर्शितेत्यर्थः। तथा च साक्षात्परम्परासाधारणप्रकृतपक्षविशेषणतारूपा या साध्यविषयता तच्छून्यत्वं साध्याविषयकत्वम्। 'पर्वतो वह्निमान्, वह्निसामग्रीमत्त्वात्' इत्यत्र हेतुवाक्यजन्यबोधीयवह्निविषयतायाः सामग्रीविशेषणतारूपत्वेऽपि पक्षविशेषणतारूपत्वं नास्तीति पक्षविशेषणतात्मकसाध्यविषयताशून्यत्वं हेतुजन्यबोधेऽस्तीति नाव्याप्तिः। साक्षात् पक्षविशेषणत्वेन यत् साध्यविषयत्वं तच्छून्यत्वमात्रोक्तौ 'तस्माद्वह्निमान्' इति निगमने मतुबर्थसंबन्धे एव

तस्माद्वह्निमानित्यादिनिगमने मत्वर्थांश एव साध्यस्य विशेषणतया अतिव्याप्तिरित्यतः **साक्षात्परम्परासाधारणेति।** तथा च तत्र साध्यस्य परम्परया पक्षविशेषणत्वान्न दोषः। हेतुत्वं प्रमेयं प्रमेयादित्यादौ प्रमेयत्वादिसाध्यके हेत्ववयवेऽव्याप्तिः हेतुतावच्छेदकीभूतसाध्यस्य परम्परया पक्षविशेषणत्वादतः **पूर्वोपदर्शितेति।** प्रकृतसाध्यपक्षकप्रतिज्ञाजन्यबोधे यादृशयादृशं पक्षांशे साध्यस्य विशेषणत्वं तादृशेत्यर्थः। तच्च साध्यतावच्छेदकसम्बन्धावच्छिन्नं साक्षात्पक्षनिरूपितं पक्षांशे अभेदादिसम्बन्धेन विशेषणतापन्नसम्बन्ध्यादिनिरूपितं च तादृशविशेषणतात्मकसाध्यविषयताशून्यत्वं

---

साध्यस्य विशेषणतया साक्षात् पक्षविशेषणत्वं नास्तीति अतिव्याप्तिः स्यात्। अतः साक्षात्परम्परासाधारणेत्युक्तम्। साक्षात्परम्परासाधारण-पक्षविशेषणत्वेन यत् साध्यविषयत्वं तच्छून्यत्वमात्रोक्तावपि 'हेतुत्वं प्रमेयम् प्रमेयात्' इत्यादौ प्रमेयत्वसाधके हेत्ववयवेऽव्याप्तिः। प्रमेयत्वरूपसाध्यस्य विभक्त्यर्थहेतुत्वरूपपक्षविशेषणीभूतप्रकृत्यर्थविशेषणतया भानात् परंपरया पक्षविशेषणतारूपायाः साध्यविषयताया एव हेतुजन्यबोधे सद्भावात् तादृशविषयताशून्यबोधजनकत्वं हेतुवाक्ये नास्तीति। अतः **पूर्वोपदर्शितेति।** प्रकृतसाध्यपक्षकप्रतिज्ञाजन्यबोधे यादृशयादृशं पक्षांशे साध्यस्य विशेषणत्वं तादृशेत्यर्थः। तदेव विवृणोति – **तच्चेति।** पक्षांशे साध्यस्य विशेषणत्वं चेत्यर्थः। **साक्षात्पक्षनिरूपितम्** –अयं गौरित्यादौ। **संबन्ध्यादिनिरूपितं** च पर्वतो वह्निमानित्यादौ। **तादृशविशेषणतात्मकेति।** पक्षविशेष्यतानिरूपित-साध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारतात्मिका पक्षविशेष्यतानिरूपितसंबन्धि-निष्ठप्रकारतानिरूपितप्रकारतात्मिका वेत्यर्थः। तथा च पक्षनिष्ठविशेष्यता-निरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यनिष्ठप्रकारताशून्यत्ववच्छाब्द-ज्ञानजनकत्वं तादात्म्येन साध्यकहेतुवाक्यस्य लक्षणम्। पक्षनिष्ठविशेष्यता-निरूपिताभेदसंबन्धावच्छिन्नसम्बन्धिनिष्ठप्रकारतानिरूपित–निरूपितत्वसंबन्धा-वच्छिन्नसाध्यनिष्ठप्रकारताशून्यत्ववच्छाब्दज्ञानजनकत्वं पर्वतो वह्निमान् इत्यादिस्थलीयहेतुवाक्यस्य लक्षणम्। प्रकृतपदस्य प्रयोजनमाह – ***अयं वह्निमानिति।*** 'अयं वह्निमान् वह्निमत्पर्वतावृत्तिधर्मशून्यत्वात्' इत्यत्र हेतुवाक्ये अव्याप्तिः। हेतुजन्यशाब्दबोधे पर्वतात्मकपक्षनिष्ठ-विशेष्यतानिरूपितसंबन्धिनिष्ठप्रकारतानिरूपितसाध्यनिष्ठप्रकारतायाः सद्भावेन

समुदितार्थः। अयं वह्निमान् वह्निमत्पर्वतावृत्तिधर्मशून्यत्वादित्यादिहेतावव्याप्तिवारणाय ***प्रकृतेति,*** पक्षतावच्छेदकावच्छिन्नार्थकम्। न चैवमननुषङ्गपक्षे निगमनजन्यबोधे साध्यस्य पक्षतावच्छेदकावच्छिन्नाविशेषणत्वादतिव्याप्तितादवस्थ्यमिति वाच्यम्। अननुषङ्गपक्षे पक्षनिष्ठ- मुख्यविशेष्यतानिरूपितप्रकारतापन्नत्वरूपं पक्षविशेषणतापन्नत्वं यदि निवेश्यते, तदा पक्षतावच्छेदकावच्छिन्नत्वाविवक्षणेऽपि तस्मादितरेभ्यो भिद्यते इत्यादिनिगमनाति-व्याप्तेरशक्यपरिहारतया एतत्कल्पस्यानुषङ्गपक्षाभिप्रायकत्वात्।

---

तच्छून्यत्वविरहात्। प्रकृतपदोपादाने तु तस्य पक्षतावच्छेदकावच्छिन्नार्थकतया वह्निनिष्ठप्रकारतायाः संबन्धित्वावच्छिन्नविशेष्यतानिरूपितत्वेऽपि पर्वतत्वा-वच्छिन्नविशेष्यतानिरूपितत्वाभावात् पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित-प्रकारताशून्यत्वं हेतुजन्यशाब्दबोधेऽस्तीति नाव्याप्तिरिति भावः।

ननु पक्षतावच्छेदकावच्छिन्नत्वनिवेशेऽपि मतुबर्थसाध्यकहेतुवाक्यलक्षणे पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसंबन्धिनिष्ठप्रकारतानिरूपितसाध्य-निष्ठप्रकारताशून्यत्वस्यैव बोधविशेषणतया वह्निमत्पर्वतावृत्तिधर्मशून्यत्वात् इति हेतुवाक्यजन्यबोधे पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंबन्धिनिष्ठ-प्रकारतानिरूपितवह्निनिष्ठप्रकारताया एव सत्त्वेन तच्छून्यत्वविरहात् कथमव्याप्तिपरिहार इति चेन्न। सिषाधयिषया न्यायप्रयोगानङ्गीकारात्, तदङ्गीकारे तु प्रकारतावच्छेदकतानापन्नत्वेन पक्षतावच्छेदकं विशेषणीयम्। अतो **नाव्यप्तिरिति।**

शङ्कते – ***न चैवमिति।*** निगमने उपनयस्थम् इदंपदं नानुषज्यत इति पक्षे 'तस्मात् वह्निमान्' इति निगमनवाक्याज्जायमाने बोधे साध्यस्य वह्नेः संबन्धित्वावच्छिन्ने विशेषणत्वेऽपि पक्षतावच्छेदकपर्वतत्वावच्छिन्न-विशेषणतापन्नसम्बन्धिविशेषणत्वाभावात् पर्वतत्वावच्छिन्नविशेष्यतानिरूपित-सम्बन्धिनिष्ठप्रकारतानिरूपितवह्निनिष्ठप्रकारताशून्यत्वसत्त्वात् निगमनेऽतिव्याप्तिः इति भावः।

समाधत्ते–***अननुषङ्गपक्ष*** इति। 'अयं वह्निमान् वह्निमत्पर्वता-वृत्तिधर्मशून्यत्वात्' इत्यत्र अव्याप्तिवारणाय पक्षनिष्ठमुख्य-विशेष्यतानिरूपितसम्बन्धिनिष्ठप्रकारतानिरूपित–साध्यनिष्ठप्रकारताशून्यत्वं

इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात् अयं न धूमादालोकवान् आर्द्रेन्धनशून्यत्वादित्यादौ व्यतिरेक्युदाहरणस्य,

---

अयं धूमाभाववान् वह्न्याभावादित्यादौ यो यो धूमवान् स वह्निमानित्यादे-र्व्यतिरेक्युदाहरणस्य यथाश्रुतहेतुविभक्तिमत्त्वनिवेशनेनापि वारणसम्भवाद्विवक्षणीयस्य प्रकृतसाध्यान्वयबोधनक्षमार्थोपस्थितिप्रयोजकहेतुविभक्तिमत्वस्य व्यावृत्तिस्थलमाह–**इदमिति।**

---

निवेश्यते। उक्तस्थले हेतुवाक्यजन्यबोधे पर्वतस्य मुख्यविशेष्यत्वाभावात् नाव्याप्तिः। तथा च पक्षतावच्छेदकावच्छिन्नत्वं न निवेश्यते। एवं सति यद्यपि 'अयं वह्निमान्' इन्यादिस्थलीयनिगमने नातिव्याप्तिः, तथापि 'पृथिवी इतरेभ्यो भिद्यते' इत्यादिस्थलीय 'तस्मात् इतरेभ्यो भिद्यते' इत्यादिनिगमनेऽतिव्याप्तिः। तत्र इतरभेदरूपसाध्यनिष्ठप्रकारतायाः आख्यातार्थाश्रयत्वनिष्ठमुख्यविशेष्यतानिरूपितत्वेऽपि पक्षनिष्ठविशेष्यता-निरूपितत्वाभावात्। अतः अयं द्वितीयकल्पः अनुषङ्गपक्षाभिप्रायकः। तथा च 'पर्वतो वह्निमान्' इत्यादिस्थलीयनिगमने 'तस्मात् इतरेभ्यो भिद्यते' इत्यादिनिगमने च नातिव्याप्तिः इति भावः।

"इदं विशेषणमनुषङ्गपक्षे निगमनसामान्यवारकं, न त्वननुषङ्गपक्षे। एतत्पक्षे हि पक्षतावच्छेदकावच्छिन्नत्वविवक्षात्यागेऽपि वह्निमदवृत्तिधर्म-शून्यत्वादिति हेतुसंग्रहाय मुख्यविशेष्यतोपादानेऽपि तस्माद्वह्निमानित्यादिकं कतिपयनिगमनमेव वार्यते न सर्वम्। तस्मादितरेभ्यो भिद्यते इत्यादौ भेदाश्रयताया एवाख्यातार्थस्य मुख्यत्वेन भानादिति भावः" इति कृष्णम्भट्टग्रन्थोऽप्यत्रानुसन्धेयः।

एतावता साक्षात्परंपरासाधारणप्रकृतपक्षविशेषणत्वेन साध्यविषयकत्व-शून्यशाब्दज्ञानजनकहेतुविभक्तिमच्छब्दत्वं हेतुलक्षणमिति सिद्धम्। तत्र हेतुविभक्तिमत्त्वनिवेशस्य प्रयोजनं 'इदं न दण्डाज्जातम्' इत्यादिना दीधितौ प्रदर्शितम्। 'अयं धूमाभाववान्, वह्न्यभावात्' इत्यादौ 'यो यो धूमवान् स स वह्निमान्' इति व्यतिरेक्युदाहरणस्य धूमाभावरूपसाध्याविषयकबोधजनकतया तत्रातिव्याप्तिवारणाय हेतुविभक्ति-मत्त्वनिवेशनमिति वक्तुं शक्यतया प्रसिद्धस्थलपरित्यागेन स्थलान्तरे

उदाहरणस्य साध्याविषयकत्वरक्षणाय अभावसाध्यकानुधावनम्। हेतुविभक्तिपदस्य ज्ञापकत्वरूपहेतुत्वबोधकविभक्त्यर्थकत्वे प्रथमोदाहरणे नातिव्याप्तिस्तत्र जनिधात्वर्थोत्पत्त्यन्वितप्रयोज्यत्वस्यैव पञ्चम्यर्थत्वादतः स्थलान्तरमाह—***अयमिति। व्यतिरेक्युदाहरणस्येति।*** यद्दण्डाज्जातं तद्दण्डसंयोगाजन्यद्रव्यत्वाभाववत् यो यो धूमादालोकवान् स आर्द्रेन्धनवानित्याद्याकारकस्येति शेषः। साध्याविषयकत्वरक्षायै व्यतिरेकिपर्यन्तानु-

---

हेतुविभक्तिमत्त्वस्य अतिव्याप्तिवारणरूपप्रयोजनकथनं न युक्तमित्याशङ्क्य यद्यपि यथाश्रुतहेतुविभक्तिमत्त्वनिवेशस्य प्रसिद्धस्थले व्यावृत्तिः संभवति, तथापि विवक्षणीयस्य प्रकृतसाध्यान्वितार्थोपस्थितिजनकविभक्तिमत्त्वरूपस्य प्रसिद्धस्थले प्रयोजनं न संभवति इत्याशयेन स्थलान्तरानुधावनमित्याह—***अयं धूमाभाववान्*** इत्यादिना। 'इदं न दण्डाज्जातम्, दण्डसंयोगाजन्यद्रव्यत्वात्' इत्यत्र 'यत् दण्डाज्जातम्, तत् दण्डसंयोगाजन्यद्रव्यत्वाभाववत्' इति व्यतिरेक्युदाहरणम्। दण्डप्रयोज्योत्पत्तिमत्त्वाभावरूपसाध्यविषयकत्वं व्यतिरेक्युदाहरणजन्यशाब्दबोधे नास्तीति साध्याविषयकबोधजनकत्वे सति हेत्वर्थकपञ्चमीविभक्तिमत्त्वम् उक्तव्यतिरेक्युदाहरणेऽस्तीति अतिव्याप्तिः स्यात्। तद्वारणाय प्रकृतसाध्यान्वितस्वार्थबोधनक्षमार्थोपस्थितिजनकविभक्तिमत्त्वं विवक्षणीयम्। व्यतिरेक्युदाहरणघटकपञ्चमीविभक्तेः प्रकृतसाध्यान्वितार्थोपस्थापकत्वाभावात् नातिव्याप्तिः। उक्तस्थले 'दण्डाजन्यद्रव्यत्वात्' इत्युक्तौ हेतोः साध्याविशेषः स्यादिति दण्डसंयोगाजन्येत्युक्तम्। 'दण्डसंयोगाजन्यत्वात्' इत्येतावन्मात्रोक्तौ दण्डजन्ये—दण्डसमवायिकारणके दण्डरूपे दण्डसंयोगाजन्यत्वसत्वात् व्यभिचारः स्यादिति तद्वारणाय हेतौ द्रव्यपदम्। द्रव्यत्वमात्रस्य हेतुत्वे घटादौ व्यभिचार इति दण्डसंयोगाजन्यत्वनिवेशः। हेतुविभक्तिपदस्य ज्ञापकत्वरूपहेतुत्वबोधकविभक्त्यर्थकत्वे उक्तस्थलीयव्यतिरेक्युदाहरणे नातिव्याप्तिः। तद्घटकदण्डपदोत्तरपञ्चमीविभक्तेः 'जनि' धात्वर्थोत्पत्त्यन्वयिप्रयोज्यत्वार्थकतया ज्ञापकत्वार्थकत्वविरहात् ज्ञापकत्वार्थकविभक्तिमत्त्वस्य उक्तोदाहरणेऽभावात् इत्यालोच्य 'अयं न धूमात्' इति स्थलान्तरानुधावनम्। 'अयं न धूमादालोकवान्, आर्द्रेन्धनशून्यत्वात्' इत्यादौ 'यो यः धूमादालोकवान् स स

धावनम्। यद्यप्यन्वय्युदाहरणस्य साध्यविषयकत्वेऽपि पक्षतावच्छेदकविशिष्टसाध्य-विशेषणकत्वादतिव्याप्तिस्तदवस्थैव द्वितीयकल्पे। तथापि प्रथमकल्पे व्यावृत्तिघटनाय अभावसाध्यकव्यतिरेक्यनुसरणम्। एतादृशोदाहरणस्य साध्यान्वितस्वार्थबोधकपदशालित्व-

---

आर्द्रेन्धनवान्' इति व्यतिरेक्युदाहरणम्। तस्य साध्याविषयकबोधजनकत्वात् ज्ञापकत्वार्थकपञ्चमीविभक्तिमत्त्वाच्च अतिव्याप्तिः। उक्तविवक्षायां तु 'आलोकान्वितार्थोपस्थापकत्वेऽपि पञ्चम्याः धूमज्ञानज्ञाप्यालोकाभावरूप-साध्यान्वितार्थोपस्थापकत्वाभावात् तादृशार्थोपस्थापकविभक्तिमत्त्वाभावात् न व्यतिरेक्युदाहरणेऽतिव्याप्तिः।

ननु साध्यान्वितस्वार्थबोधकपदशालित्वविवक्षायामपि उक्तव्यति-रेक्युदाहरणयोः अतिव्याप्तिवारणं संभवति। उदाहरणघटकपदानां धूमज्ञानज्ञाप्यालोकाभावादिरूपसाध्यान्वितार्थोपस्थापकत्वाभावात्। तथा च विभक्तिमत्त्वनिवेशनं व्यर्थमित्याशङ्क्य हेतुत्वपक्षकस्थलानुधावनं कृतम्। 'हेतुत्वं प्रमेयम्, हेतुत्वात्' इत्यत्र उपनयेऽतिव्याप्तिवारणाय विभक्ति-मत्त्वपर्यन्तनिवेशः। विभक्तिमत्त्वानिवेशे 'प्रमेयत्वव्याप्यहेतुत्ववत् हेतुत्वम्' इत्याकारकस्य उपनयस्य निगमनोपस्थाप्यप्रमेयत्वरूपसाध्यान्वित-हेतुत्वरूपार्थबोधकत्वात् पक्षविशेषणतया साध्याविषयकबोधजनकत्वाच्च तत्रातिव्याप्तिः स्यात्। तद्वारणाय हेतुत्वार्थकविभक्तिमत्त्वनिवेशः इति दीधितिग्रन्थस्य भावः।

गादाधर्यां ***यद्यपि अन्वय्युदाहरणस्येति।*** 'यत् दण्डसंयोगा-जन्यद्रव्यत्ववत् तत् न दण्डाज्जातम्'; एवं 'यः आर्द्रेन्धनशून्यः स न धूमादालोकवान्' इत्यस्य चेत्यर्थः। ***द्वितीये कल्प*** इति। साक्षात्परंपरासाधारणपक्षविशेषणत्वेन साध्यविषयताशून्यत्वकल्पे इत्यर्थः। किञ्च अन्वय्युदाहरणस्येत्यनेन 'वह्निमान् धूमात्' इत्यादिस्थलीयस्य अन्वय्युदाहरणस्यापि ग्रहणं शक्यम्। एवं च अन्वय्युदाहरणे एव अतिव्याप्तिसंभवे व्यतिरेक्युदाहरणपर्यन्तानुधावनं व्यर्थमित्याशयः। प्रथमकल्पे बहिर्भूतसाध्यविषयतासत्त्वादेव अतिव्याप्त्यभावात् द्वितीयकल्प इत्युक्तम्। ***तथापीति।*** द्वितीयकल्पेऽतिव्याप्तिसत्त्वेऽपि इत्यर्थः। ***प्रथमकल्प*** इति।

**हेतुत्वपक्षके साध्यान्वितस्वार्थबोधकेदंपदशालिनः उपनयस्य च वारणाय हेतुविभक्तिमदिति।**

---

निवेशनेनैव वारणसंभवात् तादृशविभक्तिमत्त्वपर्यन्तस्य व्यावृत्तिस्थलमाह **हेतुत्वपक्षकेति। साध्यान्वितेति।** निगमनोपस्थाप्यसाध्यान्वितेत्यर्थः। विशेषणतया साध्यान्वितत्वस्या-विवक्षणादिति भावः। नचोपनये व्याप्तिघटकतया साध्यविषयकत्वसत्त्वान्नातिव्याप्तिः प्रसज्यते, अनुषङ्गपक्षे निगमनोपस्थाप्यसाध्येन सममिदंपदार्थस्य हेतुत्वस्यानन्वया-व्यावृत्तिदानस्यानुषङ्गपक्षाभिप्रायकतया अननुषङ्गपक्षे च निरुक्तविशिष्टविषयताबहिर्भूत-साध्यविषयताशून्यत्वस्यैव साध्याविषयकत्वपदार्थतया पक्षविशेषणतया साध्या-विषयकत्वस्याप्रयोजकत्वादिति वाच्यम्। उपनयपदस्य इतरत्वव्यापकीभूताभाव-प्रतियोगिमदिदमित्याद्याकारकाभावसाध्यकव्यतिरेक्युपनयपरत्वात्।

---

हेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्यविषयताशून्यबोधजनकहेतुविभक्ति-मच्छब्दत्वकल्प इत्यर्थः। ***व्यावृत्तिघटनाय*** – हेतुविभक्तिमत्त्वस्य व्यावृत्तिप्रदानाय। ***एतादृशोदाहरणस्येति।*** 'यो यो धूमात् आलोकवान् स आर्द्रेन्धनवान्' इत्याकारकस्य उदाहरणस्येत्यर्थः। ***पदशालित्वनिवेशेनैवेति।*** एवकारेण विभक्तिमत्त्वव्यावृत्तिः। ***वारणसंभवात्*** इति। साध्यान्वितस्वार्थोप-स्थापकपदवत्त्वाभावादित्यर्थः।

ननु साध्यविषयतानिरूपितस्वार्थविषयताकबोधो न निवेश्यते, येन उक्तदोषवारणाय विभक्तिमत्त्वनिवेशः स्यात्। किन्तु साध्यविशेष्यतानिरूपित-स्वार्थप्रकारताकबोध एव निवेश्यते। विभक्तित्वानिवेशेन लाघवादित्याह–***विशेषणतयेति।*** प्रकारतयेत्यर्थः। अत्र दीधितिकृतां विभक्तिमत्त्वस्य व्यावृत्तिप्रदर्शनं किं प्रथमकल्पमभिप्रेत्य, द्वितीयकल्प-मभिप्रेत्य वा? उभयथापि न संभवतीति शङ्कते– **न चोपनय** इति। सर्वत्रापि उपनयवाक्यजन्यशाब्दबोधे 'साध्यव्याप्यहेतुमान्' इत्याकारके व्याप्तिघटकतया साध्यविषयकत्वसत्त्वात् हेतुविशिष्ट–हेतुत्वविषयताबहिर्भूत-साध्यविषयताशून्यत्वं नास्तीति हेतुविभक्तिमत्त्वानुपादाने उपनयेऽतिव्याप्तिकथनं प्रथमपक्षे न सङ्गच्छते। पक्षविशेषणतया साध्याविषकत्वनिवेश-रूपद्वितीयपक्षेऽपि अतिव्याप्तिकथनं न सङ्गच्छते। तथा हि–निगमने

**तदर्थश्च प्रकृतसाध्यान्वितस्वार्थबोधनक्षमार्थोपस्थितिजनकविभक्तिमत्त्वम्। हेत्त्विति सम्पातायातम्।**

---

***प्रकृतसाध्येति।*** प्रकृतसाध्यान्वितस्वार्थबोधप्रयोजकाकाङ्क्षादिमद्धेतुविभक्तिमत्त्वमित्यर्थः। उपदर्शितस्थले च धूमज्ञानज्ञाप्यालोकाभावादिरूपसाध्यांशे पञ्चम्यर्थान्वय-

---

'अयं' पदानुषङ्ग इति पक्षे 'हेतुत्वपक्षकप्रमेयत्वसाध्यकस्थलीयप्रमेयत्वव्याप्यहेतुत्ववदिदम्' इत्युपनयस्थस्य 'इद' पदार्थस्य निगमनस्थसाध्येन साकमन्वयाभावात् साध्यान्वितस्वार्थबोधकपदशालित्वविरहात् अतिव्याप्त्यप्रसक्तेः तत्र व्यावृत्तिदानं अननुषङ्गपक्षाभिप्रायेण इति वक्तव्यम्। अननुषङ्गपक्षे च प्रथमकल्प एव इति पूर्वमुक्तत्वात् प्रथमकल्पे हेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्यविषयताशून्यत्वस्यैव बोधविशेषणत्वात् उपनयजन्यबोधे साध्यविषयताशून्यत्वविरहात् अतिव्याप्तिः कथं प्रसज्यते। यद्यपि पक्षविशेषणतया साध्यविषयकत्वम् उपनयजन्यबोधे नास्ति, तथापि पक्षविशेषणतया साध्याविषयकत्वस्य प्रथमकल्पेऽनिवेशात् अननुषङ्गपक्षस्य प्रथमपक्षाभिप्रायकत्वात् कथमतिव्याप्तिरिति भावः। ***अनन्वयादिति।*** अनुषङ्गपक्षे उपनयनिगमनयोः भिन्नवाक्यत्वात् इति भावः। एतेन साध्यान्वितस्वार्थबोधकपदशालित्वं नास्तीति सूचितम्। तथापि पक्षविशेषणतया साध्यविषयकत्वमादाय व्यावृत्तिः स्यात् इत्यत आह–***अननुषङ्गपक्षे चेति।*** ***अप्रयोजकत्वात्*** इति। तस्य अनुषङ्गपक्षाभिप्रायकत्वात् इति भावः।

समाधत्ते–***उपनयपदस्येति।*** विभक्तिमत्त्वपर्यन्तनिवेशव्यावृत्तिप्रदर्शकदीधितिग्रन्थस्थोपनयशब्दस्य हेतुत्वपक्षकेतरभेदसाध्यक–हेतुत्वादिहेतुकस्थलीयव्यतिरेक्युपनयपरत्वात् इत्यर्थः। व्यतिरेक्युपनयस्य आकारः 'इतरत्वव्यापकीभूताभावप्रतियोगिमदिदम्' इति। एतदुपनयजन्यबोधे इतरभेदरूपसाध्यस्याविषयत्वात् साध्याविषयकत्वमस्तीति अतिव्याप्तिप्रसक्तिः।

***प्रकृतसाध्यान्वितेत्यादि।*** 'अयं धूमाद्वह्निमान् आलोकात्'

न्नातिव्याप्तिरिति भावः। नन्वेवं हेतुपदमनर्थकं साध्यान्वितस्वार्थबोधकविभक्तिशालिनो हेत्वतिरिक्तावयवस्य साध्यविषयकत्वनियमेनातिप्रसङ्गानवकाशात्। न च पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे ज्ञानादिसाध्यके य इच्छति स जानातीत्युदाहरणे ज्ञानादिरूपसाध्यान्वितस्वार्थबोधकाख्यातविभक्तिशालिनि विशेषणविभक्तेरभेदार्थकत्वमते प्रमेयत्वादिपक्षकप्रमेयत्वादिसाध्यकोपनये पक्षीभूतसाध्यान्विताभेदबोधकप्रथमाविभक्तिशालिनि

---

इत्यादिस्थलीयस्य 'धूमाद्वह्निव्याप्यालोकवानयम्' इत्युपनयस्यापि वह्निस्वरूपसाध्यान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वात् तत्र अतिव्याप्तिः। अतः प्रकृतपदं साध्यतावच्छेदकावच्छिन्नार्थकम्। तथा च तत्र वह्नित्वावच्छिन्ने पञ्चम्यर्थहेतुत्वस्यान्वयेऽपि धूमज्ञानज्ञाप्यवह्नित्वरूप–साध्यतावच्छेदकावच्छिन्ने पञ्चम्यर्थहेतुत्वस्य अनन्वयात् नातिव्याप्तिः। यस्य हेतुवाक्यस्य शाब्दबोधोपधायकत्वं नास्ति तस्य सङ्ग्रहाय स्वार्थबोधप्रयोजकाकाङ्क्षादिमत्त्वनिवेशः। ***उपदर्शितस्थले चेति।*** 'अयं न धूमादालोकवान्, आर्द्रेन्धनशून्यत्वात्' इत्यादिस्थले 'यो यः धूमादालोकवान् स स आर्द्रेन्धनवान्' इति व्यतिरेक्युदाहरणघटकधूमपदोत्तरपञ्चम्यर्थस्य आलोके अन्वयेऽपि धूमज्ञानज्ञाप्यालोकाभावरूपप्रकृतसाध्येऽनन्वयात् प्रकृतसाध्यान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वं उक्तव्यतिरेक्युदाहरणे नास्तीति नातिव्याप्तिरिति भावः।

***नन्वेवमिति।*** प्रकृतसाध्यान्वितस्वार्थबोधकहेतुविभक्तिमच्छब्दत्वमित्यत्र हेतुपदं व्यर्थम्। न च–तदभावे 'देवदत्तः ज्ञानवान् इच्छावत्त्वात्' इति स्थलीयोदाहरणे 'यः इच्छति स जानाति' इत्याकारके अतिव्याप्तिः। ज्ञानरूपसाध्यान्विताश्रयत्वबोधकतिङ्विभक्तिमत्त्वात्। हेतुपदोपादाने तु तिङ्विभक्तेः हेतुत्वार्थकत्वाभावात् नातिव्याप्तिः इति–वाच्यम्। उक्तोदाहरणजन्यबोधे ज्ञानरूपसाध्यविषयकत्वसद्भावेन साध्याविषयकत्वविरहात् अतिव्याप्त्यनवकाशात्। तथा च हेतुपदं व्यर्थमिति भावः। हेतुपदसार्थक्यं शङ्कते ***–न च पक्षविशेषणतया*** इत्यादिना। पक्षविशेषणतया साध्यविषयकत्वाभावः बोधविशेषणमिति कल्पे ज्ञानादिसाध्यके 'य इच्छति स जानाति' इत्युदाहरणजन्यबोधस्य आश्रयत्वविशेषणतया ज्ञान–

च अतिव्याप्तिवारणाय हेतुपदोपादानमावश्यकमिति वाच्यम्। पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे हेतुपदोपादानेऽपि यो यो धूमवान् स वह्निमान् यथा धूमाद्वह्निमन्महानसमिति सदृष्टान्तोदाहरणेऽतिव्याप्तेः तद्वारणाय प्रकृतपक्षविशेषणतापन्न-साध्यान्वितार्थबोधकत्वस्यावश्यं निवेशनीयतया तादृशोदाहरणोपनययोः तथाविध-साध्यान्वितस्वार्थबोधकविभक्तिमत्त्वविरहेणातिप्रसङ्गानवकाशादित्यत आह- **हेत्वितीति।** इदमुपलक्षणम्। पक्षविशेषणतया साध्याविषयकत्वनिवेशकल्पे विभक्तिमत्त्वमपि नोपादेयम्। तत्कल्पस्यानुषङ्गपक्षपरतया तत्पक्षे उपनयस्य निगमनैकवाक्यताविरहेण साध्यान्वितस्वार्थबोधकपदशालित्वाभावाद्दर्शितविभक्तिपदव्यावृत्तेश्च अननुषङ्गपक्ष एव

---

विषयकत्वेऽपि देवदत्तरूपपक्षविशेषणतया ज्ञानविषयकत्वाभावात् अस्मिन्नुदाहरणेऽतिव्याप्तिः। तद्वारणाय हेतुपदम्। तदुपादाने च तिङ्विभक्तेः आश्रयत्वार्थकत्वेऽपि हेतुत्वार्थकत्वाभावात् नातिव्याप्तिः। एवं विशेषणविभक्तेः अभेदार्थकत्वमते प्रमेयत्वपक्षकप्रमेयत्वसाध्यक-वाच्यत्वहेतुकस्थलीयोपनये 'प्रमेयत्वव्याप्यवाच्यत्ववत् प्रमेयत्वम्' इत्याकारकेऽतिव्याप्तिः। अत्र पक्षसाध्ययोरैक्यात् पक्षीभूतसाध्यात्मक-प्रमेयत्वान्विताभेदार्थकप्रथमाविभक्तिमत्त्वात् पक्षविशेषणतया साध्याविषयकबोध-जनकत्वाच्च तत्र उपनये अतिव्याप्तिः। तद्वारणाय हेतुपदम्। तदुपादाने च प्रथमाविभक्तेः अभेदार्थकत्वेऽपि हेतुत्वार्थकत्वाभावात् नातिव्याप्तिरिति भावः।

हेतुपदवैयर्थ्यं उपपादयति-***पक्षविशेषणतयेत्यादिना।*** पक्षविशेषणतया साध्याविषयकत्वनिवेशकल्पे हेतुपदोपादानेऽपि 'पर्वतो वह्निमान्, धूमात्' इत्यादिस्थलीये 'यो यो धूमवान् स वह्निमान्, यथा धूमाद्वह्निमन्महानसम्' इत्युदाहरणे अतिव्याप्तिः। तज्जन्यबोधे महानसविशेषणतया वह्निविषयकत्वेऽपि पक्षविशेषणतया वह्निविषयकत्वं नास्ति। एवं वह्निरूपसाध्यान्वितहेतुत्वार्थकपञ्चमीविभक्तिमत्त्वं तस्मिन्नुदाहरणेऽस्तीति अतिव्याप्तिः। तद्वारणाय प्रकृतपक्षविशेषणतापन्नसाध्यान्वितार्थबोधकविभक्तिमत्त्वं विवक्षणीयम्। तत्रत्यपञ्चम्याः महानसविशेषणतापन्नवह्न्यन्वितार्थबोधकत्वेऽपि पर्वतविशेषणतापन्नवह्न्यन्वितार्थबोधकत्वाभावात् नातिव्याप्तिः। एवञ्च ज्ञानादिसाध्यके 'य इच्छति स जानाति' इत्युदाहरणे देवदत्तविशेषणता-

सङ्गतेस्तत्कल्पे व्यावृत्त्यभावादिति केचित्। वस्तुतस्तु अनुषङ्गपक्षे उपनयस्थस्यैव पक्षबोधकेदंपदस्य निगमनघटिकीभूय साध्यान्वितार्थबोधकतया तादृशबोधे च प्रयोजनान्तरविरहेण स्वजन्यत्वानिवेशनादुपनये विभक्तिपदव्यावृत्तिस्सम्भवतीत्यवधेयम्।

---

पन्नज्ञानान्वितस्वार्थबोधकतिङ्विभक्तिमत्त्वं नास्तीति नातिव्याप्तिः। एवं प्रमेयत्वपक्षकप्रमेयत्वसाध्यकोपनये प्रथमाविभक्तेः पक्षीभूतसाध्यान्विताभेद-बोधकत्वेऽपि पक्षविशेषणतापन्नसाध्यान्वितार्थबोधकत्वाभावात् नातिव्याप्तिः। एवञ्च हेतुपद विनापि अतिव्याप्तेः वारणसंभवात् हेतुपदमनर्थकमेवेति शङ्का। समाधानं तु दीधितौ हेतुपदं संपातायातमिति। तथा च तद्वैयर्थ्यमिष्टमेवेति भावः। न केवलं हेतुपदं व्यर्थम्। अपि तु विभक्तिमत्त्वमपि व्यर्थमित्याह- **इदमुपलक्षणमिति।** निगमने उपनयस्थ-'अयं' पदानुषङ्गपक्षे एव हेतुलक्षणे पक्षविशेषणतया साध्याविषयकत्वनिवेश इति पूर्वमुक्तम्। तत्पक्षे च उपनयनिगमनयोः एकवाक्यताविरहात् उपनयस्य निगमनोपस्थापितसाध्यान्वितस्वार्थबोधकपदशालित्वाभावादेव उपनयेऽतिव्याप्त्यप्रसक्तेः तद्वारणफलकतया उपात्तं विभक्तिपदं व्यर्थमेवेति भावः। 'इदमुपलक्षण'मित्यारभ्य 'केचित्' इत्यन्तं विभक्तिपदवैयर्थ्यवादि-मतानुवादरूपम्। एवञ्च अननुषङ्गपक्षे प्रकृतहेतुविशिष्टहेतुत्व-विषयताबहिर्भूतसाध्यविषयताशून्यशाब्दबोधजनकत्वे सति साध्यान्वित-स्वार्थबोधकविभक्तिमत्त्वं हेतुलक्षणम्। अनुषङ्गपक्षे तु प्रकृतपक्षविशेषणतया साध्यविषयकत्वशून्यशाब्दबोधजनकत्वे सति प्रकृतपक्षविशेषणतापन्न-साध्यान्वितस्वार्थबोधकपदशालित्वं हेतुलक्षणम्। न तु पदे विभक्तिमत्त्वं विशेषणं, प्रयोजनाभावात् इति सिद्धम्।

'केचित्' इत्यनेन सूचितमस्वरसं प्रकटयन् विभक्तिपदस्य सार्थक्यं प्रतिपादयति - **वस्तुतस्तु** इत्यादिना। अनुषङ्गपक्षे उपनयघटकस्यैव 'इदं' पदस्य आवृत्तिः अनुसन्धानरूपा, न तु तत्सदृशपदस्य। एवञ्च उपनयघटकस्य 'इदं' पदस्य निगमनघटकपदार्थसाध्यविषयतानिरूपित 'इदं' पदार्थविषयताकबोधजनकत्वेन तादृशबोधे च स्वजन्यत्वानिवेशात् साध्यान्वितस्वार्थबोधक 'इदं' पदघटिते उपनयेऽतिव्याप्तिवारणाय

**यदि च पर्वते पर्वतभिन्नत्वप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वं हेतुत्वं च सिषाधयिषया च न्यायप्रयोगः तत्र यथा तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यतिरेक्युदाहरणेऽतिव्याप्तिरित्युच्यते,**

---

विभक्तिपदनिवेशः। तन्निवेशे च साध्यान्वितार्थबोधक 'इदं' पदवत्त्वेऽपि साध्यान्वितार्थबोधकविभक्तिमत्त्वम् उपनये नास्तीति नातिव्याप्तिरिति भावः।

ननु विभक्तित्वं सुप्-तिङ्एतदन्यतरत्वम्। तन्निवेशे गौरवम्। अनुषङ्गपक्षे इदंपदार्थे साध्यबोधः निगमनजन्य एव, न उपनयजन्य इति बोधे लाघवेन स्वजन्यत्वस्यैव निवेशात् उपनयातिव्याप्तिवारणं संभवतीत्यत आह-**तादृशबोध** इति। ***प्रयोजनान्तरविरहेणेति।*** उपनयाति-व्याप्तिवारणातिरिक्तप्रयोजनविरहेणेत्यर्थः।

दीधितौ ***यदि चेत्यादि।*** प्रथमसाध्याविषयकत्वनिर्वचनकल्पे प्रकृतहेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्यविषयताशून्य-शाब्दबोधजनकत्वे सति साध्यान्वितस्वार्थबोधकविभक्तिमत्त्वं प्रतिज्ञायाः लक्षणम्। अस्मिन् पक्षे प्रतिज्ञालक्षणस्य उदाहरणविशेषेऽति-व्याप्तिराशङ्क्यते- 'पर्वतः पर्वतभिन्नत्वप्रकारकज्ञाननिष्ठविशेष्यता-संबन्धावच्छिन्नप्रतियोगिताकाभाववान्, पर्वतभिन्नत्वप्रकारकज्ञानाभावात्' इत्यादिः न्यायप्रयोगः। यद्यपि अत्र साध्यहेत्वोरैक्यात् सिद्धसाधनात् *कथमीदृशः* न्यायप्रयोगः इति शङ्का भवति। तथापि सिद्धसाधनस्थले सिषाधयिषया न्यायप्रयोगः इष्यते। तथा च तादृशस्थले यः पर्वतभिन्नत्वेन ज्ञायते सः पर्वतभिन्नत्वेन ज्ञायते, 'यथा पर्वतभिन्नत्वप्रकारकज्ञानाभावात् उत्पन्नं पर्वतत्वप्रकारकज्ञानम्' इति व्यतिरेक्युदाहरणम्। एतादृशोदाहरणजन्यशाब्दबोधे पर्वतभिन्नत्वप्रकारकज्ञानाभावरूपसाध्यनिष्ठविषयतायाः तादृशज्ञानाभाव-रूपहेतुविशिष्टहेतुत्वविषयतान्तर्भूततया हेतुत्वविषयताबहिर्भूतसाध्य-विषयताशून्यत्वं शाब्दबोधेऽस्ति। तज्जनकत्वं च उदाहरणे वर्तते। एवं पञ्चम्यर्थे हेतुत्वे प्रकृत्यर्थस्य पर्वतत्वप्रकारकज्ञानाभावस्यान्वयात् तस्यैव च साध्यत्वात् साध्यान्वितहेतुत्वरूपस्वार्थबोधकपञ्चमी-

ननु प्रथमसाध्याविषयकत्वनिर्वचनपक्षे पर्वतः पर्वतभिन्नत्वप्रकारकज्ञानाभाववान् तादृशज्ञानाभावात् यः पर्वतभिन्नत्वेन ज्ञायते स पर्वतभिन्नत्वेन ज्ञायते यथा पर्वतभिन्नत्वज्ञानाभावादुत्पन्नं ज्ञानं इत्यादौ विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावसाध्यहेतुकव्यतिरेक्युदाहरणेऽतिव्याप्तिः। तत्र हेतुतावच्छेदकविशिष्टहेतुत्वविषयतान्तर्भूताया एव साध्यविषयतायास्सत्वात्। साध्यीभूततादृशाभावान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वाच्च प्रथमकल्पे साध्ये पक्षविशेषणतापन्नत्वानिवेशात् दृष्टान्तोपस्थाप्यस्य तादृशसाध्यस्य पक्षानन्वितत्वस्याकिञ्चित्करत्वादित्यत आह-***यदिचेति।*** सिषाधयिषया न्यायप्रयोगस्य सविवादतया यदि चेत्युक्तं, तस्य चोच्यत इत्यनेनान्वयः। समवायसम्बन्धावच्छिन्नाभावस्य साध्यत्वे ज्ञानस्य समवायेन ज्ञानरूपप्रतियोग्यनधिकरणतया न व्यतिरेकदृष्टान्तत्वसम्भव इति ***विशेष्यतयेत्युक्तम्।***

---

विभक्तिमत्त्वमपि उदाहरणवाक्येऽस्ति। यद्यपि साध्यस्य पक्षविशेषणतापन्नत्वं नास्ति, अथापि साध्यान्वितस्वार्थबोधकविभक्तिमत्त्वमित्यत्र साध्ये पक्षविशेषणतापन्नत्वं प्रथमकल्पे न निवेश्यत इति पूर्वोक्तलक्षणसद्भावात् तस्मिन् व्यतिरेक्युदाहरणेऽतिव्याप्तिरिति भावः।

***विशेष्यतया अभावस्येति।*** विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः। गादाधर्यां ***साध्यीभूतेति।*** 'ज्ञानाभावादुत्पन्नम्' इत्यत्र पञ्चम्यर्थस्य प्रकृत्यर्थज्ञानाभावान्वितत्वेन तादृशप्रकृत्यर्थस्य साध्यतया च इति भावः। ***प्रथमकल्प*** इति। द्वितीयकल्पे साध्ये पक्षविशेषणतापन्नत्वनिवेशात् नातिव्याप्तिः इत्याशयेन प्रथमकल्प इत्युक्तम्।

ननु 'इत्यत आह-यदि चेति' इति असङ्गतम्। यदि चेत्यादिना शङ्काया एव उद्भावनात् समाधानस्य अनुक्तेः इति चेत्-न। 'इत्यतः इत्याशङ्कायां यदि चेत्यादिना कृतायां तदेत्यादिना समाधानमाह' इत्यर्थात् न असङ्गतिः इति कृष्णंभट्टः। 'इत्याह-यदि चेति' इति पाठस्तु ऋजुः।

विशेष्यतयेत्यस्य प्रयोजनमाह-***समवायसंबन्धावच्छिन्नाभावस्येति।*** पर्वतभिन्नत्वप्रकारकज्ञाननिष्ठसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य यदि साध्यत्वं हेतुत्वं च स्यात्, तदा "यः पर्वतभिन्नत्वेन जानाति, सः पर्वतभिन्नत्वेन जानाति', यथा पर्वतभिन्नत्वप्रकारकज्ञानाभावादुत्पन्नज्ञानवान्

अत एव महानसत्वादिप्रकारकज्ञानाभावस्साध्यतया उपेक्षितः, विशेष्यतयापि ज्ञानस्य तादृशज्ञानवत्त्वाभावात्। साध्यस्य हेतुतायामेव हेतुत्वविशेषणतापन्नतथाविधसाध्यविषयतायाः हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भावस्सम्भवतीति तदादरः। ***ज्ञानाभावादुत्पन्नमिति।*** असंसर्गाग्रहविधया तादृशज्ञानाभावस्य पर्वतत्वप्रकारक-ज्ञानोत्पादकत्वं बोध्यं; व्यतिरेकिपर्यन्तानुधावनं विशिष्टविषयताबहिर्भूतसाध्य-विषयत्वाभावनिर्वाहाय। प्रकृतसाध्ये विशेषणतया अन्वितो यस्स्वार्थः तद्बोधकत्वं

---

इत्येव उदाहरणं संभवति। तदा तु आत्मरूपस्य दृष्टान्तस्य ज्ञानस्याव्याप्यवृत्तितया ज्ञानाभावरूपसाध्याधिकरणतया साध्यानधिकरणस्यैव व्यतिरेकदृष्टान्तत्वमिति नियमभङ्गः। अतः विशेष्यतया ज्ञानाभावस्य साध्यत्वहेतुत्वानुसरणम्। ज्ञानं तु दृष्टान्तः न भवितुमर्हति। तस्य समवायसंबन्धेन पर्वतभिन्नत्वप्रकारकज्ञानवत्त्वाभावात् इति भावः। ***अत एवेति।*** प्रतियोग्यनधिकरणतया व्यतिरेकदृष्टान्तत्वसंभवादेवेत्यर्थः। यदि महानसत्वप्रकारकज्ञानस्य विशेष्यतया अभावः साध्यो हेतुश्च तदा यः महानसत्वेन ज्ञायते सः महानसत्वेन ज्ञायते, यथा महानसत्वज्ञानाभावादुत्पन्नं ज्ञानमिति व्यतिरेक्युदाहरणं प्रयोक्तव्यम्। तच्च न संभवति। ज्ञानरूपे दृष्टान्ते महानसत्वविरहेण विशेष्यतासंबन्धेन महानसत्वप्रकारकज्ञानानधिकरणत्वात् इति भावः। साध्यस्यैव हेतुत्वानुसरणे निमित्तमाह–***साध्यस्य हेतुतायामेवेति।*** पर्वतभिन्नत्वप्रकारकज्ञानाभावस्य पर्वतत्वप्रकारकज्ञानोत्पत्तौ हेतुत्वमुपपादयति– ***असंसर्गाग्रहविधया*** इति। 'अयं पर्वतः' इति ज्ञानं प्रति 'अयं पर्वतान्यः' इति ज्ञानस्य बाधमुद्रया प्रतिबन्धकत्वात् तदभावस्य हेतुत्वमिति भावः। असंसर्गाग्रहपदेन तदभावज्ञानं तद्भिन्नत्वज्ञानं च बाधग्रहरूपं विवक्षितम्।

***व्यतिरेकिपर्यन्तानुधावनमिति।*** अन्वय्युदाहरणे 'यः पर्वतभिन्नत्वेन न ज्ञायते, सः पर्वतभिन्नत्वेन न ज्ञायते, यथा पर्वतः' इत्याकारके साध्यविषयतायाः हेतुविशिष्टहेतुत्वविषयताबहिर्भूतत्वात् बहिर्भूतसाध्यविषयता-शून्यबोधजनकत्वं नास्तीति अतिव्याप्त्यसंभवात् व्यतिरेक्युदाहरणानुधावनमिति भावः।

ननु साध्यान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वमित्यत्र साध्ये

**तदा अवयवान्तरोपस्थापितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम्। उदाहरणान्यत्वेन वा विशेषणीयम्।**

---

च दर्शितहेतुत्वपक्षकोपनयस्थेदंपदस्य नास्तीति तद्विवक्षणे विभक्तिपदवैयर्थ्यमिति विशेष्यविशेषणसाधारणमेवान्वितत्वं निवेशनीयं इत्युक्तोदाहरणजन्यबोधे पञ्चम्यर्थस्य

---

विशेषणतया अन्वितः यः स्वार्थः तद्बोधकत्वं विवक्षितम्। उक्तव्यतिरेक्युदाहरणजन्यबोधे प्रकृत्यर्थरूपसाध्यस्य पञ्चम्यर्थः विशेष्यः न तु विशेषणमिति कथमतिव्याप्तिप्रसक्तिः इत्यत्र आह–***प्रकृतसाध्य*** इति। 'हेतुत्वं प्रमेयम्, हेतुत्वात्' इत्यत्र 'प्रमेयत्वव्याप्यहेतुत्ववदिदम्' इति उपनयस्थ 'इदं' पदस्य निगमनोपस्थाप्यसाध्यं प्रति विशेष्यतयान्वितस्वार्थबोधकत्वेऽपि साध्ये विशेषणतयान्वितस्वार्थबोधकत्वविरहात् तद्घटिते उपनये अतिव्याप्त्यप्रसक्त्या पूर्वोक्तं विभक्तिपदसार्थक्यं न घटेत। तत्सार्थक्याय विशेष्यतया विशेषणतया वा साध्यान्वितो यः स्वार्थः तद्बोधकत्वमेव विवक्षणीयम्। तथा च पञ्चम्यर्थस्य साध्यं प्रति विशेष्यत्वेऽपि साध्यान्वितत्वमस्तीति साध्यान्वितार्थबोधकविभक्तिमत्त्वात् व्यतिरेक्युदाहरणे अतिव्याप्तिप्रसक्तिरित्याशयः।

दीधितौ–***तदा अवयवान्तरोपस्थापितेति।*** अवयवान्तरेण उपस्थापितः यः अर्थः तदन्वितः यः स्वार्थः विभक्त्यर्थः। तद्बोधकविभक्ति–मत्त्वमित्यर्थः। 'अयं पर्वतभिन्नत्वप्रकारकज्ञानाभाववान्, पर्वतभिन्नत्वप्रकारक–ज्ञानाभावात्' इत्यत्र 'यः पर्वतभिन्नत्वेन ज्ञायते, स पर्वतभिन्नत्वेन ज्ञायते, यथा तादृशज्ञानाभावादुत्पन्नं ज्ञान'मिति व्यतिरेक्युदाहरणे दृष्टान्तघटकपञ्चमीविभक्त्यर्थस्य स्वभिन्नावयवोपस्थापितार्थान्वितत्वाभावात् नातिव्याप्तिरिति भावः। अथवा उदाहरणान्यत्वं निवेश्य तत्रातिव्याप्तिर्वारणीया इत्याशयेन उदाहरणान्यत्वेन वा इत्युक्तम्।

ननु अवयवान्तरेत्यादि दीधितिरसङ्गता। 'यः पर्वतभिन्नत्वेन ज्ञायते सः पर्वतभिन्नत्वेन ज्ञायते, यथा पर्वतभिन्नत्वप्रकारकज्ञानाभावात् उत्पन्नं ज्ञानम्' इत्युदाहरणे पञ्चम्याः प्रकृत्यर्थान्वितस्वार्थबोधकत्वं तु वर्तत एव। प्रकृत्यर्थस्य तु वस्तुगत्या 'पर्वतः पर्वतभिन्नत्वप्रकारकज्ञानाभाववान्'

साध्यविशेष्यत्वेऽप्यतिप्रसङ्ग एवेत्यभिप्रायः। **अवयवान्तरेति।** स्वभिन्नावयवघटक-पदजन्योपस्थितिसहकारेण स्वाघटकपदजन्योपस्थितिसहकारेण वा तत्पदार्थान्वित-स्वार्थकबोधकविभक्तिमत्त्वमित्यर्थः। तेन तादृशसाध्यस्य प्रतिज्ञावयवस्थ-पदोपस्थापितत्वेऽपि नातिव्याप्तिः। न चैवमनुषङ्गपक्षे साध्याविषयकत्वविशेषणमनर्थकं, निगमनस्य तत्पक्षे उपनयैकवाक्यताविरहेणावयवान्तरोपस्थापितार्थान्वितस्वार्थबोधक-विभक्तिमत्त्वाभावाद्व्यावृत्त्यसङ्गतेरिति वाच्यम्। चैत्रः पचति पाककृतिसामग्रीमत्त्वादित्यादौ पाककृत्यादिसाध्यकप्रतिज्ञायां हेत्ववयवस्थपञ्चम्युपस्थाप्यहेतुत्वान्वितस्वार्थबोधकाख्यात-विभक्तिमत्यामतिव्याप्तिवारणाय साध्याविषयकत्वोपादानस्यावश्यकत्वात्। प्रथमरीत्या

---

इति प्रतिज्ञाघटकसाध्यपदोपस्थितार्थरूपतया प्रतिज्ञारूपावयवान्तरोप-स्थापितार्थान्वितस्वार्थबोधकत्वमक्षतमिति अतिव्याप्तिः अवयवान्तरेत्यादिरीत्या विवक्षायामपि दुर्वारैव इत्यत आह–**स्वभिन्नेति** गादाधर्याम्। उदाहरणात् बोधे जननीये स्वघटकपदजन्योपस्थितय एव सामग्रीघटिकाः। न तु प्रतिज्ञाघटकतदजन्यपर्वतभिन्नत्वप्रकारकज्ञानाभावोपस्थितिः। तथा च स्वभिन्नावयवघटकपदजन्योपस्थितिसहकारेण अवयवान्तरघटकपदोप-स्थापितार्थान्वितस्वार्थबोधकत्वाभावात् पञ्चम्याः नातिव्याप्तिरिति भावः। **तत्पदार्थान्वितेति।** अवयवान्तरघटकपदोपस्थापितार्थान्वितेत्यर्थः। **तादृशसाध्यस्येति।** उदाहरणघटकपञ्चमीप्रकृत्यर्थरूपस्य साध्यस्येत्यर्थः।

**न चैवमनुषङ्गपक्ष** इति। निगमने उपनयस्थ 'अयं'पदानुषङ्ग इति पक्षे उपनयनिगमनयोः भिन्नवाक्यतया निगमनघटकपञ्चम्याः स्वघटकपदोपस्थापितार्थान्वितस्वार्थबोधकत्वेऽपि अवयवान्तरोपस्थापितार्थान्वित-स्वार्थबोधकत्वाभावात् अतिव्याप्त्यप्रसक्तेः साध्याविषयकत्वविशेषणमनर्थकमिति शङ्का। अत्र यद्यपि स्वभिन्नावयवघटकपदजन्योपस्थितिसहकारेण तत्पदार्थान्वितस्वार्थबोधकत्वघटितः एकः कल्पः; स्वाघटकपदजन्योप-स्थितिसहकारेण तत्पदार्थान्वितस्वार्थबोधकत्वघटितः अपरः कल्पः। अनयोश्च कल्पयोः 'तस्माद्वह्निमान्' इति निगमने 'अयं' पदानुषङ्गपक्षे उपनयैकवाक्यतासत्त्वेऽपि तथाविधस्वार्थबोधकविभक्तिमत्त्वाभावात् साध्याविषयकत्वमनर्थकमेवेति अनुषङ्गपक्ष इत्ययुक्तम्। तथापि अनुषङ्गपक्षे 'तस्मादितरेभ्यो भिद्यते' इति निगमनेऽतिव्याप्तिः। उपनयघटक 'अयं'

साध्याविषयकत्वनिर्वचनस्याननुषङ्गपक्ष इव अनुषङ्गपक्षेऽपि असम्भवात् अननुषङ्गपक्षे एवेयं विवक्षा, अनुषङ्गपक्षे उदाहरणान्यत्वविशेषणेनानुपदोक्तोदाहरणं वारणीयमित्यपि वदन्ति।

---

पदार्थान्विताख्यातार्थाश्रयताबोधकत्वात् आख्यातविभक्तेः। अतः साध्याविषयकत्वं तद्वारकतया सार्थकं भवतीति 'अनुषङ्गपक्षे' इत्युक्तम्। तत्पक्षे तु उपनयघटकं 'अयं' पदं निगमनघटकमेवेति स्वाघटकपदजन्योपस्थितिसहकारेण अवयवान्तरार्थान्वितस्वार्थबोधकत्व-माख्यातविभक्तेर्नास्तीति नातिव्याप्तिः इत्याशयेन ***स्वाघटकपदजन्योपस्थिति-सहकारेण वा*** इत्युक्तम्।

समाधत्ते – ***चैत्रः पचतीत्यादिना।*** 'चैत्रः पचति, पाककृतिसामग्रीमत्त्वात्' इत्यादौ पाककृतिसाध्यकप्रतिज्ञायामतिव्याप्तिः। प्रतिज्ञाघटकाख्यातोपस्थाप्यकृतौ हेतुवाक्यस्थपञ्चम्यर्थस्य हेतुत्वस्य निरूपकतासंबन्धेन अन्वयात् स्वभिन्नहेतुघटकपञ्चम्यर्थान्वितस्वार्थ-वोधकत्वस्य प्रतिज्ञाघटके आख्याते सद्भावात् तादृशाख्यातविभक्तिमत्यां प्रतिज्ञायामतिव्याप्तिः। तद्वारणाय साध्याविषयकत्वं बोधे निवेशनीयम्। तन्निवेशे साध्यविषयकबोधजनकप्रतिज्ञायां साध्याविषयकबोधजनकत्वाभावात् नातिव्याप्तिरिति भावः।

मतान्तरमाह – ***प्रथमरीत्येति।*** अवयवान्तरोपस्थापितेत्यादिविवक्षा अननुषङ्गपक्ष एव। अनुषङ्गपक्षे तु पूर्वोक्तव्यतिरेक्युदाहरणवारणम् उदाहरणान्यत्वनिवेशेन कर्तव्यम्। अतः अनुषङ्गपक्षेऽस्याः विवक्षाया अभावात् साध्याविषयकत्वविशेषणवैयर्थ्यशङ्का नास्तीति भावः। अयमत्र निर्गलितार्थः– इयम् अवयवान्तरोपस्थापितेत्यादिविवक्षा प्रथमरीत्या साध्याविषयकबोधजनकत्वे सति स्वाघटकपदजन्योपस्थितिसहकारेण तत्पदार्थान्वितस्वार्थबोधकविभक्तिमन्न्यायावयवत्त्वम् अननुषङ्गपक्षे लक्षणम् इति। वस्तुतस्तु अनुषङ्गपक्षे एतद्विवक्षायामपि 'तस्मात् इतरेभ्यो भिद्यते' इति निगमनवारणाय साध्याविषयकेत्यस्य सार्थक्यम्। स्वभिन्नावयव-घटकपदजन्योपस्थितिसहकारेण 'अयं' पदार्थान्वितस्वार्थबोधकाख्यातशालित्वात्

इत्यस्वारस्यं सूचयितुं 'वदन्ति' इत्युक्तम्।

न्यायावयवत्वे सति साध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वमिति यथाश्रुतलक्षणे 'अयं वह्निमान् वह्निसामग्रीमत्त्वात्' इत्यत्र हेतुवाक्येऽव्याप्तिः। वह्निरूपसाध्यस्य हेतुघटकतया हेतुजन्यबोधस्य साध्यविषयकत्वेन तदविषयकत्वाभावात् इत्याशङ्क्य दीधितौ साध्याविषयकत्वस्य द्वेधा परिष्कारः कृतः। तत्र विभक्तिपदस्य 'अयं न धूमादालोकवान्, आर्द्रेन्धनशून्यत्वात्' इत्यादौ 'यो यः धूमादालोकवान् स आर्द्रेन्धनवान्' इति व्यतिरेक्युदाहरणेऽतिव्याप्तिवारकतया सार्थक्यं च कथितम्। केचित्तु उक्ताव्याप्त्यतिव्याप्त्योः प्रकारान्तरेण वारणं कुर्वन्ति। तन्मतं 'केचित्तु' इत्यादिना अनूदितं दीधितौ। साध्यविषयकधीजनकत्वाव्याप्यं हेतुविभक्तिमत्त्वव्याप्यं च यत् अवयवतावच्छेदकं रूपं तद्वत्त्वं हेतुलक्षणम्। हेतुत्वस्य अवयवतावच्छेदकस्य साध्यविषयकधीजनके 'वह्निसामग्रीमत्त्वात्' इति वाक्ये सद्भावेऽपि साध्यविषयकधीजनकत्वव्याप्यत्वं नास्ति। साध्यविषयकधीजनकत्वशून्ये 'धूमात्' इत्यादावपि हेतुत्वसद्भावात्। एवं 'यत्र यत्र हेतुवाक्यत्वम्, तत्र तत्र हेतुविभक्तिमत्त्वम्' इति व्याप्तेः हेतुत्वं हेतुविभक्तिमत्त्वव्याप्यं च भवति; तद्वत्त्वमादाय सर्वेषु हेतुवाक्येषु समन्वयः। निगमने नियमेन हेतुविभक्तेः सद्भावात् हेतुविभक्तिमत्त्वव्याप्यम् अवयवतावच्छेदकं निगमनत्वमपि। तद्वति निगमने अतिव्याप्तिवारणाय साध्यविषयकधीजनकत्वाव्याप्येति विशेषणम्। निगमनत्वं तु साध्यविषयकधीजनकत्वव्याप्यमिति नातिव्याप्तिः। साध्यविषयकधीजनकत्वाव्याप्योदाहरणत्ववति अभावसाध्यकव्यतिरेक्युदाहरणे अतिव्याप्तिवारणाय हेतुविभक्तिमत्त्वव्याप्यत्वनिवेशः। साध्याविषयकधीजनकत्वाव्याप्येत्यस्य स्थाने साध्याविषयकधीजनकत्वासमानाधिकरणेत्युक्तौ हेतुत्वस्यापि साध्यविषयकधीजनके 'वह्निसामग्रीमत्त्वात्' इत्यादौ वर्तमानतया तादृशधीजनकत्वासामानाधिकरण्यासंभवात् लक्षणस्यासंभवः इति असामानाधिकरण्यमुपेक्ष्य अव्याप्यत्वनिवेशः।

केचित्तु साध्यविषयकधीजनकत्वानियतहेतुविभक्तिमत्वनियतावयवतावच्छेदक-रूपवत्त्वं समुदितलक्षणार्थ इत्याहुः। तच्चिन्त्यम्।

---

साध्यघटितार्थबोधकोक्तहेतावव्याप्तिं हेतुविभक्तिमदुक्तोदाहरणेऽतिव्याप्तिञ्च प्रकारान्तरेण वारयतां मतमाह- ***केचित्त्विति।*** निगमने हेतुविभक्तिमत्त्वनैयत्या-दतिव्याप्तिवारणाय अनियतान्तम्। हेतुत्वस्यापि साध्यबोधकोक्तहेतुवृत्तितया असम्भव इति असामानाधिकरण्यमुपेक्ष्य अनियतत्वनिवेशः। उदाहरणोपनययोस्साध्यबोधकयोरपि सम्भवादुदाहरणोपनयसामान्यवारणाय नियतान्तम्। हेतुविभक्तिमद्दर्शितोदाहरण-वृत्त्युदाहरणत्वमादायातिप्रसङ्गवारणाय सामानाधिकरण्यमुपेक्ष्य नियतत्वनिवेशनम्। विभक्तिमत्त्वमनुपादेयं, हेतुत्वप्रतिपादकपदवत्त्वनैयत्यनिवेशेनैवानतिप्रसङ्गात् हेतुत्व-

---

एवं हेतुविभक्तिमत्त्वव्याप्येत्यस्य स्थाने हेतुविभक्तिमत्वसमानाधि-करणेत्युक्तौ 'यः पर्वतभिन्नत्वेन ज्ञायते स पर्वतभिन्नत्वेन ज्ञायते, यथा पर्वतभिन्नत्वप्रकारकज्ञानाभावादुत्पन्नं ज्ञानम्' इति व्यतिरेक्युदाहरणे हेतुविभक्तिमत्त्वस्य सद्भावात् तत्समानाधिकरणोदाहरणत्ववति उदाहरणेऽतिव्याप्तिः स्यात्। अतः हेतुविभक्तिमत्त्वव्याप्येत्युक्तम्।

गादाधर्या-***साध्यघटितेति।*** 'वह्निसामग्रीमत्त्वात्' इत्यादौ इत्यर्थः। ***उक्तोदाहरण*** इति। धूमादालोकाभावादिसाध्यकव्यतिरेक्युदाहरणे इत्यर्थः। ***उक्तहेतुवृत्तितयेति।*** 'वह्निसामग्रीमत्त्वात्' इति हेतुवाक्यवृत्तितयेत्यर्थः। ***उदाहरणोपनययोरिति।*** **अभावसाध्यकव्यतिरेकिणोरित्यादिः।** ***नियतान्तमिति।*** हेतुविभक्तिमत्त्वनियतेति विशेषणपरित्यागे उभयत्रातिव्याप्तिरित्यर्थः। ***दर्शितोदाहरणवृत्ति*** इति। 'यः पर्वतभिन्नत्वेन ज्ञायते, स पर्वतभिन्नत्वेन ज्ञायते, यथा तथाविधज्ञानाभावादुत्पन्नं ज्ञानम्' इत्युदाहरणवृत्तीत्यर्थः। ***विभक्तिमत्त्वमनुपादेयमिति।*** हेतुत्वप्रतिपादकपदवत्त्वनियतत्त्वनिवेशेनैव हेत्वतिरिक्तावयवेषु अतिव्याप्तिवारणं संभवति। तेषु हेतुत्वप्रतिपादक-पदाभावात्। अथवा हेतुत्वप्रतिपादकपदवत्त्वनियतत्वं यदि अवयवता-वच्छेदकरूपे विशेषणम्, तदा विभक्तिपदं व्यर्थम्। यदि तु अर्थप्रतिपादकविभक्तिमत्त्वनियतत्वं निवेश्यते, तदा हेतुत्वपदं व्यर्थम्। हेत्वतिरिक्तेषु विद्यमानाया विभक्तेः निरर्थकत्वात्। निगमनघटक-

हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं वा।

---

हेतुत्वप्रतिपादकेति। विभक्त्यर्थहेतुत्वविशेष्यकान्वयबोधजनक-न्यायावयवत्वमर्थः। हेतुत्वं प्रमेयमित्यादिप्रतिज्ञावारणाय *विभक्त्यर्थेति।*

---

प्रतिपादक- पदवत्त्वनैयत्यार्थप्रतिपादकविभक्तिमत्त्वनैयत्ययोर्वैकल्पिकमुपादानं वा। तत्र च द्वितीयकल्पो विशेषणविभक्तेर्निरर्थकत्वमताभिप्रायेण। उदाहरणविशेषत्वमादायोक्तो-दाहरणेऽतिप्रसङ्गवारणायावयवतावच्छेदकेति। *चिन्त्यमिति।* चिन्ताबीजं पूर्ववत् यथाश्रुतप्रतीतद्वितीयलक्षणार्थस्य निगमनसाधारणतयाऽन्यथा व्याचष्टे- *विभक्त्यर्थेति।*

---

पञ्चमीविभक्तेः अर्थवत्त्वेऽपि साध्याविषयकेत्यादिनैव निगमनातिव्याप्ति-वारणसंभवात् इति भावः। ***अनतिप्रसङ्गादिति।*** हेत्वतिरिक्तेषु अवयवेषु अतिव्याप्त्यभावात् इत्यर्थः। **वैकल्पिकमिति।** एकलक्षणे न उभयोः प्रवेश इत्यर्थः। ***द्वितीयकल्प*** इति। अर्थप्रतिपादकविभक्तिमत्त्वनैयत्यकल्प इत्यर्थः। ***निरर्थकत्वमतानुसारेणेति।*** तत्सार्थकत्वमते तु उदाहरणोपनययोः अतिव्याप्तिवारणाय प्रथमकल्प एव आश्रयणीय इति भावः। **उदाहरणविशेषत्वमिति।** अवयवतावच्छेदकत्वानुपादाने 'यः धूमादालोकवान् स आर्द्रेन्धनवान्' इति व्यतिरेक्युदाहरणे विद्यमानस्य उदाहरणविशेषत्वस्य साध्यविषयकधीजनकत्वाव्याप्यत्वात् हेतुविभक्तिमत्त्वव्याप्यत्वाच्च तद्वति उदाहरणविशेषेऽतिव्याप्तिः स्यात्। तद्वारणाय अवयवतावच्छेदकत्वनिवेशः। उदाहरणविशेषत्वं तु न अवयवतावच्छेदकम्। अवयवत्वव्याप्यव्याप्यस्य अवयवतावच्छेदकत्वानङ्गीकारादिति नातिव्याप्तिरिति भावः। ***चिन्ताबीजं पूर्ववदिति।*** आत्माश्रयभयेन तथाविधावच्छेदकरूपान्तरस्य परिचयोऽपेक्षितः। तच्च रूपं यदि निरुक्तसाध्याविषयकशाब्दबोधजनकत्वे सति निरुक्तहेतुविभक्तिमन्न्यायावयवत्वादि तदा तस्यैव लक्षणत्वसंभवात् व्यर्थविशेषणता। "एवं साध्यादिभेदेन हेतुत्वभेदे वह्निसामग्रीमत्त्वादि-वृत्तिहेतुत्वस्य साध्यविषयकज्ञानजनकत्वनियतत्वात् अव्याप्तिः। धूमादालोकाभावसाध्यकोपनयादौ अतिव्याप्तिश्च। साध्यादिभेदेन हेतुत्वाभेदे च मानाभावः" इति पूर्वमुक्तमत्र स्मर्तव्यमिति भावः।

***हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम्*** इति मूले

**"तस्मादितरेभ्यो, भिद्यत" इत्यादिनिगमनवारणाय *हेतुत्वेति* *विशेष्येति* च।**

---

विभक्तिजन्यहेतुत्वोपस्थितिद्वारा हेतुत्वमुख्यविशेष्यकशाब्दधीजनकन्यायावयवत्वमित्यर्थः। तेन हेतुत्वे विभक्त्यर्थत्वविशेषणस्याव्यावर्तकत्वेऽपि न क्षतिः। ***निगमनवारणायेति।***

---

द्वितीयलक्षणमुक्तम्। हेतुत्वप्रतिपादकविभक्तिमत्त्वे सति न्यायावयवत्त्वं हेतुलक्षणम्। पञ्चम्यन्तसदृशे उदासीनवाक्ये अतिव्याप्तिवारणाय न्यायावयवत्वनिवेशः। प्रतिज्ञादावतिव्याप्तिवारणाय हेतुत्वप्रतिपादकविभक्ति-मत्त्वनिवेशः। परन्तु अस्मिन् यथाश्रुतार्थे निगमने अतिव्याप्तिः। तत्रापि हेतुत्वप्रतिपादकपञ्चमीविभक्तिमत्त्वस्य न्यायावयवत्वस्य च सद्भावात्। अतः दीधितौ यथाश्रुतार्थानादरेण विभक्त्यर्थहेतुत्वविशेष्यकेत्यादिना व्याख्यानं कृतम्। विभक्त्यर्थहेतुत्वविशेष्यकशाब्दबोधजनकत्वे सति न्यायावयवत्वमिति दीधितिग्रन्थात् लभ्यते। निगमनजन्यशाब्दबोधे विभक्त्यर्थहेतुत्वस्य साध्यविशेषणतया भानात् हेतुत्वविशेष्यकत्वं नास्तीति न निगमनेऽतिव्याप्तिः। एवं हेतुत्वे विभक्त्यर्थत्वानिवेशे 'हेतुत्वं प्रमेयम्, हेतुत्वात्' इत्यादिन्यायान्तर्गतप्रतिज्ञायामतिव्याप्तिः। तज्जन्यबोधेऽपि हेतुत्वस्य विशेष्यत्वात्। अतः विभक्त्यर्थत्वनिवेशः। उक्तप्रतिज्ञाजन्यबोधे हेतुत्वपदार्थस्य हेतुत्वस्य विशेष्यत्वेऽपि विभक्त्यर्थहेतुत्वविशेष्यकत्वं बोधे नास्तीति नातिव्याप्तिः। हेतुत्वमनुपादाय विभक्त्यर्थविशेष्यकेत्युक्तौ हेतुत्वमुपादाय विभक्त्यर्थहेतुत्वविषयकेत्युक्तौ च 'तस्मात् इतरेभ्यो भिद्यते' इति निगमने अतिव्याप्तिः। आख्यातविभक्त्यर्थविशेष्यकत्वात्। पञ्चमीविभक्त्यर्थहेतुत्वविषयकत्वाच्च निगमनजन्यबोधस्य। अतः हेतुत्वविशेष्यपदयोः उपादानम् इति दीधितिग्रन्थस्य भावः।

ननु विभक्त्यर्थहेतुत्वविशेष्यकेत्युक्तावपि 'तस्माद्वह्निमान्' इति निगमनजन्यबोधे पञ्चम्यर्थस्य हेतुत्वस्य स्वप्रकृत्यर्थं प्रति विशेष्यतया विभक्त्यर्थहेतुत्वविशेष्यकत्वमक्षतमिति निगमनेऽतिव्याप्तिः। एवं 'हेतुत्वं प्रमेयम्' इति प्रतिज्ञायां पञ्चम्यर्थहेतुत्वस्य हेतुत्वपदार्थत्वस्य च एकत्वात्

**'घटो दण्डात्' 'वह्निर्धूमादि'त्यादिकाः न प्रतिज्ञाः। तदवृत्तेरतदात्मनश्च तद्धर्मव्यापकत्वायोगात्। सम्प्रदायविरोधाच्च। तेन तत्रत्यनिगमने नातिप्रसङ्ग इति भावः।**

---

तत्र तिङर्थस्य विशेष्यत्वादिति भावः। ***विशेष्येतीति।*** हेतुत्वविशेष्यकत्वस्य तत्रापि सत्त्वेन मुख्यविशेष्यतापर्यन्तानिवेशने तत्रातिव्याप्तिरेवेति भावः। ननु घटो दण्डादित्यादिप्रतिज्ञाघटितघटादिपक्षकनिरूपकतासंसर्गकदण्डादिनिष्ठहेतुतासाध्यकन्यायान्तर्गते तस्माद्दण्डादित्याकारकनिगमने अननुषङ्गपक्षे विभक्त्यर्थहेतुत्वविशेष्यक-बोधजनकेऽतिव्याप्तिरत आह– ***घटो दण्डादिति।*** ज्ञापकत्वरूपहेतुत्वस्यैव प्रकृते निवेशनीयतया जनकत्वरूपहेतुत्वसाध्यकप्रथमस्थले नातिव्याप्तिप्रसक्तिरित्यतो

---

विभक्त्यर्थरूपहेतुत्वपदार्थहेतुत्वविशेष्यकबोधजनकत्वात् अतिव्याप्तिः इत्यतो व्याचष्टे गादाधर्याम्–***विभक्तिजन्येति।*** तथा च विभक्तिजन्या या हेतुत्वोपस्थितिः तत्सहकारेण हेतुत्वमुख्यविशेष्यकशाब्दबोधजनक-न्यायावयवत्वं हेतुलक्षणम्। निगमनजन्यशाब्दबोधे हेतुत्वस्य पञ्चमीप्रकृत्यर्थं प्रति विशेष्यत्वेऽपि साध्यं प्रति विशेषणत्वात् इतराविशेषणत्वे सति विशेष्यत्वरूपं मुख्यविशेष्यत्वं नास्तीति हेतुत्वमुख्यविशेष्यकशाब्दबोध-जनकत्वाभावात् न निगमनेऽतिव्याप्तिः। 'हेतुत्वं प्रमेयम्' इति प्रतिज्ञायां हेतुत्वपदजन्यहेतुत्वोपस्थितिसहकारेण हेतुत्वविशेष्यकबोधजनकत्वमेवास्ति, न तु विभक्तिजन्यहेतुत्वोपस्थितिसहकारेणेति नातिव्याप्तिरिति भावः। ***तेनेति***– एवं विवक्षणेनेत्यर्थः। ***अव्यावर्तकत्वेऽपीति।*** व्यर्थत्वेपीत्यर्थः। **ननु घटो दण्डादिति।** पञ्चम्याः हेतुत्वमर्थः। तत्र प्रकृत्यर्थस्य दण्डस्य आधेयतासंबन्धेन अन्वयः। हेतुत्वस्य निरूपकतासंबन्धेन पक्षे घटेऽन्वयः। अत्र घटः पक्षः, दण्डनिष्ठहेतुत्वं साध्यम्; निरूपकत्वं साध्यतावच्छेदकसंबन्धः। 'तस्मात् दण्डात्' इति निगमनवाक्यम्। घटवाचकम् 'अयं' पदं तत्र नानुषज्यते। अतः 'तद्धेतुकदण्डनिष्ठं हेतुत्वम्' इति निगमनात् शाब्दबोधः। तत्र विभक्त्यर्थहेतुत्वं मुख्यविशेष्यतया भासते। अतः विभक्त्यर्थहेतुत्वमुख्यविशेष्यक-शाब्दबोधजनकत्वस्य न्यायावयवत्वस्य च सत्त्वात् तत्रत्यनिगमनेऽति-

उदाहरणप्रयोजकाकांक्षाजनकशाब्दज्ञानजनकन्यायावयवत्वं वा।

उदाहरणेति। क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यतासत्त्वान्नाव्याप्तिः।

वह्निपक्षकधूमनिष्ठहेतुतासाध्यकस्थलान्तरानुसरणम्। ***तदवृत्तेरिति।*** तादात्म्यातिरिक्त-वृत्त्यनियामकसम्बन्धेन व्यापकत्वानभ्युपगमादिति भावः। तादात्म्येन स्वस्य स्वधर्मव्यापकत्वसत्त्वादाह- ***अतदात्मन*** इति। ***तद्धर्मेति।*** तद्वृत्तिधर्मेत्यर्थः। ज्ञाप्यताया एव नवीनमते पञ्चम्यर्थतया ज्ञाप्यत्वसाध्यकतादृशप्रतिज्ञा सम्भवत्येव। तथाचासम्भववारणाय लक्षणस्थहेतुत्वपदेनापि तादृशस्य हेतुत्वरूपार्थस्यैव विवक्षणीयतया तत्रत्यनिगमनेऽतिव्याप्तितादवस्थ्यमित्याशङ्क्याह- ***सम्प्रदायविरोधाच्चेति।***

व्याप्तिरिति शङ्का। यदि तु ज्ञापकत्वरूपहेतुत्वविशेष्यकशाब्दज्ञानजनक-न्यायावयवत्वमिति विवक्ष्यते, तदा कारकत्वरूपहेतुत्वविशेष्यकबोधजनके 'घटो दण्डात्' इति निगमने न अतिव्याप्तिप्रसक्तिः इत्युच्यते, तदा 'वह्निर्धूमात्' इति प्रतिज्ञाघटितन्यायान्तर्गते 'तस्मात् धूमात्' इति निगमनेऽतिव्याप्तिः। समाधानं तु-एवंरूपाः प्रतिज्ञाः नाङ्गीक्रियन्ते। तत्र हेतुः ***तदवृत्तेरिति।*** वृत्तिनियामकसंबन्धेन हेतुव्यापकस्य पक्षसंबन्धिनः एव साध्यत्वम्। कारकत्वं ज्ञापकत्वं वा वृत्त्यनियामकेन निरूपकत्वसंबन्धेन व्यापकं पक्षसंबन्धीति च तस्य न साध्यत्वम्। एवञ्चेत् 'अयं गौः' इत्यादि तादात्म्यसंसर्गकप्रतिज्ञायाः कथमुपपत्तिरित्या-शङ्कायां ***अतदात्मन*** इत्युक्तम्। तादात्म्यसंबन्धेन वृत्त्यनियामकेनापि पक्षसंबन्धिनः साध्यत्वमङ्गीक्रियते। एवञ्च तादात्म्यातिरिक्तवृत्त्य-नियामकसंबन्धेन हेतुव्यापकस्य पक्षसंबन्धिनः साध्यत्वं नाङ्गीक्रियते इति फलितम्।

गादाधर्याम्-***अननुषङ्गपक्ष*** इति। अनुषङ्गपक्षे तु 'अयं' पदार्थस्यैव मुख्यविशेष्यत्वात् विभक्त्यर्थहेतुत्वमुख्यविशेष्यकत्वं नास्तीति नातिव्याप्तिप्रसक्तिरिति भावः। ***तादात्म्येन स्वस्येति। स्वस्य-*** स्वधर्मं हेतुं प्रति तादात्म्यसंबन्धेन व्यापकत्वात् इत्यर्थः। ***तद्वृत्तिधर्मेत्यर्थ*** इति। पक्षवृत्तिः हेतुरूपः यः धर्मः तं प्रति तदवृत्तेः अतदात्मनश्च व्यापकत्वायोगात् इति दीधितिग्रन्थार्थः। ***ज्ञाप्यताया एवेति।*** नवीनानां मते

**अनुक्तोदाहरणस्थलेऽपि तादृशस्वरूपयोग्यतासत्त्वात्तद्वारणाय न्यायावयवेति। उदाहरणत्वं चेदं न न्यायावयवत्वगर्भम्। वैयर्थ्यात्।**

---

न्यायानन्तर्गतस्य धूमादित्यादिवाक्यस्योदाहरणप्रयोजकजिज्ञासोपधायकत्वविरहेऽपि तत्स्वरूपयोग्यतामादायातिव्याप्तिं प्रसज्य न्यायावयवत्वदळं सार्थकीचिकीर्षुर्जनकपदस्य स्वरूपयोग्यतापरत्वं स्फुटयति- **क्वचिदिति।** अभ्युपेत्य फलोपधाननिवेशेऽपि न्यायावयवत्वनिवेशनमावश्यकमित्याह- **उदाहरणत्वं चेति। वैयर्थ्यात्।** प्रयोजनान्तराभावात्। तथा च यत्रोदाहरणान्तमेव प्रयुक्तं तत्राप्युदाहरणप्रयोजक-जिज्ञासाफलोपधानसम्भवेनातिव्याप्तिवारणाय न्यायावयवत्वनिवेशनं जनकपदस्य

---

हेतुवाक्यघटकपञ्चम्याः न ज्ञापकत्वमर्थः। अपि तु ज्ञाप्यत्वमेव। तस्य आश्रयत्वरूपवृत्तिनियामकसंबन्धेन साध्येऽन्वयः। एवञ्च तन्मते विभक्त्यर्थज्ञाप्यत्वमुख्यविशेष्यकशाब्दबोधजनकन्यायावयवत्वमेव हेतुलक्षणम्। तन्मतानुसारेण 'वह्निर्धूमात्' इति प्रतिज्ञा संभवत्येव। ज्ञाप्यतायाः वृत्तिनियामकेन आश्रयत्वसंबन्धेन हेतुव्यापकतया पक्षसंबन्धित्वेन च साध्यत्वसंभवात्। तथा च तत्रत्यनिगमने 'तस्मात् धूमात्' इत्याकारके विभक्त्यर्थज्ञाप्यत्वमुख्यविशेष्यकबोधजनकत्वसत्त्वात् अतिव्याप्तिरित्याशङ्कायां संप्रदायविरोधात् तादृशप्रतिज्ञाः नाङ्गीक्रियन्ते इति समाधानमुक्तमिति भावः।

**उदाहरणप्रयोजकेत्यादि** तृतीयं हेतुलक्षणम्। उदाहरणस्य प्रयोजकीभूता या आकाङ्क्षा कथमस्य गमकत्वम् इत्येवंरूपा तज्जनकं यच्छाब्दज्ञानं हेतुवाक्यजन्यं तज्जनकत्वे सति न्यायावयवत्वं हेतोः लक्षणम्। **न्यायानन्तर्गतस्येत्यादि-** न्यायानन्तर्गते 'धूमात्' इति वाक्ये शाब्दज्ञान-जनकत्वसत्त्वेऽपि उदाहरणप्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकत्वं नास्ति इति अतिव्याप्त्यसंभवात् न्यायावयवत्वदलं व्यर्थमित्याशङ्क्य येन हेतुवाक्येन उदाहरणप्रयोजकजिज्ञासा न जनिता तत्र अव्याप्तिवारणाय आकाङ्क्षाजनकत्वम् आकाङ्क्षास्वरूपयोग्यत्वरूपं लक्षणघटकम् इति वक्तव्यम्। तथा च उदासीनवाक्येऽपि स्वरूपयोग्यताघटित-लक्षणसद्भावात् अतिव्याप्तिः। तद्वारणाय न्यायावयवत्वनिवेश इति भावः।

**साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा।**

*साध्याविषयकेत्यादि।* अयं न दण्डात् दण्डसंयोगाजन्यद्रव्यत्वादित्यादौ प्रतिज्ञानिगमनयोर्वारणाय *साध्याविषयेत्यादिव्याख्यातार्थकम्।* उपनयविशेषवारणाय *हेतुपञ्चम्यन्तेति।*

---

फलोपधानपरत्वेऽप्यावश्यकमेवेति भावः। चतुर्थलक्षणे प्रसिद्धप्रतिज्ञानिगमनयो-फलोपधानपरत्वेऽप्यावश्यकमेवेति भावः। पञ्चम्यन्तत्वाभावादिति पञ्चम्यन्तत्तद्विशेषे स्साध्याविषयकत्वविशेषणव्यावृत्तिर्न घटते पञ्चम्यन्तत्वाभावादिति पञ्चम्यन्तत्तद्विशेषे तद्व्यावृत्तिमाह– ***अयं न दण्डादिति।*** अयं दण्डादित्यादिप्रतिज्ञायास्सम्प्रदायविरुद्धत्वं प्रागभिहितमित्यभावसाध्यकानुधावनम्। वह्निमान्वह्निसामग्रीमत्त्वादित्यादौ यथाश्रुतेऽव्याप्तेराह–***व्याख्यातार्थमिति।*** हेतुतावच्छेदकविशिष्टेत्यादिनेत्यादिः ***उपनयविशेषेति।***

---

***अभ्युपेत्येति।*** येन हेतुवाक्येन उदाहरणजिज्ञासा नोत्पन्ना तत्राव्याप्तिरूपं दोषमङ्गीकृत्येत्यर्थः। एवञ्च स्वरूपयोग्यतानिवेशे एव न्यायावयवत्वसार्थक्यमिति न मन्तव्यम्। फलोपधाननिवेशेऽपि तत्सार्थक्यसंभवात्। लक्षणं तु स्वरूपयोग्यताघटितमेव कार्यमिति नाव्याप्तिरिति भावः।

साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं चतुर्थं हेतुलक्षणम्। साध्याविषयकज्ञानजनकः हेतुत्वार्थकपञ्चम्यन्तः अनुमितिपरः शब्दः हेतुरित्यर्थः। हेतुपञ्चम्यन्तशब्दत्वमात्रोक्तौ 'अयं न दण्डात्, दण्डसंयोगाजन्यद्रव्यत्वात्' इत्यादौ 'अयं न दण्डात्' इति प्रतिज्ञायां 'अयं तस्मान्न दण्डात्' इति निगमने च अतिव्याप्तिः। तद्वारणाय साध्याविषयकज्ञानजनकत्वनिवेशः। हेतुपञ्चम्यन्तत्वानुपादाने 'हेतुत्वम् इतरभिन्नं हेतुत्वात्' इत्यादौ 'इतरत्वव्यापकाभावप्रतियोगिहेतुत्ववदिदम्' इत्याकारके उपनयविशेषे इतरभेदरूपसाध्याविषयकज्ञानजनकेऽतिव्याप्तिः। तद्वारणाय हेतुपञ्चम्यन्तत्वनिवेशः।

गादाधर्यां **चतुर्थलक्षणे** इत्यादि। प्रसिद्धप्रतिज्ञानिगमनयोः 'पर्वतो वह्निमान्' 'तस्माद्वह्निमान्' इत्यनयोः हेतुपञ्चम्यन्तत्वाभावादेव अतिव्याप्त्यप्रसक्तेः तत्र अतिव्याप्तिवारणरूपं प्रयोजनं साध्याविषयकज्ञान-

**हेत्विति** हेतुत्वबोधकार्थकम्। हेतुपञ्चम्योर्वैकल्पिकमुपादानम्। उपनयस्य चान्तेऽनुसन्धीयमाना **प्रथमैवान्तः।**

---

साध्याविषयकबोधजनकाभावसाध्यकव्यतिरेक्युपनय इत्यर्थः। उदाहरणस्य च पञ्चम्यन्तस्यापि सम्भवात्तद्वारणायोदाहरणान्यत्वस्य निवेशनीयतया तत एवोदाहरणसामान्यवारणसम्भवादुपनयपर्यन्तानुधावनम्। धूमादालोकाभावादिसाध्यके धूमादालोकव्यापकाभावप्रतियोगिमानयमित्याद्युपनयेऽतिव्याप्तिवारकतया अन्तपदसार्थक्यं बोध्यम्। उपनयस्य कस्यचिदपि पञ्चम्यन्तत्वासम्भवाद्धेतुपदवैयर्थ्यमाशंक्याह- **हेतुत्वबोधकार्थमिति।**

**हेत्विति।** तादृशार्थकहेतुपदस्य पञ्चमीपदस्य च वैकल्पिकमुपादानमित्यर्थः। तथाच हेतुत्वबोधकान्तत्वं पञ्चम्यन्तत्वं पृथङ्निवेश्य लक्षणद्वयं करणीयमित्यर्थः।

---

जनकत्वनिवेशस्य न संभवतीति पञ्चम्यन्तप्रतिज्ञानिगमनविशेषयोः अतिव्याप्तिवारकत्वं प्रदर्शयति इत्यर्थः। **'वह्निमान् वह्निसामग्रीमत्त्वात्'** इति। 'अयं वह्निमान्, वह्निसामग्रीमत्त्वात्' इत्यादौ हेतुवाक्यस्य साध्यविषयकबोधजनकत्वात् साध्याविषयकबोधजनकत्वं नास्तीति अव्याप्तिः। अतः पूर्वोक्तरीत्या हेतुतावच्छेदकविशिष्ट–हेतुविशिष्ट–हेतुत्वविषयताबहिर्भूत–साध्यविषयताशून्यत्वं साध्याविषयकत्वमत्रापि निवेशनीयम्। 'वह्निसामग्रीमत्त्वात्' इत्यत्र वह्निविषयतायाः हेतुविशिष्टहेतुत्वविषयतान्तर्भूतत्वात् नाव्याप्तिरिति भावः। **साध्याविषयकबोधजनकेति।** हेतुत्वपक्षक–इतरभेदसाध्यकस्थलीये 'इतरत्वव्यापकाभावप्रतियोगिमदिदम्' इति उपनये इत्यर्थः।

ननु उपनयविशेषानुधावनं व्यर्थम्। धूमादालोकाभावसाध्यकव्यतिरेक्युदाहरणेऽपि व्यावृत्तिसंभवात् इत्यत आह- **उदाहरणस्य चेति।** 'पर्वतः पर्वतभिन्नत्वप्रकारकज्ञानाभाववान् पर्वतत्वात्' इत्यादौ 'यः पर्वतभिन्नत्वेन ज्ञायते सः पर्वतत्वाभाववान्, यथा न धूमात्' इत्यादेः व्यतिरेक्युदाहरणस्य पञ्चम्यन्तत्वात् तत्रातिव्याप्तिवारणाय उदाहरणान्यत्वम् अवश्यं निवेशनीयम्। तत एव उदाहरणसामान्यस्य वारणसंभवात् उपनयपर्यन्तानुधावनम् इति भावः। तथा च पञ्चम्यन्तत्वनिवेशेऽपि पञ्चम्यन्ते उदाहरणे साध्याविषयकबोधजनके अतिव्याप्तिवारणाय उदाहरणान्यत्वस्य अवश्यं निवेशनीयत्वात् तत एव पञ्चम्यन्तभिन्ने

**एवं दण्डादित्यादेः स्वपरस्यापि दृष्टान्तस्य पञ्चम्यन्तत्वे अन्वयायोगात्। कस्यचिद्व्यतिरेकिणः उदाहरणस्य पञ्चम्यन्तत्वसम्भवे तु तद्वारणं पूर्ववत्।**

---

नन्वेवं प्रथमलक्षणे हेतुत्वपक्षके तद्बोधकेदंपदान्तोपनयेऽतिव्याप्तिरित्यत आह- ***उपनयस्य चेति।*** श्रूयमाणविभक्त्यन्तत्वाभावादनुसन्धीयमानेति। तथा च तस्य हेतुत्वबोधकान्तत्वाभावादेव नातिव्याप्तिरिति भावः। ननु द्वितीयलक्षणे अयं न गुणो द्रव्यासमवेतत्वादित्यादौ यथा दण्डादित्यादिस्वपरपञ्चम्यन्तपदघटितदृष्टान्तशालिनि व्यतिरेक्युदाहरणे अतिव्याप्तिरित्यत आह- ***एवमिति।*** दृष्टान्तस्येत्यत्रानुसन्धीयमान-
प्रथमैवान्त इत्यनुषज्यते। ***अन्वयायोगादिति।*** प्रथमान्तत्वं विना समानविभक्तिकत्वाभावेन तादृशशाब्दबोधे प्रथमान्तपदोपस्थाप्यसाध्याभावसाधनाभाववद्भेदान्वयानुपपत्तेरित्यर्थः।

---

उदाहरणेऽपि अतिव्याप्तिवारणसंभवात् तत्प्रयोजनकत्वं पञ्चम्यन्तत्वस्य न घटत इति आलोच्य उपनयविशेषे तत्प्रयोजनकथनमिति भावः।

उक्तोपनयविशेषे पञ्चमीविभक्तिमत्त्वनिवेशेनापि अतिव्याप्ति-
वारणसंभवात् पञ्चम्यन्तत्वनिवेशः किमर्थ इत्यत्राह- ***धूमादालोकाभावादिसाध्यकेति।*** तथा च 'धूमादालोकव्यापकाभाव-
प्रतियोगिमानयम्' इत्युपनयस्य साध्याविषयकबोधजनकत्वात् हेतुपञ्चमी-
विभक्तिमत्त्वाच्च तत्र अतिव्याप्तिः। तद्वारणाय हेतुपञ्चमी-
विभक्तिमत्त्वमुपेक्ष्य हेतुपञ्चम्यन्तत्वनिवेश इति भावः।

***लक्षणद्वयमिति*** - साध्याविषयकज्ञानजनकत्वे सति हेतुत्वबोधकपदान्तत्वमेकं लक्षणम्, साध्याविषयकज्ञानजनकत्वे सति पञ्चम्यन्तत्वमेकं लक्षणमिति लक्षणद्वयमित्यर्थः। *नन्वेवं* ***प्रथमलक्षण*** इति। साध्याविषयकज्ञानजनकत्वे सति हेतुत्वबोधकपदान्तत्वमिति प्रथमलक्षणस्य हेतुत्वं प्रमेयं हेतुत्वत्वादित्यत्र हेतुत्वत्ववदिदम्' इत्युपनयेऽतिव्याप्तिः। हेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्य-
विषयताशून्यबोधजनकत्वात् हेतुत्वबोधकेदम्पदान्तत्वाच्चेति शङ्का। हेतुत्वबोधकपदान्तमित्यस्य हेतुत्वबोधकं पदमन्तेऽनुसन्धीयमानं यस्य तदित्यर्थः। अन्तेऽनुसन्धीयमानहेतुत्वबोधकपदविशिष्टमिति यावत्। उक्तोपनये

नन्वेवमपि अयं न घटो दण्डाजन्यत्वात् यो घटस्स दण्डादित्यादौ उदाहरणे लक्षणद्वयातिव्याप्तिर्दुर्वारैव साध्याविषयकबोधजनकत्वात् पञ्चम्यन्तत्वाच्चेत्यत आह- **कस्यचिदिति। पूर्ववदिति।** अवयवान्तरोपस्थापितार्थान्वितस्वार्थबोधकत्वोदाहरणान्यत्वयो-रन्यतरविशेषणेनेत्यर्थः।

---

इदम्पदोत्तरस्य सुप्रत्ययस्य 'स्वमोर्नपुंसकात्' इति लुका लुप्तस्यानुसन्धान-मङ्गीक्रियते। लुप्तविभक्त्यनुसन्धानं विना शाब्दबोधानङ्गीकारात्। तथा च उक्तोपनये हेतुत्वबोधकेदम्पदं नान्तेऽनुसन्धीयमानम्, अपि तु प्रथमैव। सा च न हेतुत्वबोधिका। अतोऽन्तेऽनुसन्धीयमानहेतुत्वबोधक-पदवत्त्वाभावान्नातिव्याप्तिरिति समाधानम्।

**द्वितीयलक्षण** इति। साध्याविषयकज्ञानजनकत्वे सति पञ्चम्यन्तत्वमिति लक्षण इत्यर्थः। **स्वपरेति। स्वं-** दण्डादिति वाक्यम् तत्परं तत्तात्पर्यकं यत् पञ्चम्यन्तं पदं तद्घटितो यो दृष्टान्तः यथा दण्डात् इति दृष्टान्तवाक्यं तच्छालिनि व्यतिरेक्युदाहरणे- "यो गुणः स द्रव्यसमवेतः यथा दण्डात्" इत्येवमाकारके अतिव्याप्तिः गुणत्वाभावरूपसाध्याविषयकबोधजनकत्वे सति पञ्चम्यन्तत्वादिति शङ्का। समाधानं तु वाक्यपरपञ्चम्यन्तात् अनुकरणरूपात् प्रातिपदिकात् प्रथमाविभक्तेः लोपः प्रथमाविभक्तिं विना दण्डादिति वाक्यस्य अभेदसम्बन्धेन प्रथमान्तद्रव्यसमवेतपदार्थेऽन्वयासंभवात्। एवं चान्तेऽनुसान्धीयमाना प्रथमैव न पञ्चमी। अतोऽन्तेऽनुसन्धीयमान-पञ्चमीविभक्तिमत्त्वाभावात् नातिव्याप्तिरिति। **प्रथमान्तपदोपस्थाप्येति।** प्रथमान्तपदोपस्थाप्यौ यौ साध्याभावसाधनाभाववन्तौ गुणपदार्थ-द्रव्यसमवेतपदार्थौ ताभ्यां सह दण्डादिति पदार्थस्य वाक्यस्वरूपस्या-भेदेनान्वयानुपपत्तेरित्यर्थः। **न दण्डादिति।** अत्र तु प्रथमान्तत्वं नास्त्येव शब्दपरत्वाभावात् पञ्चम्यन्तस्य। अतः पञ्चम्यर्थस्य प्रत्ययार्थत्वेन भेदसम्बन्धेनान्वायात् तत्र प्रथमाया अनुसन्धानं नापेक्षितम्। अभेदसम्बन्धेनान्वयस्थल एव तस्या अनुसन्धानस्यापेक्षणादिति भावः।

**अत्र चार्थवद्भागस्य हेतुपञ्चम्यन्तत्वं बोध्यम्। तेन निरर्थकतसिलन्ते 'वह्निप्रमात' इत्यादौ नाव्याप्तिः।**

---

ननु पञ्चम्यास्तसिरित्यत्र पञ्चम्या इत्यस्य पञ्चम्यन्त इत्यर्थकतापक्षे पर्वतो वह्निमान्वह्निप्रमात इत्यादौ हेत्ववयवस्य हेतुपञ्चम्यन्तताविरहादव्याप्तिरित्यत आह– ***अत्रचेति। हेतुपञ्चम्यन्तत्वमिति।*** हेतुत्वबोधकान्तत्वं पञ्चम्यन्तत्वं चेत्यर्थः। ***अर्थवद्भागस्येति।*** स्वघटकार्थवद्भागपूर्वत्वाभाववद्धेतुत्वबोधकादिघटितत्वमेव तदन्तत्वमिह विवक्षितमिति भावः। अर्थवत्त्वमाकांक्षानिर्वाहकत्वम्। तसिलं विनापि तत्पूर्वपञ्चम्यैव प्रकृतान्वयबोधौपयिकाकांक्षानिर्वाहात् न तसिलादेराकांक्षानिर्वाहकत्वं, न तु किञ्चिदर्थवाचकत्वं तसिलादेरवाचकत्वेऽपि तद्घटकप्रत्येकवर्णानां वाचकत्वात्

---

***ननु पञ्चम्यास्तसिरित्यत्रेति।*** 'पञ्चम्यास्तसिल्' इति सूत्रस्य पञ्चम्यन्तात् तसिल्प्रत्यय इत्यर्थः। 'पर्वतो वह्निमान् वह्निप्रमातः' इत्यत्र वह्निप्रमाया इति पञ्चम्यन्तात् तसूप्रत्यये तसन्तस्य तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां तदवयवपञ्चम्याः "सुपो धातुप्रातिपदिकयोः" इति लुकि वह्निप्रमातः इति रूपं सम्पद्यते। तत्र तसिः निरर्थकः। एवं च वह्निप्रमात इति हेतुवाक्यस्य तसिल्प्रत्ययान्तस्य हेतुत्वार्थकपदान्तत्वा–भावात् पञ्चम्यन्तत्वविरहाच्च अव्याप्तिरिति भावः।

अर्थवद्भागस्य हेतुपञ्चम्यन्तत्वं बोध्यमिति *दीधित्या* उक्ताव्याप्तिपरिहारः कृतः। वह्निप्रमात इत्यत्र तसिर्निरर्थकः। अतः तत्पूर्वभाग एवार्थवान् भागः। तत्र पञ्चम्या लोपेऽपि तदनुसन्धानमङ्गीक्रियते। तथा च अन्तेऽनुसन्धीयमानहेतुत्वार्थक–पञ्चमीरूपपदवत्त्वम् अन्तेऽनुसन्धीयमानपञ्चमीविभक्तिमत्त्वं च तस्य भागस्यास्तीति नाव्याप्तिरिति तदाशयः।

नन्वेवमर्थवद्भागस्येत्युक्तावपि वह्निप्रमात इत्यस्य हेतुपञ्चम्यन्तत्वाभाव एव। अन्तस्य तसिलो हेतुपञ्चमीत्वाभावात् इत्यव्याप्तिः। किं च धूमादालोकाभावादिसाध्यके साध्याविषयकबोधजनके धूमादालोकव्यापकीभूतेत्यादिव्यतिरेक्युपनयेऽतिव्याप्तिः। धूमादित्यत्र धूम इत्यर्थवद्भागस्य हेतुपञ्चम्यन्तत्वात्। अतः परिष्करोति– ***स्वघटकेत्यादिना।***

पञ्चम्यादेः तसिलाद्यादेशत्ववादिनां नये तु नानुपपत्तिगन्धोऽपि।

---

यत्र हेतुलक्षणं संगमनीयं तत् स्वपदार्थः। स्वघटको योऽर्थवान् भागः तदपेक्षया पूर्वत्वाभाववत् यत् हेतुत्वबोधकपदं पञ्चमी वा तद्घटितत्वमित्यर्थः। आदिपदेन पञ्चमी गृह्यते। उक्तव्यतिरेक्युपनयघटको योऽर्थवद्भागः आलोकपदं तत्पूर्वत्वमेव हेतुपञ्चम्या इति तत्पूर्वत्वाभाववत्पदघटितत्वाभावात् नातिव्याप्तिः। वह्निप्रमात इत्यत्र पञ्चम्याः तसिलपेक्षया पूर्वत्वेऽपि अर्थवद्भागापेक्षया पूर्वत्वं नास्ति। तसिलोऽनर्थकत्वात् अतो नाव्याप्तिरिति भावः।

तथा च साध्याविषयकबोधजनकत्वे सति स्वघटकार्थवद्भागपूर्वत्वाभाववद्धेतुत्वार्थकपदघटितत्वम् अथवा साध्याविषयकबोधजनकत्वे सति स्वघटकार्थवद्भागपूर्वत्वाभाववत्पञ्चमीविभक्तिघटितत्वमिति भिन्नं वैकल्पिकं लक्षणद्वयं सम्पन्नम्।

ननु स्वघटकार्थवद्भागेत्यादिप्रवेशेऽननुगम इति चेत्–न। स्वघटकार्थवद्भागपूर्वत्वाश्रयहेतुत्वबोधकपदघटितं यद्यत्स्वं तदन्यत्वस्य वाच्यत्वात्।

स्वघटकार्थवद्भागेत्यत्रार्थवत्त्वं कीदृशमित्यत आह–***अर्थवत्त्वमिति।*** एतत्तु शाब्दिकानुसारिमतविशेषः। वस्तुतस्तु अर्थवत्त्वं स्वघटकोत्तरपदार्थान्वितार्थकत्वम्। एकाक्षरकोशलभ्यानामर्थानां तादृशेतरपदार्थान्वितत्वाभावान्न दोषः। एवं च तसिलादेराकाङ्क्षानिर्वाहकत्वानुपगमे तत्प्रयोगवैयर्थ्यमित्यपास्तम्।

दीधितौ ***पञ्चम्यादेरिति।*** आदिपदेन सप्तमी गृह्यते। तसिलादीत्यत्र आदिपदेन त्रल् गृह्यते। 'पञ्चम्यास्तसिः' 'सप्तम्यास्त्रल्' इति सूत्रयोः पञ्चम्याः सप्तम्याः इत्युभयं पञ्चमीविभक्त्यन्तमपि भवितुमर्हति, षष्ठीविभक्त्यन्तमपि भवितुमर्हति। यदा पञ्चमीविभक्त्यन्तं तदा पञ्चम्याः परतः तसिल् सप्तम्याः परतः त्रल् इति सूत्रार्थः। यदा षष्ठीविभक्त्यन्तं तदा पञ्चम्याः स्थाने तसिः, सप्तम्याः स्थाने त्रल् इति सूत्रार्थः। तेन पञ्चम्याः आदेशः तसिः, सप्तम्याः आदेशः

**केचित्तु** – हेतुपञ्चम्यन्तत्वं हेतुत्वप्रतिपादकपदशालित्वं **पूर्ववत्।**

एकाक्षरकोशे सर्वेषां वर्णानां वाचकत्वबोधनात् उक्तसूत्रे पञ्चमीपदस्य षष्ठ्यन्तत्वमपि सम्भवतीत्यभिप्रायेण यथाश्रुतस्यैव साधुतां समर्थयति।– **पञ्चम्यादेरिति।** आदिपदाभ्यां सप्तम्यादेस्त्रलादेश्च परिग्रहः। **नानुपपत्तिरिति।** तथासति तसिल एव हेतुत्वप्रतिपादकत्वात् पञ्चमीत्वाच्चेति भावः। तसिलादेः पञ्चम्यनादेशतापक्षे उक्तहेतावव्याप्तिवारणाय पञ्चम्यन्तत्वमविवक्षतां मतमाह– **केचित्त्विति।** **हेतुत्वप्रतिपादकपदशालित्वमिति।** तथा च पञ्चम्यन्तत्वानिवेशात्तसिलः पञ्चम्यनादेशतापक्षेऽपि न तदन्तहेतावव्याप्तिरिति भावः। ननु हेतुत्व-प्रतिपादकपदस्यान्तत्वाविवक्षणे दर्शितव्यतिरेक्युपनये अतिव्याप्तितादवस्थ्यमित्यत

त्रल् इति लभ्यते। तथा च स्थानिवद्भावेन तसिलोऽपि पञ्चमीत्वात् हेतुत्वार्थकत्वाच्च हेतुपञ्चम्यन्तत्वं वह्निप्रमात इत्यस्य उक्तपरिष्कारं विनैव निर्वहति। गादाधर्याम् **उक्तसूत्र** इति। "पञ्चम्यास्तसिल्" इति सूत्रे इत्यर्थः। **पञ्चमीत्वाच्चेति।** स्थानिवद्भावेनेति शेषः।

**न तदन्तहेतावव्याप्तिरिति।** तसिलन्ते हेतुवाक्ये "वह्निप्रमातः" इत्यादौ नाव्याप्तिः, तसिलः निरर्थकत्वेऽपि ततः पूर्वं लुप्तायाः पञ्चम्याः हेतुत्वार्थकत्वात् तस्याः अनुसन्धानस्वीकाराच्च हेतुत्वार्थकपदघटितत्वसद्भावादिति भावः।

**ननु हेतुत्वप्रतिपादकपदस्येति।** हेतुत्वप्रतिपादकपदान्तत्वमनिवेश्य हेतुत्वप्रतिपादकपदघटितत्वं यदि लक्षणे निवश्यते, तदा अयं न धूमादालोकवान् आर्द्रेन्धनशून्यत्वादित्यादौ धूमादालोकव्यापकीभूतार्द्रेन्धन-वानयमिति व्यतिरेक्युपनये हेतुत्वप्रतिपादकपञ्चमीघटितत्वादति-व्याप्तितादवस्थ्यमिति भावः। **प्रकृतसाध्यान्वितेति।** उक्तव्यतिरेक्युदाहरण-घटकपञ्चम्याः आलोकान्वितस्वार्थबोधकत्वेऽपि धूमादालोकाभाव-रूपप्रकृतसाध्यान्वितस्वार्थबोधकत्वाभावात् नातिव्याप्तिरिति भावः। तथा च साध्याविषयकज्ञानजनकप्रकृतसाध्यान्वितहेतुत्वप्रतिपादकपदशालित्वं हेतुत्वमिति फलितम्।

कृष्णम्भट्टास्तु दर्शितव्यतिरेक्युपनय इत्यस्य हेतुत्वपक्षक-

आह–**पूर्ववदिति।** प्रकृतसाध्यान्वितस्वार्थबोधकतादृशपदशालित्वरूपमित्यर्थः। एवं च प्रथमलक्षणे तादृशस्वार्थबोधकविभक्तिशालित्वं साध्याविषयकधीजनकत्वं च निरुक्तविशिष्टविषयताबहिर्भूतसाध्यविषयताशून्यधीजनकत्वरूपं निविष्टं, तत्र तु तादृशहेतुत्वप्रतिपादकपदशालित्वं साध्याविषयकज्ञानजनकत्वं च निर्वक्ष्यमाणमन्यविधं

---

व्यतिरेक्युपनय इति व्याख्यानं चक्रुः। तदा हेतुत्वमितरभिन्नं हेतुत्वादित्यत्र इतरत्वव्यापकीभूताभावप्रतियोगिहेतुत्ववदिदम् इति व्यतिरेक्युपनये हेतुत्वप्रतिपादकेदंपदशालिन्यतिव्याप्तिः प्रसञ्जनीया, साध्यान्वितस्वार्थबोधकत्व–विशेषणेन वारणीया च। परं तु एतत्स्थलविवक्षणे अन्तत्वाविवक्षणे इति गादाधर्याः कथं संगतिरित्यालोचनीयम्।

**प्रथमलक्षण** इति। साध्याविषयकज्ञानजनकप्रकृतसाध्यान्वित–स्वार्थबोधकविभक्तिमत्त्वं प्रथमलक्षणम्। साध्याविषयकज्ञानजनकप्रकृत–साध्यान्वितहेतुत्वप्रतिपादकपदशालित्वमिति द्वितीयलक्षणम्। प्रथमलक्षणे साध्याविषयकधीजनकत्वं प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्व–विषयताबहिर्भूतसाध्यविषयताशून्यधीजनकत्वम्। अत्र लक्षणे च साध्याविषयकधीजनकत्वं वक्ष्यमाणम् इतरनैरपेक्ष्येण प्रकृतहेतुत्व–विशिष्टसाध्यविषयकज्ञानजनकत्वम् इत्येवं भेद इति भावः। अत्र प्रथमलक्षणपदेन मण्युक्तं "अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्द–ज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिशब्दत्वम्" इति लक्षणं विवक्षितम्। अत्र तु इत्यनेन इदानीं व्याख्यायमानं मण्युक्तं "साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वम्" इति लक्षणं विवक्षितम्।

अत्र **कृष्णम्भट्टाः** – तथा च प्रथमलक्षणे हेतुत्वप्रतिपादकस्य विभक्तित्वेन प्रवेशः। अत्र तु हेतुत्वप्रतिपादकपदत्वेनैवेति भावः। न च साध्याविषयकज्ञानजनकत्वं चेति समुच्चयार्थकचकारेण तादृश–पदशालित्वेऽपि निर्वक्ष्यमाणता लभ्यते। तथा च पूर्ववदिति दीधितिविरोध इति वाच्यम्। चकार एवकारार्थः। तथा च साध्याविषयकत्वमेव निर्वक्ष्यमाणमित्यर्थः। न तु तादृशपदशालित्वम्, तस्य पूर्वमेव निरुक्तत्वात्

प्रविष्टमिति भेद इत्यवधेयम्। पर्वतो वह्निमानित्यादिन्यायान्तर्गतप्रतिज्ञादेर्निर्वाच्यसाध्या-विषयकज्ञानजनकताशालिनो वारणाय हेतुत्वप्रतिपादकपदोपादानम्। वह्नेर्द्रव्यत्ववान् वह्निमान् हेतुत्वं प्रमेयमित्यादिन्यायान्तर्गतप्रतिज्ञादावतिव्याप्तिवारणाय विशेषणतया साध्यान्वितत्वनिवेशनेऽपि सुन्दरवह्निमत्सधर्मा पर्वतो वह्निमानित्यादावतिव्याप्तिवारणाय

---

इत्याहुः।

ननु प्रकृतसाध्यान्वितस्वार्थबोधकपदशालित्वमेवास्तु, हेतुत्वप्रतिपादकेति किमर्थमित्यत्राह – ***पर्वत*** इति। विशेष्यतया साध्यान्वितार्थकं पदं पर्वतपदादि मतुबादि वा तच्छालित्वादतिव्याप्तिरित्यर्थः। ***निर्वाच्येति***। वक्ष्यमाणं यत् इतरनैरपेक्ष्येण प्रकृतहेतुत्वविशिष्टसाध्यविषयकज्ञाना-जनकत्वरूपं साध्याविषयकज्ञानजनकत्वं तच्छालिनः इत्यर्थः।

ननु हेतुत्वप्रतिपादकपदोपादानेऽपि "वह्नेर्द्रव्यत्ववान् वह्निमान्" इति प्रतिज्ञायां साध्येन वह्निना विशेष्यतया अन्वितं यत् हेतुत्वं तत्प्रतिपादकपञ्चमीरूपपदशालिन्यामतिव्याप्तिः। एवं "हेतुत्वं प्रमेयम्" इति प्रतिज्ञायां साध्येन प्रमेयत्वेन विशेष्यतयान्वितं यत् हेतुत्वं तत्प्रतिपादकहेतुत्वपदशालिन्यामतिव्याप्तिः। तद्वारणाय विशेषणतया साध्यान्वितत्वं हेतुत्वे निवेशनीयम्। विशेषणतया साध्यान्वितत्वं च साध्यविशेषणतापन्नत्वम्। तच्च साध्यनिष्ठविशेष्यतानिरूपितविषयताशालित्वम्। उक्तप्रतिज्ञयोः आद्यायां हेतुत्वनिष्ठविषयतायां द्रव्यत्वनिष्ठविशेष्यता-निरूपितत्वस्य साध्यवह्निनिष्ठप्रकारतानिरूपितत्वस्य च सत्त्वेऽपि वह्निनिष्ठविशेष्यतानिरूपितत्वविरहात्, द्वितीयायां हेतुत्वनिष्ठविषयतायां साध्यप्रमेयत्वनिष्ठप्रकारतानिरूपितत्वसत्त्वेऽपि साध्यनिष्ठविशेष्यता-निरूपितत्वविरहात् नातिव्याप्तिः। एवं च साध्यविशेषणतापन्नार्थ-बोधकपदघटितत्वमेव लक्षणमस्तु। तावतैव पर्वतो वह्निमानिति प्रतिज्ञायामतिव्याप्तिवारणं भवति, मतुपः पर्वतपदस्य वा साध्यविशेष्यतापन्नार्थबोधकत्वेऽपि साध्यविशेषणतापन्नार्थबोधकत्वाभावात्। अतो हेतुत्वप्रतिपादकेति व्यर्थमित्यत्राह– ***वह्नेर्द्रव्यत्ववानित्यादिना।*** तथा च साध्यविशेषणतापन्नार्थबोधकपदघटितत्वोक्तावपि "सुन्दरवह्निमत्सधर्मा पर्वतो

**साध्याविषयकबोधजनकत्वञ्च इतरनैरपेक्ष्येण प्रकृतहेतुत्वविशिष्ट-साध्यविषयकज्ञानजनकत्वं, साध्यं चेह न विवक्षितम्। वैयर्थ्यादित्याहुः।।**

---

तदावश्यकत्वम्। न चैवमप्यालोकाद्वह्निमतस्सधर्मा पर्वतो वह्निमानित्यादावतिव्याप्ति-र्दुर्वारैव तत्रापि विवक्षणीयप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुताविशिष्टसाध्य-विषयकज्ञानाजनकत्वस्याक्षतत्वादिति वाच्यम्। हेतुत्वप्रतिपादकेत्यस्य प्रकृतहेतुता-वच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकार्थकत्वात्।

यथाश्रुतं साध्याविषयकज्ञानजनकत्वं अयं वह्निमान्वह्निसामग्रीमत्वादित्यादि-

---

वह्निमान्" इति प्रतिज्ञायामतिव्याप्तिः, वह्निरूपसाध्यविशेषणता-पन्नार्थबोधकसुन्दरपदघटितत्वात्। तद्वारणाय हेतुत्वप्रतिपादकत्वं निवेशनीयमेव। उक्तस्थले सुन्दरपदस्य वह्निविशेषणतापन्नहेतुत्वप्रतिपादकत्वविरहात् नातिव्याप्तिरिति भावः। पञ्चम्यर्थहेतुत्वस्य विशेष्यविधयान्वयलाभार्थं पक्षतावच्छेदककोटौ वह्नेरिति। तथा च प्रकृतसाध्यान्वितस्वार्थबोधकहेतुत्व-प्रतिपादकपञ्चमीरूपपदघटितत्वादतिव्याप्तिः। **सुन्दरेति।** सुन्दरवह्नीति भागमादायेति शेषः। **तदावश्यकत्वमिति।** हेतुत्वप्रतिपादकपदोपादानस्या-वश्यकत्वमित्यर्थः।

**न चैवमिति।** हेतुत्वप्रतिपादकपदोपादानेऽपि "आलोकाद्वह्निमतः सधर्मा पर्वतो वह्निमान् धूमा"दित्यादिन्यायान्तर्गतप्रतिज्ञायामतिव्याप्तिः। प्रतिज्ञाघटकालोकपदोत्तरपञ्चम्याः साध्यवह्न्यन्वितहेतुत्वप्रतिपादकत्वात्। न चोक्तप्रतिज्ञावाक्यस्य साध्यविषयकज्ञानजनकतया साध्याविषयकज्ञानजनकत्व-विरहात् कथमतिव्याप्तिप्रसक्तिरिति वाच्यम्। प्रकृतहेतुतावच्छेदकावच्छिन्न-हेतुविशिष्टहेतुताविशिष्टसाध्यविषयकज्ञानाजनकत्वं साध्याविषयक-ज्ञानजनकत्वमिति वक्ष्यमाणतया तस्योक्तप्रतिज्ञायामक्षतत्वात्। आलोकत्वावच्छिन्नालोकविशिष्टहेतुताविशिष्टवह्निविषयकज्ञानजनकत्वस्य तस्यां सत्त्वेऽपि प्रकृतहेतुतावच्छेदकधूमत्वावच्छिन्नधूमविशिष्टहेतुताविशिष्ट-वह्निविषयकबोधाजनकत्वस्य सद्भावात् अतिव्याप्तिरिति भावः।

उक्तातिव्याप्तिं परिहरति-**हेतुत्वप्रतिपादकेत्यस्येति।** प्रकृतसाध्यान्वित-हेतुत्वप्रतिपादकपदशालित्वमित्यत्र हेतुत्वप्रतिपादकेत्यनेन प्रकृतहेतुतावच्छेदका-वच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकत्वं विवक्षितम्। उक्तप्रतिज्ञाघटकपञ्चम्याः

न्यायस्थले हेत्ववयवे अव्यापकं, पूर्वनिरुक्ततन्निवेशे च साध्यान्वितस्वार्थबोधकहेतुत्व-प्रतिपादकपदशालित्वविशेषणे हेतुत्वप्रतिपादकेत्यस्य वैयर्थ्यं, प्रतिज्ञाया निरुक्तसाध्याविषयज्ञानजनकत्वाभावादेव वारणादतस्साध्याविषयकज्ञानजनकत्वमन्यथा निर्वक्ति-**साध्येति।** एवं च पर्वतो वह्निमानित्यादिप्रतिज्ञायास्साध्यविषयक-ज्ञानजनकत्वेऽपीतरनैरपेक्ष्येण हेतुत्वविशिष्टसाध्यविषयकज्ञानजनकतया साध्याविषयकेत्यादिनाऽवारणात् हेतुत्वप्रतिपादकत्वं पदविशेषणमर्थवद्भवति। हेत्ववयवस्यापि प्रतिज्ञासहकारेण हेतुत्वविशिष्टसाध्यविषयकज्ञानजनकतया **असम्भववारणायेतरनैरपक्ष्येणेति।** स्वाघटकपदासहकारेणेत्यर्थकं अजनकेत्यस्य प्रतियोगिविशेषणम्। तथा च स्वेतरावयवजन्यहेतुत्वविशिष्टसाध्यविषयकज्ञानजनकं

---

आलोकत्वावच्छिन्नविशिष्टहेतुत्वप्रतिपादकत्वेऽपि धूमत्वावच्छिन्नधूमविशिष्ट-हेतुत्वप्रतिपादकत्वविरहान्नातिव्याप्तिरिति भावः। तथा च प्रकृतसाध्यान्वित-स्वार्थबोधकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकपदशालित्वे सति साध्याविषयकज्ञानजनकत्वं हेतुवाक्यलक्षणम्।

अवतारयति – **यथाश्रुतमित्यादिना।** अयं वह्निमान् वह्निसामग्री-मत्त्वादित्यत्र हेतुवाक्यस्य सामग्रीविशेषणतया वह्निरूपसाध्याविषयक-ज्ञानजनकतया साध्यविषयकज्ञानजनकत्वं नास्तीत्यव्याप्तिः। तद्वारणाय प्रथमलक्षण इव प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयता-बहिर्भूतसाध्यविषयताशून्यज्ञानजनकत्वविवक्षायां सुन्दरवह्निमत्सधर्मा पर्वतो वह्निमानित्यादौ प्रतिज्ञायामतिव्याप्तिः न भवति। तज्जन्यज्ञानस्य हेतुविशिष्टहेतुत्वविषयताबहिर्भूतसाध्यविषयताशालित्वेन तच्छून्यत्वविरहात्। तथा च हेतुत्वप्रतिपादकपदोपादानवैयर्थ्यम्। अतः प्रकारान्तरेण साध्याविषयकत्वं निर्वक्तीत्यर्थः। एतन्निर्वचनरीत्या च एवमर्थः- इतरनैरपेक्ष्येणेत्यस्य स्वाघटकपदासहकारेणेत्यर्थः। तस्य च अजनकेत्यत्र नञर्थप्रतियोगिनि जनकेऽन्वयः। स्वाघटकपदासहकारेण प्रकृतहेतुत्वविशिष्टसाध्यविषयक-ज्ञानजनकं यत् तदन्यत्वं साध्याविषयकज्ञानजनकत्वम्। स्वपदेन निगमनं ग्राह्यम्। तस्यैव स्वाघटकपदासहकारेण हेतुत्वविशिष्टसाध्य-विषयकज्ञानजनकत्वात्। तदन्यत्वं हेतुवाक्येऽस्तीति समन्वयः। प्रतिज्ञायामपि तदन्यत्वसत्त्वादतिव्याप्तिस्तु न। तस्या हेतुत्वप्रतिपादकपदशालित्वरूप-

यत्तदन्यत्वमिति समुदायार्थः। जनकपदस्य जनकतावच्छेदकधर्मपर्याप्त्याश्रय-समुदायत्वलाभायेतरनैरपेक्ष्येणेति। हेत्ववयवस्य प्रतिज्ञासहकारेण तादृशबोधजनकत्वेऽपि तादृशधर्मपर्याप्त्याश्रयसमुदायभेदस्याक्षततया इतरनैरपेक्ष्याप्रवेशेऽपि लक्षणसमन्वयात्। अयं धूमाद्वह्निमान् धूमाद्वह्निमतोऽन्यत्रावर्तमानधर्मादित्यादिहेतौ धूमनिष्ठहेतुताविशिष्ट-साध्यज्ञानजनकस्य संग्रहाय **प्रकृतेति।** प्रकृतहेतुतावच्छेदकावच्छिन्नविशिष्टेत्यर्थकम्। प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वमितराविशेषणतया अवगाहिन एव ज्ञानस्येतरनिरपेक्षहेतुवाक्येन जननात्तादृशहेतुत्वप्रकारकज्ञानसामान्याजनकत्वस्यैव सकलहेत्ववयवसाधारण्यात् साध्यांशोपादानमनर्थकमिति तत्परित्यजति- **साध्य चेति।**

---

हेतुपञ्चम्यन्तत्वविरहात्। अत एव तत्सार्थक्यं च। इतरनैरपेक्ष्येणेत्यनुक्तौ हेतुवाक्यस्य प्रतिज्ञासहकारेण हेतुत्वविशिष्टसाध्यविषयकज्ञानजनकत्वेन तदन्यत्वविरहादसंभवः स्यात्। तद्वारणाय तदुक्तिः। तदाह-**एवं चेत्यादिना।**

ननु इतरनैरपेक्ष्येणेति व्यर्थम्। जनकपदेन जनकतावच्छेदक-धर्मपर्याप्त्याश्रयसमुदायस्य विवक्षिततया हेतुत्वविशिष्टसाध्यविषयकज्ञान-जनकतावच्छेदकप्रतिज्ञाहेतुसमुदायत्वरूपधर्मपर्याप्त्याश्रयसमुदायभिन्नत्वस्य हेतुवाक्ये सत्त्वेन लक्षणसमन्वयेन असंभवविरहादित्यत आह- **जनकपदस्येति। तादृशधर्मः** - प्रतिज्ञाहेतुसमुदायत्वरूपः।

प्रकृतपदप्रयोजनमाह-**अयं धूमादिति।** अयं धूमाद्वह्निमान् धूमाद्वह्निमतोऽन्यत्रावर्तमानधर्मात् इत्यत्र धूम एव धूमाद्वह्निमतोऽन्यत्रा-वर्तमानधर्मत्वेन रूपेण हेतुः। हेतुवाक्यजन्यशाब्दबोधे धूमाद्वह्निमत इत्यस्मात् धूमनिष्ठहेतुत्वविशिष्टवह्निविषयकबोधजननात् तदजनकत्वविरहात् अव्याप्तिः। तद्वारणाय प्रकृतपदं प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टार्थकम्। तथा सति उक्तहेतुवाक्यजन्यबोधे धूमत्वावच्छिन्नविशिष्टहेतुत्वविशिष्टसाध्यस्य भानेऽपि धूमाद्वह्निमतोऽन्यत्रावर्तमानत्वरूपप्रकृतहेतुतावच्छेदकावच्छिन्न-विशिष्टहेतुत्वस्याभानात् तादृशहेतुत्वविशिष्टसाध्यविषयकज्ञानजनकत्वं नास्तीति नाव्याप्तिरिति भावः।

अत्र वह्निमात्रस्य साध्यत्वे हेतौ धूमादिति व्यर्थ स्यात्। साध्ये तन्निवेशे तु अयोगोलके व्यभिचारः स्यात्। अतस्तत्र तन्निवेशः। नन्वत्र

अत्र साध्यान्वितस्वार्थबोधकत्वनिवेशेऽपि हेतुत्वपक्षकोपनये साध्यान्वितार्थबोधे स्वजन्यत्वनिवेशे अनुषङ्गपक्षे साध्यान्वितपक्षबोधस्योपनयाजन्यतया तद्वारणेऽप्यनुषङ्गपक्षे निगमनोपस्थापितसाध्यान्वितहेतुत्वबोधकेदंपदशालिन्यतिव्याप्तिः। नचहेतुतावच्छेदकावच्छिन्न-

---

हेतुतावच्छेदकग्रहेणैव व्याप्तिग्रहादुदाहरणाकाङ्क्षानुपपत्तिरिति चेन्न। साध्याभाववदवृत्तित्वस्य व्याप्त्यनात्मकत्वात्। धूमाद्वह्निमत्पर्वतादन्यत्रा-वर्तमानधर्मस्य वा हेतुत्वात्। धूमशून्यवह्निमत्पर्वते व्यभिचारवारणाय हेतौ धूमादिति निवेशात्।

***प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वमिति।*** इदं द्वितीयैकवचनान्तम्, अवगाहिन इत्यत्रान्वेति। धूमादिति हेतुवाक्यात् धूमनिष्ठं हेतुत्वमिति हेतुत्वमुख्यविशेष्यको बोधो जायते। प्रतिज्ञाघटकवह्निपदसहितात् तादृशहेतुवाक्यात् धूमनिष्ठहेतुतानिरूपकवह्नीति बोधो जायते। तत्र हेतुत्वं वह्नौ विशेषणतया भासते। तथा च प्रकृतहेतुतावच्छेदकावच्छिन्न-हेतुविशिष्टहेतुत्वप्रकारकज्ञानसामान्यजनकत्वं सकलहेत्ववयवसाधारणमिति अव्याप्त्यादेरप्रसक्त्या साध्यपदं व्यर्थमिति तत्परित्यजतीत्यर्थः। **तादृशहेतुत्वेत्यत्र** तादृशपदं प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टार्थकम्, न तु इतराविशेषणत्वार्थकम्। हेतुत्वविषयकेत्यनुक्त्वा हेतुप्रकारकेत्युक्त्यैव तल्लाभात्। धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान् धूमादित्यत्र प्रतिज्ञायामतिव्याप्तिवारणाय सामान्यपदम्।

केचित्तुमते अस्वरसमाह - ***अत्रेत्यादिना।*** साध्यान्वितस्वार्थबोधक-हेतुत्वप्रतिपादकपदशालित्वे सति प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्ट-हेतुत्वप्रकारकज्ञानसामान्यजनकत्वं हेतुलक्षणं केषांचिन्मतं दीधितावनूदितम्। तत्रास्वारस्यमिदानीमुच्यते। हेतुत्वमितरभिन्नं हेतुत्वादित्यत्र इतरत्वव्यापकीभूता-भावप्रतियोगिहेतुत्ववदिदम् इति व्यतिरेक्युपनये हेतुत्वप्रतिपादकेदं-पदशालिन्यतिव्याप्तिः। न च इदंपदस्य साध्यान्वित-स्वार्थबोधकत्वाभावात् कथमतिव्याप्तिप्रसक्तिरिति वाच्यम्। उपनयस्थेदम्पदस्य निगमनेऽनुषङ्ग इति पक्षे निगमनस्थपदबोध्यसाध्यान्वितस्वार्थबोधकत्वसत्त्वात् अतिव्याप्तिप्रसक्तेः। न च साध्यान्वितस्वार्थबोधे स्वजन्यत्वं निवेश्यते।

हेतुविशिष्टहेतुत्वप्रतिपादकपदशालित्वनिवेशनान्न तत्रातिव्याप्तिरिति वाच्यम्। गोत्वाभावविशिष्टहेतुत्वं सास्नाभाववत् गोत्वाभावादित्यादिन्यायान्तर्गतोपनये तथाप्यतिव्याप्तेरवारणात्। अनुषङ्गपक्षेऽप्युक्तन्यायान्तर्गतप्रतिज्ञायामतिव्याप्तेश्च। विशेषणतया साध्यान्वितस्वार्थबोधकत्वं निवेश्य तद्वारणे साध्यांशवैयर्थ्यं, अनुषङ्गपक्षेऽप्युपनय-स्थेदंपदार्थस्य कुत्रापि विशेषणताविरहात् पदान्तरोपस्थापितेन प्रकृतहेतुना

---

अनुषङ्गपक्षे साध्यान्वितहेतुत्वरूपपक्षबोधस्य उपनयजन्यत्वविरहान्नातिव्याप्तिरिति वाच्यम्। अननुषङ्गपक्षे उपनयस्थेदंपदस्य निगमनोपस्थापितसाध्यान्वितार्थ-बोधजनकतया तच्छालिन्युक्तोपनयेऽतिव्याप्तिरिति भावः। ***उपनयाजन्यतयेति।*** अनुषक्तस्येदंपदस्य निगमनान्तर्गतस्य उपनयस्थेदम्पदापेक्षया भिन्नत्वादिति भावः।

***न च हेतुतावच्छेदकेति।*** ननु इतरत्वव्यापकीभूताभावप्रतियोगि-हेतुत्ववदिदमित्युपनये हेतुत्वरूपहेतुविशिष्टहेतुत्वबोधकेदंपदशालिनि अतिव्याप्त्यभावकथनमिदं कथं संगच्छत इति चेन्न। हेतुत्वे हेतुवैशिष्ट्यं हि आधेयतासम्बन्धेन। उक्तोपनयस्थेदंपदस्य आश्रयतासंबन्धेन हेतुत्वरूपहेतुविशिष्टहेतुत्वबोधकत्वसत्त्वेऽपि आधेयतासंबन्धेन हेतुविशिष्टहेतुत्वबोधकत्वविरहान्नातिव्याप्तिरित्याशयात्।

***गोत्वाभावविशिष्टहेतुत्वमिति।*** गोत्वाभावनिष्ठहेतुत्वमित्यर्थः। तथा च गोत्वाभावविशिष्टहेतुत्वपक्षक-सास्नाभावसाध्यकगोत्वाभावहेतुकन्यायान्तर्गते सास्नाव्यापकाभावप्रतियोगिगोत्वाभाववदिदम् इत्याकारके व्यतिरेक्युपनये इदम्पदेन गोत्वाभावविशिष्टहेतुत्वरूपपक्षपरामर्शात् गोत्वाभावरूपप्रकृत-हेतुविशिष्टहेतुत्वप्रतिपादकेदंपदशालिन्यतिव्याप्तिः। न च इदम्पदस्य साध्यान्वितहेतुत्वप्रतिपादकत्वविरहात् कथमतिव्याप्तिरिति वाच्यम्। अननुषङ्गपक्षे निगमनोपस्थापितसाध्यान्वितस्वार्थबोधकताया अक्षतत्वादिति भावः। ***तथापीति।*** हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्व-प्रतिपादकपदशालित्वनिवेशेऽपीत्यर्थः।

अनुषङ्गपक्षे उक्तदोषाप्रसक्तेः दोषान्तरमाह—***अनुषङ्गपक्षेऽपीति।*** ***उक्त-न्यायान्तर्गतेति।*** गोत्वाभावविशिष्टहेतुत्वपक्षकसास्नाभावसाध्यक-

प्रतिज्ञावाक्यधीजन्यकारणाकांक्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वं वा। पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा।

---

पञ्चम्यन्तेति। अनुमितिपरवाक्यत्वमवयवत्वं, **हेतुत्वादौ पञ्चमी** लाक्षणिकी। **वृक्षाद्विभजत इत्यादौ** लाघवेनावधित्वे **अवधिमत्त्वे वा** शक्तत्वात्।

---

साक्षाद्विशेषितहेतुत्वप्रतिपादकपदशालित्वं निवेश्योक्तविशिष्टहेतुत्वपक्षकप्रतिज्ञोपनययोः वारणेऽपि प्रकृतहेतुत्वविशिष्टाविषयकज्ञानजनकत्वनिवेशेनैवोपपत्तौ नञ्व्यत्यासस्येतर-नैरपेक्ष्येणेत्यभिधानस्याकिञ्चित्करत्वमित्यस्वरसः।

पञ्चम्या लाक्षणिकत्वं व्यवस्थाप्य तद्वत्त्वेन निगमनेऽतिव्याप्तिं प्रसञ्जयन्

---

गोत्वाभावहेतुकन्यायान्तर्गतेत्यर्थः। तत्र प्रतिज्ञायां विशेष्यतया सास्न ाभावरूपसाध्येन अन्वितं यत् गोत्वाभावरूपहेतुविशिष्टहेतुत्वप्रतिपादकं पक्षवाचिपदं गोत्वाभावविशिष्टहेतुत्वपदं तच्छालित्वात् अतिव्याप्तिरित्यर्थः। ***साध्यांशवैयर्थ्यमिति।*** साध्यान्वितस्वार्थेत्यत्र साध्यान्वितपदवैयर्थ्यमित्यर्थः। विशेषणतया हेतुत्वप्रतिपादकत्वमात्रस्य निर्दोषत्वादिति भावः।

***वारणेऽपीति।*** हेतुत्वप्रतिपादकपदेनैव प्रकृतहेतुतद्विशिष्टत्वयोः बोधनेन हेतोः पदान्तरेणानुपस्थापनादिति भावः। ***साक्षादिति।*** गोत्वाभावविशिष्टहेतुत्वं सास्नाभाववदित्यादिप्रतिज्ञायामव्याप्तिः। पदान्तरीभूतस्वघटकगोत्वाभावपदार्थीभूतेन वैशिष्ट्यद्वारा परम्परयान्वितहेतुत्वप्रतिपादकपदशालित्वात्, अतः साक्षात्पदम्। तत्र साक्षात् गोत्वाभावान्वितत्वं नास्ति। किं तु वैशिष्ट्यमेवेति नातिव्याप्तिः। ***प्रकृतेति।*** मूले साध्याविषयकेत्यत्र विद्यमानस्य नञः व्यत्यासं कृत्वा जनकत्वमित्यनेन संयोज्य अजनकत्वार्थकत्वं व्यर्थम्। साध्याविषयकेत्यादेः प्रकृतहेतुविशिष्टहेतुत्वविशिष्टसाध्याविषयकेत्याद्यर्थस्यैव सम्यक्त्वादित्यर्थः। वारणेऽपीत्यपिपदं च पदान्तरोपस्थापितेत्याद्यविवक्षणेऽपि नञ्व्यत्यासादेर्वैयर्थ्यसूचनार्थम्।

***प्रतिज्ञावाक्यधीजन्येति*** पञ्चमं मूले हेतुलक्षणम्। पक्षे साध्यज्ञापकाकाङ्क्षानिवर्तकशाब्दज्ञानजनकत्वे सति न्यायावयवत्वमिति तदर्थः। हेतुविभक्तिमत्त्वमिति स्वरूपकीर्तनम्, न तु लक्षणघटकम्,

पञ्चम्यन्तपदं सार्थकयति **हेतुत्वादाविति।** हेतुत्वं जनकत्वं आदिना ज्ञापकत्वपरिग्रहः। जनकत्वोपादानं दृष्टान्तविधया। गुरुशरीरं तत्क्रियानाश्रयत्वे सति तज्जन्य-विभागाश्रयत्वरूपमपादानत्वं वा दृष्टान्तविधया आदिपदग्राह्यम् हेतुत्वं ज्ञापकत्वमेव। तर्हि कुत्र तच्छक्तिरित्यपेक्षायामाह-**वृक्षादिति।** **इत्यादौ** इत्यादिवाक्यस्थ-पञ्चमीप्रतिपाद्ये। विनिगमनाविरहं निराकरोति-**लाघवेनेति।** वृक्षादिनिष्ठावधित्वस्य

---

वैयर्थ्यात्। यद्वा हेतुविभक्तिमत्त्वं पञ्चम्यन्तत्वम्। एवं च प्रतिज्ञोदाहरणनिगमनविशेषाणां वारणाय जनकान्तम्, प्रतिज्ञोदाहरणनिगमना-न्यत्वार्थकम्। एवं चोपनयवारणाय पञ्चम्यन्तत्वनिवेशः। वाक्यत्वं न्यायावयवत्वम्।

पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वमिति षष्ठं हेतुलक्षणम्। पञ्चम्यन्तं लाक्षणिकपदविशिष्टम् अनुमितिपरं च यद्वाक्यं तत्त्वमित्यर्थः। अनुमितिपरवाक्यत्वमित्यस्य अवयवत्वमित्यर्थः। धूमादित्यस्य पञ्चम्यन्तत्वमस्ति अवयवत्वमस्ति धूमज्ञानलाक्षणिकधूमपदवत्त्वं चास्तीति लक्षणसमन्वयः।

दीधितौ-***अनुमितिपरेति।*** केचित्तु-अनुमितिपरवाक्यत्वमवयवत्वमिति व्याख्यानानन्तरमेव पञ्चम्यन्तेति पाठधारणं युक्तम्। चतुर्थलक्षणस्य तत्पदव्याख्यानेन षष्ठलक्षणस्थतत्पदस्य व्याख्यातत्वादिति प्राहुः। गदाधरीये-**पञ्चम्या** इति। तथा च लाक्षणिकपदवत्त्वमात्रोक्तौ निगमने लाक्षणिकपञ्चमीयुक्तेऽतिव्याप्तिः। **अतः** **पञ्चम्यन्तेति।** तथा च तत्र पञ्चम्यन्तस्य तत्पदस्यालाक्षणिकत्वान्नातिव्याप्तिरित्यग्रे स्फुटम्। **हेतुत्वं जनकत्वमिति।** जनकत्वे यथा पञ्चम्याः लक्षणा तथा आदिपदग्राह्यज्ञापकत्वेऽपि लक्षणेत्येकोऽर्थः। हेतुत्वं ज्ञापकत्वम्। आदिपदेन अपादानत्वं गृह्यते। अपादानत्वे यथा पञ्चम्या लक्षणा तथा ज्ञापकत्वेऽपि लक्षणेति अपरोऽर्थः। प्रथमव्याख्याने हेतुत्वं दृष्टान्तः। आदिपदग्राह्यं दार्ष्टान्तिकम्। द्वितीयव्याख्याने आदिपदग्राह्यं दृष्टान्तः। हेतुत्वं दार्ष्टान्तिकमिति भेदः। ***तत्क्रियानाश्रयत्वे सतीति।*** वृक्षात्पर्णं पततीत्यत्र पतनक्रियानाश्रयत्वं पतनजन्यविभागाश्रयत्वं च वृक्षस्य अस्तीति अपादानत्वम्। ***विनिगमनाविरहमिति।*** यथा अवधित्वे अवधिमत्त्वे वा

**सम्बन्धविशेषः। स द्रव्यनिष्ठावधित्वमिव विभागनिष्ठमवधिमत्त्वमपि सम्बन्धविशेषः। तत्सम्बन्धाग्रहेऽपि व्यवहारः चातिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत्। शक्तिभ्रमात्।**

---

न वृक्षादित्यादौ निरूपकत्वादिसम्बन्धेन विभागे अन्वयसम्भवेऽपि वृक्षाद्यवधिकविभागेऽपि वृक्षादिनिष्ठावधिताया आश्रयतासम्बन्धावच्छिन्नाभावस्य वृत्त्यनियामकनिरूपकत्व-सत्त्वेनातिप्रसङ्गभिया तादृशबोधोपगममासम्भवात् पञ्चम्या सम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वाद्विभागनिष्ठवृक्षादिनिरूपितमवधिमत्त्वमेव प्रतिपाद्यत इति नव्यमतानुसारेणाह- ***अवधिमत्त्वेनेति।*** नन्ववधिमत्त्वमवधिता-निरूपकत्वमेव। तत्र वृक्षादेरवधितायामेवान्वयस्योपगन्तव्यतया एकदेशान्वयदोषः। निरूपकत्वं च तज्ज्ञानजनकज्ञानविषयत्वमिति ज्ञापकत्वापेक्षया गौरवमेवेत्यत आह-***द्रव्यनिष्ठमिति। सम्बन्धविशेषः।*** अवधिमन्निष्ठोऽवधितानिरूपितसम्बन्धविशेषः। अवधिमत्त्वमेव स्वरूपसम्बन्धविशेषः तन्निरूपकत्वमेवावधित्वमिति वैपरीत्यस्यापि

---

शक्तिः स्वीक्रियते तथा हेतुत्वादावपि स्वीक्रियतामिति शङ्कां निराकरोतीत्यर्थः। ***वृक्षादिनिष्ठेत्यादि।*** अवधित्वस्य पञ्चम्यर्थत्वे "वृक्षाद्विभजते" इत्यत्र पञ्चम्यर्थस्यावधित्वस्य निरूपकतासम्बन्धेन धात्वर्थे विभागेऽन्वयः। वृक्षनिष्ठावधितानिरूपकविभागाश्रयः पर्णमिति बोधः। परं तु "न वृक्षाद्विभजते" इत्यत्रान्वयानुपपत्तिः। नञर्थेऽभावे पञ्चम्यन्तार्थस्य वृक्षनिष्ठावधित्वस्य निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयं स्वीकृत्य नञर्थस्य धात्वर्थेऽन्वयं स्वीकृत्य वृक्षावधिकत्वाभाववद्विभागाश्रयः पर्णमिति बोधस्तु न वर्णयितुं शक्यः। निरूपकत्वसंबन्धस्य वृत्त्यनियामकतया अभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्न-प्रतियोगिताया अप्रसिद्धेः। वृक्षनिष्ठस्यावधित्वस्य आश्रयतासम्बन्धावच्छिन्न-प्रतियोगिताकाभावस्तु बोधयितुमशक्यः। पर्णनिष्ठे वृक्षावधिके विभागेऽपि वृक्षनिष्ठस्यावधित्वस्याश्रयतासंबन्धेनाभावात् न वृक्षाद्विभजते इति प्रयोगापत्तेः। अतः अवधित्वे शक्तिं परित्यज्य अवधिमत्त्वे शक्तिरुक्तेति भावः।

**नन्ववधिमत्त्वमित्यादि।** अवधिमत्त्वमवधितानिरूपकत्वम्। तदेकदेशा-वधितायामाधेयतासम्बन्धेन वृक्षस्यान्वयः। निरूपकत्वस्य आश्रयतासंबन्धेन

वृक्षादपैति पततीत्यादौ लाघवाद्विभागे शक्तिः तज्जनकत्वं च क्रियायाः संसर्गमर्यादया भासत इत्यपि वदन्ति।

---

सम्भवेन विनिगमनाविरहादिति भाव। *अन्यदेतदिति।* अनतिरिक्तत्वेऽप्य-वधितात्वादेरनुगमकधर्मस्यानुगतप्रतीत्यनुरोधेनावश्यकत्वात्तस्य प्रवृत्तिनिमित्तत्वेन लाघवादिति भावः। नन्वधित्वादावेव पञ्चम्याश्शक्तौ ज्ञापकत्वादाववधित्वादिसम्बन्धाग्रहे वृत्त्यग्रहेण पञ्चम्याः ज्ञापकत्वबोधकत्वग्रहासम्भवात् तत्प्रत्यायनेच्छया पञ्चमीप्रयोगो न स्यादित्यत आह– ***तत्सम्बन्धाग्रहे त्विति।*** ज्ञापकत्वादाववधित्वसम्बन्धाग्रहेऽपीत्यर्थः। ***व्यवहारः।*** ज्ञापकत्वादिपरपञ्चमीप्रयोगः। ***शक्तिभ्रमात्।*** ज्ञापकत्वादौ शक्तिभ्रमात्। अपादानताघटकविभागत्वजात्यवच्छिन्ने शक्तिवादिनां मतमुपन्यस्यति– ***वृक्षादिति।***

---

धात्वर्थविभागेऽन्वयः। वृक्षनिष्ठावधितानिरूपकविभागाश्रयः पर्णमिति बोधः। अत्र एकदेशान्वयदोषः। तथा अवधितानिरूपकत्वम् अवधित्वविषयक-ज्ञानजनकज्ञानविषयत्वरूपं ज्ञापकत्वापेक्षया गुरु। अतोऽवधिमत्त्वे न शक्तिरिति शङ्कायाम् अवधिमत्त्वं स्वरूपसम्बन्धविशेष इति समाधानमुक्तं दीधिताविति भावः। ***तज्ज्ञानेति।*** अवधिताज्ञानेत्यर्थः।

***अवधिमत्त्वमेवेति।*** यद्यवधित्व एव स्वरूपसंबन्धरूपत्वं स्वीक्रियते नावधिमत्त्वे, तदा अवधिमत्त्व एव स्वरूपसंबन्धरूपत्वं स्वीक्रियताम् न त्ववधित्वे इति विनिगमनाविरहात् अनायत्या उभयोरेव स्वरूपसंबन्धरूपत्वं भवतीत्यर्थः। ***अवधित्वादिसंबन्धाग्रह*** इति। अवधित्वादिरूपशक्यार्थसंबन्धाज्ञान इत्यर्थः। **वृत्त्यग्रहेण** लक्षणाया अज्ञानेन।

***अपादानताघटकेति।*** तत्क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम् अपादानत्वम्। तद्घटके विभागत्वावच्छिन्ने पञ्चम्याः शक्तिरित्यर्थः। वृक्षादपैति इत्यत्र पञ्चम्याः विभागोऽर्थः। तत्राधेयतासम्बन्धेन वृक्षस्यान्वयः। विभागस्य जनकतासम्बन्धेन अपपूर्वकइणधात्वर्थे स्पन्देऽन्वयः। स्पन्दस्य आख्यातार्थे आश्रयत्वे तस्य पर्णेऽन्वय इति वृक्षनिष्ठविभागजनकस्पन्दाश्रयः पर्णमिति बोधः। वृक्षात्पततीत्यत्र अधस्संयोगानुकूलस्पन्दः पतधात्वर्थः। स्पन्दे पञ्चम्यन्तार्थस्य वृक्षनिष्ठविभागस्य जनकतासम्बन्धेनान्वयः। वृक्षनिष्ठविभागजनक–

अपैत्यर्थोऽपगमस्स्पन्दमात्रं न तु विभागावच्छिन्नस्पन्दः। तर्हि त्यजितुल्यतया धात्वर्थतावच्छेदकविभागाश्रयतया वृक्षाद्यपादानस्य कर्मताप्रसङ्गात्। नाप्युत्तरसंयोगा-वच्छिन्नस्पन्दः। वृक्षाद्भूमिं प्रयातीतिवत् वृक्षाद्भूमिमपैतीति प्रयोगप्रसङ्गात्। पततीत्यत्राधस्संयोगावच्छिन्नस्पन्दस्स्पन्दत्वावान्तरजात्यवच्छिन्नो वा पतत्यर्थः। उभयत्र वृक्षादिनिष्ठविभागजनकत्वं पञ्चमीलभ्यमेवेति प्रवृत्तिनिमित्तलाघवाद्विभाग एवैतस्याः शक्तिरित्यर्थः। नन्वेवं जनकत्वं कुतो लब्धं तदन्तर्भावेण शक्तौ च न ज्ञापकत्वाद्यपेक्षया लाघवमित्यत आह– ***जनकत्वं चेति।***

---

अधस्संयोगानुकूलस्पन्दाश्रयः पर्णमिति बोधः। ***स्पन्दमात्रमिति।*** मात्रशब्देन स्पन्दे विभागाद्यवच्छिन्नत्वं व्यवच्छिद्यते। वृक्षं त्यजतीत्यत्र विभागाद्यवच्छिन्नस्पन्दः त्यजधात्वर्थः। धात्वर्थतावच्छेदकविभागरूप-फलशालित्वेन वृक्षस्य कर्मत्वात् वृक्षपदोत्तरं यथा द्वितीया तथा वृक्षादपैति इत्यत्र धातोः विभागावच्छिन्नस्पन्दार्थकत्वे धात्वर्थतावच्छेदक-विभागरूपफलाश्रयतया वृक्षस्य कर्मत्वापत्त्या वृक्षमपैति पर्णमिति प्रयोगापत्तिः। अतः अपैत्यर्थः न विभागावच्छिन्नस्पन्दः। एवं यदि संयोगावच्छिन्नः स्पन्दः अपैत्यर्थः स्यात् तदा वृक्षात् भूमिं प्रयाति इतिवत्, वृक्षात् भूमिमपैति इति प्रयोगः स्यात्। अतः स्पन्दमात्रमपैत्यर्थः इति भावः।

ननु 'वृक्षात् पर्णं पतति' इत्यत्र संयोगावच्छिन्नव्यापारस्य पतधात्वर्थतया धात्वर्थतावच्छेदकसंयोगरूपफलाश्रयस्य वृक्षस्य कर्मत्वापत्तिरित्यत आह– ***पततीत्यत्रेति।*** तथा च संयोगावच्छिन्नस्पन्दः न पतत्यर्थः, अपि तु अधोदेशसंयोगावच्छिन्नस्पन्दः पतत्यर्थः। आश्रयानवच्छिन्नं धात्वर्थतावच्छेदकं यत् फलं तदाश्रयस्यैव कर्मत्वम्। पतधात्वर्थतावच्छेदकसंयोगस्य अधोदेशरूपाश्रयावच्छिन्नतया तदाश्रयस्य वृक्षस्य न कर्मत्वम्।

अथ वा अधस्संयोगावच्छिन्नव्यापारवृत्तिः या स्पन्दत्वव्याप्यजातिः तदवच्छिन्नः पतधात्वर्थः। तत्र फलस्याघटकत्वात् न वृक्षस्य कर्मत्वापत्तिरिति भावः।

***उभयत्रेति।*** 'वृक्षात् अपैति', 'वृक्षात् पतति' इत्युभयत्रापि इत्यर्थः।

अथ पत्रादेः स्वनिष्ठविभागानुकूलक्रियाश्रयत्वाद्विभागमात्रस्य पञ्चम्यर्थत्वे स्वस्मात्पत्रं पततीत्यादेरपि प्रयोगस्स्यादिति भेदप्रतियोगितावच्छेदकत्वसहित एव विभागः पञ्चम्यर्थो वाच्यः। स्वनिष्ठक्रियायास्स्वनिष्ठविभागजनकत्वेऽपि स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वविरहान्नोक्तातिप्रसङ्ग इति कुतो लाघवमिति चेन्न। भेदप्रतियोगितावच्छेदकत्वे लक्षणयैवोपपत्तौ तदन्तर्भावेण शक्तेरकल्पनादिति तात्पर्यवशाच्छक्यलक्ष्यार्थयोरपि युगपदन्वयोपगमादिति लक्ष्यार्थभेदप्रतियोगितावच्छेदकत्व-विनिर्मोकेण पञ्चम्या विभागावोधकत्वव्युत्पत्तेर्न विभागमात्रतात्पर्येण स्वं

---

**वृक्षादिनिष्ठविभागजनकत्वमिति।** विभागः पञ्चम्यर्थः। जनकत्वं संसर्गमर्यादया लभ्यत इत्याशयः। न तु विभागजनकत्वपर्यन्तं पञ्चम्यर्थ इति भ्रमितव्यम्। विभागे एव एतस्याः शक्तिरिति अनन्तरवाक्यविरोधात्। तदेव स्फुटीकरोति–**नन्वेवं जनकत्वमित्यादिना।**

विभागमात्रस्य पञ्चम्यर्थत्वे दोषमाशङ्कते– ***अथ पत्रादेरित्यादिना।*** यदि विभागमात्रं पञ्चम्यर्थः स्यात्, तदा स्वस्मात् पत्रं पतति इति प्रयोगः स्यात्। तथा हि– स्वशब्दः पत्रपरः। पञ्चम्याः विभागोऽर्थः। पत्धातोः अधोदेशसंयोगानुकूलव्यापारोऽर्थः। पञ्चम्यर्थस्य विभागस्य जनकत्वसम्बन्धेन व्यापारे अन्वयः। पत्रनिष्ठात् व्यापारात् जायमानः विभागः द्विनिष्ठत्वात् वृक्षपत्रयोः उभयोरप्यस्ति। तथा च वृक्षनिष्ठविभागजनकस्य पत्रनिष्ठस्य व्यापारस्य पत्रनिष्ठविभागजनकत्व-मप्यस्तीति पत्रनिष्ठविभागजनकअधोदेशसंयोगानुकूलव्यापाराश्रयत्वरूपस्य वाक्यार्थस्य अबाधात् स्वस्मात् पत्रं पतति इति प्रयोगापत्तिः। तद्वारणाय भेदप्रतियोगितावच्छेदकत्वं विभागश्च उभयं पञ्चम्यर्थ इति वक्तव्यम्। 'वृक्षात् पर्णं पतति' इत्यत्र प्रकृत्यर्थस्य वृक्षस्य पञ्चम्यर्थघटके भेदे पञ्चम्यर्थे विभागे च आधेयतासम्बन्धेन अन्वयः। तथा च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकः वृक्षनिष्ठविभागजनकश्च यः अधस्संयोगावच्छिन्नव्यापारः तदाश्रयः पत्रमिति 'वृक्षात् पर्णं पतति' इति वाक्यजन्यो बोधः। वृक्षे पतनवद्भेदस्य सत्त्वेन वृक्षनिष्ठभेद-प्रतियोगितावच्छेदकत्वं पतनरूपे व्यापारेऽस्ति। एवं वृक्षनिष्ठविभागजनकत्वं चास्ति इति समन्वयः। पत्रे पतनवद्भेदो नास्तीति पतनरूपे व्यापारे

स्वस्मात्पततीति प्रयोगप्रसङ्गः। अथवा केवलविभागे पूर्वपूर्वप्रयोगाभावादेव न प्रयोगः। वस्तुतो भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वेऽपि वृक्षात्पत्रं पततीत्यत्र पत्रात्पत्रं पततीति प्रयोगो दुर्वारः। पत्रान्तरनिष्ठभेदमादाय ततः प्रत्येतव्यस्य

---

पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति 'पत्रं स्वस्मात् पतति' इति प्रयोगस्य नापत्तिः। एवं च भेदप्रतियोगितावच्छेदकत्वसहिते विभागे पञ्चम्याः शक्तिकल्पनम्, ज्ञापकत्वे शक्तिकल्पानापेक्षया गौरवावहम् इति आक्षेप्तुरभिप्रायः।

अत्र समाधानं ***भेदप्रतियोगितावच्छेदकत्वे*** इत्यादिना। 'पत्रं स्वस्मात् पतति' इति प्रयोगवारणाय भेदप्रतियोगितावच्छेदकत्वे पञ्चम्याः लक्षणा अङ्गीक्रियते, शक्तिस्तु विभागे एवेति न गौरवप्रसङ्गः। तात्पर्यवशात् शक्यार्थलक्ष्यार्थयोरुभयोरपि धात्वर्थक्रियायामन्वयः अङ्गीक्रियते। तथा च लक्ष्यार्थं भेदप्रतियोगितावच्छेदकत्वं परित्यज्य पञ्चम्याः विभागरूप-शक्यार्थबोधकत्वं नाङ्गीक्रियते। अतः शक्यार्थविभागमात्रतात्पर्येण 'पत्रं स्वस्मात् पतति' इति प्रयोगः नापादयितुं शक्यते।

***अथवा केवलविभागे*** इति। विभागमात्रे पञ्चम्याः शक्तिः। भेदप्रतियोगितावच्छेदत्वं प्रयोगोपाधिः। तद्विरहादेव 'पत्रं स्वस्मात् पतति' इति न प्रयोग इति भावः।

विभागे शक्तिमुपसंहर्तुं युक्तिमाह- ***वस्तुत*** इत्यादिना। भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वेऽपि पत्रात् पत्रं पतति इति प्रयोगो दुर्वारः। एतत्पत्रनिष्ठविभागजनकस्य एतत्पत्रनिष्ठस्य पतनस्य पत्रान्तरनिष्ठो य एतत्पतनवद्भेदः तत्प्रतियोगितावच्छेदकत्वेन पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति पत्रनिष्ठविभागजनकत्वस्य पत्रनिष्ठक्रियायामबाधितत्वात्।

न च पञ्चम्याः भेद एवार्थः। तस्य स्वप्रतियोगिता-वच्छेदकत्वस्वाश्रयनिष्ठविभागजनकत्व-उभयसम्बन्धेन धात्वर्थक्रियायामन्वयः। 'वृक्षात् पर्णं पतति' इत्यत्र वृक्षनिष्ठः यः भेदः पतनवद्भेदः तत्प्रतियोगितावच्छेदकत्वम्, एवं तादृशभेदाश्रयवृक्षनिष्ठः यः विभागः

वृक्षपत्रविभागः तज्जनकत्वं च पत्रनिष्ठपतनक्रियायामस्तीति 'वृक्षात् पत्रं पतति' इति प्रयोगस्य उपपत्तिः। पत्रान्तरनिष्ठः यः भेदः तत्प्रतियोगितावच्छेदकत्वस्य एतत्पत्रनिष्ठपतनक्रियायां सत्त्वेऽपि तादृशभेदाश्रयपत्रान्तरनिष्ठविभागजनकत्वं नास्तीति तादृशोभयसम्बन्धेन पत्रान्तरान्वितभेदविशिष्टत्वं धात्वर्थक्रियायां नास्तीति पत्रात् पत्रं पतति इति प्रयोगस्य नापत्तिरिति–वाच्यम्।

पत्रान्तरनिष्ठः यः एतत्पत्रनिष्ठपतनवद्भेदः तस्याश्रयः पत्रान्तरमिव वृक्षोऽपि भवति। वृक्षेऽपि पतनवद्भेदस्य सद्भावात्। तथा च पत्रान्तरान्वितभेदाश्रयः वृक्षः। तन्निष्ठविभागजनकत्वं पत्रान्तरनिष्ठभेद-प्रतियोगितावच्छेदकत्वं च एतत्पत्रनिष्ठपतनक्रियायामस्तीति सम्बन्धद्वयस्य अबाधात् पत्रात् पत्रं पतति इति प्रयोगापत्तेः दुर्वारत्वात्। अधिकरणभेदेन अभावभेदानभ्युपगमात् पत्रान्तरनिष्ठस्य पतनवद्भेदस्य आश्रयः वृक्षोऽपि भवति।

न च पञ्चम्या आधेयत्वसम्बन्धेन प्रकृत्यर्थविशिष्टः भेदः प्रत्याय्यते। प्रकृत्यर्थविशिष्टस्यैव भेदस्य स्वाश्रयनिष्ठविभागजनकत्व-स्वप्रतियोगितावच्छेदकत्वउभयसम्बन्धेन धात्वर्थक्रियायामन्वयः स्वीक्रियते। 'वृक्षात् पर्णं पतति' इत्यत्र आधेयतासम्बन्धेन वृक्षविशिष्टो यो भेदः, तदाश्रयः वृक्ष एव। तन्निष्ठविभागजनकत्वं पतनक्रियायामस्ति। एवमाधेयतासम्बन्धेन वृक्षविशिष्टो यो भेदः तत्प्रतियोगितावच्छेदकत्वं च तत्रास्तीति 'वृक्षात् पर्णं पतति' इत्यस्य उपपत्तिः। आधेयतासम्बन्धेन पत्रान्तरविशिष्टो यो भेदः तदाश्रयः पत्रान्तरमेव। न तु वृक्षः। यथा वा तद्वृत्तित्वविशिष्टनिरूपिताश्रयतावान् स एव, तथा आधेयतासम्बन्धेन तद्विशिष्टनिरूपिताश्रयतावानपि स एव। तथा च आधेयतासम्बन्धेन पत्रान्तरविशिष्टभेदाश्रयभूतपत्रान्तरनिष्ठविभागजनकत्वं एतत्पत्रनिष्ठपतनक्रियायां नास्तीति स्वाश्रयनिष्ठविभागजनकत्वरूपस्य सम्बन्धस्य बाधात् तदुभयसम्बन्धेन प्रकृत्यर्थविशिष्टभेदवत्त्वं धात्वर्थक्रियायां बाधितमिति 'पत्रात् पत्रं पतति' इति प्रयोगस्य नापत्तिः–इति–वाच्यम्।

पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति पत्रनिष्ठविभागजनकत्वस्य पत्रनिष्ठक्रियाया-मबाधात्। न च भेद एव पञ्चम्यर्थः तस्य स्वप्रतियोगितावच्छेदकत्वस्वाश्रय-निष्ठविभागजनकत्वोभयसम्बन्धेन क्रियान्वयो वाच्य इति नोक्तातिप्रसङ्गः। तत्पत्रनिष्ठक्रियावच्छिन्नप्रतियोगिताकभेदाश्रयपत्रान्तरनिष्ठविभागजनकतायास्तत्पत्र-क्रियायामसत्त्वेन तस्या उभयसम्बन्धेन पत्रान्तरान्वितभेदान्वयायोग्यत्वादिति वाच्यम्। पत्रान्तरनिष्ठतत्क्रियावच्छिन्नभेदस्य वृक्षेऽपि सत्त्वेन तद्भेदाश्रयवृक्षनिष्ठविभाग-जनकतायास्तत्क्रियायां सत्त्वेन पत्रान्तरनिष्ठभेदस्योक्तसम्बन्धेन तत्क्रियान्वययोग्यताया अक्षतेः। अधिकरणभेदेनाभावभेदाभावात्। अथ पत्रादित्यत्राधेयतासम्वन्धेन पत्रविशिष्टभेद उपतिष्ठते। विशिष्टस्यैव च स्वाश्रयनिष्ठविभागजनकत्वघटितोभय-सम्बन्धेनान्वयः। विशिष्टस्याधिकरणमेव विशिष्टनिरूपितपरम्परासम्बन्धघटकं पत्राधेयत्वविशिष्टस्येव चाऽधेयतासम्बन्धेन पत्रविशिष्टस्याधिकरणं विशेषणीभूतपत्रमेव

---

तर्हि विभाग एव पञ्चम्यर्थोऽस्तु। आधेयतासम्बन्धेन प्रकृत्यर्थविशिष्टस्य पञ्चम्यर्थस्य विभागस्य स्वाश्रयनिष्ठभेदप्रतियोगिता-वच्छेदकत्वस्वजनकत्वउभयसम्बन्धेन धात्वर्थक्रियायामन्वयः। आधेयता-सम्बन्धेन वृक्षविशिष्टो यो विभागः तदाश्रयतद्वृक्षनिष्ठभेद-प्रतियोगितावच्छेदकत्वं, तज्जनकत्वं च पतनक्रियायामस्तीति 'वृक्षात् पर्णं पतति' इति प्रयोगस्य निर्वाहः।

आधेयतासम्बन्धेन तत्पत्रविशिष्टविभागजनिकायां तत्पत्रनिष्ठक्रियायां तादृशविभागाश्रयतत्पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति 'पत्रात् पत्रं पतति' इति प्रयोगस्य नापत्तिः। एवं च विभागस्य पञ्चम्यर्थत्वेऽपि न दोष इति प्रघट्टकार्थः।

***ततः प्रत्येतव्यस्येति।*** 'पत्रात् पत्रं पतति' इति वाक्यात् बोध्यस्य इत्यर्थः। ***नोक्तातिप्रसङ्ग*** इति। 'पत्रात् पत्रं पतति' इति प्रयोगप्रसङ्गो नेत्यर्थः। ***तत्पत्रनिष्ठक्रियेति।*** तत्पत्रनिष्ठा या पतनक्रिया तद्वत्प्रतियोगिकः यः भेदः तदाश्रयः पत्रान्तरम्। तन्निष्ठो यो विभागः तज्जनकताया इत्यर्थः। ***तस्या*** इति। तत्पत्रक्रियाया इत्यर्थः। ***विशिष्टनिरूपित-परम्परासम्बन्ध*** इति। प्रकृत्यर्थविशिष्टभेदप्रतियोगिकः यः परम्परासम्बन्धः स्वाश्रयनिष्ठविभागजनकत्वरूपः तद्घटकमाश्रयपदार्थभूतमधिकरणमित्यर्थः।

न तु वृक्षः अतो नोक्तोभयसम्बन्धेन पत्रविशिष्टभेदस्य तत्क्रियान्वययोग्यता।
भेदप्रतियोगितावच्छेदकत्व- दळरक्षायै स्वपदेन पत्रान्तरविशिष्टभेदस्यैवोपादेयत्वात्
तदुपादाने तदाश्रयपत्रान्तरविभागजनकत्वस्य तत्क्रियायां घटयितुमशक्यत्वादिति चेत्-
तर्हि विभाग एव शक्तिरस्तुतस्यैवाधेयतासम्बन्धेन प्रकृत्यर्थविशिष्टस्य स्वस्वाश्रय-
निष्ठभेदप्रतियोगितावच्छेदकत्वसहितजनकतासम्बन्धेन तत्क्रियायामन्वय उपेयताम्।
तावताप्युक्तस्थले पत्रात्पत्रं पततीति प्रयोगवारणसम्भवात्, आधेयतया
यत्पत्रविशिष्टविभागजनकत्वं तत्क्रियायास्तादृशविशिष्टाश्रयतत्पत्रनिष्ठभेदप्रतियोगिता-
वच्छेदकत्वस्य तत्क्रियायामभावादित्यलमधिकेन।

अत्र जनकतासम्बन्धस्य वृत्त्यनियामकतया पूर्ववदाकाशात्पतति न
वृक्षादित्यादावनुपपत्तिरिति विभागजनकत्वमेवार्थो वाच्य इति क्व लाघवमित्यस्वरसः।

---

ननु पत्रात् इत्यत्र आधेयतासम्बन्धेन पत्रोपलक्षितभेद एवोपस्थाप्यताम्। किं पत्रविशिष्टभेदोपस्थापननियमेन इत्यत्राह- ***भेदप्रतियोगितावच्छेदकत्वदलरक्षायै*** इति। 'पत्रं स्वस्मात् पतति' इति प्रयोगवारणाय हि भेदप्रतियोगितावच्छेदकत्वदलमुपात्तम्। पञ्चम्या प्रकृत्यर्थोपलक्षितभेदस्य प्रत्याय्यत्वे आधेयतासम्बन्धेन स्वोपलक्षितभेदाश्रयत्वं वृक्षस्यापि अस्तीति तन्निष्ठविभागजनकत्वमादाय पत्रं स्वस्मात् पतति इति प्रयोगापत्तिः भेदप्रतियोगितावच्छेदकत्वदलोपादानेऽपि दुर्वारा। तत्सार्थक्याय प्रकृत्यर्थविशिष्टस्यैव भेदस्य पञ्चम्या बोध्यत्वमङ्गीकरणीय-मिति भावः।

ननु भेदस्य पञ्चम्यर्थत्वे विभागस्य पञ्चम्यर्थत्वे च प्रकृत्यर्थविशिष्टस्यैव पञ्चम्यर्थस्य क्रियायामन्वयाङ्गीकारेण दोषस्य परिहृतत्वात् विभाग एव पञ्चम्यर्थः न तु भेदः इत्यत्र किं विनिगमकम् इत्याशङ्क्याह-***अलमधिकेनेति।*** भेदस्य पञ्चम्यर्थत्वे तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपस्य भेदत्वस्य पञ्चमी-शक्यतावच्छेदकत्वं वाच्यमिति गौरवम्। विभागस्य पञ्चम्यर्थत्वे तु अखण्डायाः विभागत्वजातेः शक्यतावच्छेदकत्वात् लाघवम्। भेदत्वस्य अखण्डोपाधित्वे तु प्रमाणं नास्तीति आशयः।

***अत्रेति।*** विभागस्य पञ्चम्यर्थत्वे तस्य जनकतासम्बन्धेन धात्वर्थेऽन्वयः वक्तव्यः। नञ्समभिव्याहारस्थले च 'आकाशात् पतति

अतः **पञ्चम्यन्तेति लाक्षणिकविशेषणम्। तस्मादित्यत्र च तत्पदे न लक्षणा। शक्त्यैव तादृशज्ञानोपस्थितिसम्भवात्।**

---

*अत इति*। निगमनस्थायास्तस्मादिति पञ्चम्याः लाक्षणिकत्वान्निगमनवारणायेति शेषः। ***पञ्चम्यन्तेति।*** तथा च पञ्चमीपदस्य पञ्चम्यन्तत्वाभावान्नातिव्याप्तिरिति भावः। नन्वेवमपि पञ्चम्यन्ततत्पदस्य तादृशधूमादिपदवद्धूमादिज्ञाने लाक्षणिकत्वाद्दुर्वारैव निगमनातिव्याप्तिरत आह- ***तस्मादित्यत्रेति। तत्पदे न लक्षणेति।*** न धूमादिज्ञाने शक्तिविरह इत्यर्थः। तेन तत्पदशक्यधूमादिना तज्ज्ञानस्य सम्बन्धसत्त्वाच्छक्ति-

---

न वृक्षात् इत्यादौ जनकतासम्बन्धावच्छिन्नविभागनिष्ठप्रतियोगिताकः अभावः क्रियायां बोधनीयः। स च दुरुपपादः। जनकत्वस्य वृत्त्यनियामकस्य प्रतियोगितावच्छेदकसम्बन्धत्वविरहेण तत्सम्बन्धावच्छिन्नप्रतियोगिताका-भावाप्रसिद्धेः। अतो विभागजनकत्वमेव पञ्चम्यर्थो वक्तव्यः। तथा च अस्मिन् पक्षेऽपि न लाघवाकाश इत्यस्वारस्यम्। ***पूर्ववदिति।*** अवधित्वस्य पञ्चम्यर्थतामतवदित्यर्थः। ***निगमनस्थेति।*** लाक्षणिक-पदवदवयवत्वं हेतुलक्षणमित्युक्तौ निगमनवाक्यस्थ 'तस्मात्' इति पञ्चम्याः हेतुत्वे लाक्षणिकत्वात् लाक्षणिकपदमित्यनेन पञ्चमीं गृहीत्वा तद्वदवयवत्वस्य निगमने सत्त्वादतिव्याप्तिः। तद्वारणाय पञ्चम्यन्तेति लाक्षणिकपदस्य विशेषणम्।

पञ्चम्यन्तं यत् लाक्षणिकपदं तद्वत्त्वमित्युक्तौ तु लाक्षणिकस्य पञ्चमीविभक्तिरूपपदस्य पञ्चम्यन्तत्वाभावात् नातिव्याप्तिरिति भावः।

नन्वेवमपि निगमनवाक्यस्थं तत्पदं पञ्चम्यन्तम्। धूमज्ञाने लाक्षणिकम्। तथा च लाक्षणिकं पञ्चमीविभक्त्यन्तं च तत्पदम्। तद्वत्त्वात् निगमनस्य तत्रातिव्याप्तिरित्याशङ्क्य निगमनस्थतत्पदस्य धूमज्ञाने न लक्षणा, अपि तु शक्तिरेव। सर्वनाम्नः तत्पदस्य वक्तृबुद्धिस्थार्थवाचकत्वात् धूमज्ञानतात्पर्येणैव तत्पदप्रयोगात् शक्त्यैव तत्पदेन धूमज्ञानोपस्थितिसम्भवात्। तथा च पञ्चम्यन्तस्य तत्पदस्य लाक्षणिकत्वविरहात् तद्घटिते निगमनवाक्ये नातिव्याप्तिरिति दीधितौ समाहितमिति भावः। ***तादृशधूमादिपदवदिति।*** धूमादिति हेतुवाक्यघटकस्य

ज्ञानशून्यकाले शक्यसम्बन्धग्रहात्पदान्तरस्येव तत्पदस्यापि तादृशार्थबोधकताया अशक्यापलापत्वाच्च तत्पदे लक्षणायास्तया बोधकत्वस्य च दुरपवादकत्वेऽपि न क्षतिः। लक्षणे च लाक्षणिकत्वं शक्यार्थतात्पर्यराहित्यं, अतो निगमने तत्पदस्य तात्पर्यविषयीभूतधूमज्ञानलाक्षणिकत्वेऽपि नातिव्याप्तिरित्यवधेयम्। ***शक्तचैवेति।*** तत्पदस्य वक्तृबुद्धिस्थवाचकत्वाद्धूमादिज्ञाने तात्पर्येण च प्रकृते तत्पदप्रयोगेण ज्ञानस्य वक्तृबुद्धिस्थताया आवश्यकत्वात् विशिष्टहेतुज्ञानस्याप्रक्रान्तत्वेऽपि न क्षतिरिति भावः।

---

धूमपदस्य यथा धूमज्ञाने लक्षणा तथा 'धूमात्' इत्यस्य स्थाने प्रयुक्ते 'तस्मात्' इति पदे घटकं तत्पदमपि धूमज्ञाने लाक्षणिकमिति भावः।

ननु 'तत्पदे न लक्षणा' इति दीधितिग्रन्थः न सङ्गच्छते। तत्पदशक्यधूमसम्बन्धस्य धूमज्ञाने सत्त्वेन शक्यसम्बन्धरूपायाः लक्षणायाः सत्त्वात् लक्षणा नास्तीत्यस्य असङ्गतत्वात्।

न च–लक्षणा नास्तीति दीधितेः लक्षणारूपवृत्तिसहकारेण धूमज्ञानबोधकत्वं नास्तीत्यर्थ इति वाच्यम्। तत्पदस्य शक्तिज्ञानशून्यकाले तत्पदशक्यधूमसम्बन्धस्य धूमज्ञाने ग्रहात् तदधीनस्य लक्ष्यार्थबोधकत्वस्य अपलपितुमशक्यत्वात् इत्याशङ्क्य तत्पदे न लक्षणा इति दीधितौ लक्षणापदं शक्तिविरहार्थकम्। तथा च तत्पदे शक्तिविरहो नास्तीत्यर्थः। अतो नानुपपत्तिरित्याह–***न धूमादिज्ञाने शक्तिविरह इत्यर्थ*** इति।

ननु निगमनस्थतत्पदे लक्षणायाः दुरपवादत्वे पञ्चम्यन्तलाक्षणिक–तत्पदवत्त्वात् हेतुलक्षणस्य निगमने अतिव्याप्तिरित्याशङ्क्य हेतुलक्षणघटकं लाक्षणिकत्वं न लक्षणाख्यवृत्तिमत्त्वरूपम्। अपि तु शक्यार्थतात्पर्यराहित्यम्। तथा च शक्यार्थतात्पर्यरहितपञ्चम्यन्तपदवदवयवत्वं हेतुलक्षणम्। 'धूमात्' इत्यादौ धूमपदस्य धूमरूपशक्यार्थे तात्पर्यं नास्तीति लक्षणसङ्गतिः। निगमनघटकतत्पदस्य तु धूमज्ञानरूपे शक्यार्थे तात्पर्यमस्तीति निगमने नातिव्याप्तिरिति भावः। निगमनस्थतत्पदस्य धूमज्ञाने शक्तिर्वा लक्षणा वेति पक्षद्वयेऽपि तात्पर्यं धूमज्ञानेऽस्त्येव।

**पर्वतो वह्निमान् वह्निसामग्रीमान् वा तस्मादित्यादिकस्तु न प्रयोगः। सम्प्रदायविरोधादिति वदन्ति।**

---

नन्वेवं तत्पदेन यत्र हेतुनिर्देशः तत्र पञ्चम्यन्तलाक्षणिकपदाभावा-दव्याप्तिरित्यत आह-***पर्वत*** इति। वह्निमान् तस्मादित्यत्र हेतुभूतधूमादेरप्रक्रान्तत्वाद्धेतोः प्रक्रान्तत्वरक्षायै ***वह्निसामग्रीमानिति।*** अत्र वह्निरूपहेतोः प्रक्रान्तत्वेन तत्पदेन स्फुटतरतत्परामर्शादिति भावः। सम्प्रदायाननुरोधिनां तथा प्रयोगो दुर्वार एवेत्यत्र लक्षणे वदन्तीत्यस्वरसः सूचितः।

ननु तत्पदस्य पूर्वप्रकृतपरामर्शित्वात् धूमस्यैव पूर्वप्रकृतत्वात् तत्परामर्शित्वमेव युक्तम्। धूमज्ञानस्य अप्रकृतत्वात्, तत्र तत्पदस्य शक्तिः दुर्घटेत्याशङ्क्याह-***तत्पदस्येति।*** तत्पदस्य न पूर्वप्रकृतार्थ-वाचकत्वम्। अपि तु वक्तृबुद्धिस्थार्थवाचकत्वम्। धूमज्ञानतात्पर्येणैव वक्त्रा तत्पदप्रयोगात् धूमज्ञानस्य वक्तृबुद्धिस्थत्वमावश्यकमिति तत्पदस्य धूमज्ञानवाचकत्वं सुघटमिति भावः।

***नन्वेवमिति।*** निगमनस्थतत्पदस्य वक्तृबुद्धिस्थधूमज्ञानवाचकत्वेन लाक्षणिकत्वाभावात् निगमनातिव्याप्तिवारणे यत्र 'धूमात्' इत्यस्य स्थाने 'तस्मात्' इति हेतुवाक्यप्रयोगः (पर्वतो वह्निमान् तस्मात् इति) तत्र हेतुवाक्यघटकपञ्चम्यन्ततत्पदस्य बुद्धिस्थधूमज्ञानवाचकत्वेन लाक्षणिकत्व-विरहात् पञ्चम्यन्तलाक्षणिकपदाभावात् हेतुवाक्येऽव्याप्तिरित्याशङ्क्य 'तस्मात्' इति हेतुवाक्यप्रयोगः सम्प्रदायविरहात् नास्तीति समाधत्ते इति भावः।

दीधितौ 'वह्निसामग्रीमान्' इति साध्यनिर्देशस्य तात्पर्यमाह गादाधर्या-***वह्निमान् तस्मात् इत्यत्रेति।*** तत्पदं पूर्वप्रक्रान्तपरामर्शकमिति पक्षे 'पर्वतो वह्निमान् तस्मात्' इत्यत्र हेतुभूतधूमादेः पूर्वमप्रक्रान्तत्वात् तच्छब्देन परामर्शो न सम्भवतीति वह्निसामग्रीमान् इति साध्यनिर्देशः कृतः। तथा सति वह्नेः प्रक्रान्तस्य तच्छब्देन परामर्शसम्भवात् 'पर्वतो वह्निसामग्रीमान् तस्मात्' इति प्रयोगः सम्भवति।

**यत्तु-हेत्वन्वयानुरोधात् वह्निमानित्यादावपि ज्ञानलक्षणेति।**

---

प्रतिज्ञास्थसाध्यवाचकपदस्य ज्ञानलाक्षणिकत्वात् प्रतिज्ञायामपि पञ्चम्यन्त-पदव्यावृत्तिः सम्भवतीति मतमुपन्यस्य दूषयति- ***यत्त्विति।*** अथवा निगमनस्थवह्न्यादिपदस्य वह्न्यादिज्ञाने लाक्षणिकतया तस्मादिति पञ्चम्या जनकत्वं जन्यत्वं वार्थः। तथा च पञ्चमीमादाय निगमने न व्यावृत्तिसङ्गतिः। अवधित्वादेरिव जनकत्वादेरपि स्वरूपसम्बन्धरूपतया विनिगमकाभावेन जन्यत्वस्यापि वाच्यत्वेन पञ्चम्या अलाक्षणिकत्वादिति वादिनो मतं दूषयति-***यत्त्विति।*** एवञ्चाग्रे जन्यत्वे शक्तावपि ज्ञाप्यत्वे लक्षणैवेत्युपसंहारस्सङ्गच्छते। ***हेत्वन्वयानुरोधादिति।*** हेत्वनुशिष्टपञ्चम्या जन्यजनकभाव एवार्थः न तु ज्ञाप्यज्ञापकभावः। "हेतुर्ना कारणं बीजमि"ति कोशाद्धेतुकारणपदयोः पर्यायतास्थितेः। ज्ञापकार्थकताया हेतुपदस्य कोशादावदर्शनात्। तथा च प्रतिज्ञास्थवह्न्यादिपदस्य मुख्यार्थपरत्वे मुख्यार्थस्य

---

लाक्षणिकपञ्चम्यन्तपदवदनुमितिपरवाक्यत्वमिति हेतुलक्षणे पञ्चम्यन्तेति विशेषणानुपादाने निगमनेऽतिव्याप्तिरिति पूर्वमुक्तम्। केचित्तु-पञ्चम्यन्तपदानुपादाने 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञायामपि अतिव्याप्तिः सम्भवति। वह्निपदस्य वह्निज्ञाने लाक्षणिकत्वात् वह्निपदस्य वह्निज्ञाने लक्षणानङ्गीकारे पञ्चम्यर्थस्य हेतुत्वस्य अन्वयासम्भवात्। तथा च लाक्षणिकं यत् वह्निपदं, तद्वत्त्वे सति अवयवत्वं प्रतिज्ञायामपि अस्तीति तत्र अतिव्याप्तिवारकतया पञ्चम्यन्तेति विशेषणस्य सार्थक्यम्। प्रतिज्ञास्थवह्निपदस्य पञ्चम्यन्तत्वविरहात् इति वदन्ति। तन्मतं निरस्यति दीधितौ-***यत्तु*** इत्यादिना इत्याह गादाधर्या ***प्रतिज्ञास्थेति।***

***अथवेत्यादि।*** पूर्वं पञ्चमीविभक्तेः हेतुत्वे लक्षणां स्वीकृत्य लाक्षणिकपदमित्यनेन पञ्चमीं गृहीत्वा तद्वदवयवत्वमादाय निगमने अतिव्याप्तिवारणाय पञ्चम्यन्तेति लाक्षणिकपदविशेषणमुपात्तम्। पञ्चम्याः लाक्षणिक्याः पञ्चम्यन्तत्वविरहात् नातिव्याप्तिरिति चोक्तम्।

केचित्तु 'तस्माद्वह्निमान्' इति निगमनवाक्ये वह्निपदस्य वह्निज्ञाने लक्षणा। तस्मात् इति पञ्चम्याः जनकत्वं जन्यत्वं वा शक्यार्थः। अवधित्ववत् जनकत्वजन्यत्वयोरपि स्वरूपसम्बन्धविशेषत्वेन अवधित्वे शक्तिः, अथ वा जनकत्वजन्यत्वयोः अन्यतरत्र शक्तिः इत्यत्र

**तदसत्। पञ्चम्याः ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणयैवोपपत्तौ तत्र लक्षणायां मानाभावात्। अत एवोक्तमावृत्तौ सैव प्रतिज्ञेति।**

---

वह्न्यादेर्धूमज्ञानाद्यजन्यत्वेन ज्ञाने लक्षणां विना पञ्चम्यर्थान्वयानुपपत्तिः स्यादिति भावः। ***ज्ञानलक्षणा।*** वह्न्यादिज्ञानलक्षणा, तत्पक्षे च तस्य विषयतासम्बन्ध एव मतुबर्थः ज्ञानविषयतापर्यन्तमेव वा वह्न्यादिपदार्थ इति भावः। ***ज्ञापकत्व इति।*** प्रकृत्यर्थवृत्तिकर्मत्वादीनां सुबर्थतावादिप्राचीनमतेन। ***ज्ञाप्यत्व इति।*** नव्यमतेन। ***तत्र*** वह्न्यादिपदे।***लक्षणायाम्।*** लक्षणानिर्वाहकतात्पर्ये। ***मानाभावादिति।*** जन्यजनकभावस्य पञ्चम्यर्थत्वेऽपि तल्लाक्षणिकताया आवश्यकत्वात्तत्रैव ज्ञानान्तर्भावेणोपपत्तावुभयत्र

---

विनिगमनाविरहेण जन्यत्वजनकत्वयोरपि पञ्चम्याः शक्तिसिद्धेः। एवं च पञ्चम्याः लाक्षणिकत्वविरहेण पञ्चमीमादाय निगमनातिव्याप्तिवारकतया पञ्चम्यन्तपदव्यावृत्तिः न सङ्गच्छते इति वदन्ति। तन्मतं दूषयति दीधितिकार इति भावः।

***प्रकृत्यर्थवृत्तीति।*** प्रकृत्यर्थे वर्तमानाः कर्मत्वादयः सुबर्था इति प्राचीनमतम्। तदनुसारेण पञ्चम्याः ज्ञापकत्वमर्थः। अस्यैव पञ्चमीप्रकृत्यर्थवृत्तित्वात् इति भावः।

***नव्यमतेनेति।*** ज्ञापकत्वस्य पञ्चम्यर्थत्वे तस्या निरूपकतासम्बन्धेन प्रतिज्ञाघटकवह्न्यादिपदार्थे अन्वयो वक्तव्यः। तथा सति 'पर्वतो वह्निमान् धूमात् न घटात्' इति नञ्समभिव्याहारस्थले घटनिष्ठज्ञापकतायाः निरूपकतासम्बन्धावच्छिन्नप्रतियोगिताकाभावः नञा बोध्यत इति वक्तव्यम्। तच्च न सङ्गच्छते। निरूपकत्वस्य वृत्त्यनियामकत्वेन प्रतियोगितावच्छेदक-सम्बन्धत्वविरहात्। अतः पञ्चम्याः ज्ञाप्यत्वमेवार्थः। तस्य आश्रयत्वसम्बन्धेन साध्येऽन्वयः। नञ्समभिव्याहारस्थले आश्रयतासम्बन्धा-वच्छिन्नप्रतियोगिताकज्ञाप्यत्वाभावः बोधनीय इति नवीनमतम्।

***जन्यजनकभावस्येति।*** स्वरूपसम्बन्धरूपस्य जन्यजनकभावस्या-सम्भवेन कार्यनियतपूर्वभावित्वरूपे जनकत्वे कारणनियतोत्तरभावित्वरूपे जन्यत्वे वा अवधित्वापेक्षया गुरुभूते पञ्चम्याः लक्षणायाः

लक्षणाया अयुक्तत्वादिति भावः। न च सुब्विभक्तेरानुशासनिकातिरिक्तार्थे न लक्षणा, अनुशासनं विनापि तल्लक्ष्यार्थे विभक्तेस्साधुत्वे कर्मत्वादिरूपलक्ष्यार्थे षष्ठ्याद्यनुशासनवैयर्थ्यादिति कथमेतदिति वाच्यम्। हेताविति तृतीयाबोधक-सूत्रस्थहेतुपदस्य कारणज्ञापकोभयपरतया तदनुवृत्तिमता 'विभाषा गुणेऽस्त्रियामि'ति सूत्रेण ज्ञापकत्वेऽपि पञ्चम्या अनुशिष्टत्वात्। यद्यपि तत्र गुणपदं न वैशेषिकसिद्धगुणपरंपुण्याभावान्न सुखीत्यादौ पञ्चम्या अनुपपत्तेरिति पराश्रितपरं तत्, पराश्रितत्वञ्च साध्यवदधिकरणाश्रितत्वं, तथा सति उक्तस्थले पुण्याभावप्रयोज्य-सुखाद्यभावाश्रयवृत्तितया तत्प्रयोजकत्वात्पञ्चम्युपपत्तेः। तथा च ज्ञानकरणतावादिमते

---

आवश्यकत्वात् इति भावः। ***तत्रैव ज्ञानान्तर्भाविणेति।*** जन्यत्वे जनकत्वे च ज्ञानान्तर्भाविणेत्यर्थः। तथा च ज्ञानजन्यत्वे ज्ञानजनकत्वे वा पञ्चम्याः लक्षणेति भावः।

***न च सुब्विभक्तेरिति।*** पञ्चम्याः ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणा न सम्भवति। अनुशासनबोध्यार्थव्यतिरिक्तेऽर्थे सुब्विभक्तेः न लक्षणेति सिद्धान्तात् ज्ञापकत्वस्य किञ्चिच्छब्दवाच्यतया अनुशासनेन अबोधितत्वात्। अनुशासनं विनापि सुब्विभक्तौ लक्षणास्वीकारे द्वितीयावाच्ये कर्मत्वे षष्ठ्याः लक्षणायाः सम्भवेन "कर्तृकर्मणोः कृतीति सूत्रेण कर्मत्वादिरूपलक्ष्यार्थे षष्ठ्यनुशासनवैयर्थ्यात् इति शङ्कितुः आशयः।

समाधत्ते–***हेताविति।*** हेतौ इति पञ्चमीविभक्तिबोधकसूत्रस्य ज्ञापकत्वकारणत्वरूपार्थद्वये पञ्चमीविभक्तिबोधकस्य 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रे अनुवृत्तिं स्वीकृत्य गुणवाचकशब्दात् ज्ञापकत्वरूपहेतुत्वे पञ्चम्याः अनुशिष्टत्वात् ज्ञापकत्वस्यापि आनुशासनिकत्वेन तत्र लक्षणायाः सम्भवात् इति भावः।

शङ्कते–***यद्यपीत्यादिना।*** 'पर्वतो वह्निमान् धूमात्' इत्यादौ ज्ञापकत्वरूपेऽर्थे 'विभाषा गुणेऽस्त्रियाम्' इति पञ्चमी न सम्भवति। गुणवाचकपदादेव ज्ञापकत्वे तेन सूत्रेण पञ्चम्या अनुशासनात्। धूमपदस्य गुणवाचकत्वाभावात्। न च सूत्रे गुणपदं न वैशेषिकसिद्धचतुर्विंशतिगुणपरम्। तथा सति 'अयं न सुखी पुण्याभावात्' इत्यत्र पञ्चमी न स्यात्। पुण्याभावपदस्य चतुर्विंशतिगुणान्तर्गतगुण-

धूमादिपदार्थज्ञानरूपहेतुः साध्यवति न समवायादिना वर्तते। तथापि विषयतयैव तत्र वृत्तिरिति नानुपपत्तिः। एवं सति धूमज्ञानद्वह्निमानिति प्रयोगस्स्यादिति तु न देश्यम्। ज्ञापकताबोधकपञ्चम्यन्ततत्तदर्थवाचकपदस्य तत्तदर्थज्ञान एवानादितात्पर्यात् धूमज्ञानपदस्य धूमज्ञानज्ञान एव तात्पर्यात्।

---

वाचकत्वाभावात्। अपि तु गुणपदं पराश्रितपरम्। पराश्रितत्वं च साध्याधिकरणाश्रितत्वम्। तथा च साध्याधिकरणाश्रितवाचकपदात् हेतौ पञ्चमीति सूत्रार्थः। सुखाभावरूपसाध्याधिकरणाश्रितत्वात् पुण्याभावस्य तद्वाचकपदात् पञ्चम्याः उपपत्तेः। एवं च 'वह्निमान् धूमात्' इत्यत्र धूमस्य साध्यवह्न्यधिकरणाश्रितत्वेन तद्वाचकपदात् पञ्चमी उपपद्यते इति वाच्यम्।

धूमज्ञानं करणमिति मते धूमपदस्य धूमज्ञानपरतया धूमज्ञानस्य च साध्यवति पर्वतादौ समवायसम्बन्धेन अवृत्तेः साध्यवदाश्रितत्वविरहात् कथं धूमज्ञानबोधकधूमपदात् पञ्चमी स्यात् इति शङ्काया आशयः।

समाधत्ते–***तथापि विषयतयैवेति।*** धूमज्ञानस्य साध्यवति पर्वतादौ समवायसम्बन्धेन अवृत्तित्वेऽपि विशेष्यतासम्बन्धेन धूमज्ञानस्य पर्वताश्रितत्वेन धूमज्ञानवाचकात् पञ्चम्याः उपपत्तिरिति भावः।

ननु 'पर्वतो वह्निमान् धूमज्ञानात्' इति प्रयोगापत्तिः। विषयतासम्बन्धेन साध्यवदाश्रितधूमज्ञानवाचकात् धूमज्ञानशब्दात् पञ्चम्याः सम्भवात् इत्याशङ्क्य ज्ञापकताबोधकपञ्चम्यन्तपदस्य तत्तत्पदार्थ–विषयकज्ञाने एव अनादितात्पर्याङ्गीकारात् धूमज्ञानपदस्य धूमज्ञानज्ञाने एव तात्पर्यात् धूमज्ञानज्ञानस्य च वह्निज्ञापकत्वविरहात् धूमज्ञानादिति पञ्चम्याः नापत्तिरिति समाधत्ते–***एवं सतीत्यादिना। न देश्यमिति।*** नाशङ्कनीयमित्यर्थः।

ज्ञापकत्वस्य ज्ञाप्यत्वस्य वा पञ्चम्यर्थत्वे धूमपदस्य धूमज्ञानपरताया आवश्यकत्वात् धूमज्ञानस्य साध्यवदाश्रितत्वं विशेष्यतासम्बन्धेनेति वक्तव्यमासीत्। यदा तु ज्ञानज्ञाप्यत्वं पञ्चम्यर्थ इति मतं, तदा धूमपदस्य धूम एव तात्पर्यं, तस्य विषयतासम्बन्धेन

ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थतामते च ज्ञानविषयधूमादिरूपहेतोस्संयोगादिनैव साध्यवदाश्रितत्त्वान्नानुपपत्तिगन्धोऽपि। प्रतिज्ञास्थवह्न्यादिपदस्य मुख्यार्थपरत्वे मणिकृतोऽपि स्वरसं दर्शयति– ***अत एवोक्तमिति। आवृत्ताविति।*** तेन ग्रन्थेन पुनरनुसन्धीयमानस्य प्रतिवादिवाक्यसहकारेण मध्यस्थसंशयजनकस्य पूर्वोक्तसाध्यवद्धर्मिबोधकवादिवाक्यस्य प्रतिज्ञात्वमभ्युपगतम्। तत्र च वह्न्यादिपदं न तज्ज्ञानादिपरं तथा सति विषयसंशायकत्वासम्भवाद्विप्रतिपत्तिवाक्याभ्यां कोटच्युपस्थितिद्वारा मानसस्संशयो जन्यत इति सिद्धान्तिभिरपि वह्निः पर्वतोऽभाव इत्यादित आकांक्षादिरहिताच्छब्दात्संशयानुदयेन धर्मिणि तत्तदभावकोटचोः प्रत्येकं शाब्दधीजनकसामग्रीभ्यामेव परस्परविरोधेन शाब्दबोधमनुत्पाद्य मानसस्संशयो जन्यत इत्यभ्युपगमात्। प्रतिवादिनिवृत्तये पर्वते वह्निस्साधनीयः इत्यभिसन्धेः प्रथमतोऽनियमात् शब्दादेव पर्वते वह्निनिश्चयो भविष्यतीत्यभिप्रायेणापि प्रथमं पर्वतो वह्निमानिति प्रयोगात्पूर्वप्रयुक्तवह्निपदस्य सर्वत्र ज्ञानपरत्वासम्भवाच्चेति भावः।

---

पञ्चम्यर्थज्ञानेऽन्वयः। एवं च धूमस्य संयोगसम्बन्धेनैव साध्यवदाश्रितत्वं सुलभमिति साध्यवदाश्रितधूमवाचकात् धूमपदात् पञ्चम्याः नानुपपत्ति-रित्याह– ***ज्ञानज्ञानप्यत्वस्येत्यादिना।***

पर्वतो वह्निमान् इत्यत्र वह्निपदस्य वह्निज्ञाने लक्षणायां प्रमाणाभावात् इति पूर्वमुक्तम्। तत्र मणिकारस्य ग्रन्थोऽपि साधकतया प्रदर्शितः दीधितौ। मणिग्रन्थेन प्रतिज्ञास्थवह्न्यादिपदस्य मुख्यार्थपरत्वं कथं लभ्यत इत्येतत् उपपादयति–***तेन ग्रन्थेनेत्यादिना।*** प्रतिज्ञालक्षणप्रकरणे प्रतिज्ञायाः साधनाङ्गत्वनिरूपणावसरे वादिप्रतिवादिविप्रतिपत्तिवाक्याभ्यामेव साध्यनिर्देशस्य लाभात् पुनः प्रतिज्ञावाक्यं किमर्थमित्याशङ्क्य तस्य वादिवाक्यस्य प्रतिवादिवाक्येन प्रमाणादिव्यवस्थया च अन्तरितत्वात् ततः साध्योपस्थितिः न सम्भवति। साध्योपस्थित्यर्थं पुनः प्रतिज्ञावाक्यं प्रयोक्तव्यमित्युक्त्वा तदुपरि वादिवाक्यस्य पुनरावृत्त्या साध्योपस्थापकत्वं भवितुमर्हति इत्याशङ्क्य आवृत्तौ तु सैव प्रतिज्ञा इत्युक्तं मणौ। तेन ग्रन्थेन वादिप्रयुक्तस्य 'पर्वतो वह्निमान्' इति वाक्यस्य पुनरनुसन्धीयमानस्य प्रतिवादिनः 'पर्वतो न वह्निमान्' इति वाक्यस्य सहकारेण कोटच्युपस्थितिद्वारा मध्यस्थसंशयजनकस्य प्रतिज्ञात्वमङ्गीकृतम्। अत्र च वह्न्यादिपदं न वह्न्यादिज्ञानपरम्। तथा सति तद्वाक्यस्य

अत एव व्याचक्षते यतो द्रव्यं गुणाः कर्मेत्यत्र हेतुत्वं यथासम्भवमुत्पादकत्वं ज्ञापकत्वं चेति।

---

वर्धमानोपाध्यायानामपि पञ्चम्या ज्ञापकत्वबोधकत्वे संवादमाह–*अत एवेति।* *यथासम्भवमिति।* समभिव्याहृतद्रव्यादिपदार्थे जन्यनित्यरूपे तत्तदन्वययोग्यतानुसारेणेत्यर्थः। नन्वावृत्तौ सैव प्रतिज्ञेति मणिकृतोऽभ्युपगमवादः नतु तत्र निर्भरः मध्यस्थसंशयात्परतो हेतुवाक्यसमभिव्याहृतसाध्यनिर्देशस्य साम्प्रदायिकत्वात्। हेतुत्वं

---

विषयसंशायकत्वासम्भवात् विप्रतिपत्तिवाक्याभ्यां कोटिद्वयोपस्थितिद्वारा मानसस्संशयो जायत इति वदद्भिः सिद्धान्तिभिरपि 'वह्निः पर्वतः अभावः' इत्यादिनिराकाङ्क्षवाक्यात् संशयानुत्पत्त्या धर्मिविशेष्यकतत्तदभाव–रूपकोटिद्वयप्रकारकशाब्दज्ञानजनकसामग्रीभ्यामेव मानसस्संशयो जायत इत्यङ्गीकारात् वह्निपदस्य वह्निज्ञानपरत्वे पर्वतविशेष्यकवह्निप्रकारक–ज्ञानाजनकस्य पर्वतो वह्निमान् इति वाक्यस्य संशायकत्वासम्भवात् इति भावः।

***समभिव्याहृतेति।*** 'यतो द्रव्यं गुणाः कर्म' इत्यत्र 'यत' इति पञ्चम्या उत्पादकत्वं ज्ञापकत्वं चार्थः। उत्पादकत्वस्य समभिव्याहृतपदार्थे जन्यद्रव्यादिरूपेऽन्वयः। ज्ञापकत्वस्य च समभिव्याहृतनित्यद्रव्यादिपदार्थे अन्वयः। तत्र च योग्यतैव कारणम्। अनेन ***वर्धमानोपाध्यायग्रन्थेन*** ज्ञापकत्वस्यापि पञ्चम्यर्थत्वं लभ्यते।

***नन्वावृत्ताविति।*** आवृत्तौ सैव प्रतिज्ञेति मणिकृतः परमताभ्युपगमेन वादः। न तु तत्र नैर्भर्यम्। मध्यस्थसंशयादनन्तरं हेतुवाक्यान्वययोग्यस्य साध्यनिर्देशरूपप्रतिज्ञावाक्यस्य पुनः प्रयोगस्य सम्प्रदायसिद्धत्वात्।

'हेतुत्वं यथासम्भवम्' इति उपाध्यायग्रन्थस्यापि पञ्चमीप्रतिपाद्यं हेतुत्वं क्वचित् समभिव्याहृतपदमुख्यार्थभूतजन्यद्रव्यादिनिरूपितं, क्वचित् समभिव्याहृतपदलक्ष्यार्थनित्यद्रव्यादिज्ञाननिरूपितं जनकत्वमेव इत्यपि तात्पर्यं वक्तुं शक्यते। अत उपाध्यायग्रन्थः पञ्चम्याः ज्ञापकत्वार्थकत्वे न प्रमाणम्।

यदप्युक्तं पञ्चम्याः जन्यजनकभावे लक्षणा। प्रतिज्ञास्थ–

**अत एव लोके किं वह्निमदिति पृष्टे तद्गृह वह्निमदित्युत्तरिते कुत इति जिज्ञासा धूमवत्त्वादित्युत्तरं च। न हि तत्र ज्ञाने प्रश्नः। येन लक्षणया ज्ञानेनोत्तरयेत्।**

---

यथासम्भवमित्युपाध्यायग्रन्थोऽपि पञ्चम्यांप्रतिपाद्यं हेतुत्वं क्वचित् समभिव्याहृत-पदमुख्यार्थनिरूपितं क्वचिच्च लक्ष्यार्थनिरूपितं कारणत्वमित्यर्थकतयोपपद्यते, यदप्युक्तमुभयपदे लक्षणाऽनौचित्यमिति, तदपि शिथिलं, ज्ञापकतायाः पञ्चम्यर्थत्वे सूत्रस्थहेतुपदस्योभयपरतया वाक्यभेदापत्तेः। अनुशासनानुरोधेनोभयत्र लक्षणायाः

---

वह्न्यादिपदस्य वह्न्यादिज्ञाने लक्षणेत्येवमुभयपदे लक्षणाया अनुक्तत्वात् इति तदपि न युक्तम्। ज्ञापकतायाः पञ्चम्यर्थत्वे सूत्रे विद्यमानस्य हेतुपदस्य कारणज्ञापकोभयार्थकतायाः वक्तव्यतया वाक्यभेदापत्तेः। सूत्रस्य हेतुपदं कारणमात्रपरम्। हेतौ इत्यनुशासनानुसारेण पञ्चम्याः कारणत्वे वह्न्यादिपदस्य वह्न्यादिज्ञाने लक्षणा इत्येवमुभयत्र लक्षणाया एव उचितत्वात् इत्याशङ्क्य वह्न्यादिपदस्य वह्न्यादिज्ञानपरत्वाभावे युक्त्यन्तरमाह–***अत एवेत्यादिना*** इति भावः।

दीधितेरयमर्थः–लोके किं वह्निमत् इति केनचित् पृष्टे सति तद्गृहं वह्निमत् इत्यन्येन उत्तरे दत्ते पुनः कुत इति प्रश्ने धूमवत्त्वात् इति उत्तरमुच्यते। किं वह्निमत् इति प्रश्नवाक्यस्थं वह्निपदं न वह्निज्ञानपरम्। वह्नेरेव जिज्ञासितत्वात्। तथा च तद्गृहं वह्निमत् इति प्रतिज्ञारूपमुत्तरवाक्यमपि प्रश्नसमानविषयकमेव वक्तव्यम्। उत्तरस्य प्रश्न समानविषयकतायाः सर्वैरङ्गीकारात्। एवञ्च कुतः 'धूमात्' इति च प्रश्नोत्तरवाक्ययोः ये पञ्चम्यौ तदर्थान्वयानुरोधेन ज्ञापकत्वं ज्ञाप्यत्वं वा पञ्चम्यर्थौ वाच्यः। कारणत्वस्य जन्यत्वस्य वा पञ्चम्यर्थत्वे वह्नौ धूमजन्यत्वबाधात्। तथा च प्रश्नोत्तररूपलोकव्यवहारानुसारेणापि वह्न्यादिपदस्य मुख्यार्थपरत्वमेव पञ्चम्याश्च ज्ञापकत्वज्ञाप्यत्वान्यतर-लाक्षणिकत्वमेवेति स्वीकरणीयमिति भावः।

**ननु प्रथमप्रश्नानुरोधात्** इति। किं वह्निमत् इति प्रथमप्रश्नः। तेन वह्नावेव जिज्ञासेत्यवगम्यते। जिज्ञासाप्रकाशकवाक्यस्यैव प्रश्नरूपत्वात्।

न वा परकीयभाविप्रश्नानुरोधादजिज्ञासिताभिधानम्। न वा कुत इति प्रश्ने ज्ञातमित्यध्याहारः। मानाभावात्।

---

एवोचितत्वादित्यत उक्तयन्तरमाह– ***अत एवेति। जिज्ञासा*** प्रश्नः। ***धूमवत्त्वादित्युत्तरं चेति।*** प्रयुज्यत इति शेषः। उपष्टम्भं विवृणोति– ***नहीति। ज्ञानेप्रश्न*** इति। प्रश्नस्थवह्निपदं वह्निज्ञानपरमित्यर्थः। वह्नेरेव जिज्ञासितत्वादिति शेषः। लक्षणया ***ज्ञानेऽतरथेदिति।*** लक्ष्यार्थज्ञानपरमुत्तरं वाच्यमित्यर्थः। अपि तु प्रश्नसमानविषयकत्वानुरोधान्मुख्यार्थवह्निपरमेव तादृशोत्तरं प्रयुक्तमिति शेषः। तथा च तत्र वह्नौ कुत इति धूमादिति च प्रश्नोत्तरवाक्ययोर्ये पञ्चम्यौ तदर्थान्वयानुरोधेन ज्ञापकत्वं ज्ञाप्यत्वं वा पञ्चम्यर्थौ वाच्य इति भावः। ननु प्रथमप्रश्नानुरोधाद्वह्निपदस्य वह्निपरत्ववत्कुत इति प्रश्नस्थपञ्चम्यर्थान्वयानुरोधात्तदुत्तरधूमादिति पञ्चम्यर्थान्वयानुरोधाच्च ज्ञानपरत्वमप्यविरोधादेकदा शक्यलक्ष्यार्थान्वयेऽपि वह्निं बोधयित्वा वह्निज्ञानं बोधयिष्यतीत्यभिप्रायेणैवैकपदप्रयोगे बाधकाभावादत एव तथाविधतात्पर्यानुरोधेन नानार्थस्थले आवृत्तिरित्यत आह– ***नवेति। परकीयभाविप्रश्नानुरोधादिति।*** तादृशप्रश्नस्वीयतदुत्तरवाक्यद्वयस्थपञ्चम्यर्थान्वयानुरोधादित्यर्थः। ***अजिज्ञासिताभिधानम्।*** प्रथमजिज्ञासाविषयज्ञानप्रत्यायनेच्छया वह्निपदप्रयोगः परकीयत्वेन भावित्वेन च प्रथमं कुत इति प्रश्नस्याज्ञानात् परकीयवह्निज्ञानहेतुजिज्ञासाया अज्ञानेन वह्निज्ञानप्रत्यायनेच्छायाः प्रथममसम्भवादिति हेतुसूचनाय परकीयत्वभावित्वाभिधानम्। ननु तत्र ज्ञातमित्यध्याहारात्कुत इत्यादिपञ्चम्यर्थस्य ज्ञानेऽन्वयो न तु वह्न्यादावित्यत आह– ***न चेति।*** प्रश्नस्थपदस्य उत्तरवाक्येऽनुषङ्गस्य व्युत्पत्तिसिद्धत्वात्कुत इत्यत्र ज्ञातमित्यध्याहारेणैव धूमादित्यत्रापि ज्ञानान्वयसम्भवात् तत्राध्याहारान्तरविरहेऽपि न क्षतिरित्यतः कुत इत्यत्रैव अध्याहारश्शङ्कितः। ***मानाभावादिति।*** पदार्थान्तरान्वयस्य वक्तुरनभिप्रेतत्वनिश्चयेऽपि बोधस्यानुभाविकत्वात्सर्वत्राश्रुतपदकल्पनासम्भवादित्यर्थः।

---

तद्वद्हं वह्निमत् इत्युत्तरवाक्यं प्रश्नसमानविषयकमिति तत्रस्थवह्निपदस्य वह्निपरत्वं यथा अभ्युपगम्यते, तथा कुत इति प्रश्नस्थपञ्चम्यर्थजन्यत्वान्वयानुरोधात् तदुत्तरभूत 'धूमात्' इति वाक्यस्थपञ्चम्यर्थजन्यत्वान्वयानुरोधाच्च वह्निपदस्य ज्ञानपरत्वमपि अङ्गीक्रियताम्। न च–एकदा शक्यार्थलक्ष्यार्थयोः कथमन्वय इति–वाच्यम्। एकदानन्वयेऽपि प्रश्नानुरोधेन प्रथमं वह्निं शक्यार्थं बोधयित्वा पञ्चम्यनुरोधेन लक्ष्यार्थस्य वह्निज्ञानस्य बोधनसम्भवात्। क्रमेण शक्यार्थलक्ष्यार्थबोधार्थमेकस्य

वह्निपदस्य प्रयोगे बाधकाभावात्। सकृत्प्रयुक्तस्य पदस्य आवृत्त्या क्रमेण शक्यार्थलक्ष्यार्थोभयबोधकत्व- सम्भवात्। नानार्थकस्थले 'सैन्धवमानय' इत्यादौ तात्पर्यानुरोधेन आवृत्त्या अर्थद्वयबोधकताया अङ्गीकृतत्वात् इत्याशङ्कासमाधानार्थं **न वा परकीयेत्यादि** दीधितिग्रन्थः प्रवृत्तः। परकीयः यः भावी प्रश्नः कुत इत्याकारकः यच्च स्वकीयं धूमात् इत्युत्तरवाक्यम् तदुभयस्थपञ्चम्यर्थजन्यत्वान्वयानुरोधात् प्रथमतः जिज्ञासायाम् अविषयस्यापि वह्निज्ञानस्य वह्निपदेन लक्षणया प्रतिपादनमिति वक्तुं शक्यते। प्रथमतः 'तद्गृहं वह्निमत्' इति वाक्यप्रयोक्तुः तत्काले 'कुत' इति प्रश्नः न ज्ञायते। तादृशप्रश्नस्य परकीयत्वात् भावित्वाच्च।

किञ्च वह्निज्ञाने हेतुजिज्ञासा प्रष्टुरस्तीति पूर्वं ज्ञाने सत्येव तादृशहेत्वन्वयानुरोधेन वह्निज्ञानबोधनेच्छा तया वह्निपदप्रयोगश्च भवितुमर्हति। परकीयस्य प्रश्नस्यैव अज्ञाने सति तदीयहेतुजिज्ञासाया अज्ञानात् वह्निज्ञानबोधनेच्छाया असम्भवात् वह्निज्ञानपरः वह्निपदप्रयोगः प्रथमं न सम्भवतीति भावः।

ननु 'कुत' इति प्रश्नानन्तरं 'ज्ञातम्' इति अध्याहारात् 'कुत' इत्यादिपञ्चम्यर्थस्य अध्याहृतपदार्थे ज्ञानेऽन्वयः, न तु वह्निपदार्थे। तथा च पञ्चम्याः जनकत्वमेवार्थः न तु ज्ञापकत्वमित्याशङ्क्य अध्याहारे प्रमाणाभावात् इति दीधितावुक्तम्।

**इदं त्ववधेयमित्यादि।** पूर्वम् 'अत एव लोके' इत्यादिना पञ्चम्याः ज्ञापकत्वबोधकत्वे युक्तिः प्रदर्शिता। तथा हि–लोके 'किं वह्निमत्' इति केनचित् पृष्टे 'तद्गृहं वह्निमत्' इति अन्येन उत्तरिते, कुत इति जिज्ञासायां 'धूमात्' इति उत्तरं दीयते। तत्र 'कुत' इति पञ्चम्याः 'धूमात्' इति पञ्चम्याश्च यदि जनकत्वं जन्यत्वं वा अर्थः स्यात्, तर्हि तस्य प्रतिज्ञास्थवह्निपदार्थे अन्वयस्य वक्तव्यतया वह्नेः धूमजन्यत्वविरहात् तत्र अन्वययोग्यता नास्तीति ज्ञापकत्वं ज्ञाप्यत्वं वा पञ्चम्यर्थः। वह्नेः धूमज्ञाप्यत्वसद्भावात् न अयोग्यता।

न च प्रश्नस्थं वह्निपदं वह्निज्ञानपरम्। येन उत्तरवाक्यस्थ–

इदं त्ववधेयम्। गृहं वह्निमदिति प्रयोक्तुर्वह्निपदे ज्ञानतात्पर्यं कुत इति वाक्यजन्यज्ञानहेतुजिज्ञासाबोधेऽनुपयुक्तं स्वाभिप्रायस्य स्वबोधाहेतुत्वात् कुत इति पृच्छकपुरुषतात्पर्यस्यैव तत्रोपयोगात्। तथा च स्वजिज्ञासां बोधयितुकामस्य कुत इति प्रयोक्तुः परप्रयुक्तवह्निपदोपस्थापितज्ञानमादाय कुत इति पञ्चम्यर्थान्वयबोधो भवत्वित्यभिप्रायं ज्ञात्वैव प्रतिवक्ता प्रष्टुर्वह्निज्ञानहेतुजिज्ञासां कुत इति शब्दादनुषज्यमानस्वोक्तवह्निपदसहितात् ज्ञास्यति। एवं गृहं वह्निमदिति प्रयोक्तुः

---

वह्निपदस्यापि वह्निज्ञानपरतया तदन्वयिजन्यत्वं पञ्चम्यर्थ इति वक्तुं शक्येत इत्युक्तम्।

इदानीं 'तद्गृहं वह्निमत्' इति उत्तरवाक्यस्थवह्निपदस्य वह्निज्ञानतात्पर्यकतया तदन्वयि जन्यत्वं पञ्चम्यर्थः भवितुमर्हति इति इदं त्ववधेयमित्यादिना उपपाद्यते। 'गृहं वह्निमत्' इति वाक्यप्रयोक्तुः वह्निपदे ज्ञानतात्पर्यं यद्यपि प्रकृते अनुपयुक्तम्; 'कुत' इति वाक्यात् ज्ञानहेतुविषयकजिज्ञासायाः बोधो भवति। स च बोधः वह्निपदस्य वह्निज्ञानतात्पर्यं विना न सम्भवति। वह्निज्ञाने तात्पर्ये सति हि 'वह्निज्ञानस्य हेतुः कः' इति जिज्ञासा भवति। जिज्ञासायाः बोधनार्थं 'कुतः' इति शब्दप्रयोगश्च भवितुमर्हति। तथापि वह्निपदस्य वह्निज्ञाने तात्पर्यं, 'गृहं वह्निमत्' इति वाक्यप्रयोक्तृनिष्ठमिति न युज्यते। 'कुत' इति वाक्यजन्यप्रष्टृनिष्ठजिज्ञासायाः बोधः 'गृहं वह्निमत्' इति वाक्यप्रयोक्तुः भवति। एवञ्च तद्वाक्यप्रयोक्तृनिष्ठबोधे तन्निष्ठतात्पर्यज्ञानं नावश्यकम्। स्वाभिप्रायस्य स्वबोधाहेतुत्वात्। 'कुत' इति पृच्छकपुरुषनिष्ठतात्पर्यमेव जिज्ञासाबोधे उपयोगि। तथा च स्वस्य वह्निज्ञानजनकजिज्ञासां बोधयितुकामस्य कुत इति पृच्छकस्य यत् तात्पर्यं 'परप्रयुक्तवह्निपदोपस्थापितज्ञानमादाय 'कुत' इति पञ्चम्यार्थान्वयबोधो भवतु इत्याकारकं', तज्ज्ञात्वा प्रतिवक्ता पृच्छकोच्चारितात् 'कुत' इति शब्दात् अनुषज्यमानस्वोक्तवह्निपदसहितात् पृच्छकनिष्ठां वह्निज्ञानहेतुविषयकजिज्ञासां जानाति। तदनुसारेण 'धूमात्' इति उत्तरं वदति। एवं प्रतिवक्तुः प्रथमं वह्निपदे ज्ञानतात्पर्यविरहेऽपि 'कुत' इति प्रश्नानन्तरं

प्रथमं वह्निपदे ज्ञानतात्पर्यविरहेऽपि कुत इति प्रश्नानन्तरं प्रष्टुर्वह्निज्ञानहेतुजिज्ञासाया ज्ञाने किमर्थमन्यद्वह्निपदं प्रयोक्तव्यं, पूर्वं वह्निपदाल्लक्षणयोपस्थापितज्ञानमादायैव धूमादिति वाक्यं धूमज्ञाने वह्निज्ञापकतां बोधयत्वित्यभिप्रायसम्भवात् तज्ज्ञानेन धूमादिति पञ्चम्यर्थस्य ज्ञानान्वयो भविष्यतीति किमनुपपन्नम्। न हि प्रयोक्तृपुरुषस्यैकार्थतात्पर्यं पुरुषान्तरस्यान्यार्थतात्पर्यविरोधि अन्यैरप्यन्यतात्पर्येण प्रयुक्तान्यपि पदान्यादायान्यार्थपरश्लोकस्य मौनिना निबन्धनात्। न वा स्वीयप्राथमिक-मन्यतात्पर्यमुदीच्यमपरतात्पर्यं विरुणद्धि बीजाभावात्। युज्यते च वह्न्यादिपदस्य वह्न्यादिप्रकारकज्ञानविषयत्वे लक्षणा, साध्यान्वयिजन्यज्ञानविषयत्वस्य पञ्चम्यर्थत्वे

---

वह्निज्ञानहेतुविषयकजिज्ञासायाः बोधे सति पञ्चम्यर्थान्वयार्थं किमर्थमन्यत् वह्निपदं प्रयोक्तव्यम्। पूर्वं प्रयुक्तात् वह्निपदात् लक्षणया उपस्थापितं वह्निज्ञानमादाय 'धूमात्' इति वाक्यं धूमे तज्ज्ञाने वा वह्निज्ञापकतां बोधयतु इति तात्पर्यसम्भवात् तादृशतात्पर्यज्ञानेन 'धूमात्' इति पञ्चम्यर्थजन्यत्वस्य वह्निपदलक्ष्यार्थवह्निज्ञानान्वयो भविष्यति इति किमत्रानुपपन्नम्? न हि प्रतिवक्तृपुरुषनिष्ठमेकार्थतात्पर्यं पृच्छकपुरुष-निष्ठान्यार्थतात्पर्यविरोधि। न वा प्रयोक्तृनिष्ठं प्राथमिकमन्यार्थतात्पर्यं पश्चात्कालिकस्य स्वनिष्ठस्य अर्थान्तरतात्पर्यस्य विरोधि, प्रमाणाभावात्। तथा च 'तद्गृहं वह्निमत्' इत्यत्र वह्निपदस्य वह्निप्रकारकज्ञानविषयत्वे लक्षणा। तद्गृहं वह्निप्रकारकज्ञानविशेष्यत्ववत् इत्यर्थः। तदेकदेशज्ञाने पञ्चम्यर्थजन्यत्वस्य अन्वयः। तथा च ज्ञाप्यत्वस्य पञ्चम्यर्थत्वा-भावेऽपि न क्षतिरित्याशयः।

***ज्ञानहेतुजिज्ञासाबोधे*** इति। ज्ञानहेतोः ज्ञानजनकस्य या जिज्ञासा तद्बोध इत्यर्थः। ***स्वोक्तवह्निपदसहितादिति।*** प्रतिवक्त्रा उक्तं यत् वह्निपदं तत्सहितादित्यर्थः। ***तज्ज्ञानेनेति।*** अभिप्रायज्ञानेनेत्यर्थः। ***ज्ञानान्वयो भविष्यति*** इति। ज्ञानान्वयबोधो भविष्यति इत्यर्थः।

हेत्वन्वयार्हप्रतिज्ञादौ तादृशप्रश्नतदुत्तरयोश्च साध्यपदस्य साध्यज्ञानलक्षणां व्यवस्थापयति - ***युज्यते चेत्यादिना।*** यदि पञ्चम्याः जन्यज्ञानविषयत्वरूपं ज्ञाप्यत्वमर्थः स्यात्, अस्य च प्रतिज्ञादिस्थसाध्य-पदशक्यार्थे अन्वयः स्यात् तदा गुणः सत्तावान् द्रव्यत्वात् इत्यादिप्रयोगः

गुणस्सत्तावान् द्रव्यत्वादित्यादिप्रयोगस्य दुर्वारतापातात् द्रव्यत्वादिज्ञाप्यसत्त्वादेर्गुणादावपि सत्त्वात् साध्यवाचकपदस्य लाक्षणिकत्वे पक्षान्वयिसाध्यतावच्छेदकविशिष्टसाध्य-प्रकारकज्ञानविषयत्वरूपसाध्यवाचकपदार्थे पञ्चम्यन्तार्थीलिङ्गज्ञानप्रयोज्यत्वान्वयात् द्रव्यत्वादिप्रकारकज्ञानप्रयोज्यसत्त्वादिप्रकारकज्ञानविषयत्वस्य गुणादौ वाधेन कथितातिप्रसङ्गवारणसम्भवात् न च जन्यज्ञानविषयत्वरूपपञ्चम्यर्थस्य साध्यविशिष्टपक्षेऽन्वय-स्स्वीक्रियते सत्तादिरूपसाध्यविशिष्टगुणादिरूपपक्षस्य च न द्रव्यत्वादिलिङ्गज्ञाप्यतेति नातिप्रसङ्गः। वह्न्यादिमतः पर्वतादेः द्रव्यत्वादिरूपसाध्यविशिष्टस्य पृथिवीत्वादि-ज्ञाप्यत्वेऽपि वह्न्यादिविशिष्टस्य न तथात्वमिति विशेषणावच्छिन्न एव पञ्चम्याः ज्ञाप्यत्वबोधकत्वात् न पर्वतो वह्निमान् पृथिवीत्वादित्यादिप्रयोगः। विषयतायाः

---

प्रामाणिकः स्यात्। द्रव्यत्वविषयकज्ञानजन्यज्ञानविषयत्वाश्रयसत्तावान् गुण इति हि तद्वाक्यजन्यो बोधः। स च अबाधितविषयकः। सत्तायाः द्रव्यत्वविषयकज्ञानजन्यज्ञानविषयत्वात्, 'पृथिवी द्रव्यम्' इत्याकारकज्ञानात् 'पृथिवी सत्तावती' इत्याकारकज्ञानं जायते। अतः द्रव्यत्वविषयक-ज्ञानजन्यज्ञानविषयत्वं सत्तायामस्ति। तादृशसत्तावत्त्वं च गुणेऽबाधितमिति। अतः ज्ञाप्यत्वं न पञ्चम्यर्थः। किन्तु प्रयोज्यत्वरूपजन्यत्वमेव। साध्यवाचकपदस्य साध्यप्रकारकज्ञानविषयत्वे लक्षणा इति वक्तव्यम्। तादृशविषयत्वे पञ्चम्यर्थस्य प्रयोज्यत्वस्य अन्वयः। एवं च द्रव्यत्वप्रकारकज्ञानप्रयोज्यं यत् सत्त्वप्रकारकज्ञानविषयत्वं तद्वान् गुण इत्याकारकः बोधः 'गुणः सत्तावान् द्रव्यत्वात्' इति वाक्यात् जायते। स च बोधः बाधितविषयक इति तादृशवाक्यस्य अप्रामाण्यम्। गुणनिष्ठा या सत्ताप्रकारकज्ञानविशेष्यता सा न द्रव्यत्वप्रकारकज्ञानप्रयोज्या। गुणे द्रव्यत्वप्रकारकज्ञानविरहात्।

शङ्कते – ***न च जन्यज्ञानविषयत्व*** इत्यादिना। जन्यज्ञान-विषयत्वरूपस्य ज्ञाप्यत्वस्य पञ्चम्यर्थत्वेऽपि 'गुणः सत्तावान् द्रव्यत्वात्' इति प्रयोगस्य प्रामाण्यमापादयितुं न शक्यते। पञ्चम्यर्थस्य साध्यविशिष्टपक्षेऽन्वयः स्वीक्रियते। द्रव्यत्वप्रकारकज्ञानजन्यज्ञानविषयतावान् सत्ताविशिष्टो गुण इति तद्वाक्यात् बोधः। सत्ताविशिष्टस्य गुणस्य गुणत्वादिज्ञाप्यतया गुणत्वादिज्ञानजन्यज्ञानविषयत्वेऽपि द्रव्यत्वज्ञानजन्यज्ञान-

पर्याप्तिसम्बन्धेन विशिष्टेऽन्वयोपगमात् द्रव्यत्वादिरूपसाध्यवत्त्वेन वह्न्यादिरूपपक्षता-वच्छेदकविशिष्टपर्वतादौ पृथिवीत्वादिज्ञाप्यत्वेऽपि न क्षतिरिति वाच्यम्। एवमपि द्रव्यत्ववान् पर्वतो वह्निमान् धूमान्न पृथिवीत्वादित्यादौ नञर्थान्वयानुपपत्तेर्दुर्वारत्वात् पृथिवीत्वज्ञाप्यतापर्याप्त्यधिकरणद्रव्यत्वविशिष्टपर्वतादौ वह्न्यादिरूपविशेषणान्तरावच्छिन्नेऽपि तज्ज्ञाप्यत्वविरहासम्भवात्। अस्मन्मते च तत्र पर्वताद्यन्वयिनि वह्न्यादिप्रकारक-ज्ञानविषयत्वे पृथिवीत्वादिरूपलिङ्गज्ञानप्रयोज्यत्वस्य पञ्चम्यन्तार्थस्याभावान्वयात्तदभावस्य तत्राबाधेनानुपपत्तिविरहात्। एवं साध्ये ज्ञाप्यत्वान्वयपक्षेऽपि उक्तप्रयोगानुपपत्तिर्द्रष्टव्या-

---

विषयत्वविरहात् तादृशबोधस्य बाधितविषयकत्वात् साध्यविशिष्टे पक्षे पञ्चम्यर्थज्ञाप्यत्वान्वय इत्यनुक्त्वा साध्याश्रये पक्षे तदन्वय इत्युक्तौ 'पर्वतो वह्निमान् धूमात्' इतिवत् 'पर्वतो वह्निमान् पृथिवीत्वात्' इत्यपि प्रयोगः प्रामाणिकः स्यात्। वह्निरूपसाध्याश्रयस्य पर्वतस्य द्रव्यत्वविशिष्टवेषेण पृथिवीत्वप्रकारकज्ञानजन्यज्ञानविषयत्वात्। साध्यविशिष्टे पञ्चम्यर्थान्वय इत्युक्तौ तु वह्निविशिष्टस्य पर्वतस्य न पृथिवीत्वज्ञाप्यत्वम्। पृथिवीत्वस्य वह्निव्यभिचारित्वात् इति तादृशप्रयोगस्य अप्रामाण्यं निर्वहति। विषयतारूपविशेष्यतायाः पर्याप्तिसम्बन्धेन साध्यविशिष्टे पक्षेऽन्वयः उपगम्यते। तेन 'वह्निमान् पर्वतो द्रव्यं पृथिवीत्वात्' इत्यत्र आश्रयतासम्बन्धेन पृथिवीत्वज्ञानजन्यज्ञानविशेष्यताया वह्निविशिष्टपर्वते सत्त्वेऽपि पर्याप्तिसम्बन्धेन तद्विरहात् तत्सम्बन्धेन विशेष्यतायाः वह्निविशिष्टे द्रव्यत्वविशिष्टे च उभयत्रैव सत्त्वात् 'अतो न पर्वतो वह्निमान् पृथिवीत्वात्' इत्यादिप्रयोगप्रसङ्ग इति **न चेत्यादि** शङ्काग्रन्थस्य आशयः। ***नातिप्रसङ्ग*** इति। 'गुणः सत्तावान् द्रव्यत्वात्' इति प्रयोगप्रसङ्ग इत्यर्थः। न ***तथात्वमिति।*** न पृथिवीत्वज्ञाप्यत्वमित्यर्थः।

समाधत्ते-***एवमपीति।*** साध्यविशिष्टे पक्षे जन्यज्ञानविषयत्व-रूपपञ्चम्यर्थस्य पर्याप्तिसम्बन्धेन अन्वयस्वीकारेऽपीत्यर्थः। 'द्रव्यत्ववान् पर्वतः वह्निमान् धूमात् न पृथिवीत्वात्' इत्यत्र नञर्थान्वयानुपपत्तिः। वह्निविशिष्टे द्रव्यत्ववति पर्वते पृथिवीत्वप्रकारकज्ञानजन्यज्ञानविषयत्वा-भावरूपपृथिवीत्वज्ञाप्यत्वाभावः नञा बोधनीयः। स च दुर्घटः। द्रव्यत्ववत्पर्वतरूपे विशेष्ये पृथिवीत्वज्ञानजन्यज्ञानविशेष्यत्वपर्याप्तेः सत्त्वेन

वह्न्यादेरपि प्रमेयत्वादिना पृथिवीत्वादिज्ञाप्यत्वात्। यदि च प्रयोज्यत्वं समभिव्याहृतपक्षविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयता च खण्डशो लक्षणया

---

वह्निविशिष्टे द्रव्यत्ववत्पर्वतेऽपि तत्सत्ताया आवश्यकत्वेन तदभावस्य बाधात्। विशेष्यवृत्तिधर्मप्रतियोगिकविशिष्टानुयोगिकाभावानङ्गीकारात्। प्रयोज्यत्वस्य पञ्चम्यर्थतामते तु न दोषः। वह्निपदलक्ष्यार्थे वह्निप्रकारकज्ञानविशेष्यत्वे पर्वतनिष्ठे धूमप्रकारकज्ञानप्रयोज्यत्वसत्त्वेऽपि पृथिवीत्वरूपलिङ्गप्रकारकज्ञानप्रयोज्यत्वस्य विरहात् तादृशज्ञानप्रयोज्यत्वाभावस्य अबाधादिति भावः।

एतावता साध्यविशिष्टपक्षे पञ्चम्यर्थज्ञाप्यत्वान्वयः दूषितः। अथ साध्ये पञ्चम्यर्थज्ञाप्यत्वान्वयपक्षं दूषयति–***एवं साध्ये ज्ञाप्यत्वान्वय–पक्षेऽपीति।*** 'द्रव्यत्ववान् पर्वतो वह्निमान् धूमात् न पृथिवीत्वात्' इत्यत्र वह्निरूपसाध्ये धूमज्ञाप्यत्वं पृथिवीत्वज्ञाप्यत्वाभावश्च बोध्यत इति वक्तव्यम्। तत्तु न शक्यते। वह्नेरपि प्रमेयत्वेन रूपेण पृथिवीत्वज्ञानजन्यज्ञानविषयत्वात्। तादृशज्ञानविषयत्वाभावस्य बाधितत्वात् नञर्थान्वयानुपपत्तिः। प्रयोज्यत्वस्य पञ्चम्यर्थत्वे तु वह्नित्वविशिष्ट–वह्निप्रकारज्ञानविशेष्यत्वे वह्निपदलक्ष्यार्थे पृथिवीत्वप्रकारकज्ञानप्रयोज्यत्वाभावस्य सत्त्वेन नानुपपत्तिः।

***यदि चेत्यादि।*** 'पर्वतो वह्निमान् धूमात्' इत्यत्र पञ्चम्याः प्रयोज्यत्वं समभिव्याहृतपक्षविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयता च लक्षणया खण्डशोऽर्थः। प्रयोज्यत्वे प्रकृत्यर्थस्य धूमज्ञानस्य निरूपितत्वसम्बन्धेनान्वयः। प्रयोज्यत्वस्य आश्रयतासम्बन्धेन विधेयता–यामन्वयः। विधेयताया आश्रयतासम्बन्धेन वह्नौ अन्वयः। तथा च धूमज्ञानप्रयोज्यपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताश्रय–वह्निमान् पर्वत इति बोधः। तेन पर्वते वह्नित्वेन रूपेण वह्नेः धूमज्ञानज्ञाप्यत्वं लभ्यते।

लाभप्रकारस्तु पर्वते वह्नित्वेन रुपेण वह्निः धूमज्ञानज्ञाप्यः धूमज्ञानप्रयोज्यपर्वतत्वावच्छिन्नविशेष्यतानिरूपत–वह्नित्वावच्छिन्नविधेयतावत्त्वात्

**दाहो दहनात् न जलात् जलं स्पर्शवत् रूपात् न गन्धात् नापि शब्दादित्यादौ नञर्थान्वयानुरोधात् जन्यत्वरूपहेतुमत्त्वं जन्यज्ञानविषयत्वरूपज्ञाप्यत्वञ्च पञ्चम्यर्थः।**

---

पञ्चम्यर्थः अन्वयबलात्साध्ये पक्षांशे तत्तद्रूपेण हेतुज्ञाप्यतालाभः। नञ्समभिव्याहार-स्थले च लिङ्गज्ञानान्वितप्रयोज्यत्वरूपैकार्थस्य निरुक्तविधेयतारूपापरपञ्चम्यर्थेऽभावो नञा प्रत्याय्यत इत्युच्यते; तदा साध्यतावच्छेदकपक्षतावच्छेदकादेर्द्विधाभानाद्गौरवं, साध्यान्वयिनी पक्षविशेष्यतानिरूपितविधेयता, पक्षान्वयिनी साध्यविधेयतानिरूपितविशेष्यता वा पञ्चम्यर्थ इति विनिगमनाविरहः, एकपदस्यार्थद्वये खण्डशो लक्षणा, पदद्वयस्यैव वा प्रत्येकमर्थद्वये लक्षणेत्यत्र को विशेष इति।

प्रसङ्गतः पञ्चम्याः जनकत्वज्ञापकत्वार्थकत्वं नञर्थान्वयस्थले अनुपपत्तिप्रदर्शनेन निराकुर्वन् जन्यत्वज्ञाप्यत्वार्थकतां व्यवस्थापयति-**दाहो**

---

इत्यनुमानात्, न तु ज्ञाप्यत्वस्य पञ्चम्यर्थताबलादिति अवधेयम्। ज्ञाप्यत्वस्य पञ्चम्यर्थताखण्डनप्रकरणात्। नञ्समभिव्याहारस्थले च 'पर्वतो वह्निमान् न पृथिवीत्वात्' इत्यादौ पञ्चम्यर्थस्य प्रयोज्यत्वस्य नञर्थेऽभावेऽन्वयः। तस्य च विधेयतारूपे अपरस्मिन् पञ्चम्यर्थे अन्वयः। तेन पृथिवीत्वज्ञाननिरूपितप्रयोज्यत्वाभाववद्विधेयतावान् वह्निरिति बोधो लभ्यते इति यदि चेत्यादिग्रन्थस्य आशयः।

***तदा*** इत्यादि। प्रयोज्यत्वस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपित-वह्नित्वावच्छिन्नविधेयतायाश्च पञ्चम्यर्थत्वे पक्षतावच्छेदकसाध्यतावच्छेदकयोः पर्वतत्ववह्नित्वयोः त्रिधाभानं वक्तव्यम्। पञ्चम्यर्थतया प्रतिज्ञाघटकपक्ष-साध्यवाचकपदार्थतावच्छेदकतया च पर्वतत्ववह्नित्वयोः भानात्। अतः द्विधाभाने गौरवं प्रसज्यते।

किञ्च प्रतिज्ञाघटकसाध्यान्वयिनी पक्षतावच्छेदकावच्छिन्नविशेष्यता-निरूपितसाध्यतावच्छेदकावच्छिन्नविधेयता वा तद्घटकपक्षान्वयिनी साध्यतावच्छेदकावच्छिन्नविधेयतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता वा पञ्चम्यर्थ इत्यत्र विनिगमनाविरहात् एकस्या एव पञ्चम्या अर्थद्वये खण्डशः लक्षणा इति गौरवम्। जन्यत्वस्य पञ्चम्यर्थत्वे तु पञ्चम्याः

*दहनादित्यादिना।* गन्धस्याज्ञापकत्वं पक्षधर्मताविरहेण, शब्दस्यातथात्वं व्याप्तेरपि विरहेणेति प्रदर्शनार्थमुभयोपादनम्। ***नञर्थान्वयानुरोधादिति।*** जनकत्वज्ञापकत्वयोः

---

जन्यत्वे लक्षणा। वह्न्यादिपदस्य वह्न्यादिज्ञाने लक्षणा। विनिगमना-विरहादिकं तु नास्तीति भावः।

***एकपदस्येति।*** पञ्चमीविभक्तिरूपपदस्येत्यर्थः। ***पदद्वयस्यैवेति।*** पञ्चमीसाध्यपदयोरेवेत्यर्थः।

***प्रसङ्गत*** इत्यादि। पूर्वं पञ्चम्याः जनकत्वं ज्ञापकत्वं वा अर्थ इति पक्षद्वयमुपन्यस्तम्। तयोः पक्षयोः नञ्समभिव्याहारस्थले अनुपपत्तिं प्रदर्श्य तौ पक्षौ निराकुर्वन् जन्यत्वं ज्ञाप्यत्वं वा पञ्चम्यर्थ इति व्यावस्थापयति–***दाहो दहनात् न जलादित्यादिनेति*** भावः।

यदि पञ्चम्याः ज्ञापकत्वमर्थः तदा तस्य निरूपकतासम्बन्धेन साध्येऽन्वयः वक्तव्यः। नञ्समभिव्याहारस्थले च निरूपकतासम्बन्धा-वच्छिन्नप्रतियोगिताकज्ञापकत्वाभावः साध्ये बोधनीयः। एवं च दाहो दहनात् न जलात् इति वाक्यात् दहननिष्ठज्ञापकतानिरूपकः दाहः जलनिष्ठज्ञापकत्वनिष्ठनिरूपकतासम्बन्धावच्छिन्नप्रतियोगिताकाभाववान् इति बोधः वक्तव्यः।

जनकत्वस्य पञ्चम्यर्थत्वे दाहपदलक्ष्ये दाहज्ञाने दहननिष्ठ-जनकतानिरूपकत्वं जलनिष्ठजनकत्वस्य निरूपकतासम्बन्धावच्छिन्नाभावश्च बोधनीयम्। तादृशबोधद्वयं वृत्तिनियामकसम्बन्धस्य अभावप्रतियोगिता-नवच्छेदकत्वात् दुर्घटम्। अतः पञ्चम्याः जन्यत्वरूपं हेतुमत्त्वं जन्यज्ञानविषयत्वरूपं ज्ञाप्यत्वं चार्थः। तत्र प्रकृत्यर्थस्य निरूपितत्व-सम्बन्धेन अन्वयः। जन्यत्वस्य आश्रयतासम्बन्धेन साध्यज्ञानेऽन्वयः। ज्ञाप्यत्वस्य च आश्रयतासम्बन्धेन साध्येऽन्वयः। नञ्समभिव्याहारस्थले आश्रयतासम्बन्धावच्छिन्नतदुभयाभावः बोध्यते। आश्रयत्वस्य वृत्तिनियामकतया प्रतियोगितावच्छेदकत्वं घटते। तथा च दहननिरूपितजन्यतावत् जलनिरूपितजन्यत्वाभाववच्च दाहज्ञानमिति जन्यत्वस्य पञ्चम्यर्थत्वपक्षे बोधः। दहननिरूपितज्ञाप्यतावान् जलनिरूपितज्ञाप्यत्वाभाववांश्च दाह इति ज्ञाप्यत्वस्य पञ्चम्यर्थत्वपक्षे बोध इति भावः।

पञ्चम्यर्थत्वे निरूपकतासम्बन्धावच्छिन्नाभावाप्रसिध्या आश्रयतासम्बन्धावच्छिन्नाभावप्रत्यय एव दाहस्पर्शादौ स्वीकार्यः। तथा च तत्र जलगन्धनिष्ठजनकत्वज्ञापकत्वयोरिव दहनरूपादिनिष्ठयोरपि तयोरभाववत्त्वेन दाहो न दहनात् जलं स्पर्शवन्न रूपादित्यपि स्यादिति भावः। न च दाहादिविशेषितजनकत्वादेरेवाभावः तत्र जलादिरूपप्रकृत्यर्थे प्रतीयत इति वाच्यम्। प्रथमान्तार्थस्य पञ्चम्यर्थविशेष्यतयैव शब्दात्प्रतीतेर्दाहादिविशेषितजनकत्वादिरूपप्रतियोगिनश्शब्दादनुपस्थितस्य नञाऽभाव-बोधनासम्भवात्। पञ्चम्यर्थस्य प्रकृत्यर्थान्यपदार्थविशेषितस्यापि नञ्समभिव्याहारस्थले

---

'जलं स्पर्शवत् रूपात् न गन्धात् नापि शब्दात्' इत्यत्र 'नापि शब्दात्' इत्यस्य प्रयोजनमाह–***गन्धस्याज्ञापकत्वमिति।*** गन्धे स्पर्शव्याप्तिसत्त्वेऽपि जलरूपपक्षवृत्तित्वविरहात् न स्पर्शज्ञापकत्वम्। शब्दस्य तु स्पर्शव्याप्तिरपि नास्ति, जलरपपक्षधर्मतापि नास्ति। अतः न स्पर्शज्ञापकत्वं शब्दस्येति विशेषसूचनाय 'नापि शब्दात्' इत्युक्तमिति भावः।

***व्याप्तेरपि*** इत्यपिशब्देन पक्षधर्मताविरहः समुच्चीयते। ***उभयोपादानमिति।*** 'न गन्धात्, 'नापि शब्दात्' इति उभयोरुपादानमित्यर्थः। ***तथा च तत्रेति।*** जलनिष्ठजनकत्वज्ञापकत्वयोः गन्धनिष्ठजनकत्व-ज्ञापकत्वयोश्च आश्रयतासम्बन्धेन अभावः यथा दाहे स्पर्शे च वर्तते, तथा दहननिष्ठयोः जनकत्वज्ञापकत्वयोः रूपनिष्ठयोः जनकत्वज्ञापकत्वयोश्च आश्रयतासम्बन्धावच्छिन्नभावः दाहे स्पर्शे च अस्तीति दाहो न दहनात्, जलं स्पर्शवत् न रूपात् इत्यपि प्रयोगः रूयात्। अतः निरूपकतासम्बन्धावच्छिन्नजनकत्वज्ञापकत्वाभावः बोधनीयः। सोऽपि वृत्त्यनियामकसबन्धस्य अभावप्रतियोगितानवच्छेदकत्वे दुर्घट इति भावः।

जनकत्वज्ञापकत्वयोः पञ्चम्यर्थत्वेऽपि नानुपपत्तिरिति शङ्कते–***न च दाहादिविशेषितेति।*** 'दाहः न जलात्' इत्यत्र पञ्चम्यर्थे जनकत्वे दाहस्य निरूपितत्वसम्बन्धेन अन्वयः। पञ्चम्यर्थस्य जनकत्वस्य नञर्थेऽभावेऽन्वयः। अभावस्य च पञ्चमीप्रकृत्यर्थे जलेऽन्वयः। एवं

भानोपगमे व्युत्पत्तिभेदाद्गौरवम्। सर्वत्रैव प्रकृत्यर्थे विभक्त्यर्थो विशेषणं तत्र निरूपकतया समभिव्याहृतपदार्थान्तरमिति चानुभवसिद्धप्रथमान्तपदार्थ-विशेष्यताभङ्गेनासम्भवदुक्तिकम्। इन्धनस्य दाहो दहनादित्यादौ तुल्ययुक्त्या दहनादेर्दाहजनकत्वादिविशेष्यत्ववदिन्धनादेरपि दाहसम्बन्धादिविशेष्यतया इन्धनं दाहसम्बन्धि दहनो दाहजनक इत्यादिसमूहालम्बनबोधस्य स्वीकारेण

---

च दाहनिरूपितजनकत्वाभाववत् जलमिति 'दाहो न जलात्' इति वाक्याद्बोधः। जनकत्वस्य आश्रयतासम्बन्धावच्छिन्नाभाव एव बोध्यत इति आश्रयत्वस्य वृत्तिनियामकतया नानुपपत्तिः।

समाधत्ते-***प्रथमान्तार्थस्येति।*** नञः असत्त्वे 'दाहो दहनात्' इत्यत्र प्रथमान्तार्थस्य दाहस्य पञ्चम्यर्थजनकत्वविशेष्यतया भानात् दाहनिरूपितजनकत्वस्य 'दाहो दहनात्' इति शब्दादनुपस्थितस्य नञा अभावो बोध्यत इति असङ्गतम्। नञः असत्त्वे येन सम्बन्धेन यस्य यत्रान्वयः नञः सत्त्वे तत्र तत्सम्बन्धावच्छिन्नतदभावान्वय इति व्युत्पत्तेः।

***प्रकृत्यर्थान्यपदार्थविशेषितस्यापीति।*** प्रकृत्यर्थापेक्षया अन्यो यः पदार्थः दाहादिः निरूपितत्वसम्बन्धेन तद्विशिष्टस्येत्यर्थः।

***व्युत्पत्तिभेदादिति।*** प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति व्युत्पत्तिभङ्गात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिभङ्गाच्च इत्यर्थः।

न च – नञः असत्त्वेऽपि 'दाहो दहनात्' इत्यत्र दाहस्य निरूपितत्वसम्बन्धेन पञ्चम्यर्थजनकत्वेऽन्वयः। जनकत्वस्य प्रकृत्यर्थे दहने आश्रयत्वसम्बन्धेन अन्वयः। तथा च दाहनिरूपितजनकताश्रयः दहन इति बोध इति–वाच्यम्।

पदार्थान्तरान्वितविभक्त्यर्थप्रकारकप्रकृत्यर्थविशेष्यकबोधाङ्गीकारे शाब्दबोधस्य प्रथमान्तार्थमुख्यविशेष्यकत्वमिति अनुभवस्य भङ्गापत्तेः इत्याशयवान् आह–***सर्वत्रैवेति।*** नञ्समभिव्याहारस्थले तदसमभिव्याहारस्थले च इत्यर्थः।

वाक्यभेदप्रसङ्गात्। यत्रान्यस्य दाहो दहनान्नैतदिन्धनस्य तत्रैतदिन्धनस्य दाहो न दहनादिति प्रयोगानुपपत्तिश्चेति। अत्र वदन्ति। जन्यतायाः पञ्चम्यर्थत्वे दाहो दहनान्न परमाणुपरिमाणादित्यादिप्रयोगानुपपत्तिः। पारिमाण्डल्यस्य कार्यसामान्येऽजनकतया परमाणुपरिमाणादिजन्यत्वाप्रसिद्धेः नञर्थे प्रतियोगितया अन्वयासम्भवात्, दाहाद्यन्वयिनि जन्यत्वे प्रकृत्यर्थस्य निरूपितत्वसम्बन्धेनाभावबोधोपगमे च वृत्त्यनियामकसम्बन्धा-

---

प्रत्ययार्थविशेषणकप्रकृत्यर्थविशेष्यकशाब्दबोधाङ्गीकारे दोषान्तरमाह- **इन्धनस्य दाह** इत्यादिना। दाहपदार्थस्य पञ्चम्यर्थजनकत्वे अन्वयवत् षष्ठ्यर्थसम्बन्धेऽपि अन्वयो वक्तव्यः। तथा च दहनः दाहनिरूपितजनकतावान् इन्धनं दाहनिरूपितसम्बन्धवत् इत्याकारकसमूहालम्बनबोध एव इन्धनस्य दाहो दहनात् इति वाक्याज्जायत इति वक्तव्यम्। तथा सति तत्र वाक्यभेदः प्रसज्यते। एकमुख्यविशेष्यकबोधजनकस्यैव एकवाक्यरूपत्वात्। अनेकमुख्यविशेष्यकबोधजनकत्वे वाक्यभेदस्य आवश्यकत्वात् इति भावः।

वाक्यभेदस्य इष्टापत्तौ तु दोषमाह-**यत्रान्यस्येति।** यत्र अन्यस्य इन्धनस्य दाहः दहनाद्भवति, न तु एतदिन्धनस्य, तत्र एतदिन्धनस्य दाहः न दहनात् इति प्रयोग इष्यते। प्रकृत्यर्थविशेष्यकबोधस्वीकारे तु 'दाहनिरूपितजनकत्वाभाववान् दहनः', 'एतदिन्धनं दाहसम्बन्धि' इति बोधो वक्तव्यः। स च बाधितविषयकः। एतदिन्धनस्य दाहसम्बन्धित्वविरहात् दहनस्य दाहनिरूपितजनकत्वाभावविरहाच्च इति भावः। जन्यत्ववत् जनकत्वमपि पञ्चम्यर्थ इति स्वीकारे नानुपपत्तिः इति वदतां मतमुपन्यस्यति- **अत्र वदन्ति** इत्यादिना।

जन्यत्वस्य पञ्चम्यर्थत्वस्वीकारेऽपि केचन दोषाः प्रसज्यन्ते। तत्परिहारार्थं परिष्कारविशेषकरणे तत्तुल्यं परिष्कारं कृत्वा जनकत्वस्यापि पञ्चम्यर्थत्वं समर्थयितुं शक्यम्। तथा हि-जन्यतायाः पञ्चम्यर्थत्वे 'दाहो दहनात् न परमाणुपरिमाणात्' इत्यादिप्रयोगानुपपत्तिः। परमाणुपरिमाणनिरूपितजन्यत्वस्य अप्रसिद्ध्या तदभावबोधनासम्भवात्। पारिमाण्डल्यभिन्नानामेव कारणत्वात् अणुपरिमाणरूपस्य पारिमाण्डल्यस्य

वच्छिन्नाभावाभ्युपगमः, लक्षणया प्रकृत्यर्थनिरूपितत्वस्य प्रकृत्यर्थस्याभावान्वयोपगमेऽपि गगनं न परमाणुपरिमाणादित्यादौ जन्यत्वान्ययोग्यत्वानुपपत्तिः, पारिमाण्डल्य-निरूपितत्वाभाववज्जन्यत्वाभाववद्गगनमित्याकारिकायाः द्विधा नञर्थावगाहिप्रतीतेरुपगमे च घटो न घटजनकादित्यपि स्यात् घटजनकाद्यनिरूपितजन्यत्वाभावस्य घटादावबाधात्, दण्डाद्यनिरूपितजन्यत्वत्वावच्छिन्नाभावस्य पटादौ बाधेन पटो न दण्डादित्यादेरनुपपत्तेश्च, गगनादेर्जन्यत्वभ्रमदशायां गगनं न पारिमाण्डल्यादित्यादि-वाक्यस्याबोधकतापत्तेः। पञ्चम्यर्थजन्यतासामान्ये लक्षणया प्रकृत्युपस्थाप्यपारिमाण्डल्य-निरूपितत्वगगनवृत्तित्वोभयत्वावच्छिन्नाभावबोधोपगमे च जनकतायाः पञ्चम्यर्थत्वेऽपि तत्सामान्ये लक्षणया प्रकृत्युपस्थाप्यपारिमाण्डल्यवृत्तित्वगगननिरूपितत्वोभयत्वा-

---

कुत्रापि कार्ये अकारणतया परमाणुपरिमाणनिरूपितजन्यत्वस्याप्रसिद्धिः। ननु पञ्चम्यर्थे जन्यत्वे प्रकृत्यर्थस्य परमाणुपरिमाणस्य निरूपितत्वसंबन्धा-वच्छिन्नप्रतियोगिताकाभावः नञा बोध्यते, अतो नानुपपत्तिरित्याशङ्क्य तथा सति वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभ्युपगमः प्रसज्यत इत्याह- ***दाहाद्यन्वयिनि जन्यत्वे*** इति।

ननु उक्तस्थले प्रकृतेः परमाणुपरिमाणपदस्य परमाणुपरिमाण-निरूपितत्वे लक्षणा। आश्रयतासम्बन्धावच्छिन्नतदभावः पञ्चम्यर्थे जन्यत्वे नञा बोध्यते। तथा च परमाणुपरिमाणनिरूपितत्वाभाववज्जन्यत्ववान् दाहः इत्याकारको बोधः 'दाहो न परमाणुपरिमाणात्' इति वाक्यात् जायते। अतो नानुपपत्तिरित्याशङ्क्य एवमपि 'गगनं न परमाणुपरिमाणात्' इत्यत्र अनुपपत्तिः। परमाणुपरिमाणनिरूपितत्वाभाववज्जन्यत्वस्य गगने बाधात् इत्याह-***लक्षणयेत्यादिना।*** लक्षणया प्रकृत्यर्थस्य प्रकृत्यर्थ-निरूपितत्वस्य अभावान्वयोपगमेऽपीति अन्वयः।

ननु 'गगनं न परमाणुपरिमाणात्' इत्यत्र नञर्थस्य द्विधा भानमभ्युपगम्य परमाणुपरिमाणनिरूपितत्वाभाववज्जन्यत्वाभाववद्गगनमिति शाब्दबोधाभ्युपगमात् नानुपपत्तिरित्याशङ्क्य तथा सत्यपि 'घटो न घटजनकात्' इति प्रयोगापत्तिः। घटजनकदण्डचक्रादिनिरूपितत्वाभाव-वत्पटादिनिष्ठजन्यत्वाभावस्य घटेऽबाधात्। एवं 'पटः न दण्डात्' इति प्रयोगस्य अनुपपत्तिः। दण्डनिरूपितत्वाभाववज्जन्यत्वाभावस्य पटे

वच्छिन्नाभावबोधोपगमेन सामञ्जस्यम्। न च तत्र लक्षणाया आवश्यकत्वेऽपि दाहो न जलादित्यादौ लक्षणां विनैवोपपत्तये जन्यत्वस्य पञ्चम्यर्थत्वमिति वाच्यम्। जलादेरपि कार्यजनकत्वभ्रमदशायां दाहो न पारिमाण्डल्यादित्यादाविवान्वय-बोधस्यानुभाविकतया तदनुरोधेन तत्रापि जन्यतायां जलादिनिरूपितत्वाभावबोधस्यावश्यो-पेयत्वादिति।

---

बाधितत्वात् इति समाधत्ते—***पारिमाण्डल्येति। घटजनकादिति।*** दण्डादित्युक्तौ दण्डानिरूपितकपालादिजन्यतायाः घटे सत्त्वात् नापत्तिः स्यात्। अतः सामान्येन घटजनकत्वेन अभिधानम्। ***गगनादेर्जन्यत्वभ्रमदशायामिति।*** नञर्थस्य द्विधाभानोपगमेऽपि 'गगनं जन्यम्' इति गगनविशेष्यक-जन्यत्वप्रकारकभ्रमदशायां 'गगनं न पारिमाण्डल्यात्' इति वाक्यात् शाब्दबोधानुपपत्तिः। पारिमाण्डल्यानिरूपितजन्यत्वाभाववद्गगनमित्याकारक-शाब्दबोधं प्रति 'गगनं जन्यम्' इति भ्रमस्य प्रतिबन्धकत्वात्। यदि तु एतद्दोषवारणाय पञ्चम्यर्थजन्यतासामान्ये प्रकृतिलक्ष्यस्य पारिमाण्डल्य-निरूपितत्वस्य गगनवृत्तित्वस्य च उभयोरभावः 'गगनं न पारिमाण्डल्यात्' इति वाक्यात् बोध्यते। गगने जन्यत्वभ्रमदशायां जन्यत्वे गगनवृत्तित्वस्य ज्ञानेऽपि पारिमाण्डल्यनिरूपितत्वस्य अज्ञानात् पारिमाण्डल्यनिरूपितत्व-गगनवृत्तित्व-उभयत्वावच्छिन्नाभावः जन्यत्वे बोद्धुं शक्यत इत्युच्यते तदा जनकतायाः पञ्चम्यर्थत्वपक्षेऽपि पञ्चम्यर्थ-जनकतासामान्ये पारिमाण्डल्यवृत्तित्वगगननिरूपितत्व-उभयत्वावच्छिन्नाभावबोधः 'गगनं न पारिमाण्डल्यात्' इति वाक्याज्जायते। अतः न काप्यनुपपत्तिरिति भावः।

न च-तादृशस्थले लक्षणाया आवश्यकत्वेऽपि 'दाहो न जलात्' इत्यादौ सकृत् नञर्थबोधस्थले लक्षणां विनैव उपपत्तये जन्यत्वस्य पञ्चम्यर्थत्वमावश्यकम्। जनकत्वस्य पञ्चम्यर्थत्वे तु जलपदस्य जलवृत्तित्वे दाहनिरूपितत्वे च लक्षणां स्वीकृत्य दाहनिरूपितत्व-जलवृत्तित्व-उभयाभाववत् जनकत्वमिति बोधो वक्तव्यः। जन्यत्वस्य पञ्चम्यर्थत्वे तु लक्षणां विनैव जलनिरूपितजन्यत्वाभाववान् दाह

अत्रेदं तत्त्वम्। शशविषाणं नास्तीति वाक्यवत् दाहो न पारिमाण्डल्यादित्यादिवाक्यमप्रमाणमेव। तद्वाक्यस्य प्रामाण्यानुरोधेन लक्षणया परिमाण्डल्यादिनिरूपितत्वाभावबोधस्य क्वचिदभ्युपगमेऽपि दाहो न जलादित्यादि-वाक्यतो लक्षणाज्ञानशून्यकालेऽप्यन्वयबोधस्यानुभाविकतया जन्यत्वाभावबोधकतापि तादृशवाक्यस्योपगन्तव्येति जन्यत्वं पञ्चम्यर्थ इति। **जन्यज्ञानविषयत्वेति।**

---

इति बोधस्य उपपत्तिः इति-वाच्यम्। जलं कार्याजनकमिति भ्रमदशायां जलनिरूपतं जन्यत्वमिति बोधस्य असम्भवात् जलनिरूपित-जन्यत्वाभावबोधः 'दाहो न जलात्' इति वाक्यात् न सम्भवति। अतः जन्यत्वस्य पञ्चम्यर्थत्वपक्षे जलपदस्य जलनिरूपितत्वे लक्षणां स्वीकृत्य जन्यतायां जलनिरूपितत्वाभावबोध एव भवतीति वक्तव्यम्। तथा च लक्षणां विना न उपपत्तिरिति ***न च तत्रेत्यादि*** ग्रन्थस्याशयः।

***न पारिमाण्डल्यादित्यादाविवेति।*** पारिमाण्डल्यं कार्याजनकमिति प्रमादशायां जन्यत्वे पारिमाण्डल्यनिरूपितत्वावगाहिबोधः यथा न सम्भवति तथा जलं कार्याजनकमिति भ्रमदशायां जन्यत्वे जलनिरूपितत्वावगाही बोधः न सम्भवति। तद्वत्ताबुद्धौ भ्रमप्रमासाधारणस्य तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वादिति भावः।

एतावता जन्यत्वस्य पञ्चम्यर्थत्ववत् जनकत्वस्यापि पञ्चम्यर्थत्वे न काप्यनुपपत्तिरिति मतान्तरमुपन्यस्तम्। इदानीं जन्यत्वस्यैव पञ्चम्यर्थत्वं युक्तमिति स्वमतमाह- ***अत्रेदं तत्त्वमिति।*** 'शशविषाणं नास्ति' इति वाक्यं यथा न प्रमाणं तथा 'दाहो न पारिमाण्डल्यात्' इति वाक्यमपि न प्रमाणम्। अतः पारिमाण्डल्यनिरूपितजन्यत्वाप्रसिद्ध्या कथं जन्यत्वस्य पञ्चम्यर्थत्वमिति शङ्कायाः नावकाशः। यदि तु तस्य वाक्यस्य प्रामाण्यमेवेति आग्रहः तदा तद्वाक्ये परं पारिमाण्डल्यपदस्य पारिमाण्डल्यनिरूपितत्वे लक्षणां स्वीकृत्य जन्यत्वे तदभावः नञा बोध्यत इति स्वीक्रियते। तावता यत्र प्रकृत्यर्थनिरूपितं जन्यत्वं प्रसिद्धं यथा दाहो न जलात् इत्यादौ तत्र जलपदस्य जलनिरूपितत्वे लक्षणाज्ञानशून्यकालेऽपि शाब्दबोधस्य अनुभवसिद्धतया जलनिरूपित-

जन्यत्वान्वयिप्रकृत्यर्थज्ञानं भ्रमभिन्नं ग्राह्यम्। अतो व्याप्तिपक्षधर्मतावगाहिभ्रमरूप-ह्रदत्वादिज्ञानस्य पर्वतादौ वह्न्याद्यनुमापकत्वेऽपि पर्वतो वह्निमान् ह्रदत्वादित्यादिप्रयोगस्यानापत्तिः। न वा पर्वतो वह्निमान् धूमात् न ह्रदत्वात्

---

जन्यत्वाभावबोधकत्वमपि तादृशवाक्यस्य अङ्गीकरणीयम्। सर्वथा जन्यत्वं पञ्चम्यर्थः।

जन्यज्ञानविषयत्वं ज्ञापकहेतुवाचकपदोत्तरपञ्चम्याः अर्थः। जन्यत्वं कारकहेतुवाचकपदोत्तरपञ्चम्या अर्थ इति विवेकः। तत्र 'पर्वतो वह्निमान् धूमात्' इत्यादौ लिङ्गं न करणं, किन्तु लिङ्गज्ञानमेव करणमिति मते ज्ञापकहेतुवाचकस्य धूमपदस्य धूमज्ञाने लक्षणा। तस्य च निरूपितत्वसम्बन्धेन पञ्चम्यर्थजन्यज्ञानविषयत्वैकदेशजन्यत्वेऽन्वयः। पञ्चम्यर्थस्य च आश्रयतासम्बन्धेन साध्येऽन्वयः। तथा च धूमज्ञाननिरूपितजन्यत्वाश्रयज्ञानविषयत्वाश्रयवह्निमान् पर्वत इति पर्वतो वह्निमान् धूमात् इति वाक्यजन्यो बोधः। तत्र पञ्चमीप्रकृतिलक्ष्यार्थभूतं ज्ञानं भ्रमभिन्नं ग्राह्यम्। अन्यथा 'पर्वतः वह्निव्याप्यह्रदत्ववान्' इत्याकारकं यत् ह्रदत्वविषयकं व्याप्त्यंशे पक्षधर्मतांशे च भ्रमात्मकं ज्ञानं, ततः पर्वतो वह्निमान् इत्यनुमितेर्जायमानतया ह्रदत्वज्ञानजन्यानुमितिरूप-ज्ञानविषयवह्निमत्त्वस्य पर्वतेऽबाधात् 'पर्वतो वह्निमान् ह्रदत्वात्' इति वाक्यस्य प्रामाण्यापत्तिः। ज्ञाने भ्रमभिन्नत्वनिवेशे तु ह्रदत्वविषयकभ्रमभिन्न-ज्ञानजन्यत्वमनुमितेर्नास्ति इति न दोषः। 'पर्वतो वह्निमान्' इति अनुमितिजनकस्य ह्रदत्वज्ञानस्य व्याप्तिपक्षधर्मतांशे भ्रमत्वनियमात्।

एवं भ्रमभिन्नत्वानिवेशे 'पर्वतो वह्निमान् धूमात्, न ह्रदत्वात्' इति वाक्यस्य प्रामाण्यानुपपत्तिः। ह्रदत्वविषयकभ्रमात्मकज्ञान-जन्यज्ञानविषयत्वस्य वह्नौ सत्त्वेन तदभावरूपस्य नञर्थस्य बाधात्। तदाह–***जन्यत्वान्वयि*** इत्यादिना। पञ्चम्यर्थे जन्यत्वे अन्वयि यत् प्रकृतिलक्ष्यार्थभूतं ज्ञानं तत् भ्रमभिन्नं ग्राह्यमित्यर्थः।

***यद्यपीति।*** प्रकृत्यर्थे ज्ञाने भ्रमसामान्यभिन्नत्वं निवेश्यते वा, यत्किञ्चिद्विषयकभ्रमभिन्नत्वं निवेश्यते वा। द्वितीयपक्षे भ्रमात्मकस्य

इत्यादिप्रयोगानुपपत्तिः। यद्यपि यत्किञ्चिद्विषयकभ्रमान्यत्वं भ्रमसाधारणं भ्रमसामान्यान्यत्वं च तदभाववति तत्प्रकारकत्वरूपभ्रमत्वस्य तत्तत्प्रकारकसम्बन्धविशेषघटितत्वे-नाननुगततया जगद्गतयावद्वस्तुभ्रमाणां तत्तद्वस्तुभ्रमत्वावच्छिन्नभेदकूटरूपमिति दुर्ज्ञेयम्। तथापि प्रकृतसाध्यहेतुपक्षकपरामर्शे प्रकारीभूता ये ये तत्तत्प्रकारकभ्रमभिन्नत्वमेव विशेषणं देयम्। यद्यपि धूमादिमत्यपि पर्वतादौ समवायादिसम्बन्धावच्छिन्न-धूमाद्यभावसत्त्वात् पर्वतादौ धूमादिप्रमायास्संग्रहाय यत्सम्वन्धेन हेतुप्रकारकं ज्ञानं यत्र हेतुवाचकपदेन विवक्षितं तत्र तत्सम्बन्धावगाहितत्प्रकारकभ्रमान्यत्वं प्रतीयत इत्युपेयम्। तथा च स्वरूपादिसम्बन्धेन प्रमेयत्वादेः यत्र हेतुत्वं तत्सम्बन्धेन तद्भ्रमाप्रसिद्ध्या तदन्यत्वं दुर्ग्रहम्। तथापि तत्र तादृशभ्रमान्यत्वप्रतीतिरेव न

---

ह्रदत्वज्ञानस्य व्याप्तिपक्षधर्मताविषयकभ्रमरूपत्वेऽपि तदन्ययत्किञ्चिद्विषयक-भ्रमभिन्नत्वसद्भावात् 'पर्वतो वह्निमान् ह्रदत्वात्' इति प्रयोगापत्तिः। भ्रमसामान्यभिन्नत्वमिति आद्यपक्षे तदभाववति तत्प्रकारकत्वरूपभ्रमत्वस्य प्रकारभेदेन सम्बन्धभेदेन च भिन्नतया जगति यावन्ति वस्तूनि सन्ति, तत्तद्वस्तुविषयकभ्रमत्वावच्छिन्नभेदकूटरूपं भ्रमसामान्यभिन्नत्वमिति वक्तव्यम्। तच्च असर्वज्ञदुर्ज्ञेयमिति भावः।

***तथापीति।*** प्रकृतसाध्यक-प्रकृतहेतुक-प्रकृतपक्षकपरामर्शे ये ये प्रकारीभूताः तत्तत्प्रकारकभ्रमत्वावच्छिन्नभेदकूटवत्त्वमेव पञ्चमीप्रकृत्यर्थ-भूतज्ञाने विशेषणं देयम्। अतो न असर्वज्ञदुर्ज्ञेयता। व्याप्तिपक्षधर्मता-वगाहिभ्रमरूपह्रदत्वज्ञानस्य परामर्शप्रकारीभूतव्याप्तिपक्षधर्मत्वप्रकारकभ्रमत्वा-वच्छिन्नभिन्नत्वं नास्तीति न पूर्वोक्तदोष इति भावः।

नन्वेवमपि 'पर्वतो वह्निमान् धूमात्' इत्यादौ धूमपदलक्ष्यार्थस्य धूमज्ञानस्य भ्रमभिन्नत्वं दुर्घटम्। परामर्शे प्रकारीभूतः यः धूमः तद्विषयकभ्रमरूपत्वात् धूमप्रमायाः। धूमाभाववति धूमप्रकारकज्ञानमेव धूमभ्रमः। पर्वते संयोगसम्बन्धेन धूमप्रकारकप्रमात्मकपरामर्शोऽपि समवायसम्बन्धेन धूमाभाववति पर्वते संयोगेन धूमप्रकारक इति धूमभ्रमरूपः। अतः धूमप्रकारकभ्रमभिन्नत्वं कथं धूमज्ञानस्य इत्याशङ्कते-***यद्यपि धूमादिमत्यपीति।***

***यत्सम्बन्धेनेति।*** धूमप्रमायाः धूमभ्रमभिन्नत्वोपपादनाय पक्षे येन

स्वीक्रियते अतो न दोषः। वस्तुतस्तु स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्वस्वावच्छिन्नत्त्वैतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारता-

---

सम्बन्धेन हेतुप्रकारकं ज्ञानं हेतुवाचकपदेन विवक्षितं तत्सम्बन्धा-वच्छिन्न-तदभाववद्विशेष्यक-तत्सम्बन्धावच्छिन्न-तत्प्रकारताशालिभ्रमान्यत्वं हेतुज्ञाने विशेषणं देयम्। तथा च संयोगसम्बन्धेन धूमप्रकारकज्ञानमेव पर्वते वह्न्यनुमितिजनकम्। तच्च संयोगसम्बन्धावच्छिन्नधूमाभाव-वद्विशेष्यकतत्सम्बन्धावच्छिन्नधूमप्रकारताशालिभ्रमरूपं न भवतीति धूमप्रकारकभ्रमभिन्नत्वमक्षतमेव। परन्तु एवं निवेशेऽपि यत्र प्रमेयत्वं स्वरूपसम्बन्धेन हेतुः यथा 'इदं वाच्यं प्रमेयत्वात्' इति, तत्र स्वरूपसम्बन्धेन प्रमेयत्वप्रकारकं पक्षधर्मताज्ञानमेव अनुमितिहेतुः। तस्य च स्वरूपसम्बन्धावगाहिप्रमेयत्वप्रकारकभ्रमान्यत्वं ज्ञातुमशक्यम्। स्वरूपसम्बन्धेन प्रमेयत्वप्रकारकभ्रमस्य अप्रसिद्धेः। स्वरूपसम्बन्धावच्छिन्न-प्रमेयत्वाभावस्य अप्रसिद्ध्या तादृशाभाववति प्रमेयत्वप्रकारकभ्रमोऽप्रसिद्ध इत्याशङ्का।

समाधत्ते–***तथापीति।*** स्वरूपसम्बन्धेन प्रमेयत्वहेतुकस्थले स्वरूपसम्बन्धेन प्रमेयत्वप्रकारकभ्रमान्यत्वरूपं विशेषणं प्रकृत्यर्थज्ञाने न दीयते। अतस्तत्र प्रमेयत्वभ्रमान्यत्वानवगाही शाब्दबोधः प्रतिज्ञाहेतुभ्यां जायते। अतो न दोष इति भावः। यो भ्रमः अप्रसिद्धः तदन्यत्वमात्रं न प्रतीयते। यस्तु प्रसिद्धः तदन्यत्वं तु प्रतीयत एव इति सूचनाय ***तादृशेत्युक्तम्।***

क्वचित् भ्रमान्यत्वं भासते, क्वचित् न भासत इति अर्धरजतीयं न युक्तमित्यनुशयादाह–**वस्तुतस्तु** इति। यद्वा अत्र भ्रमत्वं न तदभाववद्विशेष्यकतत्प्रकारकज्ञानत्वम्। तत्पदार्थाननुगमात्। नापि प्रमासामान्यभिन्नत्वम्। प्रमात्वाननुगमात्। तत्तद्भ्रमभेदकूटस्य अननुभवात् वक्ष्यमाणदोषाच्च आह– **वस्तुतस्तु** इति। सम्बन्धविशिष्टप्रकारताभिन्न-प्रकारताशालित्वमनुगतं भ्रमत्वम्। तादृशानुगतभ्रमभिन्नत्वमनुगतभ्रमत्वाभावो वा पञ्चमीप्रकृत्यर्थे ज्ञाने विशेषणम्। प्रकारतायां सम्बन्धविशिष्टत्वं

इत्यादिप्रयोगानुपपत्तिः। यद्यपि यत्किञ्चिद्विषयकभ्रमान्यत्वं भ्रमसाधारणं भ्रमसामान्यान्यत्वं च तदभाववति तत्प्रकारकत्वरूपभ्रमत्वस्य तत्तत्प्रकारकसम्बन्धविशेषघटितत्वे- नाननुगततया जगद्गतयावद्वस्तुभ्रमाणां तत्तद्वस्तुभ्रमत्वावच्छिन्नभेदकूटरूपमिति दुर्ज्ञेयम्। तथापि प्रकृतसाध्यहेतुपक्षकपरामर्शे प्रकारीभूता ये ये तत्तत्प्रकारकभ्रमभिन्नत्वमेव विशेषणं देयम्। यद्यपि धूमादिमत्यपि पर्वतादौ समवायादिसम्बन्धावच्छिन्न- धूमाद्यभावसत्त्वात् पर्वतादौ धूमादिप्रमायास्संग्रहाय यत्सम्बन्धेन हेतुप्रकारकं ज्ञानं यत्र हेतुवाचकपदेन विवक्षितं तत्र तत्सम्बन्धावगाहितत्प्रकारकभ्रमान्यत्वं प्रतीयत इत्युपेयम्। तथा च स्वरूपादिसम्बन्धेन प्रमेयत्वादेः यत्र हेतुत्वं तत्सम्बन्धेन तद्भ्रमाप्रसिद्ध्या तदन्यत्वं दुर्ग्रहम्। तथापि तत्र तादृशभ्रमान्यत्वप्रतीतिरेव न

---

ह्रदत्वज्ञानस्य व्याप्तिपक्षधर्मताविषयकभ्रमरूपत्वेऽपि तदन्ययत्किञ्चिद्विषयक- भ्रमभिन्नत्वसद्भावात् 'पर्वतो वह्निमान् ह्रदत्वात्' इति प्रयोगापत्तिः। भ्रमसामान्यभिन्नत्वमिति आद्यपक्षे तदभाववति तत्प्रकारकत्वरूपभ्रमत्वस्य प्रकारभेदेन सम्बन्धभेदेन च भिन्नतया जगति यावन्ति वस्तूनि सन्ति, तत्तद्वस्तुविषयकभ्रमत्वावच्छिन्नभेदकूटरूपं भ्रमसामान्यभिन्नत्वमिति वक्तव्यम्। तच्च असर्वज्ञदुर्ज्ञेयमिति भावः।

***तथापीति।*** प्रकृतसाध्यक-प्रकृतहेतुक-प्रकृतपक्षकपरामर्शे ये ये प्रकारीभूताः तत्तत्प्रकारकभ्रमत्वावच्छिन्नभेदकूटवत्त्वमेव पञ्चमीप्रकृत्यर्थ- भूतज्ञाने विशेषणं देयम्। अतो न असर्वज्ञदुर्ज्ञेयता। व्याप्तिपक्षधर्मता- वगाहिभ्रमरूपह्रदत्वज्ञानस्य परामर्शप्रकारीभूतव्याप्तिपक्षधर्मत्वप्रकारकभ्रमत्वा- वच्छिन्नभिन्नत्वं नास्तीति न पूर्वोक्तदोष इति भावः।

नन्वेवमपि 'पर्वतो वह्निमान् धूमात्' इत्यादौ धूमपदलक्ष्यार्थस्य धूमज्ञानस्य भ्रमभिन्नत्वं दुर्घटम्। परामर्शे प्रकारीभूतः यः धूमः तद्विषयकभ्रमरूपत्वात् धूमप्रमायाः। धूमाभाववति धूमप्रकारकज्ञानमेव धूमभ्रमः। पर्वते संयोगसम्बन्धेन धूमप्रकारकप्रमात्मकपरामर्शोऽपि समवायसम्बन्धेन धूमाभाववति पर्वते संयोगेन धूमप्रकारक इति धूमभ्रमरूपः। अतः धूमप्रकारकभ्रमभिन्नत्वं कथं धूमज्ञानस्य इत्याशङ्कते- ***यद्यपि धूमादिमत्यपीति।***

***यत्सम्बन्धेनेति।*** धूमप्रमायाः धूमभ्रमभिन्नत्वोपपादनाय पक्षे येन

स्वीक्रियते अतो न दोषः। वस्तुतस्तु स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्वस्वावच्छिन्नत्त्वैतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारता-

---

सम्बन्धेन हेतुप्रकारकं ज्ञानं हेतुवाचकपदेन विवक्षितं तत्सम्बन्धा-वच्छिन्न-तदभाववद्विशेष्यक-तत्सम्बन्धावच्छिन्न-तत्प्रकारताशालिभ्रमान्यत्वं हेतुज्ञाने विशेषणं देयम्। तथा च संयोगसम्बन्धेन धूमप्रकारकज्ञानमेव पर्वते वह्न्यनुमितिजनकम्। तच्च संयोगसम्बन्धावच्छिन्नधूमाभाव-वद्विशेष्यकतत्सम्बन्धावच्छिन्नधूमप्रकारताशालिभ्रमरूपं न भवतीति धूमप्रकारकभ्रमभिन्नत्वमक्षतमेव। परन्तु एवं निवेशेऽपि यत्र प्रमेयत्वं स्वरूपसम्बन्धेन हेतुः यथा 'इदं वाच्यं प्रमेयत्वात्' इति, तत्र स्वरूपसम्बन्धेन प्रमेयत्वप्रकारकं पक्षधर्मताज्ञानमेव अनुमितिहेतुः। तस्य च स्वरूपसम्बन्धावगाहिप्रमेयत्वप्रकारकभ्रमान्यत्वं ज्ञातुमशक्यम्। स्वरूपसम्बन्धेन प्रमेयत्वप्रकारकभ्रमस्य अप्रसिद्धेः। स्वरूपसम्बन्धावच्छिन्न-प्रमेयत्वाभावस्य अप्रसिद्ध्या तादृशाभाववति प्रमेयत्वप्रकारकभ्रमोऽप्रसिद्ध इत्याशङ्का।

समाधत्ते-**तथापीति**। स्वरूपसम्बन्धेन प्रमेयत्वहेतुकस्थले स्वरूपसम्बन्धेन प्रमेयत्वप्रकारकभ्रमान्यत्वरूपं विशेषणं प्रकृत्यर्थज्ञाने न दीयते। अतस्तत्र प्रमेयत्वभ्रमान्यत्वानवगाही शाब्दबोधः प्रतिज्ञाहेतुभ्यां जायते। अतो न दोष इति भावः। यो भ्रमः अप्रसिद्धः तदन्यत्वमात्रं न प्रतीयते। यस्तु प्रसिद्धः तदन्यत्वं तु प्रतीयत एव इति सूचनाय ***तादृशेत्युक्तम्।***

क्वचित् भ्रमान्यत्वं भासते, क्वचित् न भासत इति अर्धरजतीयं न युक्तमित्यनुशयादाह-**वस्तुतस्तु** इति। यद्वा अत्र भ्रमत्वं न तदभाववद्विशेष्यकतत्प्रकारकज्ञानत्वम्। तत्पदार्थाननुगमात्। नापि प्रमासामान्यभिन्नत्वम्। प्रमात्वाननुगमात्। तत्तद्भ्रमभेदकूटस्य अननुभवात् वक्ष्यमाणदोषाच्च आह- **वस्तुतस्तु** इति। सम्बन्धविशिष्टप्रकारताभिन्न-प्रकारताशालित्वमनुगतं भ्रमत्वम्। तादृशानुगतभ्रमभिन्नत्वमनुगतभ्रमत्वाभावो वा पञ्चमीप्रकृत्यर्थे ज्ञाने विशेषणम्। प्रकारतायां सम्बन्धविशिष्टत्वं

शालित्वमेवानुगतभ्रमत्वं सुवचम्। अतो भ्रमविषयतयैव प्रमेयत्वादि वाच्यत्वादि-ज्ञापकमिति भ्रमदशायां वाच्यं प्रमेयत्वादित्यादिप्रयोगस्य तादृशप्रयोगाधीनबोधस्य वारणाय प्रमेयत्वादिज्ञानस्यापि तद्भ्रमान्यत्वेनैव पञ्चमीप्रकृत्यर्थता वाच्या। सा चाप्रसिद्धया न सम्भवतीति दूषणमनवकाशम्, निगमनस्थपञ्चम्याः लाक्षणिकत्व-मुपसंहरति-

---

च स्वानुयोगिनिष्ठविशेष्यतानिरूपित्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्व-एतत्त्रितयसम्बन्धेन। शुक्तौ 'इदं रजतम्' इति भ्रमे रजतत्वनिष्ठा या प्रकारता सा उक्तत्रितयसम्बन्धेन सम्बन्धविशिष्टा न भवति। सम्बन्धपदेन समवायस्य ग्रहणे तत्र रजतत्वप्रतियोगिकत्वसत्त्वेऽपि शुक्त्यनुयोगिकत्वं नास्ति। शुक्तौ समवायसम्बन्धेन रजतत्वसत्त्वे हि समवाये शुक्त्यनुयोगिकत्वं रजतत्वप्रतियोगिकत्वं चेति उभयं स्यात्। तथा च रजतत्वनिष्ठप्रकारतायां समवायप्रतियोगिरजतत्वनिष्ठत्वसत्त्वेऽपि समवायावच्छिन्नत्वसत्त्वेऽपि च समवायानुयोगिशुक्तिनिष्ठविशेष्यतानिरूपितत्वं नास्तीति उक्तत्रितयसम्बन्धेन सम्बन्धविशिष्टत्वविरहात् सम्बन्धविशिष्टा-न्यप्रकारताशालित्वं शुक्तिरजतभ्रमेऽस्तीति समन्वयः।

सम्बन्धविशिष्टा प्रकारता च प्रमात्मकज्ञाने प्रसिद्धा। यथा रजते समवायसम्बन्धेन रजतत्वप्रकारके 'इदं रजतम्' इति ज्ञाने रजतत्वनिष्ठप्रकारतायाः समवायानुयोगिशुक्तिनिष्ठविशेष्यतानिरूपितत्वं समवायप्रतियोगिरजतत्वनिष्ठत्वं समवायावच्छिन्नत्वं च अस्तीति एतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टा प्रमीयप्रकारता। तदन्यप्रकारताशालित्वं भ्रमे इति भावः।

वह्निप्रतियोगिकह्रदानुयोगिकसंयोगाभ्यां ह्रदादिविशेष्यकवह्न्यादि-प्रकारकभ्रमद्वयस्य समवायेन पर्वतादिविशेष्यकवह्न्यादिप्रकारकभ्रमस्य च सङ्ग्रहार्थं क्रमेण सम्बन्धत्रयोपादानम्। अन्यथा प्रकारताया आद्ये द्वितीयतृतीयसम्बन्धाभ्यां द्वितीये प्रथमतृतीयसम्बन्धाभ्यां तृतीये प्रथमद्वितीयसम्बन्धाभ्यां संयोगादिमत्तया असङ्ग्रहप्रसङ्गादिति कृष्णंभट्टः।

***अतो भ्रमविषयतयैवेति।*** वाच्यत्वादिज्ञानजनकभ्रमात्मकज्ञानविषयः प्रमेयत्वमिति भ्रमदशायामित्यर्थः। ***तद्भ्रमान्यत्वेनेति।*** प्रमेयत्वभ्रमान्यत्वेनेत्यर्थः।

**एवं च हेतुमत्त्वे शक्तावपि ज्ञाप्यत्वे लक्षणैव। नच धूमादालोकवान्पर्वतो वह्निमान् धूमात्, धूमाद्वह्निमत्सधर्मा पर्वतो वह्निमान् धूमादित्यादौ प्रतिज्ञायाम्, पर्वतो धूमाद्वह्निमानित्यादौ च तत्रत्यनिगमने चातिव्याप्तिः।**

---

***एवञ्चेति।*** एवञ्च पञ्चम्या जन्यज्ञाप्यभावार्थकत्वसिद्धौ च **हेतुमत्त्वे।** जन्यत्वे। ***ज्ञाप्यत्वे लक्षणैवेति।*** जन्यत्वापेक्षया तस्य शरीरगौरवादिति भावः। ***न चेति।*** धूमादालोकवान् पर्वतो वह्निमानित्यादिप्रतिज्ञाघटितन्याये आलोकादेर्हेतुत्वे प्रकृतहेत्वन्वितार्थकपञ्चमीनिवेशनेनाव्याप्तिवारणसम्भवाद्धूमादिति हेत्वभिधानम्। अत्र

---

सा च न सम्भवतीति योजना। ***अप्रसिद्धचेति।*** भ्रमात्मकप्रमेयत्व-ज्ञानाप्रसिद्धचेत्यर्थः। ***अनवकाशमिति।*** प्रमेयत्वभ्रमाप्रसिद्धावपि वाच्यत्वादि-ज्ञानजनकप्रमेयत्वज्ञानं भ्रम इति भ्रमत्वनिश्चयस्य विरोधिनिश्चयत्वेन विरोधितया तत्सत्त्वे भ्रमसामान्यभिन्नत्वविषयकशाब्दबोधासम्भवादिति भावः।

***जन्यज्ञाप्यभावार्थकत्वसिद्धाविति।*** जन्यज्ञाप्यत्वार्थकत्वसिद्धावित्यर्थः। ***जन्यत्वापेक्षया तस्य*** इति। जन्यत्वापेक्षया जन्यज्ञानविषयत्वरूपस्य ज्ञाप्यत्वस्य गुरुशरीरत्वात् इत्यर्थः।

एतावता पञ्चम्यन्तलाक्षणिकपदवत्त्वे सति न्यायावयवत्त्वं हेतुवाक्यस्य लक्षणमिति फलितम्। तत्र शङ्कते दीधितौ-**न च धूमादालोकवान्** इति। धूमादालोकवान् पर्वतो वह्निमान् धूमात् इत्यादि न्यायावयवभूतायां धूमादालोकवान् पर्वतो वह्निमान् इति प्रतिज्ञायां पञ्चम्यन्तं यत् लाक्षणिकं धूमपदं तद्वत्त्वसत्त्वात् अतिव्याप्तिः। पञ्चम्यां प्रकृतसाध्यान्वितस्वार्थबोधकत्वरूपविशेषणे दत्ते प्रतिज्ञाघटकधूम-पदोत्तरपञ्चम्याः आलोकान्वितस्वार्थबोधकत्वेऽपि प्रकृतसाध्यवह्न्यन्वित-स्वार्थबोधकत्वविरहेण उक्तातिव्याप्तिवारणेऽपि 'धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान्' इति प्रतिज्ञायामतिव्याप्तिः। तद्घटकधूमपदोत्तरपञ्चम्याः वह्निरूपसाध्यान्वितस्वार्थबोधकत्वात्।

यदि तु प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितं यत् प्रकृतसाध्यं तदन्वितस्वार्थबोधकपञ्चम्यन्तं यत् लाक्षणिकं पदं तद्वत्त्वे सति

**प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्त-लाक्षणिकपदवदवयवत्वस्य** विवक्षितत्वात्।

---

पञ्चम्याः प्रकृतसाध्यान्वितस्वार्थबोधकत्वविशेषणमात्रेणातिव्याप्तिवारणसम्भवात्। तादृशसाध्ये विशेषणीयोपस्थापितान्तविशेषणव्यावृत्तये स्थलान्तरेऽतिव्याप्तिं दर्शयति- ***धूमाद्वह्निमत*** इति। अत्र वह्निमत्त्वेन पक्षस्यापि भानात् विवक्षणीयविशेषणे पक्षतावच्छेदकपर्यन्तनिवेशस्यात्रैव व्यावृत्तिः, साध्यतावच्छेदकावच्छिन्नत्वांशनिवेशनाय स्थलान्तरेऽतिव्याप्तिं दर्शयति- ***पर्वतो धूमाद्वह्निमानिति। तत्रत्यनिगमने-*** तस्माद्धूमाद्वह्निमानित्याकारके।

---

अवयवत्वं लक्षणमिति विवक्ष्यते, तदा उक्तप्रतिज्ञाघटकपक्षवाचक-शब्दान्तर्गतवह्निपदस्य साधर्म्यान्वितस्वार्थबोधकस्य प्रकृतपक्षान्वितस्वार्थ-बोधकत्वं नास्तीति प्रकृतसाध्यस्य प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितत्व-विरहात् नातिव्याप्तिरित्युच्यते, तदा पर्वतो धूमाद्वह्निमान् इत्यादि-न्यायान्तर्गतनिगमने 'तस्मात् धूमाद्वह्निमान्' इत्याकारकेऽतिव्याप्तिः। मतुबर्थ-पक्षान्वितस्वार्थबोधकवह्निपदोपस्थापितं यत् प्रकृतसाध्यं वह्निरूपं तदन्वितस्वार्थबोधिका या 'धूमात्' इति पञ्चमी तदन्तं यत् धूमज्ञानलाक्षणिकं धूमपदं तद्वत्त्वे सति न्यायावयवत्वस्य उक्तनिगमने सत्त्वात्। तद्वारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नान्वितस्वार्थबोधकपदोप-स्थापितेति विवक्षणीयम्। उक्तनिगमने पर्वतत्वावच्छिन्नवाचकपदाभावात् पर्वतत्वावच्छिन्नान्वितस्वार्थबोधकत्वं वह्निपदस्य नास्तीति नातिव्याप्तिरिति दीधितिग्रन्थस्य यथाश्रुतार्थः।

'धूमात् आलोकवान्', 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञाघटितन्याये आलोकस्य हेतुत्वे पञ्चम्यां प्रकृतहेत्वन्वितार्थकत्वविशेषणदानेनापि प्रतिज्ञायामतिव्याप्तिः वारयितुं शक्यते। धूमपदोत्तरपञ्चम्या आलोकरूपहेत्वन्वितार्थकत्वविरहात्। अतः 'धूमात्' इति हेतुवाक्याभिधानम्। ***तादृशसाध्य*** इत्यादि। प्रकृतसाध्ये दातव्यं यत् प्रकृतपक्षान्वितस्वार्थबोधक-पदोपस्थापितेति विशेषणं, तस्य व्यावृत्तिप्रदर्शनाय इत्यर्थः।

***अत्र वह्निमत्त्वेनेति।*** प्रकृतपक्षान्वितस्वार्थबोधकेत्युक्तावपि 'धूमाद्वह्निमत्सधर्मा पर्वतो वह्निमान्' इति प्रतिज्ञायां सम्बन्धित्वरूपेण

अत्र च पञ्चम्यर्थविशिष्टवह्नित्वमेव साध्यतावच्छेदकमिति तदवच्छिन्ने पञ्चम्यर्थानन्वयात् साध्यतावच्छेदकविशिष्टान्वितस्वार्थबोधकत्वनिवेशने नातिव्याप्तिः। धूमाद्वह्निमतस्सधर्मेत्यादौ प्रकृतपक्षतावच्छेदकावच्छिन्ने यस्य साध्यस्य द्वितीयवह्नि-पदजन्योपस्थितिवशादन्वयः प्रथमवह्निपदोपस्थापिते तत्रैव प्रतिज्ञाघटकपञ्चम्यर्थ-स्यान्वयात्पक्षान्वितसाध्यान्वितस्वार्थबोधकत्वविशेषणेन तद्वारणासम्भवात्साध्ये

---

पर्वतस्यापि मतुबर्थतया मतुबर्थप्रकृतपक्षान्वितस्वार्थबोधकत्वं पञ्चम्यामस्तीति तदन्तधूमपदवत्त्वसत्त्वात् अतिव्याप्तिर्दुर्वारा। तद्वारणाय प्रकृतपक्षतावच्छेदका-वच्छिन्नान्वितत्वं विवक्षणीयमिति भावः।

**अत्रैव व्यावृत्तिरिति।** 'एव'कारेण 'पर्वतो धूमाद्वह्निमान्' इत्यादिवक्ष्यमाणस्थलव्यवच्छेदः। ***साध्यतावच्छेदकावच्छिन्नत्वांशनिवेशनायेति।*** पक्षतावच्छेदकावच्छिन्नान्वितस्वार्थबोधकेत्यादिविवक्षणेऽपि 'पर्वतो धूमाद्वह्निमान्' इत्यादिन्यायान्तर्गते 'तस्माद्धूमवान् वह्निमान्' इत्याकारके निगमने 'अयं' पदानुषङ्गपक्षे प्रकृतपक्षतावच्छेदकपर्वतत्वावच्छिन्नान्वितस्वार्थबोधक-पदोपस्थापितं यत् प्रकृतसाध्यं वह्निरूपं तदन्वितस्वार्थबोधक-पञ्चम्यन्तधूमपदवत्त्वसत्त्वात् अतिव्याप्तिः। तद्वारणाय प्रकृतसाध्यपदेन प्रकृतसाध्यतावच्छेदकावच्छिन्नं विवक्षणीयम्। उक्तप्रतिज्ञाघटकधूमपदोत्तर-पञ्चम्याः वह्नित्वावच्छिन्नान्वितस्वार्थबोधकत्वेऽपि प्रकृतसाध्यतावच्छेदक यत् धूमज्ञानज्ञाप्यवह्नित्वं तदवच्छिन्नान्वितस्वार्थबोधकत्वं नास्ति। अतः पञ्चम्यन्तधूमपदमादाय निगमने नातिव्याप्तिः। तत्पदोत्तरपञ्चम्याः धूमज्ञानज्ञाप्यवह्नित्वावच्छिन्नान्वितस्वार्थबोधकत्वेऽपि तदन्तस्य सर्वनाम्नः तत्पदस्य लाक्षणिकत्वं नास्ति इति निगमने नातिव्याप्तिरिति भावः।

***पञ्चम्यर्थविशिष्टवह्नित्वमेवेति।*** धूमादिति पञ्चम्यन्तार्थेन धूमज्ञानज्ञाप्यत्वेन विशिष्टं यत् वह्नित्वं तदेव साध्यतावच्छेदकमित्यर्थः। वैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन। 'एव'कारेण केवलवह्नित्वस्य साध्यतावच्छेदकत्वव्यवच्छेदः। ***तदवच्छिन्ने*** इति। पञ्चम्यन्तार्थधूमज्ञान-ज्ञाप्यत्वविशिष्टवह्नित्वावच्छिन्ने इत्यर्थः।

प्रकृतसाध्ये प्रकृतपक्षान्वितत्वं विहाय गुरुभूतस्य प्रकृतपक्षान्वित-

प्रकृतपक्षान्वितत्वं विहाय प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितत्वं निवेशितम्। यद्यपि उभयत्र वह्निपदेनैकमेव साध्यमुपस्थाप्यते, अतो नैतावताऽप्युक्तातिव्याप्तिवारणसम्भवः। तथापि प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या विशेषणता तदवच्छिन्नसाध्यतावच्छेदकविशिष्टसाद्धचीयविशेष्यतानिरूपितस्वार्थीविषयताप्रयोजकत्वं बोधकान्तार्थः। अतः पञ्चमीत्वमनिवेश्यं प्रयोजनाभावात्। उपनयोपस्थापितपक्षविशेषणता-पन्नसाध्यान्वितार्थबोधकपञ्चम्यन्ततत्पदमादायाननुषङ्गपक्षेऽपि निगमनेऽतिव्याप्तेर्वारणं

---

स्वार्थबोधकपदोपस्थापितत्वस्य निवेशने प्रयोजनमाह- ***धूमाद्वह्निमतः-सधर्मेत्यादाविति।*** प्रकृतपक्षान्वित-प्रकृतसाध्यान्वित-स्वार्थबोधकपञ्चम्यन्त-लाक्षणिकपदवदवयवत्वं हेतुलक्षणमित्युक्तौ 'धूमाद्वह्निमतस्सधर्मा पर्वतो वह्निमान्' इति प्रतिज्ञायामतिव्याप्तिः दुर्वारा। अत्र हि द्वे वह्निपदे स्तः। तत्र एकवह्निपदोपस्थाप्यस्य वह्नेः पर्वतत्वावच्छिन्ने अन्वयात् स एव वह्निः वह्निमतः सधर्मा इत्यत्र वह्निपदेनापि उपस्थापित इति पर्वतत्वावच्छिन्नान्वितः यः वह्निः तदन्वितस्वार्थबोधकत्वं धूमादिति पञ्चम्याः अस्तीति तदन्तलाक्षणिकधूमपदवत्त्वात् तत्प्रतिज्ञायामतिव्याप्तिः। अतः प्रकृतपक्षान्वितत्वं विहाय प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितत्त्वं निवेशितम्।

ननु तन्निवेशेऽपि द्वाभ्यां वह्निपदाभ्यामेकमेव साध्यमुपस्थाप्यत इति पर्वतान्वितवह्निबोधकं यत् वह्निमत्पदं तदुपस्थापितं यत् प्रकृतसाध्यं वह्नयात्मकं तदन्वितार्थबोधकत्वं धूमात् इति पञ्चम्या अस्त्येवेति कथमतिव्याप्तिवारणमित्याशङ्कते- ***यद्यपीति।***

समाधत्ते- ***तथापीति।*** प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यता-निरूपितविशेषणत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टसाध्यनिष्ठविशेष्यतानिरूपित-स्वार्थीनिष्ठविषयिताप्रयोजिका या पञ्चमी तदन्तलाक्षणिकपदवदवयवत्वं हेतुवाक्यस्य लक्षणमिति फलितम्। 'पर्वतो वह्निमान् धूमात्' इत्यत्र पर्वतः मुख्यविशेष्यः। पर्वते वह्निः प्रकारः। वह्नौ पञ्चम्यर्थज्ञाप्यत्वं प्रकारः। वह्नौ पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता प्रकारता पञ्चम्यर्थीनिष्ठ-प्रकारतानिरूपिता विशेष्यता च वर्तते। अन्तरा भासमानपदार्थनिष्ठविषयतयोः अवच्छेद्यावच्छेदकभावस्वीकारात् वह्नित्वविशिष्टवह्निनिष्ठा विशेष्यता

**यत्तु – अयमात्मा ज्ञानादित्यत्राव्याप्तिः शक्त्यैव ज्ञानोपस्थितिसम्भवे लक्षणाविरहादिति।**

---

लाक्षणिकपदप्रयोजनम्।

अयमात्मा ज्ञानादित्यादौ ज्ञानपदं मुख्यार्थपरमेव। पञ्चम्यर्थान्वयस्य तत्रैव सम्भवेन लक्षणाबीजभूतान्वयानुपपत्तिविरहादित्यभिमानिनामुक्तलक्षणेऽव्याप्तिशङ्कामुद्धर्तु–

---

पर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वावच्छिन्ना भवति। तदवच्छिन्नवह्नि–निष्ठविशेष्यतानिरूपिता प्रकारताख्यविषयता पञ्चम्यर्थे ज्ञाप्यत्वे वर्तते। तादृशविषयताप्रयोजकत्वं पञ्चम्या अस्ति। तदन्तधूमपदवत्त्वात् धूमादिति हेतुवाक्ये लक्षणसमन्वयः। 'धूमाद्वह्निमतस्सधर्मा पर्वतो वह्निमान्' इति प्रतिज्ञाघटकपञ्चम्यां पञ्चम्यर्थनिष्ठप्रकारतानिरूपिता या वह्निनिष्ठा विशेष्यता सा मतुबर्थसम्बन्धित्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वावच्छिन्ना; न तु पर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वावच्छिन्नेति तत्रत्यप्रतिज्ञायां नातिव्याप्तिः। ***अतः पञ्चमीत्वमनिवेश्यमिति।*** बोधकान्तस्य उक्तरीत्या अर्थवर्णनात् पञ्चमीपदं नोपादेयं, प्रयोजनाभावात्।

लाक्षणिकपदस्य प्रयोजनमाह–***उपनयोपस्थापितेति।*** 'तथा चायम्' इति उपनयः। 'तस्मात् तथा' इति निगमनम्। 'अयं' पदस्य निगमनेऽनुषङ्ग इति पक्षे 'अयं' पदार्थपर्वतत्वविशिष्टपर्वतनिष्ठविशेष्यता–निरूपितप्रकारत्वावच्छिन्ना या 'तथा'शब्दार्थवह्निनिष्ठा विशेष्यता तन्निरूपितज्ञाप्यत्वनिष्ठविषयताप्रयोजकं पदं पञ्चमी। तदन्तसर्वनाम–तत्पदवदवयवत्त्वं निगमनेऽस्तीति अतिव्याप्तिः। तद्वारणाय लाक्षणिकेति पदस्य विशेषणम्। तत्पदस्य लाक्षणिकत्वविरहात् नातिव्याप्तिः।

एवम् 'अयं' पदाननुषङ्गपक्षेऽपि उपनयनिगमनाभ्यामेकविशिष्टार्थ–बोधाङ्गीकारात् 'अयं' पदार्थनिष्ठविशेष्यतानिरूपितवह्निनिष्ठप्रकारता–निरूपितज्ञाप्यत्वनिष्ठविषयताप्रयोजकपञ्चम्यन्तपदवदवयवत्त्वं निगमनेऽस्तीति तत्र अतिव्याप्तिवारकतया लाक्षणिकपदं सार्थकमिति भावः।

***अयमात्मा ज्ञानात्*** इत्यादाविति। 'अयमात्मा ज्ञानात्' इत्यत्र पञ्चमीप्रकृतिभूत'ज्ञान'पदस्य ज्ञानज्ञाने न लक्षणा। ज्ञानपदशक्त्यैव ज्ञानत्वेन रूपेण ज्ञानज्ञानस्यापि उपस्थितिसम्भवात्। तथा च तत्रत्यं पञ्चम्यन्तं

**तत्र। यद्विषयकज्ञानस्य हेतुत्वमवगतं तस्य व्याप्त्यादिजिज्ञासायां उदाहरणादिप्रयोगः।**

---

मुपन्यस्यति- ***यत्त्विति।*** शुद्धज्ञानत्वावच्छिन्नेन समं पञ्चम्यर्थान्वयसम्भवेऽप्यनुमिति-जनकज्ञानविषयतयोपस्थितावेव ज्ञानरूपहेतौ तद्विषयतानिर्वाहकव्याप्त्याकांक्षया यो ज्ञानवान् स आत्मेत्युदाहरणादिप्रयोगसम्भव इति ज्ञानविषयकज्ञानत्वावच्छिन्ने तात्पर्यानुपपत्त्या लक्षणाया आवश्यकत्वमिति समाधत्ते- ***तत्रेत्यादिना। यद्विषयकज्ञानस्य***

---

ज्ञानपदं लाक्षणिकं न भवतीति पञ्चम्यन्तलाक्षणिकपदवदवयवत्वरूप-लक्षणविरहात् तत्रत्यज्ञानादिति हेतुवाक्ये अव्याप्तिरिति शङ्का।

समाधानं तु-यद्विषयकज्ञानस्य अनुमितिजनकत्वं हेतुवाक्यात् अवगम्यते तस्य व्याप्त्यादिजिज्ञासायामुदाहरणादिवाक्यप्रयोगः। यथा धूमविषयकज्ञानस्य धूमादिति हेतुवाक्यात् अनुमितिजनकत्वमवगतम्, अतः धूमस्य व्याप्त्यादिजिज्ञासायां कथमस्य गमकत्वमित्याकारिकायां सत्यां तन्निरासाय व्याप्त्यादिप्रदर्शकोदाहरणोपनययोः प्रयोगः। 'अयमात्मा ज्ञानात्' इत्यत्र ज्ञानविषयकज्ञानस्य अनुमितिजनकत्वे ज्ञानादिति हेतुवाक्यात् अवगते सत्येव अनन्तरं कथं ज्ञानस्य गमकत्वमिति व्याप्तिजिज्ञासा भवति। ज्ञानविषयकत्वेन रूपेण ज्ञानस्य अनुमितिजनकत्वं तु ज्ञानपदस्य ज्ञानविषयकत्वावच्छिन्ने लक्षणां विना न सम्भवति इति। हेतुवाक्य-जन्यशाब्दबोधे सत्यपि कथमस्य गमकत्वमित्याकाङ्क्षां विना न उदाहरणादिकं प्रदर्शयितुं शक्यते। अतः तादृशशाब्दबोधस्य तादृशजिज्ञासाहेतुतां प्रदर्शयति ***अनुमितिजनकेत्यादिना।***

***तद्विषयतानिर्वाहकेति।*** अनुमितिजनकज्ञानविषयतानिर्वाहिका या व्याप्तिः तदाकाङ्क्षयेत्यर्थः। ***ज्ञानविषयकज्ञानत्वावच्छिन्ने तात्पर्यानुपपत्त्या*** इति। ज्ञानविषयकज्ञानत्वावच्छिन्ने यत् वक्तृतात्पर्य तस्य लक्षणां विना अनुपपत्त्या तादृशज्ञानत्वावच्छिन्ने लक्षणायाः आवश्यकत्वमित्यर्थः। कथमस्य गमकत्वमित्याकाङ्क्षायाः यद्रूपावच्छिन्नस्य तादृशविषयतया हेतुवाक्यात् उपस्थितिः तद्रूपं धर्मितावच्छेदकीकृत्यैव तादृशविषयतानिर्वाहकविषयकत्वेन ज्ञानविषयकत्वात् निर्वाह्यज्ञानस्य निर्वाहकजिज्ञासाजनकत्वादिति भावः।

**न चेह ज्ञानविषयकत्वेनोपस्थितिर्विना लक्षणाम्। अन्यथा सुखादेरपि व्याप्त्याद्युपदर्शनप्रसङ्गात्।**

---

यद्विषयकज्ञानत्वावच्छिन्नस्य **हेतुत्वं-** अनुमितिजनकत्वम्। तस्य व्याप्त्यादिजिज्ञासायाम्। तुल्यवित्तिवेद्यतया अर्थतो वा तत्र प्रतीतानुमापकज्ञानविषयतानिर्वाहकाकांक्षायामित्यर्थः। **उदाहरणादिप्रयोगः।** उदाहरणोपनयाभ्यां तन्निष्ठव्याप्तिपक्षधर्मताप्रदर्शनम्। यद्यपि ज्ञानविषयकज्ञानत्वावच्छिन्ने ज्ञानपदतात्पर्येऽपि मुख्यार्थज्ञानत्वावच्छिन्नपरत्वमक्षतमेवेति पूर्वोपदर्शितमुख्यार्थतात्पर्यराहित्यरूपं लाक्षणिकत्वं नोपपद्यत इति। तथापि शक्यता-वच्छेदकविलक्षणरूपावच्छिन्नतात्पर्यकत्वमेव लाक्षणिकत्वमतो न दोषः। ननु शुद्धज्ञानत्वावच्छिन्नेऽनुमापकत्वबोधेऽपि तत्तन्निर्वाहकव्याप्त्यादिमद्विषयकत्वलाभाद् वस्तुगत्या तादृशज्ञानविषयीभूते ज्ञाने व्याप्त्यादिप्रदर्शनसङ्गतिरित्यत आह- ***अन्यथेति।*** जनकज्ञानविषयतयाऽप्रतीतेऽपि ज्ञाने वास्तवतादृशविषयतां पुरस्कृत्य व्याप्त्युपदर्शने

---

***यद्विषयकेति।*** यद्रूपावच्छिन्नविषयकज्ञानत्वमनुमितिजनकतावच्छेदकं तद्रूपावच्छिन्नस्य इत्यर्थः। ***तुल्यवित्तिवेद्यतया*** इति। 'अयमात्मा ज्ञानात्' इत्यत्र पञ्चम्याः जन्यज्ञानविषयत्वरूपं ज्ञाप्यत्वमर्थः। तदेकदेशजन्यत्वान्वयि ज्ञानविषयकज्ञानं प्रकृतेः लक्षणया अर्थः। तथा च ज्ञानविषयकज्ञान-निरूपितजन्यतावज्ज्ञानविषयत्वं पञ्चम्यन्तार्थः। ज्ञाप्यत्वान्तर्गतज्ञानं च अनुमितिरूपम्। तथा च अनुमित्यात्मकज्ञाने ज्ञानविषयकज्ञानजन्यत्वे प्रतीते तुल्यवित्तिवेद्यतया अनुमितिजनकज्ञानविषयत्वं ज्ञाने लभ्यते। तच्च व्याप्तिं विना न निर्वहतीति तादृशज्ञानविषयत्वस्य निर्वाहिका या व्याप्तिः तज्जिज्ञासायामुदाहरणं प्रयुज्यत इति भावः। शाब्दबोधे तुल्यवित्तिवेद्यत्वे मानाभावादाह-***अर्थतो वेति।*** ***तत्र-*** हेतौ। ***प्रतीतानुमापकज्ञानविषयताया*** इति। प्रतीतायाः अनुमितिजनकज्ञानविषयताया इत्यर्थः। ***निर्वाहकाकाङ्क्षायामिति।*** निर्वाहकावान्तरधर्मीजिज्ञासायामित्यर्थः। ***उदाहरणोपनयाभ्यामिति।*** उदाहरणेन हेतुनिष्ठव्याप्तिप्रदर्शनम्; उपनयेन हेतुनिष्ठपक्षधर्मताप्रदर्शनम्। ***मुख्यार्थज्ञानत्वावच्छिन्नपरत्वमिति।*** ज्ञानविषयक-ज्ञानत्वरूपलक्ष्यतावच्छेदकधर्मावच्छिन्ने ज्ञानपदस्य तात्पर्ये सति मुख्यार्थभूतं यत् ज्ञानत्वावच्छिन्नं तत्रापि तात्पर्यमावश्यकम्। मुख्यार्थतावच्छेदकस्य

ज्ञानत्वस्य लक्ष्यतावच्छेदकज्ञानविषयकज्ञानत्वघटकत्वादिति भावः। **शक्यतावच्छेदकेति।** शक्यतावच्छेदकात् विलक्षणं यद्रूपं तदवच्छिन्न-तात्पर्यकत्वं लाक्षणिकत्वम्। यथा गङ्गापदस्य शक्यतावच्छेदक-प्रवाहत्वापेक्षया विलक्षणं तीरत्वं तदवच्छिन्नतात्पर्यकत्वं गङ्गापदस्य लाक्षणिकत्वम्। प्रकृते ज्ञानपदशक्यतावच्छेदकज्ञानत्वापेक्षया विलक्षणं यत् ज्ञानविषयकज्ञानत्वं तदवच्छिन्नतात्पर्यकत्वात् लाक्षणिकत्वमिति भावः।

**वस्तुगत्येति।** तथा च यद्रूपावच्छिन्नविषयकत्वमनुमितिजनकता-वच्छेदकतया हेत्वर्थः तद्रूपावच्छिन्नस्यैव व्याप्त्यादिप्रदर्शनमिति न नियमः। अपि तु यद्रूपावच्छिन्नस्य जनकत्वेन प्रतीतज्ञानीया विषयता तद्रूपावच्छिन्ने तन्निर्वाहकाकाङ्क्षया उदाहरणादिप्रदर्शनमिति।

अत्रेदमभिप्रेतम्–'अयमात्मा ज्ञानात्' इत्यत्र ज्ञानविषयकज्ञानस्य ज्ञानविषयकज्ञानत्वेन रुपेण ज्ञानपदादनुपस्थितावपि शुद्धज्ञानत्वेन रूपेण तदुपस्थितावपि वस्तुतः ज्ञानविषयकमेव ज्ञानं ज्ञानत्वेन रूपेण उपस्थितमिति वस्तुतः अनुमितिजनकज्ञानविषयत्वं ज्ञानेऽस्तीति तत्पुरस्कृत्य कथमस्य अनुमितिजनकज्ञानविषयत्वमिति आकाङ्क्षया व्याप्तिप्रदर्शको-दाहरणप्रयोग इति स्वीकारे 'अयमात्मा ज्ञानात्' इत्यत्र यः ज्ञानी सः आत्मेति उदाहरणप्रयोगवत् यः सुखी स आत्मेत्यपि उदाहरणप्रयोगप्रसङ्गः। ज्ञानपदेन ज्ञानत्वेन रूपेण वस्तुतः सुखविषयक-ज्ञानस्यापि उपस्थितया अनुमितिजनकज्ञानविषयत्वं सुखेऽप्यस्तीति तत्पुरस्कारेण सुखादावपि व्याप्तिप्रदर्शनसम्भवात्। तथा च सुखादौ व्याप्तिप्रदर्शनेऽपि ज्ञाने अनुमितिजनकज्ञानविषयत्वनिर्वाहिका या व्याप्तिः तद्विषयकत्वस्य ज्ञानपदोपस्थाप्यज्ञानत्वावच्छिन्नेऽलाभात् आकाङ्क्षायाः अनिवृत्तेः सुखादौ व्याप्तिप्रदर्शनं यथा न प्रकृतोपयोगि तथा ज्ञाने व्याप्तिप्रदशेनेऽपि व्याप्त्यादिमद्विषयकत्वपर्यन्तालाभात् आकाङ्क्षायाः अनिवृत्तेः ज्ञाने व्याप्तिप्रदर्शनस्य अनुपयोगः स्यादिति ज्ञानपदात् ज्ञानविषयकज्ञानत्वेन उपस्थितिः अवश्यं वाच्या। सा च लक्षणां विना नोपपद्यत इति।

**केचित्तु – पञ्चम्यन्तलाक्षणिकपदवत्त्वनियतावयवतावच्छेदकरूपवत्त्वं तादृशपदवत्त्वव्यभिचार्यवयवतावच्छेदकशून्यावयवत्त्वं वा विवक्षितमित्याहुः।**

---

सुखादेरप्यात्मत्वानुमापकज्ञानविषयतया अयमात्मा ज्ञानादित्यत्र यस्सुखी स आत्मेत्युदाहरणप्रयोगप्रसङ्गादित्यर्थः। तथा च सुखादौ व्याप्त्यादिप्रदर्शनेऽपि ज्ञानानुमापकत्वनिर्वाहकव्याप्त्यादिमद्विषयकत्वपर्यन्तालाभादाकांक्षाया अपूरणात् यथा सुखादौ न तत्प्रदर्शनं तथैवैतन्मते ज्ञानेऽपि न तत्प्रदर्शनमुपपद्यत इति भावः।

उक्तप्रतिज्ञादावतिव्याप्तिवारणाय प्रकारान्तरेण लक्षणं परिष्कुर्वतां मतमाह– **केचित्त्विति। पञ्चम्यन्तेति।** कस्याश्चित् प्रतिज्ञायाः पञ्चम्यन्तलाक्षणिकपदवत्त्वेऽपि धूमज्ञानज्ञाप्यालोकवान्पर्वतो वह्निमानित्यादिप्रतिज्ञाया व्यभिचारेणावयवतावच्छेदकं प्रतिज्ञात्वं पक्षादिभेदेन भिन्नमपि न तादृशपदवत्त्वनियतमिति नातिप्रसङ्ग इति भावः।

---

***उक्तप्रतिज्ञादाविति।*** 'धूमादालोकवान् पर्वतो वह्निमान्' इति पूर्वप्रदर्शितप्रतिज्ञादावित्यर्थः।

***कस्याश्चित् प्रतिज्ञाया*** इत्यादि। पञ्चम्यन्तलाक्षणिकपदवत्त्वव्याप्यं यदवयवतावच्छेदकं रूपं तद्वत्त्वं हेतुवाक्यस्य लक्षणम्। यत्र यत्र हेतुवाक्यत्वं वर्तते 'धूमात्' इत्यादौ, तत्र पञ्चम्यन्तलाक्षणिकपदवत्त्वं वर्तते। पञ्चम्यन्तस्य धूमादिपदस्य ज्ञानलाक्षणिकत्वात्। अतः पञ्चम्यन्तलाक्षणिकपदवत्त्वव्याप्यमवयवतावच्छेदकं रूपं हेतुवाक्यत्वम्। तद्वत्त्वं हेतुवाक्येऽस्तीति लक्षणसमन्वयः। 'धूमात् आलोकवान् पर्वतो वह्निमान्' इत्यादिप्रतिज्ञायां विद्यमानमवयवतावच्छेदकं रूपं प्रतिज्ञात्वम्। तत्तु पञ्चम्यन्तलाक्षणिकपदवत्त्वनियतं न भवति। पञ्चम्यन्तलाक्षणिक–पदवत्त्वशून्ये 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्येऽपि प्रतिज्ञात्वसत्त्वात्। अतः नियतान्तेन प्रतिज्ञात्वव्यावर्तनात् न तदादाय प्रतिज्ञायामतिव्याप्तिः।

***कस्याश्चिदिति।*** 'धूमादालोकवान् पर्वतो वह्निमान्' इति प्रतिज्ञायाः पञ्चम्यन्तलाक्षणिकधूमपदवत्त्वेऽपि इत्यर्थः।

ननु प्रतिज्ञात्वस्य पक्षसाध्यभेदेन भिन्नतया 'धूमादालोकवान् पर्वतो वह्निमान्' इति वाक्यनिष्ठं यत् प्रतिज्ञात्वं तत् पञ्चम्यन्तलाक्षणिक–पदवत्त्वनियतमेवेति तादृशप्रतिज्ञात्वमादायातिव्याप्तिः दुर्वारा इत्याशङ्क्याह–

तादृशावच्छेदकं हेतुत्वं दुर्वचं, सुवचत्वे तदेव लक्षणमित्यन्यथा परिष्कुरुते–*तादृशेति*। *तादृशपदम्* पञ्चम्यन्तलाक्षणिकपदम्। प्रतिज्ञात्वादिकं च तादृशपदाघटितस्यापि प्रतिज्ञादेस्सत्त्वेन तादृशपदवत्त्वव्यभिचारीति तच्छून्यत्वाभावान्न प्रतिज्ञादावतिव्याप्तिः। तादृशपदवत्त्वव्यभिचारिमेयत्वादिशून्यत्वाप्रसिद्ध्याऽवयवतावच्छेदकेति। अत्र प्रतिज्ञात्वहेतुत्वसाधारणस्यावयवतावच्छेदकत्वस्यैकस्याभावात् प्रतिज्ञात्वादिकं

---

***पक्षादिभेदेन भिन्नमपीति।*** अवयवतावच्छेदकरूपत्वावच्छेदेन पञ्चम्यन्त–लाक्षणिकपदवत्त्वनियतत्वं विधीयते। तेन प्रतिज्ञात्वत्वहेतुत्वत्वाद्यवच्छिन्ने पञ्चम्यन्तलाक्षणिकपदवत्त्वनियतत्वमावश्यकमिति लभ्यते। प्रतिज्ञात्वस्य पक्षादिभेदेन भिन्नत्वेऽपि भिन्नेषु प्रतिज्ञात्वेषु प्रतिज्ञात्वत्वमिति अनुगतधर्मः वर्तते। तादृशानुगतधर्मावच्छिन्नप्रतिज्ञात्वं सर्वास्वपि प्रतिज्ञास्वस्ति। तत्र पञ्चम्यन्तलाक्षणिकपदवत्त्वं नास्तीति न दोष इति भावः। तथा च पञ्चम्यन्तलाक्षणिकपदवत्त्वव्याप्यतावच्छेदकं यत् अवयवता–वच्छेदकतावच्छेदकं तदवच्छिन्नरूपवत्त्वं हेतुत्वमिति फलितोऽर्थः।

***तादृशावच्छेदकमिति।*** अवयवतावच्छेदकमित्यर्थः। पञ्चम्यन्त–लाक्षणिकपदवत्त्वव्यभिचारि यत् अवयवतावच्छेदकं तच्छून्यावयवत्वं द्वितीयं लक्षणम्। पञ्चम्यन्तलाक्षणिकपदशून्यस्यापि 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञादेः सत्त्वेन प्रतिज्ञात्वादिकं पञ्चम्यन्तलाक्षणिक–पदवत्त्वव्यभिचारि। तादृशप्रतिज्ञात्वादिशून्यावयवत्वं हेतावस्तीति लक्षणसमन्वयः।

एतल्लक्षणद्वयवादिनां मतेऽस्वारस्यं प्रदर्शयति–***अत्र प्रतिज्ञात्व–हेतुत्वेत्यादिना।*** प्रतिज्ञात्व–हेतुत्वादिसाधारणस्य एकस्य अवयवतावच्छेदकस्य दुर्वचतया अवयवतावच्छेदकत्वेन रूपेण प्रतिज्ञात्वादीनां लक्षणघटकत्वं न सम्भवति। अतः प्रतिज्ञात्वादीनि विशिष्योपादाय तच्छून्यत्वमेव लक्षणे निवेशनीयम्। तथा सति प्रतिज्ञात्वोदाहरणत्वोपनयत्वनिगमनत्वशून्यत्वं हेतोर्लक्षणमित्येवोच्यताम्। किं प्रतिज्ञात्वादौ पञ्चम्यन्तलाक्षणिक–पदवत्त्वव्यभिचारित्वविशेषणेन प्रयोजनम्।

**नव्यास्तु पञ्चम्याः ज्ञानज्ञाप्यत्वे लक्षणयैवोपपतौ न प्रातिपदिकेऽपि लक्षणा।**

---

विशिष्योपादाय तच्छून्यत्वं निवेश्यम्। तथा च हेतुत्वव्यावर्तनायोपात्तं तादृशपदवत्त्व-व्यभिचारित्वविशेषणमनर्थकम्। यदि च प्रतिज्ञात्वहेतुत्वादिसाधारणं प्रतिज्ञात्वादि-पञ्चान्यतमत्वमवयवतावच्छेदकत्वं तदा तत्र हेतुत्वप्रवेशे तस्यान्यादृशस्य दुर्वचत्वात् सुवचत्वे तदेवास्तु लक्षणम्। अन्यतममध्ये हेतुत्वमन्तर्भाव्य तद्व्यावृत्तये विशेषणान्तरदानं च प्रक्षाळनाद्धीति न्यायेनायुक्तमित्यस्वरसः।

पञ्चम्यन्तेत्यादिलक्षणकर्तुरनुमतां धूमादित्यादिवाक्यस्थधूमादिपदस्य ज्ञाने लक्षणां स्वातन्त्र्येण दूषयति- ***नव्यास्त्विति। ज्ञानज्ञाप्यत्वे लक्षणयेति।*** ज्ञाप्यत्वलक्षणाया

---

यदि तु प्रतिज्ञात्वहेतुत्वादिसाधारणमवयवतावच्छेदकत्वं प्रतिज्ञात्वादि-पञ्चान्यतमत्वमित्युच्यते, तदा अन्यतमत्वशरीरे हेतुत्वस्य प्रवेशात् तस्य च उक्तलक्षणादन्यस्य दुर्वचत्वात् आत्माश्रयः। सुवचत्वे तु तदेव हेतुलक्षणमस्तु, किमनेन तादृशहेतुत्वघटितेन गुरुभूतेन लक्षणेन।

किञ्च अन्यतमत्वशरीरे हेतुत्वमन्तर्भाव्य तद्व्यावृत्त्यर्थं व्यभिचार्यन्तविशेषणं ***प्रक्षालनाद्धि*** इति न्यायेन अयुक्तमिति अस्वरसः।

एतावता हेतुवाक्यस्थपञ्चम्याः ज्ञाप्यत्वमर्थः। पञ्चमीप्रकृतिपदस्य ज्ञाने लक्षणा इति मतानुसारेण विचारः कृतः। अथ पञ्चम्याः ज्ञानज्ञाप्यत्वे लक्षणा। पञ्चमीप्रकृतिभूतस्य धूमादिप्रातिपदिकस्य तु न ज्ञाने लक्षणा इति नवीनानां मतमुपन्यस्यति- दीधितौ ***नव्यास्तु*** इत्यादिना। गादाधर्यां ***ज्ञाप्यत्वलक्षणायाः आवश्यकत्वात्*** इति। धूमादिपदस्य धूमादिज्ञाने लक्षणावादिभिरपि पञ्चम्याः ज्ञाप्यत्वे लक्षणाङ्गीकृता। तथा च पञ्चमीलक्ष्ये ज्ञाप्यत्वे अधिकं ज्ञानांशं प्रवेश्य ज्ञानज्ञाप्यत्वे लक्षणा स्वीक्रियताम्। धूमादिपदस्य मुख्यार्थपरत्वमेवास्तु, किं तत्र ज्ञाने लक्षणया इति भावः।

आकाङ्क्षावैचित्र्यादितिग्रन्थमवतारयति-***नन्वेवं ज्ञानस्येत्यादिना।*** धूमादित्यत्र पञ्चम्याः ज्ञानज्ञाप्यत्वे लक्षणाङ्गीकारे तदेकदेशज्ञाने धूमपदार्थस्य विषयतासम्बन्धेन अन्वयो वक्तव्यः। स तु न सम्भवति।

आवश्यकत्वात्तत्रैव ज्ञानांशस्याप्यधिकस्य प्रवेशेनैव धूमादिपदस्य मुख्यार्थपरत्वेऽपि धूमादिज्ञानज्ञाप्यत्वलाभसम्भव इत्यर्थः। **न प्रातिपदिके।** न पञ्चमीप्रकृतिधूमादिपदे। नन्वेवं ज्ञानस्य पञ्चम्यर्थैकदेशतया तत्र धूमादिपदार्थस्यान्वयायोगात् धूमादिज्ञानालाभः। न च ज्ञाप्यत्वस्य पञ्चम्यर्थत्वेऽपि जन्यत्वरूपतदेकदेशे कथं धूमादिपदार्थ-तज्ज्ञानान्वयसम्भव इति वाच्यम्। चैत्रस्य पुत्रो घटादन्य इत्यादौ ससम्बन्धि-पदार्थैकदेशे जन्यत्वादौ पदार्थान्तरस्यान्वयदर्शनान्निष्प्रतियोगिक एव पदार्थैकदेशे इतरान्वयस्याऽव्युत्पन्नत्वात्। न च स्वतन्त्रोपस्थित एव पदार्थे इतरान्वयजिज्ञासा जायते नत्वितरविशेषणतयोपस्थिते। अत एव गौर्नित्येत्यादौ स्वतन्त्रगोत्वाद्युपस्थितये लक्षणेत्यत आकांक्षादिविरह एव पदार्थान्तरस्य पदार्थैकदेशेऽनन्वये बीजं न

---

पदार्थः पदार्थेनान्वेति, न तु तदेकदेशेनेति व्युत्पत्तिविरोधात्। न च-जन्यज्ञानविषयत्वरूपस्य ज्ञात्वस्य पञ्चम्यर्थत्वमतेऽपि तदेकदेशजन्यतायां धूमपदलक्ष्यार्थस्य धूमज्ञानस्य निरूपितत्वसम्बन्धेन अन्वयो वक्तव्य इति 'पदार्थः पदार्थेन' इति व्युत्पत्तिविरोधः इति-वाच्यम्। ससम्बन्धिके नियमेन सम्बन्धिसाकाङ्क्षे पदार्थैकदेशे पदार्थान्तरान्वयः दृश्यते। यथा 'चैत्रस्य पुत्रः', 'घटादन्यः' इत्यादौ जन्यत्वविशिष्टपुरुषरूपपुत्र-पदार्थैकदेशे जन्यत्वे षष्ठ्यर्थस्य निरूपतत्वस्य भेदविशिष्टरूपस्य अन्यपदार्थस्य एकदेशे भेदे पञ्चम्यर्थस्य प्रतियोगित्वस्य अन्वयदर्शनात् ससम्बन्धिकपदार्थैकदेशव्यतिरिक्ते पदार्थैकदेशे पदार्थान्तरं नान्वेति इति व्युत्पत्तिः परिष्कर्तव्या। एवं च ज्ञाप्यत्वैकदेशजन्यत्वस्य ससम्बन्धिकत्वात् तत्र प्रकृत्यर्थज्ञानान्वयो न दुष्यति। ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थत्वे तु तदेकदेशस्य ज्ञानस्य ससम्बन्धिकत्वविरहेण तत्र प्रकृत्यर्थान्वयस्य अव्युत्पन्नत्वात्।

न च-स्वतन्त्रतयोपस्थिते एव पदार्थे इतरान्वयजिज्ञासा जायते। न तु इतरपदार्थविशेषणतया उपस्थिते। अत एव 'गौर्नित्या' इत्यादौ गोविशेषणतया उपस्थिते गोत्वे नित्यान्वयो न स्यात् इत्यालोच्य गोत्वस्य स्वतन्त्रतया उपस्थित्यर्थं गोपदस्य गोत्वे लक्षणा स्वीक्रियते। एवं च पदार्थैकदेशस्य स्वतन्त्रतया उपस्थित्यभावात् तत्र इतरान्वयजिज्ञासा-रूपाकाङ्क्षाविहरात् पदार्थैकदेशे पदार्थान्तरं नान्वेति। तथा च

**आकांक्षावैचित्र्याच्च पदार्थैकदेशेपि ज्ञाने प्रातिपदिकार्थो विषयित्वेनान्वेति कर्तृकृतीव कृतौ धात्वर्थः।**

---

च सप्रतियोगिनिष्प्रतियोगिकैदेशसाधारण इति वाच्यम्। फलानुरोधेन सप्रतियोगिकपदार्थे विशेषणतयोपस्थितेऽपि प्रतियोगिजिज्ञासा जायत इति कल्पनात्। न च ज्ञानादिसविषयकपदार्थेऽपि तथोपस्थिते विषयविशेषजिज्ञासा जायत इति युज्यते कल्पकाभावादित्याशङ्क्य सविषयककृतिदृष्टान्तेन पदार्थैकदेशे ज्ञानेऽपि विषयाकांक्षां व्यवस्थापयति ***आकांक्षावैचित्र्याच्चेति।*** कुत्रचित्स्वतन्त्रोपस्थित एवेतराकांक्षा कुत्रचिद्विशेषणतयाऽप्युपस्थिते कस्यचिदाकांक्षेति विषयस्वभावाधीनतयाऽऽकांक्षा-वैचित्र्यादित्यर्थः। ***कर्तृकृतीवेति।*** वक्तेत्यादौ तृजाद्यर्थकर्त्राद्येकदेशे कृतौ यथा विषयत्वेन पाकादिक्रियाऽन्वेतीत्यर्थः।

इदंतु बोध्यम्। जिज्ञासारूपाकांक्षायाः शाब्दधीहेतुत्वं अजिज्ञासोरपि शाब्दबोधोदयान्मणिकृता निराकृतम्। तथा चाकांक्षाविरहः पदार्थैकदेशे पदार्थान्तरानन्वये

---

पदार्थैकदेशे पदार्थान्तरानन्वये आकाङ्क्षाविरहः निमित्तम्। स च आकाङ्क्षाविरहः ससम्बन्धिके असम्बन्धिके च पदार्थैकदेशे साधारणः। उभयोरपि स्वतन्त्रतया उपस्थित्यभावात् इति–वाच्यम्। 'चैत्रस्य पुत्रः' इत्यादौ इतरविशेषणतया उपस्थितेऽपि ससम्बन्धिकपदार्थे इतरपदार्थान्वय-बोधरूपफलस्य दर्शनेन तदनुरोधेन अन्वयजिज्ञासारूपा आकाङ्क्षा कल्प्यते। न च ज्ञानादिरूपे सविषयके पदार्थैकदेशे इतरविशेषणतया उपस्थिते विषयविशेषजिज्ञासारूपा आकाङ्क्षा अवश्यं कल्पनीया, कल्पकस्य फलस्याभावात्। तथा च कथं ज्ञानज्ञाप्यत्वैकदेशे ज्ञाने प्रातिपदिकार्थस्य विषयतया अन्वय इत्याशङ्क्य तत्रापि सविषयककृतिदृष्टान्तेन एकदेशान्वयोपयोगिनीमाकाङ्क्षां प्रदर्शयति– ***आकाङ्क्षावैचित्र्याच्च*** इत्यादिना दीधिताविति भावः।

यथा 'चैत्रः पक्ता' इत्यत्र 'तृच्' रूपस्य कृत्प्रत्ययस्य कर्ता अर्थः। 'कर्तरि कृत्' इति सूत्रात्। कर्ता च कृतिमान्। तदेकदेशकृतौ धात्वर्थस्य पाकस्य विषयित्वसम्बन्धेन अन्वयः। तथा च पाकविषयककृतिमान् चैत्रः इति बोधः। तादृशबोधरूपफलानुसारेण कृतिः किंविषयिणीति जिज्ञासारूपा आकाङ्क्षा यथा कल्प्यते, तथा

न बीजम्। गौर्नित्येत्यादौ पदार्थैकदेशे गोत्वे नित्यादिपदार्थभेदान्वयबोध-प्रयोजिकायास्समानविभक्तिकतत्पदसमभिव्याहाररूपाया आकांक्षाया अक्षततवादतः पदाधीनायास्स्वतन्त्रतदुपस्थितेः पदार्थान्तरस्य तत्रान्वयबोधे हेतुता वाच्या। एवं च ज्ञानविशिष्टार्थकात्मादिपदघटितादात्मा न द्रव्यमित्यादिवाक्यात्पदार्थैकदेशे ज्ञाने द्रव्यभेदान्वयवारणाय दण्डजन्यो न दण्डजन्य इत्यादिवाक्यात्पदार्थैकदेशजन्यत्वादौ दण्डजन्यभेदान्वयबोधवारणाय च कल्पनीये ज्ञानाद्यंशे इतरान्वयबोधे स्वतन्त्रज्ञाना-द्युपस्थितिहेतुत्वे कार्यतावच्छेदककोटिप्रविष्टेतरविषयतायां विषयतासम्बन्धावच्छिन्न-

---

ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थत्वे सति ज्ञानं किंविषयकमिति विषयाकाङ्क्षा कल्प्यते। अन्यथा शाब्दबोधानुदयप्रसङ्गात् इति भावः।

जिज्ञासारूपाकाङ्क्षायाः शाब्दबोधजनकत्वं दूषयति-**इदं तु बोध्यमिति।** जिज्ञासारूपाकाङ्क्षाविरहस्य पदार्थैकदेशे पदार्थान्तरानन्वये निमित्तत्वाभावेऽपि समभिव्याहाररूपाकाङ्क्षाविरहस्य तन्निमित्तत्वमस्तु इत्याशङ्क्य 'गौर्नित्या' इत्यादौ गोपदार्थैकदेशे गोत्वे नित्यपदार्था-भेदान्वयबोधप्रयोजिकायाः समानविभक्तिकविशेष्यविशेषणवाचकपदद्वय-समभिव्याहाररूपाकाङ्क्षायाः सत्त्वात् गोपदस्य गोत्वे लक्षणाज्ञान-विरहदशायां गोपदार्थैकदेशे गोत्वे नित्यपदार्थाभेदान्वयबोधापत्तिः। तस्मात् पदजन्यस्वतन्त्रपदार्थोपस्थितेः पदार्थान्तरस्य तत्र अन्वयबोधे हेतुता वक्तव्या। पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति पदवृत्तिज्ञानजन्योपस्थितेः विशेष्यतासम्बन्धेन हेतुत्वं वक्तव्यमिति यावत्। गोपदस्य गोत्वे लक्षणाज्ञानविरहदशायां गोपदशक्तिज्ञानजन्योपस्थितेः विशेष्यतासम्बन्धेन गोव्याक्तावेव सत्त्वेन गोत्वे विरहात् न तत्र नित्यपदार्थनिष्ठाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधप्रसङ्ग इति भावः।

ज्ञाप्यत्वमात्रस्य पञ्चम्यर्थतामते जन्यतायां विशेष्यतासम्बन्धेन उपस्थित्यभावेन प्रकृत्यर्थान्वयानुपपत्तिवत् ज्ञानज्ञाप्यतायाः पञ्चम्यर्थतामतेऽपि ज्ञाने विशेष्यतासम्बन्धेन पञ्चमीजन्योपस्थितेरभावेन तत्र प्रकृत्यर्था-न्वयानुपपत्तिः इति दूषणं प्रमाणप्रदर्शनेन उद्धरति-**एवं चेत्यादिना।**

किञ्चित्पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति

विशेष्यतासम्बन्धेन उपस्थितिः कारणमिति कार्यकारणभावः अवश्यं वक्तव्यः। अन्यथा 'आत्मा न द्रव्यम्' इति वाक्यस्य 'दण्डजन्यः न दण्डजन्यः' इति वाकयस्य च प्रामाण्यं स्यात्। ज्ञानविशिष्टार्थकात्मपदार्थैकदेशे ज्ञाने द्रव्यभेदस्य दण्डजन्यपदार्थैकदेशे दण्डजन्यत्वे दण्डजन्यभेदस्य च सत्त्वात्। विशेष्यतासम्बन्धेन उपस्थितेः हेतुत्वे तु ज्ञाने आत्मपदजन्योपस्थितेः विशेष्यतासम्बन्धेन अभावात् न तत्र द्रव्यभेदनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधप्रसङ्गः। एवं दण्डजन्यत्वे विशेष्यतासम्बन्धेन दण्डजन्यपदजन्योपस्थितेरभावात् न तत्र दण्डजन्यभेदनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधप्रसङ्गः। तत्र च कार्यकारणभावे इतरपदार्थनिष्ठप्रकारतायां विषयतासम्बन्धा-वच्छिन्नप्राकरतान्यत्वं विशेषणं देयम्। एवं च इतरपदार्थनिष्ठविषयता-सम्बन्धावच्छिन्नप्रकारतान्यप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति विशेष्यतासम्बन्धेन पदजन्योपस्थितिः कारणमिति कार्यकारणभावः पर्यवसन्नः। 'धूमात्' इत्यादौ पञ्चम्यर्थज्ञानज्ञाप्यत्वैकदेशे ज्ञाने प्रकृत्यर्थस्य धूमस्य विषयतासम्बन्धेन अन्वयबोधः इष्यते। तादृशबोधीया ज्ञाननिष्ठा विशेष्यता विषयतासम्बन्धावच्छिन्नधूमनिष्ठप्रकारतानिरूपिता भवति। न तु विषयतासम्बन्धावच्छिन्नप्रकारताभिन्नप्राकारतानिरूपितेति तादृशप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबोधः ज्ञाने नेष्यते इति तत्र विशेष्यतासम्बन्धेन पदजन्योपस्थितेरभावेऽपि न क्षतिरिति भावः।

एतावता उपस्थितिशाब्दबोधयोः विषयनिष्ठप्रत्यासत्या कार्यकारणभावमाश्रित्य इदं तु बोध्यमित्यादिः ग्रन्थो व्याख्यातः। अथ तयोः आत्मनिष्ठप्रत्यासत्या कार्यकारणभावमाश्रित्यापि इदं तु बोध्यमित्यादिग्रन्थः व्याख्यायते। गोत्वविशेष्यकनित्यपदार्थप्रकारकाभेद-संसर्गकशाब्दबोधं प्रति गोपदजन्यगोत्वविशेष्यकोपस्थितिः कारणम्। 'गौर्नित्या' इत्यादौ गोपदजन्यगोत्वविशेष्यकोपस्थितेः अजननात् तादृशकारणविरहात् गोत्वविशेष्यकनित्यान्वयबोधः न सम्भवति। एवं ज्ञानविशेष्यकेतरपदार्थ-प्रकारकशाब्दबोधं प्रति ज्ञानविशेष्यकोपस्थितिः कारणमिति कार्यकारणभावः

स्वतन्त्रज्ञानाद्युपस्थिते-प्रकारतान्यत्वं विशेषणं देयम्। वस्तुतो ज्ञानादिविषयकशाब्दबोधे स्वतन्त्रज्ञानाद्युपस्थिते-हेतुत्वेऽपि पञ्चम्यादिजन्यज्ञानज्ञाप्यत्वोपस्थितिप्रकृतिजन्यधूमाद्युपस्थितियोग्यताज्ञानादि-घटितशाब्दसामग्र्याः पदार्थैकदेशे ज्ञानादौ विषयतादिसम्बन्धेन धूमादिप्रकारक-शाब्दबोधजनने बाधकाभावः। तादृशसामग्र्यां स्वतन्त्रज्ञानाद्युपस्थितेरनन्तर्भावा-तादृशोपस्थितेर्ज्ञानादौ द्रव्यभेदान्वयबोधप्रयोजकसामग्र्यान्तरेष्वेव निवेशात्। न चैवं स्वतन्त्रज्ञानाद्युपस्थितेर्व्यभिचारेण हेतुत्वमेव न सम्भवतीति वाच्यम्। यतो यत्रैकरूपावच्छिन्ने पदे पदान्तराकांक्षा गृहीता अन्यरूपेण च वृत्तिः गृहीता तत्रातिप्रसङ्गवारणाय तत्तदानुपूर्वीविशेषरूपपदविशेषप्रकारेण गृहीतवृत्तिकपदजन्य-

---

अङ्गीकरणीयः। अन्यथा ज्ञानविशिष्टार्थकात्मपदघटितात् 'आत्मा न द्रव्यम्' इति वाक्यात् ज्ञानविशेष्यकद्रव्यभेदप्रकारकशाब्दबोधापत्तिः। तथा च अवश्यकल्पनीये तादृशकार्यकारणभावे कार्यतावच्छेदककोटिप्रविष्टेतर-विषयतायां विषयतासम्बन्धावच्छिन्नप्रकारताभिन्नत्वं निवेश्यते। तेन ज्ञानविशेष्यकेतरपदार्थनिष्ठविषयतासम्बन्धावच्छिन्नप्रकारताभिन्नविषयतानिरूपकशाब्दबोधं प्रति ज्ञानविशेष्यकोपस्थितिः कारणमिति कार्यकारणभावः फलितः। एवं च पञ्चम्यर्थज्ञानज्ञाप्यत्वैकदेशे ज्ञाने विषयतासम्बन्धेनैव प्रकृत्यर्थस्य प्रकारत्वात् हेतुवाक्यजन्यः शाब्दबोधः विषयतासम्बन्धावच्छिन्न-प्रकारताभिन्नविषयतानिरूपकशाब्दबोधत्वरूपकार्यतावच्छेदकाक्रान्तः न भवतीति तादृशबोधं प्रति ज्ञानविशेष्यकोपस्थितिः नापेक्षिता इति तात्पर्यम्। ***स्वतन्त्रतदुपस्थितेरिति।*** इतरविशेषणतानापन्नगोत्वोपस्थितेरित्यर्थः। गोत्वविशेष्यकोपस्थितेरिति यावत्।

एतेनेत्यादिना वक्ष्यमाणदूषणं मनसिकृत्य कल्पान्तरमनुसरति ***वस्तुत*** इत्यादिना। ज्ञानविशेष्यकशाब्दबोधं प्रति ज्ञानविशेष्यकोपस्थितिः, यत्र वाक्ये पदात् ज्ञानविशेष्यकोपस्थितिः जायते तत्र कारणम्। यत्र तु पदात् ज्ञानविशेष्यकोपस्थितिः नास्ति, तादृशस्थले ज्ञानविशेषण-कोपस्थितिरपि पञ्चम्यादिना जायमाना पञ्चमीप्रकृतिजन्यधूमाद्युपस्थिति-योग्यताज्ञानादिसहकारेण ज्ञानविशेष्यकविषयितासम्बन्धावच्छिन्नधूमादिनिष्ठ-प्रकारतानिरूपकशाब्दबोधं जनयिष्यति; तत्र किं बाधकम्।

'ज्ञानं न द्रव्यम्' इत्यादौ ज्ञानपदात् ज्ञानस्य स्वातन्त्र्येणोपस्थितेः

तत्र ज्ञानविशेष्यकद्रव्यभेदान्वयबोधानुसारेण ज्ञानविशेष्यकद्रव्य-भेदप्रकारकशाब्दबोधं प्रति ज्ञानविशेष्यकोपस्थितिः कारणमिति अन्यः कार्यकारणभावः। तद्विरहात् 'आत्मा न द्रव्यम्' इति वाक्यात् आत्मपदार्थैकदेशे ज्ञाने द्रव्यभेदप्रकारकबोधः न आपद्यते।

**न चैवमिति।** ज्ञानविशेष्यकोपस्थितिं विनापि पञ्चम्यन्तस्थले ज्ञानविशेष्यशाब्दबोधस्य जायमानतया व्यतिरेकव्यभिचारेण स्वतन्त्रज्ञानोपस्थितेः शाब्दबोधहेतुत्वमेव न स्यात् इति नाशङ्कनीयम्। यत्र एकविधानुपूर्व्यवच्छिन्ने पदे पदान्तरसमभिव्याहाररूपाकाङ्क्षा गृहीता अन्यविधानुपूर्व्यवच्छिन्ने शक्तिः गृहीता तत्र शाब्दबोधप्रसङ्गः। यथा 'कलशोऽस्ति' इत्यादौ कलशपदत्वावच्छिन्ने अस्तिपदसमभिव्याहार-रूपाकाङ्क्षा ज्ञाता, घटपदं घटशक्तमिति च घटपदत्वावच्छिन्ने शक्तिः गृहीता, तत्र शाब्दबोधप्रसङ्गः। तद्वारणाय यादृशानुपूर्व्यवच्छिन्ने पदे इतरपदसमभिव्याहाररूपाकाङ्क्षा गृहीता, तादृशानुपूर्व्यवच्छिन्नपदे शक्तिग्रहः। तदधीनोपस्थितिश्च शाब्दबोधं प्रति कारणम्। तदानुपूर्व्यवच्छिन्न-विशेष्यकाकाङ्क्षाज्ञानं तदानुपूर्व्यवच्छिन्नविशेष्यकशक्तिज्ञानजन्योपस्थितिसहकारेण शाब्दबोधं प्रति कारणमिति कार्यकारणभावो वक्तव्य इति फलितम्। अतः कलशपदत्वावच्छिन्ने आकाङ्क्षाज्ञानस्य घटपदत्वावच्छिन्ने शक्तिज्ञानस्य सत्त्वे न शाब्दबोधप्रसङ्गः। तथा च आनुपूर्वीविशेषान् विशिष्य निवेश्य उपस्थितीनां शाब्दबोधं प्रति कारणत्वं वक्तव्यमिति सिद्धम्।

एवं सति घटपदत्वरूपानुपूर्वीप्रकारकपदज्ञानजन्योपस्थितेः कलशपदत्वरूपानुपूर्वीप्रकारककलशपदज्ञानजन्योपस्थितेश्च घटविषयकैक-विधशाब्दबोधं प्रति हेतुत्वं वाच्यम्। अनेकैः कारणैः यत्र एकविधं कार्यं जायते, तत्र व्यतिरेकव्यभिचारः अवर्जनीय इति घटपदत्वप्रकारकपदज्ञानजन्योपस्थित्यव्यवहितोत्तरशाब्दबोधं प्रति घटपदत्व-प्रकारकपदज्ञानजन्योपस्थितिः कारणमिति रीत्या कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वं निवेश्य व्यतिरेकव्यभिचारः परिहरणीयः। एवं च

तत्तत्पदार्थोपस्थितेर्हेतुता वाच्या। तथा सति तद्धर्मप्रकारकाकांक्षादिग्रहस्य तद्धर्मप्रकारेण गृहीतवृत्तिकपदाधीनोपस्थितेश्च परस्परसहकारेणैव फलजनकत्वोपगमेनोक्तातिप्रसङ्गवारणसम्भवात्। तथा च नानानुपूर्वीप्रकारकपदज्ञानजन्योपस्थितीनामेकविषयशाब्दबोधे विभिन्नरूपेण हेतुतया व्यभिचार आवश्यक इति तद्वारणवर्त्मनैव दर्शितव्यभिचारस्यवारणमिति। एतेन जन्यत्वांशे इतरान्वयबोधे स्वतन्त्रजन्यत्वोपस्थितेः कार्यकारणभावे कार्यतावच्छेदककोटिप्रविष्टेतरविषयताया निरूपितत्वसम्बन्धावच्छिन्नप्रकारताभेदनिवेशनमुभयवादिसिद्धम्। अन्यथा औपगव इत्यादौ तद्धितार्थापत्यैकदेशजन्यत्वे निरूपितत्वसम्बन्धेन प्रकृत्यर्थान्वयानुपपत्तेर्ज्ञानज्ञापप्यत्वस्य पञ्चम्यर्थत्वमते च स्वतन्त्रज्ञानोपस्थितिजन्यतावच्छेदकघटकज्ञानविषयतानिरूपितेतरविषयतायां विषयतासम्बन्धावच्छिन्नप्रकारताभेदनिवेशनमधिकमिति प्रत्युक्तम्। तदनिवेशेऽप्युपदर्शितरीत्या सामञ्जस्यात्।

---

ज्ञानपदत्वप्रकारकपदज्ञानजन्यज्ञानविशेष्यकोपस्थित्यव्यवहितोत्तरशाब्दबोधं प्रत्येव ज्ञानविशेष्यकोपस्थितिः आकाङ्क्षाज्ञानसहकारेण शाब्दबोधं प्रति कारणम्। तदव्यवहितोत्तरत्वशून्यपञ्चम्यन्तजन्यशाब्दबोधं प्रति ज्ञानविशेष्यकोपस्थितेः कारणत्वमेव नास्तीति पञ्चमीजन्यज्ञानविशेषणकोपस्थितिबलादपि आकाङ्क्षादिज्ञानसहकृतात् ज्ञानविशेष्यकपञ्चमीप्रकृत्यर्थप्रकारकविषयितासंसर्गकशाब्दबोधोत्पत्तौ न किञ्चिद्बाधकमिति भावः।

***ज्ञानादिविषयकशाब्दबोधे*** इति। 'आत्मा न द्रव्यम्' इत्यादौ शाब्दबोधभयेन इत्यादिः। तर्हि स्वतन्त्रज्ञानाद्युपस्थितेः क्वापि शाब्दबोधसामग्रीघटकत्वं नास्तीति 'आत्मा न द्रव्यम्' इत्युक्तस्थले ज्ञानादौ द्रव्यभेदबोधप्रसङ्गः इत्यत आह–***तादृशोपस्थितेरिति। उक्तातिप्रसङ्गवारणसम्भवादिति।*** यत्र एकरूपेण आकाङ्क्षाविरहः अन्यरूपेण वृत्तिग्रहः तत्र अतिप्रसङ्गवारणसम्भवात् इत्यर्थः। ***तद्वारणवर्त्मनैवेति।*** व्यभिचारवारकः यः अव्यवहितोत्तरत्वप्रवेशरूपो मार्गः तेनैवेत्यर्थः। ***दर्शितव्यभिचारस्येति।*** पञ्चम्यर्थघटकज्ञाने प्रकृत्यर्थप्रकारकबोधे स्वतन्त्रज्ञानोपस्थितेः यः व्यभिचारः तस्य वारणम्। ***एतेनेति।*** वस्तुत इत्यादिकल्पान्तरानुसारणेनेत्यर्थः।

प्रथमकल्पे जन्यत्वविशेष्यकेतरपदार्थप्रकारकशाब्दबोधं प्रति जन्यत्वविशेष्यकोपस्थितेः कारणत्वे कल्पनीये कार्यतावच्छेदककोटि–

प्रविष्टेतरपदार्थविषयतायां निरूपितत्वसम्बन्धावच्छिन्नप्रकारताभिन्नत्वमवश्यं निवेशनीयम्। अन्यथा 'औपगव' इत्यादौ तद्धितार्थापत्यैकदेशे जन्यत्वे निरूपितत्वसम्बन्धेन प्रकृत्यर्थस्य 'उपगोः' अन्वयात् तत्र जन्यत्व-विशेष्यकोपस्थितेरभावात् व्यतिरेकव्यभिचारः। निरूपितत्वसम्बन्धावच्छिन्न-प्रकारताभिन्नेतरपदार्थनिष्ठविषयतानिरूपितजन्यत्वनिष्ठविशेष्यताशालिशाब्दबोधं प्रति जन्यत्वविशेष्यकोपस्थितेः कारणत्वे तु 'औपगवः' इत्यतः जायमानस्य जन्यत्वविशेष्यकबोधस्य कार्यतावच्छेदकानाक्रान्ततया न व्यतिरेकव्यभिचारः। ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थत्वमते तु ज्ञानविशेष्यकोप-स्थितिकार्यतावच्छेदककोटिप्रविष्टज्ञानविशेष्यतानिरूपितेतरपदार्थनिष्ठ-विषयतायां 'आत्मा न द्रव्यम्' इत्यादिप्रसङ्गवारणाय विषयतासम्बन्धा-वच्छिन्नप्रकारताभिन्नत्वमधिकं निवेशनीयमिति गौरवमिति दूषणं कल्पान्तरानुसरणेन निरस्तम्। विषयतासम्बन्धावच्छिन्नप्रकारताभेदमनिवेश्यैव अतिप्रसङ्गस्य वारितत्वात्।

किञ्च वैयाकरणः इत्यत्र व्याकरणपदोत्तरं 'तदधीते तद्वेद' इति सूत्रेण वेत्ता इत्यर्थे 'अण्' प्रत्ययः विहितः। वेत्ता ज्ञानाश्रयः। 'अण्' प्रत्ययार्थस्य ज्ञानाश्रयस्य एकदेशे ज्ञाने प्रकृत्यर्थस्य व्याकरणस्य विषयतासम्बन्धेन अन्वयात् तदनुरोधेन ज्ञाने इतरान्वयबोधे ज्ञानविशेष्यकोपस्थितेः कारणत्वे कल्पनीये इतरविषयतायां विषयतासम्बन्धावच्छिन्नप्रकारताभिन्नत्वनिवेशस्य सर्वमते एव आवश्यकत्वात् न गौरवावकाश इति भावः।

***जन्यत्वांशे*** इति। 'दण्डजन्यो न दण्डजन्यः' इत्यादाविति शेषः। ***औपगव*** इति। **उप**–समीपवर्तिनी गौः यस्य सः उपगुः। उपगोः अपत्यं पुमान् औपगवः। जन्यपुमान् तद्धितार्थः। ***अधिकमिति।*** जन्यज्ञानविषयत्वस्य पञ्चम्यर्थत्वे तु नैतन्निवेशनीयमिति भावः।

***अन्यथेत्यादि।*** ज्ञाप्यत्वं पञ्चम्यर्थ इति स्वीकृत्य पञ्चमीप्रकृतेः ज्ञाने लक्षणास्वीकारे प्रकृत्यर्थभूतज्ञानजन्यज्ञानविषयत्वे पञ्चम्यन्तेन बोधिते सति साध्यविषयकज्ञानजनकत्वं प्रकृत्यर्थभूते धूमज्ञाने तुल्यवित्तिवेद्यतया बोध्यते। तथा च वह्निज्ञानजनकत्वेन बोधितं यत् प्रकृत्यर्थभूतं धूमज्ञानं

**यद्धर्मविशिष्टश्च हेतुः प्रयुज्यते आकांक्षादिवशात्तद्धर्मविशिष्टस्यैव व्याप्यत्वमुपदर्श्यते।**

**अन्यथा यथार्थधूमज्ञानादित्यादिप्रयोगेऽपि धूमादेर्व्याप्यत्वोपदर्शनप्रसङ्ग इति प्राहुः।**

***इति दीधितौ हेतुलक्षणम्***

---

वैयाकरण इत्यादौ तदधीते तद्वेदेत्यनेन विहिततद्धितार्थस्य वेत्तुरेकदेशज्ञाने विषयतया प्रकृत्यर्थस्यान्वयोपपत्तये उक्तस्थले विषयतासम्बन्धावच्छिन्नप्रकारताभेदनिवेशस्य सर्वमत एवावश्यकत्वाच्चेति। प्रकृतेर्मुख्यार्थपरत्वे युक्त्यन्तरमाह– ***यद्धर्मविशिष्टश्चेति।*** यद्धर्मविशिष्टः पञ्चमीप्रकृत्यर्थः तद्धर्मविशिष्टस्यैव व्याप्यत्वमुपदर्श्यत इति ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थतामते तद्धर्मविशिष्टस्यैव पञ्चम्या जनकज्ञानविषयत्व-वोधलाभादिति भावः।

***अन्यथा।*** पञ्चम्या ज्ञानजनकत्वेन बोधितप्रकृत्यर्थज्ञाने विषयत्वेन विशेषणतामवलम्ब्य विषये व्याप्त्युपदर्शनसङ्गमने। ***यथार्थधूमज्ञानादित्यादिप्रयोगेऽपीति।***

---

तत्र विषयत्वेन विशेषणत्वं धूमस्य अस्तीति तदवलम्ब्य विषये धूमे उदाहरणवाक्येन वह्निव्याप्तिप्रदर्शनमिति यदि उपपाद्यते, तदा 'पर्वतो वह्निमान् धूमात्' इत्यादिप्रयोगे धूमादेः व्याप्यत्वप्रदर्शनवत् 'पर्वतो वह्निमान् धूमज्ञानात्' इत्यादिप्रयोगे धूमादेः व्याप्तिप्रदर्शनप्रसङ्गः। तत्रापि पञ्चमीप्रकृतिभूतेन धूमज्ञानपदेन शक्त्या उपस्थापितं यत् धूमज्ञानं तत्र पञ्चम्यर्थस्य ज्ञानजनकत्वस्य अन्वयेन ज्ञानजनकत्वेन बोधितं यत् धूमज्ञानं तद्विषयत्वं धूमस्यास्तीति धूमादौ उदाहरणेन व्याप्तिप्रदर्शनसम्भवात्। अस्माकं मते ज्ञानजन्यज्ञानविषयत्वस्यैव पञ्चम्यर्थतया तद्घटकप्रथमज्ञानं प्रकृत्यर्थधूमज्ञानविषयकमिति धूमज्ञान-विषयकज्ञानस्यैव तत्र वह्निज्ञानजनकत्वं प्रतीयते, न तु धूमज्ञानस्येति धूमस्य साध्यज्ञानजनकज्ञानविषयत्वालाभात् 'धूमज्ञानात्' इत्यादिप्रयोगे धूमस्य व्याप्तिप्रदर्शनप्रसङ्गः न भवतीति भावः।

ननु पञ्चम्याः जन्यज्ञानविषयत्वरूपज्ञाप्यत्वार्थकत्वमतेऽपि 'धूमज्ञानात्' इत्यत्र धूमज्ञानपदस्य लक्ष्यार्थे धूमज्ञानविषयकज्ञाने एव

तत्रापि शक्त्युपस्थितज्ञाने पञ्चम्यर्थज्ञापकतान्वयेन धूमादेः ज्ञापकज्ञानविषयत्वलाभेन धूमादौ व्याप्यत्वदर्शनं स्यात्। अस्मन्मते च ज्ञानज्ञाप्यत्वस्यैव पञ्चम्यर्थतया धूमज्ञानज्ञानस्यैव तत्र ज्ञापकत्वं प्रतीयते न तु ज्ञानज्ञानस्येति नातिप्रसङ्ग इति। न च पञ्चम्याः केवलज्ञाप्यत्वार्थमतेऽप्युक्तस्थले ज्ञानपदस्य लक्ष्यार्थे ज्ञानविषयकज्ञान एव तात्पर्यात् न धूमज्ञाने मुख्येऽप्यर्थे ज्ञापकतालाभ इति न धूमादौ व्याप्यत्वोपदर्शनप्रसङ्ग इति वाच्यम्। मुख्यार्थपरत्वे वाधकविरहेण तत्तात्पर्येणापि प्रयोगसम्भवात्। न वा यत्र पदे अर्थान्तरे निरूढलक्षणाशक्त्युप-स्थापितार्थस्तेन न बोध्यते, तद्बोधौपयिकाकांक्षादिसामग्रीकाले तद्बोधस्य दुर्वारत्वात्। अथ तत्र शक्यार्थबोधस्यापि सम्भवेन तत्रापि कस्यचित्कदाचित्तात्पर्यं सम्भवतु। तथापि तत्रानादितात्पर्यविरहात् न तत्तात्पर्येण न्यायान्तर्गतपदप्रयोगसम्भव इति चेत्-माभून्मुख्यार्थतात्पर्यकज्ञानपदघटितयथार्थधूमज्ञानादित्यादिवाक्यसमुदायस्य न्यायत्वम्, तथापि ज्ञाप्यत्वमात्रस्य पञ्चम्यर्थत्वे न्यायानन्तर्गतमुख्यार्थपरज्ञानपदघटितयथार्थधूमज्ञानादित्यादि-वाक्यस्य धूमादौ व्याप्त्याकांक्षाप्रयोजकधीजनकत्वं दुर्वारमेव। तच्चानुभवविरुद्धम्। न च ज्ञानज्ञाप्यत्वे पञ्चम्याः लक्षणापक्षेऽपि केवलज्ञाप्यत्वे स्वारसिक-लक्षणयोपस्थिते धूमज्ञाने ज्ञानजनकताबोधसम्भवादुक्तातिप्रसङ्गो दुर्वारः, तत्रेष्टापत्तौ च प्रकृतेऽपीष्टापत्तिसम्भव इति वाच्यम्। स्वारसिकलक्षणया पञ्चम्युपस्थित-

---

तात्पर्यात् लक्ष्यार्थे ज्ञानजनकत्वलाभेऽपि मुख्यार्थे धूमज्ञाने तदलाभात् ज्ञानजनकज्ञानविषयत्वं धूमस्य नास्तीति धूमादौ विषये व्याप्तिप्रदर्शनप्रसङ्गः न भवति इत्याशङ्क्य 'धूमज्ञानात्' इत्यादिप्रयोगे धूमज्ञानपदमुख्यार्थे धूमज्ञाने पञ्चम्यर्थस्य ज्ञानजनकत्वस्य अबाधात् मुख्यार्थपरत्वेऽपि अन्वयानुपपत्तेः विरहेण मुख्यार्थतात्पर्येणापि धूमज्ञानादिति प्रयोगसंभवादिति समाधत्ते—***न च पञ्चम्या*** इति।

***न वा यत्रेति।*** 'धूमात्' इत्यादौ पञ्चम्या लक्षणया विषयत्वे उपस्थापिते तत्र धूमपदार्थान्वय इत्यर्थः। अत्र लक्षणया ज्ञानविषयतया यद्धर्मविशिष्टः पञ्चमीप्रकृत्यर्थः तत्रैव व्याप्त्यादिप्रदर्शनमिति नियमोपगमात् नैतद्वक्तुमवसर इति आहुरित्यस्वरसः। अत्र स्वारसिकलक्षणया उपस्थापिते ज्ञाप्यत्वे प्रकृत्यर्थान्वये आकाङ्क्षायाः अनुपगमेन 'धूमज्ञानात्' इत्यादौ ज्ञापकत्वाबोधकत्वमिति समाधानमयुक्तम्। निरूढलक्षणया उपस्थापिते ज्ञाप्यत्वे तथैव उपस्थापितप्रकृत्यर्थज्ञानान्वये आकाङ्क्षोपगमेऽपि

विषयत्वरूपार्थान्तर इव तादृशज्ञाप्यत्वेऽपि प्रकृत्यर्थान्वये आकांक्षाया मयाऽनभ्युपगमात् धूमादिज्ञानादित्यतो धूमज्ञानस्य ज्ञापकत्वाबोधनादिति भावः। यत्तु धूमज्ञानादित्यतो लक्षणयोपस्थितधूमरूपविषयविशिष्टज्ञानज्ञाने ज्ञापकताभाने ज्ञापकज्ञानविषयत्वं धूमज्ञान इव तद्विषये धूमेऽपि भासत इति प्रकृतेर्लाक्षणिकतामते तत्र धूमे व्याप्त्याकांक्षया तदुपदर्शनप्रसङ्गो दुर्वार इत्याशयवर्णनम्। तदसत्। तथापि स्वमतेऽपि तद्दोषस्य दुर्वारत्वात्। पञ्चम्यर्थैकदेशे ज्ञाने मुख्यार्थधूमरूपविषयविशिष्टज्ञानान्वयेऽपि धूमे ज्ञापकज्ञानविषयबोधस्य दुर्वारत्वात्। न च तथापि पञ्चमीप्रकृत्यधीनोपस्थितिविशेष्यत्वं यस्य तस्यैव व्याप्त्यादिकं प्रदर्श्यत इति नियमस्य स्वयमुपगमात् न स्वमते दर्शितातिप्रसङ्ग इति वाच्यम्। तत्र धूमादौ ज्ञापकज्ञानविषयताबोधादाकांक्षासम्भवे तादृशनियममननुरुध्य व्याप्त्याद्युपदर्शनस्यानपवादात्।

वस्तुतो लिङ्गज्ञानं प्रकृत्यर्थे पञ्चम्यर्थे वाऽन्तर्भवतूभयथापि धूमज्ञानादित्यत्र धूमज्ञान एव साध्यज्ञापकतावच्छेदकपक्षतावच्छेदकावच्छिन्नविषयतानिरूपितप्रकारता लभ्यते सैव विषयता तस्य व्याप्तिपक्षधर्मतानिर्वाह्येति तदाकांक्षया तत्रैव व्याप्त्याद्युपदर्शनं तद्ज्ञानविशेषणधूमे च तादृशविषयतावच्छेदकत्वरूपविषयतैव सा च न तत्र व्याप्त्यादिनिर्वाह्या। अतो न तत्र तदाकांक्षेति धूमादित्यादिप्रयोगे धूमत्वादाविव धूमज्ञानादित्यत्र धूमादौ व्याप्त्यादेर्नोपदर्शनमिति।

***॥इति गदाधरीये हेतुलक्षणम्॥***

---

शक्त्युपस्थापिततदन्वये आकाङ्क्षायाः लक्षणकर्तृभिरपि अनङ्गीकारस्य सुवचत्वादिति बोध्यम्।

'यत्तु'कारोक्तदीधित्याशये दूषणान्तरमाह–***वस्तुत*** इति। लक्षणाद्वयमपेक्ष्य एकलक्षणायां लाघवमभिप्रेत्य पञ्चम्यर्थस्य उत्तराभिधानम्। ***विषयतैवेति।*** लभ्यत इति अनुवर्तते। अवच्छेदकत्वस्य तद्गतव्याप्त्यादिनिर्वाह्यत्वोपगमे धूमत्वादौ तन्निर्वाहकाकाङ्क्षायाः दुर्वारतया तद्गतव्याप्त्याद्युपदर्शनप्रसङ्ग इति युक्तिवारणाय धूमत्वादाविति दृष्टान्ताभिधानम्।

***॥इति भावदीपिकायां हेतुलक्षणम्॥***

## अथ दीधीतिकारीयप्रतिज्ञादिलक्षणानि

**इतरान्वितस्वार्थबोधकत्वे सति, स्वीयं यदन्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति, अन्त्यपदवत्त्वे सति, स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकं यत्तदन्यत्वे च, सति वा न्यायावयवत्वं प्रतिज्ञात्वम्।**

---

मूलोक्तलक्षणापेक्षया लघूनि प्रतिज्ञाद्यवयवलक्षणानि स्वयमाह– *इतरान्वितेति।* प्रथमसत्यन्तस्य हेतूपनयनिगमनसाधारणस्योदाहरणव्यावर्तनप्रयोजनं स्वयमेव दर्शयिष्यते प्रतिज्ञाहेत्वोरित्यादिना, इतरान्वितत्वं स्वभिन्नावयवार्थान्वितत्वं स्वाघटकपदोप-स्थापितार्थान्वितत्वं वा। एवञ्चेतरावयवसहकारेण स्वाघटकपदसहकारेण वा बोधकत्वं समुदायार्थः। तेनोदाहरणबोध्यार्थप्रविष्टसाध्यादेः प्रतिज्ञादिजन्यबोधे इतरान्वितत्वेऽपि न क्षतिः। द्वितीयसत्यान्तानन्तरमग्रिमं न्यायावयवत्वमिति सम्बध्यते। द्वितीयसत्यन्तं

---

***मूलोक्तलक्षणापेक्षयेत्यादि।*** मणिकारेण उक्तानि यानि प्रतिज्ञादिलक्षणानि तदपेक्षया लघूनि प्रतिज्ञादीनामवयवानां लक्षणानि दीधितिकार आह–***इतरान्वितेत्यादिना।*** तत्र प्रतिज्ञायाः लक्षणद्वयं विवक्षितम्। इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यत् अन्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति न्यायावयवत्वं प्रतिज्ञात्वमिति एकं लक्षणम्। इतरान्वितस्वार्थबोधकत्वे सति अन्त्यपदवत्त्वे सति स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकं यत् तदन्यत्वे सति न्यायावयवत्वमिति द्वितीयं लक्षणम्।

'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्यं हेत्वर्थान्वितस्वार्थबोधकं भवति। तथा स्वघटकं यत् अन्त्यभिन्नं पदं पर्वतपदम्; तदर्थविशेष्यकान्वय-बोधजनकत्वं न्यायावयवत्वं च तत्रास्तीति प्रथमलक्षणस्य समन्वयः। द्वितीयलक्षणे द्वितीय–तृतीयसत्यन्ते प्रथमलक्षणस्थ–द्वितीयसत्यन्तस्य स्थाने वैकल्पिकतया निवेशिते। तथा च प्रतिज्ञावाक्ये हेत्वर्थान्वित-स्वार्थबोधकत्वमस्ति; अन्त्यपदवत्त्वं चास्ति। अनन्त्यपदार्थविशेष्यकान्वय-बोधाजनकं यत् तदन्यत्वं चास्ति इति द्वितीयलक्षणसमन्वयः।

च हेतुनिगमनवारकं हेतुजन्ये तस्मादितरेभ्यो भिद्यते इत्यादिनिगमनजन्ये च बोधे विभक्त्यर्थस्य विशेष्यतया विवक्षणीयविभक्त्यन्तपदार्थविशेष्यकत्व-विरहाद्वह्निव्याप्यधूमवांश्चायं तस्माद्वह्निमानित्याद्युपनयनिगमनजन्यबोधे च विभक्त्यन्तपद-मध्येऽन्तर्भूतेदम्पदमतुबाद्यन्तपदार्थयोर्विशेष्यतया अन्त्यभिन्ने स्वीयपदार्थ-विशेष्यकत्वविरहात्। अन्त्यत्वञ्च स्वघटकपदेषु चरमत्वम्। उपनयादि-

---

प्रथमलक्षणस्य परिष्कारपूर्वकं दलप्रयोजनमाह-***प्रथमसत्यन्तस्य*** इत्यादिना। प्रथमलक्षणे सत्यन्तानुपादाने उदाहरणेऽतिव्याप्तिः। 'यो यो धूमवान् स वह्निमान्' इत्युदाहरणे अन्त्यभिन्न-यत्-पदार्थविशेष्यकान्वय-बोधजनकत्वरूपस्य विशेष्यस्य सद्भावात्। सत्यन्तोपादाने तु उदाहरणस्य अवयवान्तरघटकपदार्थान्वितस्वार्थबोधकत्वविरहात् नातिव्याप्तिः।

ननु सत्यन्तोपादानेऽपि इतरः स्वार्थभिन्नः यः साध्यादिः तदन्वितस्वार्थबोधकत्वमुदाहरणेऽप्यस्तीति अतिव्याप्तिः। अतः व्याचष्टे-***इतरान्वितत्वमिति।*** तथा च स्वभिन्नावयवार्थान्वितस्वार्थबोधकत्वं सत्यन्तार्थः। उदाहरणस्य स्वभिन्नप्रतिज्ञाद्यवयवार्थान्वितस्वार्थबोधकत्वं नास्तीति नातिव्याप्तिः।

हेतुघटकपञ्चम्यर्थान्वितस्वार्थबोधकत्वसत्त्वेऽपि तद्घटकप्रकृत्यर्थान्वित-स्वार्थबोधकत्वं नास्तीति अव्याप्तिरित्याशङ्क्याह-***स्वाघटकेति। स्वं***-प्रतिज्ञा। स्वाघटकं यत् पदं पञ्चमीरूपं तदुपस्थापितार्थान्वितस्वार्थबोधकत्वं प्रतिज्ञायामस्तीति नाव्याप्तिः। स्वभिन्नावयवघटकपदोपस्थापितार्थान्वितत्वं वा इति कृष्णंभट्टसम्मतः पाठः। ननु उदाहरणप्रतिपाद्यार्थप्रविष्टसाध्यमेव प्रतिज्ञाबोध्यार्थप्रविष्टमिति हेत्वर्थान्वितस्वार्थबोधकत्वमुदाहरणेऽप्यस्तीति तत्र अतिव्याप्तिः। तद्वारणाय स्वाघटकपदप्रयोज्यविषयतानिरूपितस्वार्थविषयता-शालिबोधजनकत्वं विवक्षितं चेत् तत्र गौरवात् लघुभूतं सत्यन्तसमुदायार्थमाह-***एवं चेति।*** एवं च इतरावयवसहकारेण स्वाघटकपदसहकारेण वा बोधकत्वं सत्यन्तार्थः। प्रतिज्ञायां हेत्ववयवसहकारेण बोधकत्वमस्ति। एवं स्वाघटकं यत्पदं पञ्चम्यन्तं तत्सहकारेण बोधकत्वमस्तीति लक्षणसमन्वयः। उदाहरणे तु इतरावयवसहकारेण बोधकत्वं नास्तीति नातिव्याप्तिः। दीधितौ लक्षणद्वयं

स्थेदमादिपदानामपि न पदसामान्यमध्ये चरमत्वं तदुत्तरमप्यन्यवाक्यघटकपद-सत्त्वादित्यतः स्वघटकत्वं पदविशेषणम्। एवं च निगमनघटकपदेषु यच्चरमं

---

विवक्षितमिति बोधनाय ***द्वितीयसत्यान्तान्तरमिति।*** द्वितीयसत्यन्तस्य प्रयोजनमाह–***द्वितीयसत्यन्तं चेति।*** तथा च इतरान्वितस्वार्थबोधकत्वमात्रोक्तौ हेतौ निगमने च अतिव्याप्तिः। तयोः प्रतिज्ञार्थान्वितस्वार्थबोधकत्वात् उपनयार्थान्वितस्वार्थबोधकत्वाच्च। तद्वारणाय द्वितीयसत्यन्तम्। तदुपादाने सति हेतुवाक्ये अन्त्यभिन्नं यत्पदं धूमपदं तदर्थविशेष्यकबोध-जनकत्वविरहात् हेतुजन्यबोधे पञ्चम्यर्थस्यैव विशेष्यत्वात्। अतो न हेतौ अतिव्याप्तिः। निगमने यत् अन्त्यभिन्नं पदं तस्मादिति पदं तदर्थविशेष्यकबोधजनकत्वविरहाच्च न अतिव्याप्तिः। तदाह–***हेतुजन्ये*** इत्यादिना। स्वीयं यदन्त्यभिन्नं पदं तदर्थविशेष्यकेत्यस्य विभक्त्यन्तार्थविशेष्यकेत्यर्थः वक्ष्यते। तथा च हेतुजन्यबोधे विभक्त्यर्थ-विशेष्यकत्वसत्त्वेऽपि विभक्त्यन्तार्थविशेष्यकत्वं नास्तीति नातिव्याप्तिः। एवं 'तस्मात् इतरेभ्यो भिद्यते' इति निगमनजन्यबोधे तिङ्रूपविभक्त्यर्थ-विशेष्यकत्वेऽपि विभक्त्यन्तार्थविशेष्यकत्वं नास्तीति न निगमनेऽतिव्याप्तिः।

ननु 'वह्निव्याप्यधूमवाँश्चायम्' इत्युपनयजन्यबोधे विभक्त्यन्त 'इदं'पदार्थ- विशेष्यकत्वसत्त्वात् तादृशबोधजनके उपनयेऽतिव्याप्तिः। एवं 'तस्माद्वह्निमान्' इति निगमनजन्यबोधे विभक्त्यन्तं यत् पदं 'वह्निमान्' इति पदम्; तदन्तर्गतमतुबर्थविशेष्यकत्वसत्त्वेन तादृशनिगमनेऽतिव्याप्तिः इत्याशङ्क्याह–***वह्निव्याप्यधूमवाँश्चायमिति।*** तथा च विभक्त्यन्ते पदे स्वीयान्त्यभिन्नत्वं विशेषणं दीयते। स्वीयं यदन्त्यभिन्नं विभक्त्यन्तं तदर्थविशेष्यकान्वयबोधजनकत्वं विवक्षितम्। 'वह्निव्याप्यधूमवाँश्चायम्' इति उपनयघटकम् 'इदं' पदमन्त्यभिन्नं पदं न भवतीति अन्त्यभिन्न-विभक्त्यन्तपदार्थविशेष्यकबोधजनकत्वविरहात् न उपनये अतिव्याप्तिः। 'तस्माद्वह्निमान्' इति निगमनघटकं विभक्त्यन्तं वह्निमत्पदमन्त्यभिन्नं न भवतीतिं न निगमनेऽतिव्याप्तिरिति भावः। ***अन्त्यभिन्नस्वीयेति।*** अन्त्यभिन्नं

तदन्योपनयस्थेदंपदार्थविशेष्यकबोधं प्रत्युपनयसहकारेण स्वार्थबोधजनके निगमने तादात्म्येन द्रव्यादिसाध्यके इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ स्वघटकविभक्त्यन्तपदेषु यदन्त्यं सत्तादिपदं तदन्यविभक्त्यन्तप्रतिज्ञास्थद्रव्यादिपदार्थ-विशेष्यकान्वयबोधजनके हेतौ चातिव्याप्तिवारणाय स्वीयत्वमन्त्यभिन्नपदविशेषणम्।

---

यत् स्वघटकं पदं तदर्थविशेष्यकत्वविरहादित्यर्थः। **अन्त्यत्वं चेति।** **स्वम्**–अवयवः। तद्घटकपदमध्ये चरमत्वमन्त्यत्वमिति भावः। 'स्वघटकपदेषु' इत्यत्र स्वघटकेति विशेषणस्य प्रयोजनमाह–**उपनयादिस्थेति।** पदेषु चरमत्वमन्त्यत्वमित्युक्तौ पदसामान्यमध्ये चरमत्वमित्यर्थः स्यात्। तथा सति उपनयवाक्यस्थस्य इदंपदस्य पदसामान्यमध्ये चरमत्वं नास्ति। तदनन्तरमपि निगमनघटकस्य पदस्य सत्त्वात्। अतः स्वघटकपदेषु इत्युक्तम्। उपनयघटकपदेषु इदंपदमेव अन्तिममिति न उपनयेऽतिव्याप्तिरिति भावः। एवं च स्वघटकपदमध्ये चरमं यत्पदं तद्भिन्नपदार्थविशेष्यकान्वयबोधजनकत्वे सति इति द्वितीयसत्यन्तार्थः।

अन्त्यभिन्नपदे स्वीयमिति विशेषणस्य प्रयोजनमाह–**एवं चेति।** निगमनघटकपदेषु यत् अन्त्यं पदं तद्भिन्नं यत् उपनयस्थं पदं तदर्थविशेष्यकबोधं प्रति उपनयसहकारेण जनके निगमनवाक्ये अतिव्याप्तिवारणाय अन्त्यभिन्ने पदे स्वीयमिति विशेषणम्। तद्विशेषणे दत्ते उपनयस्थ 'इदं' पदे स्वपदग्राह्यनिगमनघटकत्वरूपस्वीयत्वविरहात् नातिव्याप्तिः।

ननु 'अयं' पदमादायैव निगमनत्वपर्यवसानस्य अभिधानात् उपनयसहकारेण बोधकतैव नास्तीति कथमतिव्याप्तिः इत्यतः स्थलान्तरे अतिव्याप्तिमाह–**तादात्म्येन द्रव्यादिसाध्यके** इति। तादात्म्येन द्रव्यसाध्यके 'इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्' इत्यत्र हेतुवाक्यघटक-विभक्त्यन्तपदेषु यदन्त्यं विभक्त्यन्तपदं सत्तापदं तदन्यविभक्त्यन्त-प्रतिज्ञास्थद्रव्यपदार्थविशेष्यकस्वार्थान्वयबोधजनके हेतुवाक्ये अतिव्याप्तिवारणाय अन्त्यभिन्नपदे स्वीयमिति विशेषणम्। तथा सति प्रतिज्ञास्थस्य द्रव्यपदस्य हेतुवाक्यघटकत्वरूपस्वीयत्वविरहात् नातिव्याप्तिरिति भावः। द्रव्यत्वसाध्यके

अत्र स्वत्वपुरस्कारेण लक्ष्यव्यक्तीनां निवेशादननुगम इति प्रतियोगिनि स्वत्वं निवेश्य लक्षणान्तरमाह- **अन्त्यपदवत्त्व** इति। अत्राप्युदाहरणवारकं प्रथमसत्यन्त-मनुषज्यते, द्वितीयसत्यन्तेन वैकल्पिकं सत्यन्तद्वयम्, धूमादित्यादिहेतौ विभक्त्यन्तान्त्यपदाप्रसिद्ध्या एकपदमात्रघटकतत्पदसाधारणस्यान्त्यत्वस्य निर्वचनेऽप्यन्त्यभिन्नविभक्त्यन्तस्वीयपदाप्रसिद्ध्या स्वपदेनान्यस्यैवोपादेयतया स्वीयानन्त्य-पदार्थविशेष्यकशाब्दबोधाजनकं यत्तदन्यत्वसत्त्वादतिव्याप्तिरतोऽन्त्यपदवत्त्वे सतीति।

---

'इदं द्रव्यत्ववत्' इत्येव प्रतिज्ञा। तदेकदेशद्रव्यत्वे एव हेत्वर्थान्वयः। द्रव्यत्वपदं च न विभक्त्यन्तम्। अतः तादात्म्यसम्बन्धानुसरणम्। एतल्लक्षणे च स्वघटकविभक्त्यन्तपदप्रागभावसमानकालीनस्वघटक-विभक्त्यन्तपदभिन्नस्वघटकविभक्त्यन्तत्वप्रवेशात् 'धूमात्' इति एकपदहेतुवारणात् पदद्वयघटितहेत्वनुसरणम्। **हेताविति।** न च-स्वाघटकपदसहकारेण स्वार्थमुख्यविशेष्यकबोधनिवेशात् न दोषः इति-वाच्यम्। एवमपि उपनयेऽतिव्याप्तेः।अन्त्यभूत 'इदं' पदान्यनिगमन-सहकारेण स्वार्थमुख्यविशेष्यकबोधजनकत्वात्। **स्वीयत्वमिति।** यद्यपि स्वीयाद्यपदार्थविशेष्यकान्वयबोधजनकत्वोक्तावपि उपनयादिव्युदासः सम्भवति, तथापि 'धूमात् आलोकवान्' इत्यादिप्रतिज्ञासु अव्याप्तेः तत्परित्यागः।

**अत्र स्वत्वपुरस्कारेणेति।** प्रथमलक्षणेऽस्मिन् स्वीयमिति स्वत्वपुरस्कारेण लक्ष्यप्रतिज्ञाव्यक्तीनां निवेशे स्वत्वस्य तत्तद्व्यक्ति-विश्रान्ततया सर्वप्रतिज्ञाव्यक्त्यनुगतमिदं लक्षणं न भवेत् इत्यालोच्य प्रतियोगिनि स्वत्वं निवेश्य लक्षणान्तरमाह- **अन्त्यपदवत्त्वे सति** इत्यादिना। **अत्रापीति।** अस्मिन् द्वितीयलक्षणे प्रथमलक्षणस्थ-मितरान्वितस्वार्थबोधकत्वे सतीति प्रथमसत्यन्तमनुषञ्जनीयम्। अन्यथा 'यो यो धूमवान् स स वह्निमान्' इत्युदाहरणवाक्ये अन्त्यपदवत्त्वे सति स्वीयानन्त्ययत्पदार्थविशेष्यकबोधजनके स्वीयानन्त्यपदार्थविशेष्यकबोधाजनकं यत् तदन्यत्वसत्त्वात् न्यायावयवत्वसत्त्वाच्च अतिव्याप्तिः स्यात्। प्रथमसत्यन्तानुषङ्गे तु स्वभिन्नावयवार्थान्वितस्वार्थबोधकत्वमुदाहरणे नास्तीति नातिव्याप्तिरिति भावः।

अन्त्यपदवत्त्वं च स्वघटकपदोत्तरपदाघटकं यत्स्वं तदन्यत्वं न तु स्वघटक-पदोत्तरपदघटितत्वं, लक्ष्यभूतप्रतिज्ञाव्यक्तीनां स्वपदेनोपादेयतया अननुगमतादवस्थ्यात् अन्त्यपदवतो हेतुविशेष्योपनयनिगमनयोस्तद्वतोस्स्वीयानन्त्यपदार्थविशेष्यकबोधजनक-योस्तदन्यत्वासत्त्वान्नातिव्याप्तिः। न चोपनयघटकानन्त्यपदार्थहेतुमदादिविशेष्यकबोधजनक-

---

अन्त्यपदवत्त्वे सति इत्यस्य प्रयोजनमाह–**धूमादिति।** हेतौ विभक्त्यन्तस्य अन्त्यपदस्य अप्रसिद्ध्या स्वपदेन तादृशहेतुवाक्यस्य ग्रहीतुमशक्यतया अनेकपदघटितहेतुवाक्यमुपनयादिवाक्यं वा स्वपदेन ग्राह्यम्। तदीयानन्त्यपदार्थविशेष्यकबोधाजनकं यत् तदन्यत्वं धूमादिति एकपदात्मके हेतावस्तीति अत्र अतिव्याप्तिः। तद्वारणाय ***अन्त्यपदवत्त्वे सति*** इत्युक्तम्। तदुक्तौ तु स्वघटकपदोत्तराघटकं यत् स्वं तदन्यत्वमन्त्यपदवत्त्वम्। स्वपदेन धूमात् इत्यस्य उपादाने स्वघटकं पदं तदेव। तदुत्तरं पदमुदाहरणघटकं पदम्। तदघटकमेव धूमादिति वाक्यं भवति। तदन्यत्वं तत्र नास्ति इति नातिव्याप्तिः।

***एकपदमात्रघटकेति।*** स्वघटकपदप्रागभावसमानकालीनस्वघटकपदत्वम् अन्त्यत्वमिति भावः। ***स्वपदेन अन्यस्यैव उपादेयतया*** इति। उपनयादेः उपादेयतया इत्यर्थः। ***स्वघटकपदोत्तरेति। स्वं-*** धूमात् इत्यादिपदम्। तद्घटकमपि तदेव। तदुत्तरं पदमुदाहरणादिघटकं पदम्। तदविषयकप्रतीतिविषयः धूमादिति वाक्यम्। तदन्यत्वं तत्र नास्तीति नातिव्याप्तिः।

अघटकमित्यस्य तदविषयकप्रतीतिविषयः इत्यर्थः। प्रतिज्ञायां च स्वघटकपर्वतपदोत्तरं वह्निमान् इति पदं तदविषयकप्रतीतिविषयत्वं प्रतिज्ञायां नास्तीति स्वघटकपदोत्तराघटकं यत् स्वं तदन्यत्वसत्त्वात् लक्षणसमन्वयः।

अनुयोगिनि स्वत्वं निवेश्य अन्त्यपदवत्त्वपरिष्कारे दोषमाह–***न तु स्वघटकेति।*** स्वीयानन्त्यपदार्थेत्यादिविशेषणस्य प्रयोजनमाह–***अन्त्यपदवतः*** इत्यादिना। तथा च स्वभिन्नावयवार्थान्वितस्वार्थबोधकत्वे सति अन्त्यपदवत्त्वे सति न्यायावयवत्वं प्रतिज्ञात्वम् इत्युक्तौ 'इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्' इत्यादौ विभक्त्यन्तपदद्वयवति हेतुवाक्ये

तदेकदेशमतुवन्तादेर्भेदस्य तद्घटितसमुदायात्मकोपनयादावसत्त्वात्तादृशबोधजनकं स्वं नोपनयादिकमित्यतिव्याप्तिरिति वाच्यम्। तादृशबोधजनकत्वं यादृशसमुदायावृत्ति तादृशसमुदायरूपस्वभिन्नत्वनिवेशे वाऽनतिप्रसङ्गात्। उपनयाद्येकदेशवृत्तितादृशबोधजनकताया इदमाद्यन्तपदघटितसमुदायात्मकोपनयावृत्तितया तदन्तपदसमुदायात्मकोपनयादेस्तादृश-समुदायात्मकत्वेन तद्भिन्नत्वाभावात्। तादृशसमुदायभिन्नत्वं च तद्भेदानुयोगितावच्छेदका-वयवतावच्छेदकरूपवत्त्वमतस्समुदायघटकप्रत्येकसकलभागेषु समुदायभेदसत्त्वेऽपि नातिप्रसङ्गः। ईदृश्येव रीतिरवयवान्तरभेदघटितलक्षणान्तरेऽपि बोध्या।

---

अन्त्यपदवत्त्वसत्त्वात् प्रतिज्ञास्थपदार्थान्वितस्वार्थबोधकत्वसत्त्वाच्च अतिव्याप्तिः। एवं पदद्वयवति उपनये निगमने च अन्त्यपदवत्त्वसत्त्वात् अतिव्याप्तिः। तद्वारणाय स्वीयानन्त्यपदार्थेत्यादिदलोपादानम्। तदुपादाने च पदद्वयघटितहेतौ स्वघटकं यत् अन्त्यपदभिन्नं पदं तदर्थविशेष्यकबोधजनकत्वासत्त्वेन, निगमने स्वघटकं यत् अन्त्यपदभिन्नं पदं तदर्थविशेष्यकबोधजनकत्वासत्त्वेन तादृशबोधाजनकत्वनियमात् तादृशबोधाजनकं यत् तदन्यत्वविरहात् नातिव्याप्तिरिति भावः।

अत्र स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधजनकत्वावच्छिन्नभेदो वा तादृशजनकसमुदायभेदो वा, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदानङ्गीकारात् न निवेशयितुं शक्यः इत्याशयेन शङ्कते–***न च उपनयघटकेत्यादिना।*** 'वह्निव्याप्यधूमावॉश्चायम्' इत्याकारकोपनयघटकं यत् अनन्त्यं पदं 'धूमवान्' इति पदं तदर्थविशेष्यकबोधजनकं धूमवान् इति पदमेव। तद्भिन्नत्वं धूमवत्पदघटितसमुदायात्मके उपनये नास्ति। व्यासज्यवृत्ति-समुदायत्वावच्छिन्नानुयोगिताकस्य तदेकदेशभेदस्य अनङ्गीकारात्। तथा च स्वपदेन उपनयस्य ग्रहीतुमशक्यतया अन्यद्गृहीत्वा तदन्यत्वसत्त्वात् अतिव्याप्तिरिति भावः।

***स्वं नोपनयादिकमिति।*** स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनक-स्वाप्रसिद्धेरिति भावः।

समाधत्ते–***तादृशबोधजनकत्वमिति।*** स्वीयानन्त्यपदार्थविशेष्यक-बोधजनकत्वं यादृशसमुदायावृत्ति तादृशसमुदायरूपस्वभिन्नत्वं निवेश्यते। अतो नातिव्याप्तिः।

**प्रतिज्ञाहेत्वोरुपनयनिगमनयोः स्वार्थौ परस्परमन्वितौ। न तूदाहरणस्य केनापि। पदं विभक्त्यन्तम्। तेन निगमने नातिव्याप्तिः।**

---

तस्मात्पृथिवीतरेभ्यो भिद्यत इत्यादिनिगमने स्वघटकविभक्त्यन्तपदमध्ये पदन्त्यं धातुपदं तदन्याख्यातार्थविशेष्यकबोधजनकतया अतिव्याप्तिं अन्त्यभिन्नपदस्य विभक्त्यन्तरूपताविवक्षणेन वारयति– ***पदमिति। निगमन*** इति। निगमनपदमपि तस्मात्पृथिवीतरेभ्यो भिद्यत इत्यादिनिगमनविशेषपरम्, अन्त्यपदशरीरे वृत्तिमत्त्वरूप-पदत्वनिवेशे पुनरुपनयनिगमनयोरेवातिव्याप्तिस्स्यात्। उपनयघटकेदंपदनिगमनघटक-मतुप्पदयोरन्ते तद्घटकविभक्तिसत्त्वेनान्त्यभिन्नत्वादतः तत्र विभक्त्यन्तपदमेव निवेश्यमिति भाव इति केचिद्व्याचक्षते। तन्न मनोरमम्। तथाहि– स्वघटक-

---

उपनयघटकानन्त्यपदार्थविशेष्यकबोधजनकत्वमुपनयैकदेशे 'धूमवान्' इति समुदाये एवास्ति; न तु 'वह्निव्याप्यधूमवांश्च अयम्' इति उपनयात्मके समुदाये अस्ति। अतः यादृशसमुदायपदेन उपनयात्मकं समुदायं गृहीत्वा तदवृत्तित्वमुपनयघटकानन्त्यपदार्थविशेष्यक-बोधजनकत्वेऽस्तीति तादृशसमुदायरूपस्वभिन्नत्वमुपनये नास्ति इति नातिव्याप्तिः इति भावः।

ननु स्वपदेन उपनयात्मकस्य समुदायस्य ग्रहणे तदन्यत्वं तादृशसमुदायघटकेषु प्रत्येकपदेषु वर्तत इति तादृशपदानतिरिक्ते उपनयेऽतिव्याप्तिः दूवरित्याशङ्क्य आह–***तादृशसमुदायभिन्नत्वं चेति।*** तथा च स्वीयानन्त्यपदार्थविशेष्यकबोधजनकत्वं यादृशसमुदायावृत्ति तादृशसमुदायभेदानुयोगितावच्छेदकावयवतावच्छेदकरूपवत्त्वं विवक्षितम्। अवयवतावच्छेदकं रूपम् उपनयत्वम्। तत् उपनयत्वावच्छिन्न-भेदानुयोगितावच्छेदकं न भवतीति नोपनयेऽतिव्याप्तिरिति भावः।

***अवयवान्तरभेदघटितेति।*** हेत्वन्यत्व–उदारहणान्यत्वघटित-लक्षणान्तरेऽपीत्यर्थः।

सम्प्रदायमतमुपन्यस्यति ***तस्मात् पृथिवी*** इत्यादिना ***केचिद्व्याचक्षते*** इत्यन्तेन। 'पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यादि न्यायान्तर्गते 'तस्मात् पृथिवी इतरेभ्यो भिद्यते' इति निगमने प्रथमलक्षणे स्वीयं

विभक्त्यन्तपदमध्ये यदन्त्यमित्यस्य कोऽर्थः, स्वघटकविभक्त्यन्तपद-प्रागभावासमानकालीनविभक्त्यन्तपदमित्यर्थ इति चेत्, उपनयादिस्थेदमादिपदस्य

---

यदन्त्यभिन्नं पदमित्यादि द्वितीयसत्यन्तं वर्तते। तादृशनिगमनघटक-विभक्त्यन्तपदमध्ये यदन्त्यं धातुपदं तदन्यतिङ्रूपाख्यातार्थविशेष्यक-बोधजनकत्वसत्त्वात्। अतः अतिव्याप्तिः। तद्वारणाय अन्त्यभिन्नं पदमित्यत्र पदशब्देन विभक्त्यन्तं विवक्षितमित्याह दीधितौ ***पदं विभक्त्यन्तमिति।*** "तेन निगमने नातिव्याप्तिः" इति दीधितौ तस्मात् पृथिवी इतरेभ्यो भिद्यते इति निगमनविशेषः निगमनपदेन विवक्षितः। आख्यातस्य च अन्त्यं यत् धातुपदं तद्भिन्नत्वसत्त्वेऽपि विभक्त्यन्तत्वविरहात् आख्यातार्थविशेष्यकबोधजनकत्वसत्त्वेऽपि आख्यातान्तधात्वर्थविशेष्यक-बोधजनकत्वविरहात् इति नातिव्याप्तिः।

स्वघटकविभक्त्यन्तपदमध्ये यदन्त्यमित्यत्र अन्त्यत्वशरीरप्रविष्टपदे विभक्त्यन्तत्वानिवेशे वृत्तिमत्त्वरूपपदत्वमात्रविवक्षायामुपनयनिगमनयोः पुनरपि अतिव्याप्तिः स्यात्। उपनयघटकपदमध्ये यदन्त्यं वृत्तिमत् 'इदं' पदोत्तरविभक्तिरूपम्। तद्भिन्नं यत् 'इदं पदं' तदर्थविशेष्यकबोधजनकत्व-सत्त्वात् उपनये अतिव्याप्तिः।

एवं 'तस्माद्वह्निमान्' इति निगमनघटकपदमध्ये यदन्त्यं पदं वह्निमत्पदोत्तरविभक्तिरूपम्। तद्भिन्नं यत् मतुबन्तं पदम्। तदर्थविशेष्यक-बोधजनकत्वसत्त्वात् निगमनेऽतिव्याप्तिः। अतः अन्त्यत्वशरीरेऽपि पदशब्देन विभक्त्यन्तमेव ग्राह्यम्। विभक्तेस्तु विभक्त्यन्तत्वं नास्ति इति विशेषः। तथा च स्वघटकविभक्त्यन्तपदमध्ये यदन्त्यं विभक्त्यन्तं पदं तद्भिन्नं यत् स्वघटकं विभक्त्यन्तं तदर्थविशेष्यक-अन्वयबोधजनकत्वे सतीत्यर्थः इति प्रथमलक्षणस्थद्वितीयसत्यन्तं केचिद्व्याचक्षते इति भावः। 'तस्माद्वह्निमान्' इत्यत्र स्वघटकविभक्त्यन्तपदमध्ये यत् अन्त्यं मतुप्-पदं तदन्यपदार्थविशेष्यकबोधाजनकत्वादाह- ***निगमनविशेषपदमिति।*** एतच्च प्रयोजनं स्वघटकविभक्त्यन्तपदमध्ये इत्यत्र पदस्य विभक्त्यन्तत्वाविवक्षणे न घटते इत्यतः तत्रापि तत् विवक्षति-***अन्त्यपदशरीरे*** इति। ***अन्ते***

विभक्तिरूपपदप्रागभावसमानकालीनतया तस्यान्तत्वनिर्वाहाय प्रथमं विभक्त्यन्तत्वं विशेषणमस्तु। चरमविभक्त्यन्तत्वविशेषणमनर्थकम्, तद्धेयमिति चेत् तर्हि अनन्त्यत्वं स्वीयविभक्त्यन्तप्रागभावसमानकालीनत्वपर्यवसितं भिन्नभिन्नत्वनिवेशस्य वैयर्थ्यात्, एवं च तस्माद्विद्यत इत्यादिनिगमनस्थाख्यातपदस्यानन्त्यत्वमेव नास्तीति किमनन्त्यपदे

---

इति। तथा च अन्त्यभूत 'सुप्' पदभिन्न 'इदं'पदार्थविशेष्यक–बोधजनकत्वात् अतिव्याप्तिरित्यर्थः।

तेषां व्याख्यानं खण्डयति - ***तन्न मनोरमम्*** इत्यादिना। स्वघटकविभक्त्यन्तपदमध्ये यदन्त्यम् इत्यस्य स्वघटकविभक्त्यन्तपद–प्रागभावासमानकालीनविभक्त्यन्तपदमिति यद्यर्थः, तदा प्रथमं विभक्त्यन्तत्वं यदि न निवेश्यते, तर्हि उपनयस्थस्य इदंपदस्य उपनयघटकविभक्ति–रूपपदप्रागभावसमानकालीनतया तदसमानकालीनत्वरूपम् अन्त्यत्वं नास्तीति तन्निर्वाहाय प्रथमं विभक्त्यन्तत्वं पदविशेषणमस्तु। तथा सति उपनयघटकं यत् विभक्त्यन्तं पदं तत्प्रागभावासमानकालीनत्वस्य इदंपदे सत्त्वात् तस्य अन्त्यत्वनिर्वाहः। परं तु द्वितीयं विभक्त्यन्तत्वविशेषणमनर्थकम् इति भावः।

***उपनयस्थेति।*** स्वघटकविभक्त्यन्तपदप्रागभावासमानकालीन–विभक्त्यन्तपदभिन्नविभक्त्यन्तपदार्थविशेष्यकान्वयबोधाजनकत्वे सतीति पर्यवसितम्। तत्र अन्त्यपदयोः विभक्त्यन्तरूपयोः उपादानेऽपि स्वघटकपदप्रागभावासमानकालीनत्वरूपान्त्यत्वघटकपदं विभक्त्यन्तमेव निवेश्यम्। अन्यथा उपनयनिगमनयोः तद्घटकीभूत 'इदं'पद–'मतुप्' पदयोः तद्घटकचरम'सुप्' विभक्तिरूपपदप्रागभावसमानकालीनतया तदन्यत्वविरहेण तादृशान्यत्वाश्रयपदवत्तदुत्तरकालीनवाक्यान्तरघटकविभक्त्यन्तपदभिन्नतया विभक्त्यन्ततया च अतिव्याप्तिवारणासम्भवात्। तत्पदस्य विभक्त्यन्तरूपस्य उपादाने च अन्त्यपदभिन्नपदयोः विभक्त्यन्तत्वानुधावनं निष्फलम्। उपनयनिगमनघटकयोः 'इदं'पद–'मतुप्'पदयोः स्वघटकविभक्त्यन्तपद–प्रागभावासमानकालीनतया अन्त्यभिन्नत्वासम्भवेन अतिव्याप्त्यभावात् इत्यर्थः।

तर्हि चरमविभक्त्यन्तत्वविशेषणमनर्थकत्वात् त्याज्यमिति शङ्कते–***तत्***

विभक्त्यन्तत्वनिवेशनेनेति। वस्तुतस्तु तस्मान्नेतराणीत्यादौ निगमने विभक्त्यन्तेतरपद-प्रागभावसमानकालीननञ्पदार्थविशेष्यकशाब्दबोधजनकेऽतिव्याप्तिरेव लक्षणस्थपदस्य विभक्त्यन्तपरतया वारिता।

अथ नञ्पदस्यापि प्रातिपदिकत्वेन विभक्त्यन्ततया विभक्त्यन्तत्वविशेषणेन दुर्वारता। न च निपातस्य विभक्तिप्रकृतित्वं न स्वीक्रियते, तदर्थेन विभक्त्यर्थानन्वयात्, स्वराद्यव्ययार्थे च अनुसन्धीयमानलुप्तविभक्त्यर्थान्वयेन तादृशतादृशाव्ययोत्तरमेव विभक्तिस्वीकारस्यावश्यकत्वात्, नञोऽसुबन्तत्वेऽपि नञ्तत्पुरुषविधायकसूत्रसामर्थ्यादेव तेन सह समासो भविष्यतीति वाच्यम्।

---

***हेयमिति चेदिति।*** समाधत्ते–***तर्हि अनन्त्यत्वमिति।*** स्वीयं यदन्त्यभिन्नं पदमित्यत्र अन्त्यभिन्नत्वं स्वघटकविभक्त्यन्तपदप्रागभावसमानकालीनत्व-पर्यवसितम्। स्वघटकविभक्त्यन्तपदप्रागभावसमानकालीनभिन्नभिन्नत्वरूपस्य अनन्त्यत्वस्य तत्रैव पर्यवसानात् भिन्नभिन्नत्वनिवेशस्य वैयर्थ्यात्। एवं च तस्माद्भिद्यते इति निगमनवाक्यस्थस्य आख्यातस्य तादृशनिगमन-घटकविभक्त्यन्तपदप्रागभावसमानकालीनत्वं नास्तीति अनन्त्यत्वविरहात् तादृशाख्यातार्थविशेष्यकबोधजनकत्वमादाय पूर्वमुक्तायाः अतिव्याप्तेरप्रसक्त्या तद्वारणफलकमन्त्यभिन्ने पदे विभक्त्यन्तत्वविशेषणं व्यर्थं स्यादिति भावः।

अन्त्यभिन्नपदस्य विभक्त्यन्तरूपस्य विवक्षायां बीजं स्वयमाह–***वस्तुतस्तु*** इति। 'पृथिवी इतरेभ्यो भिद्यते' इत्यादिन्यायान्तर्गते 'तस्मान्नेतराणि' इति निगमनवाक्ये स्वघटकं यत् विभक्त्यन्तमितरपदं तत्प्रागभाव-समानकालीनं यत् नञ्पदं तदर्थविशेष्यकशाब्दबोधजनकत्वमस्तीति अतिव्याप्तिः। तद्वारणाय अन्त्यभिन्ने पदे विभक्त्यन्तत्वनिवेशः। नञ्पदस्य विभक्त्यन्तत्वविरहेण तदर्थविशेष्यकबोधजनकत्वमादाय नोक्तनिगमने अतिव्याप्तिरिति भावः। ***अथ नञ्पदस्यापीत्यादि।*** 'तस्मान्नेतराणि' इति निगमनस्थस्य नञ्रूपस्य निपातस्य प्रातिपदिकत्वेन विभक्त्यन्तत्वमस्तीति पदे विभक्त्यन्तत्वविशेषणे दत्तेऽपि विभक्त्यन्तेतरपदप्रागभाव-समानकालीनं यत् विभक्त्यन्तं नञ्पदं तदर्थविशेष्यकबोधजनकत्वमस्तीति अतिव्याप्तिः प्रसज्यते।

विभक्तेर्निपातार्थान्वितार्थाबोधकत्वेऽपि निर्विभक्तिकप्रातिपदिकस्यासाधुतया साधुतायै विभक्तेरावश्यकत्वात्। नञोऽसुबन्तत्वेऽपि नञिति तत्पुरुषविधायकसूत्रसामार्थ्येन तेन सह पदान्तरस्य तत्पुरुषसमर्थनेऽपि बहुव्रीह्यव्ययीभावयोरनुपपत्तेश्च। सुबन्तत्वेऽपि समासाप्रविष्टप्रतियोगिपदार्थानुपरागेण नञोऽभावाबोधकतया तत्सापेक्षत्वेनासामर्थ्यान्न तेन सह द्वंद्व इति चेत्- सत्यम्। विभक्तचन्तत्वमत्र शाब्दबोधौपयिकविभक्तिप्रकृतित्वं,

---

न च निपातस्य विभक्त्यन्तत्वं न स्वीक्रियते, निपातार्थेन साकं विभक्त्यर्थस्य अनन्वयात्। स्वरादिरूपं यत् अव्ययं तदर्थे अनुसन्धीयमानायाः लुप्तविभक्तेरर्थस्य अन्वयेन स्वराद्यव्ययोत्तरमेव विभक्तिः स्वीक्रियते। नञादिनिपातार्थस्य तु विभक्त्यर्थेऽनन्वयात् नञः न विभक्त्यन्तत्वम्। नञः विभक्त्यन्तत्वाभावे कथं तेन साकमन्यस्य सुबन्तस्य 'अब्राह्मणः' इत्यादौ समास इति नाशङ्कनीयम्। 'नञ्' इति सूत्रेण तत्पुरुषविधानसामर्थ्यादेव असुबन्तस्यापि नञः सुबन्तेन पदान्तरेण साकं समाससम्भवात् इति वाच्यम्।

निपातार्थे विभक्त्यर्थानन्वयेऽपि विभक्तेः निपातार्थान्वितस्वार्था-बोधकत्वेऽपि निर्विभक्तिकस्य प्रातिपदिकस्य असाधुतया साधुत्वार्थं निपातोत्तरं विभक्तेरावश्यकत्वात्। सूत्रसामर्थ्येन असुबन्तस्यापि नञः तत्पुरुषसमाससमर्थनेऽपि बहुव्रीह्यव्ययीभावसमासयोः असुबन्तस्य नञः अनुपपत्तेश्च इति अथेत्यादिशङ्काग्रन्थाभिप्रायः।

नन्वेवमव्ययानामपि विभक्तिप्रकृतित्वं न स्यात्। तदर्थेनापि विभक्त्यर्थानन्वयात्। तथा च 'स्वः पुरुषार्थः' इत्यादिप्रतिज्ञायामव्याप्तिः। अत आह- ***स्वरादीति। अव्ययीभावयोरिति।*** सुबन्ताव्ययस्यैव अव्ययीभावसमर्थपदत्वात्। न च-अर्थाभावे अव्ययीभावविधानसामर्थ्यात् असुबन्तत्वेऽपि अव्ययीभावो भविष्यतीति नञ्भिन्नाव्ययेन अर्थाभावे अव्ययीभावानुपगमादिति-वाच्यम्। अव्ययं विभक्तीत्यादिसूत्रघटकस्य अव्ययपदस्य एकतया केवलाव्ययसुबन्ताव्ययरूपार्थद्वयासम्भवात्। एवं च अव्ययान्तरेण 'निर्मक्षिकम्' इत्यादौ अव्ययीभावोऽपि सिद्ध्यतीत्यवधेयम्।

पर्वतो वह्निमानित्यादिप्रतिज्ञास्थपर्वतादिपदोत्तरसुब्विभक्तेरर्थविशेषपरताविरहेऽप्यभेदान्वय-बोधोपयोग्याकांक्षनिर्वाहकसमानविभक्तिकतासम्पादकत्वेन शाब्दबोधोपयोगिता नतु निपातोत्तरविभक्तेरिति नातिव्याप्तिः। अघटादिशब्देन यत्र प्रतिज्ञायां घटभिन्नादिरूप-पक्षनिर्देशः तत्र नञादेर्निरुक्तविभक्तयन्तताविरहेऽपि विशेष्यीभूतविशिष्ट-पक्षबोधकाघटादिपदस्य तादृशविभक्तयन्तत्वाल्लक्षणसमन्वयः। यत्तु यादृशपदोत्तरं कदाचिद्विभक्तेः श्रवणं तदेव विभक्तयन्तपदेन विवक्षितम्। दध्यादिपदोत्तरं प्रथमैकवचनाश्रुतावपि द्विवचनादिश्रुतेर्दधि द्रव्यमित्यादिप्रतिज्ञासंग्रह इति। तन्न।

---

ननु नञः सुबन्तत्वोपगमे घटः पटः इतिवत् नञ्च घटश्च इति विग्रहसम्भवात् नघटौ इति द्वन्द्वापत्तिः। अत आह–***असुबन्तत्वेऽपीति।*** नञः प्रतियोगिपदार्थाविशेषिताभावाबोधकतया प्रतियोगिपदार्थस्य समासाघटकपदार्थतया तत्सापेक्षस्य नञः सामार्थ्यविरहात् न नञा सह द्वन्द्वः इति भावः।

समाधत्ते–***सत्यमिति।*** नञः विभक्त्यन्तत्वेऽपि प्रकृतलक्षणघटक-विभक्त्यन्तत्वस्य शाब्दबोधौपयिकविभक्तिप्रकृतित्वरूपतया 'तस्मान्नेतराणि' इत्यादौ नञः शाब्दबोधौपयिकविभक्तिप्रकृतित्वं नास्तीति विवक्षित-विभक्त्यन्तत्वविरहात् नोक्तनिगमने अतिव्याप्तिः।

ननु 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञाघटकपर्वतपदोत्तरविभक्तेः अर्थविशेषपरत्वविरहात् शाब्दबोधौपयिकत्वं नास्तीति पर्वतपदस्य शाब्दबोधौपयिकविभक्तिप्रकृतित्वविरहात् पर्वतपदार्थविशेष्यकबोधजनक-प्रतिज्ञावाक्ये अव्याप्तिः इत्याशङ्क्य पर्वतपदोत्तर 'सु' विभक्तेः अर्थविशेषतात्पर्यविरहेऽपि आकाङ्क्षाघटकतया शाब्दबोधौपयिकत्वमस्ति। पर्वतविशेष्यकवह्निमदभेदान्वयबोधं प्रति वह्निमत्पदोत्तरविभक्तिसजातीय-विभक्तिप्रकृतित्वरूपाकाङ्क्षाज्ञानस्य कारणतया शाब्दबोधौपयिकाकाङ्क्षा-निर्वाहकत्वात् शाब्दबोधोपयोगित्वम्। निपातोत्तरविभक्तेस्तु आकाङ्क्षा-घटकतयापि न शाब्दबोधोपयोगित्वमिति समाधत्ते–***पर्वतो वह्निमान्*** इत्यादीति। ***नातिव्याप्तिरिति।*** 'तस्मान्नेतराणि' इति निगमने प्रतिज्ञालक्षणस्य नातिव्याप्तिरित्यर्थः।

ननु 'अघट'शब्देन यत्र प्रतिज्ञायां घटभिन्नरूपपक्षनिर्देशः 'अघटः

**प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वम्। निगमनवारणायोपस्थापितान्तम्।**

---

पक्षवाचकस्वरादिपदघटितप्रतिज्ञायामव्याप्तेः।

***निगमनवारणायेति।*** इतरान्वितस्वार्थबोधकन्यायावयवत्वमात्रनिवेशे उपनयार्थान्वितस्वार्थबोधकतया निगमनातिव्याप्तिस्स्यात्तद्वारणायेत्यर्थः। यद्यपीतरान्वितस्वार्थबोधकत्वं-

---

वाच्यः ज्ञेयत्वात् इत्यादौ तत्र समासघटकस्य नञः शाब्दबोधौपयिकविभक्त्यन्तत्वविरहात् तादृशनञर्थविशेष्यकशाब्दबोधजनकप्रतिज्ञायामव्याप्तिरित्याशङ्क्य तत्र नञः विभक्त्यन्तत्वाभावेऽपि अघटरूपस्य घटभिन्नत्वविशिष्टपक्षबोधकस्य पदस्य विभक्त्यन्तत्वात् शाब्दबोधौपयिकविशेषणवाचकपदसमानविभक्त्यन्तत्वसत्त्वात् नाव्याप्तिरिति समाधत्ते-***अघटादिशब्देन*** इति।

***'यत्तु'*** इत्यादि। यादृशपदोत्तरं कदाचित् विभक्तेः श्रवणं तदेव विभक्त्यन्तपदमित्यनेन विवक्षितम्। नञ्पदोत्तरं तु कदापि विभक्तिः न श्रूयते। अतः नञ्पदं विभक्त्यन्तपदेन ग्रहीतुं न शक्यत इति 'तस्मान्नेतराणि' इत्यादिनिगमने नातिव्याप्तिः। न च-'दधि द्रव्यम्' इत्यादिप्रतिज्ञायामव्याप्तिः। दधिपदोत्तरं विभक्तेरश्रवणात् तस्य विभक्त्यन्तपदेन ग्रहीतुमशक्यत्वात् इति-वाच्यम्। दधिपदोत्तरं प्रथमैकवचनस्य लुका लुप्तत्वेन अश्रवणेऽपि द्विवचनादेः श्रवणात् तस्यापि विभक्त्यन्तपदेन ग्रहीतुं शक्यत्वात्। अत एवोक्तं-'यादृशपदोत्तरं कदाचित् विभक्तेः श्रवणम्' इत्यत्र ***कदाचिदिति।*** इदं मतं दूषयति-***तन्न*** इति। यत्र अव्ययरूपं स्वःपदं प्रतिज्ञायां घटकं तत्र स्वः रमणीयमिति प्रतिज्ञायां स्वर्गः रमणीयः इत्यर्थबोधिकायामव्याप्तिः। विभक्त्यन्तस्वःपदार्थविशेष्यकशाब्दबोधजनकत्वविरहात्। स्वःपदोत्तरं कदाचिदपि विभक्तेरश्रवणेन स्वःपदस्य विभक्त्यन्तत्वविरहात्।

दीधितौ हेतुलक्षणमाह-***प्रकृतपक्षान्विते*** इति। प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुवाक्यस्य लक्षणम्। प्रकृतपक्षः पर्वतः तदन्वितः स्वार्थः वह्निमत्पदार्थः। तद्बोधकं

निगमनस्येव प्रतिज्ञोपनययोरपि। तथापि विशेषणतयाऽन्वितत्वनिवेशनेन तद्वारण-सम्भवान्निगमनमात्रकथनम्। यद्यपि निगमनसमुदायार्थः पक्ष एवान्वेतीति साध्यान्वितस्वार्थबोधकत्वं निवेश्यापि प्रायशो निगमनवारणसम्भवः। तथापि यत्र साध्यस्य प्रमेयत्वगोत्वाभावादेरेव पक्षता तत्रत्यनिगमनेऽतिव्याप्तिवारणाय

---

पदं वह्निमत्पदम्। तदुपस्थापितेऽर्थे वह्नौ अन्वितः स्वार्थः धूमज्ञानज्ञाप्यत्वरूपः हेतुवाक्यार्थः। तद्बोधकत्वे सति न्यायावयवत्वं धूमात् इति हेतुवाक्येऽस्तीति लक्षणसमन्वयः।

अत्र उपस्थापितान्तानिवेशे किञ्चिदर्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वमित्युक्तौ 'तथा चायम्' इति उपनयार्थे वह्निव्याप्यधूमवत्पर्वते अन्वितः यः स्वार्थः तस्माद्वह्निमान् इति निगमनार्थः। तद्बोधकत्वं निगमनेऽस्तीति अतिव्याप्तिः। तद्वारणाय उपस्थापितान्तविशेषणम्। निगमनार्थस्य उपनयार्थपक्षान्वितत्वेऽपि पक्षान्वितार्थान्वितत्वं नास्तीति नातिव्याप्तिः।

शङ्कते गादाधर्याम् ***यद्यपि इतरान्विते*** इति। उपस्थापितान्तमनिवेश्य इतरान्वितस्वार्थबोधकत्वमात्रोक्तौ निगमने इव प्रतिज्ञोपनययोरपि अतिव्याप्तिः वक्तुं शक्यते। प्रतिज्ञायाः हेत्वर्थान्वितस्वार्थबोधकत्वात् उपनयस्य निगमनार्थान्वितस्वार्थबोधकत्वाच्च। तथा च निगमनमात्रे अतिव्याप्ति-कथनमयुक्तम्। तथापि इतरत्र विशेषणतया अन्वितः यः स्वार्थः तद्बोधकत्वोक्तौ प्रतिज्ञोपनययोः अतिव्याप्तिः न सम्भवति। प्रतिज्ञापदार्थस्य हेत्वर्थं प्रति विशेष्यतया उपनयघटकपदार्थस्य निगमनार्थं प्रति विशेष्यतया च विशेष्यतया इतरान्वितार्थबोधकत्वमेव प्रतिज्ञानिगमनयोरस्ति, न तु विशेषणतया इतरान्वितार्थबोधकत्वमिति तयोरतिव्याप्तिः न सम्भवति। हेत्वर्थस्य तु प्रतिज्ञार्थे विशेषणतया अन्वयात् हेतौ लक्षणसमन्वयः। निगमनार्थस्य उपनयघटक 'इदं' पदार्थे विशेषणतया अन्वयात् विशेषणतया इतरान्वितस्वार्थबोधकत्वमस्तीति निगमनेऽतिव्याप्तिप्रसक्तिरिति भावः।

पुनः शङ्कते – ***यद्यपि निगमने*** इति। निगमनवाक्यसमुदायार्थः

पक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितत्वनिवेशनम्। पक्षान्वितस्वार्थबोधकत्वं च पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितस्वार्थविषयताप्रयोजकत्वम्। यथाश्रुते उपनयस्थपक्षवाचकेदम्पदस्य वस्तुगत्या अभेदेन पक्षसंस्पृष्टो यः पक्षस्तद्बोधकत्वेन, पाषाणमयः पर्वत इत्यादिवाक्यात् पाषाणमयत्वादिरूपेण पक्षतावच्छेदकावच्छिन्नपक्ष-संस्पृष्टतया प्रतीयमानो यः पक्षतावच्छेदकावच्छिन्नस्तद्बोधकत्वेन च, तदुपस्थापि-तार्थान्वितस्वार्थबोधके निगमनेऽतिव्याप्तेरवारणात्। तादृशपदोपस्थापितार्थान्वितस्वार्थबोधकत्वं

---

धूमज्ञानज्ञाप्यवह्निमद्रूपः उपनयस्थ 'इदं'पदार्थे पक्षे एव अन्वेतीति निगमनस्य पक्षान्वितस्वार्थबोधकत्वसत्त्वेऽपि साध्यान्वितस्वार्थबोधकत्वं नास्तीति लक्षणे साध्यान्वितस्वार्थबोधकत्वं निवेश्यापि निगमनेऽतिव्याप्तिवारणं शक्यम्। तथा च किमर्थं गुरुभूतोपस्थापितान्तविशेषणनिवेशनमिति शङ्कितुः आशयः। वक्ष्यमाणनिगमने अतिव्याप्तिवारणमशक्यमित्याशयेन प्रायशः इत्युक्तम्। समाधत्ते–***तथापीति।*** साध्यान्वितस्वार्थबोधकत्वनिवेशनेन 'पर्वतो वह्निमान्' इत्यादिन्यायान्तर्गतनिगमनेऽतिव्याप्तेः वारणेऽपि यत्र 'साध्यपक्षयोः ऐक्यं यथा 'प्रमेयत्वं प्रमेयम्', 'गोत्वाभावः गोत्वाभाववान्' इत्यादौ तत्रत्यनिगमनवाक्यार्थस्य उपनयस्थ'इदं'पदार्थपक्षान्वितस्वार्थबोधकत्वे तदभिन्नसाध्यान्वितस्वार्थबोधकत्वमपि अस्तीति तत्रत्यनिगमनेऽतिव्याप्तिः। तद्वारणाय उपस्थापितान्तनिवेशनम्। तत्रत्यनिगमने पक्षान्वितस्वार्थबोधकत्व-सत्त्वेऽपि पक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकत्वं नास्तीति नातिव्याप्तिरिति भावः।

'पक्षान्वितस्वार्थबोधकत्वमित्यस्य पक्षेऽन्वितः यः स्वार्थः तद्बोधकत्वमिति यथाश्रुतार्थविवक्षायामुपनयस्थस्य पक्षवाचकस्य 'इदं' पदस्य वस्तुतः अभेदेन पक्षान्वितः यः पक्षः तद्बोधकत्वेन तदुपस्थापितार्था-न्वितार्थबोधके निगमने अतिव्याप्तिः प्रसज्यते। तद्वारणाय पक्षान्वितत्वेन प्रतीयमानः यः स्वार्थः इति निवेशेऽपि 'पाषाणमयः पर्वतः' इति उदासीनवाक्यात् पक्षे पर्वतपदार्थे अभेदसम्बन्धेन अन्वितत्वेन प्रतीयमानः यः पाषाणमयपदार्थः तद्बोधकपदोपस्थापितार्थान्वितस्वार्थबोधके निगमनेऽतिव्याप्तिर्दुर्वारा। तद्वारणाय पक्षतावच्छेदकावच्छिन्नविषयतानिरूपित-स्वार्थविषयताप्रयोजकत्वं पक्षान्वितस्वार्थबोधकत्वमिति विवक्षणीयम्।

च तादृशपदप्रयोज्यविषयतानिरूपितस्वप्रयोज्यस्वार्थविषयताकत्वम्। यथाश्रुते निगमनार्थान्वयिन एव पक्षतावच्छेदकावच्छिन्नस्य पर्वतो नीलपर्वत इत्यादिवाक्यस्थ-पक्षतावच्छेदकावच्छिन्नादिविषयतानिरूपितविषयताप्रयोजकनीलपर्वतपदोपस्थाप्यत्वेन निगमनातिव्याप्तेर्दुर्वारत्वात्। पक्षतावच्छेदकावच्छिन्नविषयतानिरूपिता या विषयता तन्निरूपितविषयताप्रयोजकत्वं फलितार्थः। पक्षतावच्छेदकावच्छिन्नत्वानिवेशे व्याप्यवत्त्वा-वच्छिन्ना यां पक्षविषयता तन्निरूपितोपनयस्थेदम्पदप्रयोज्यविषयतानिरूपितविषयता-प्रयोजकत्वमादाय निगमन एवातिव्याप्तिस्स्यादिति तन्निवेशः।

---

उपनयस्थ'इदं'पदस्य पक्षतावच्छेदकावच्छिन्नविषयताप्रयोजकत्वेऽपि तदवच्छिन्नविषयतानिरूपितविषयताप्रयोजकत्वं नास्तीति न तदर्थान्वित-स्वार्थबोधके निगमनेऽतिव्याप्तिः।

**तादृशपदोपस्थापितेति।** प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वित-स्वार्थबोधकत्वमित्यत्र पदोपस्थापितार्थान्वितस्वार्थबोधकत्वमित्यस्य यथाश्रुतार्थस्वीकारे 'तस्माद्वह्निमान्' इति निगमनार्थान्वयिनः पर्वतत्वावच्छिन्नस्य 'पर्वतो नीलपर्वतः' इति उदासीनवाक्यस्थं यत् पर्वतत्वावच्छिन्नविषयता-निरूपितविषयताप्रयोजकनीलपर्वतपदं तदुपस्थाप्यत्वेन पक्षतावच्छेदकावच्छिन्न-विषयतानिरूपितविषयताप्रयोजकं यत् नीलपर्वतपदं तदुपस्थापितः यः अर्थः पर्वतत्वावच्छिन्नः तदन्वितस्वार्थबोधकत्वं 'तस्माद्वह्निमान्' इति निगमनवाक्येऽस्तीति अतिव्याप्तिः स्यात्। अतः तादृशपदोप-स्थापितार्थान्वितस्वार्थबोधकत्वमित्यस्य तादृशपदप्रयोज्यविषयतानिरूपिता या स्वप्रयोज्या स्वार्थनिष्ठा विषयता तत्कत्वमित्यर्थः विवक्षणीयः। तथा सति 'तस्माद्वह्निमान्' इति निगमनप्रयोज्यायाः निगमनार्थवह्निमन्निष्ठायाः विषयतायाः वस्तुतः नीलपर्वतपदार्थनिष्ठविषयतानिरूपितत्वेऽपि नीलपर्वतपदप्रयोज्यविषयतानिरूपितत्वं नास्ति। किन्तु उपनयस्थ'इदं'पद-प्रयोज्यविषयतानिरूपितत्वमेव अस्ति। अतः निगमने नातिव्याप्तिरिति भावः।

पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितस्वार्थविषयताप्रयोजक-पदप्रयोज्यविषयतानिरूपितस्वप्रयोज्यस्वार्थविषयताकत्वपर्यन्तनिवेशनं शिरोवेष्टनेन नासिकास्पर्शमनुकरोतीत्याशयेन फलितार्थमाह–***पक्षतावच्छेदकावच्छिन्नेति।*** तथा

अथ तन्निवेशेऽपि पक्षतावच्छेदकावच्छिन्ना या उपनयस्थेदम्पदप्रयोज्यविषयता तन्निरूपितनिगमनार्थीविषयतानिरूपिता उपनयार्थस्य विशेष्यतैवेत्युपनयेऽतिव्याप्तिः। न च चरमविषयता प्रकारत्वरूपा विवक्षणीया अतो नायमतिव्याप्तिप्रसङ्ग इति वाच्यम्। एवं सति प्रमेयत्वमभिधेयं प्रमेयत्वादित्यत्र पक्षान्वितपञ्चम्यर्थे

---

च प्रकृतपक्षतावच्छेदकावच्छिन्नविषयतानिरूपितविषयतानिरूपितविषयता–प्रयोजकत्वे सति न्यायावयवत्वं हेतुवाक्यस्य लक्षणम्। वह्निमत्त्वावच्छिन्नविषयता–पर्वतत्वावच्छिन्नविषयतानिरूपिता या तन्निरूपिता–या धूमज्ञानज्ञाप्यत्वनिष्ठा विषयता तत्प्रयोजकत्वं धूमादिति हेतुवाक्येऽस्तीति लक्षणसमन्वयः। निगमने उपनयस्थ 'इदं'पदप्रयोज्य–धूमज्ञानज्ञाप्यवह्निमत्त्वावच्छिन्नविषयता पर्वतत्वावच्छिन्नविषयतानिरुपिता या तत्प्रयोजकत्वसत्त्वेऽपि तादृशवह्निमत्त्वावच्छिन्नविषयतानिरूपितविषयता–प्रयोजकत्वं नास्तीति नातिव्याप्तिरिति भावः।

विषयतायां पक्षतावच्छेदकावच्छिन्नत्वनिवेशस्य प्रयोजनमाह–***पक्षतावच्छेदकावच्छिन्नत्वनिवेशे*** इति। पक्षतावच्छेदकावच्छिन्नत्वमनिवेश्य पक्षनिष्ठविषयतेत्यादिनिवेशे 'तस्माद्वह्निमान्' इति निगमने अतिव्याप्तिः। व्याप्यवत्त्वावच्छिन्ना या पर्वतनिष्ठा विषयता तन्निरूपिता या उपनयस्थ'इदं'पदप्रयोज्या विषयता तन्निरूपिता या वह्निमत्त्वावच्छिन्ना विषयता तत्प्रयोजकत्वं 'तस्माद्वह्निमान्' इति निगमनेऽस्ति इति अतिव्याप्तिः। पक्षतावच्छेदकावच्छिन्नत्वनिवेशे तु उपनयस्थपदप्रयोज्य–व्याप्यवत्त्वावच्छिन्नविषयता ग्रहीतुं न शक्यत इति न तामादाय अतिव्याप्तिरिति भावः।

एवं निवेशेऽपि शङ्कते–***अथ तन्निवेशेऽपीति।*** पक्षतावच्छेदका–वच्छिन्नविषयतानिवेशेऽपि उपनयेऽतिव्याप्तिः। तथा हि–'वह्निव्याप्यधूमवान् अयम्' इति उपनयवाक्यस्थ'इदं'पदप्रयोज्या या पर्वतत्वरूपपक्षता–वच्छेदकावच्छिन्ना विषयता तन्निरूपिता या निगमनार्थीनिष्ठा विषयता तन्निरूपिता या उपनयार्थीनिष्ठा विशेष्यतारूपविषयता तत्प्रयोजकत्व–मुपनयेऽस्तीति अतिव्याप्तिरिति भावः।

***न च चरमविषयतेति।*** अन्तिमविषयतापदेन प्रकारतारूपविषयता

विशेष्यतयाऽन्वितं साध्यरूपार्थमादाय प्रतिज्ञातिप्रसङ्गाप्रसक्तेः प्रमेयत्वमभिधेय-मित्याद्यग्रिमग्रन्थानुत्थानात्। एवं प्रमेयत्वमभिधेयं प्रमेयत्वादित्यत्र प्रतिज्ञातिव्याप्तेरे-कदेशार्थीविषयताव्यावृत्तस्वार्थीविषयतानिवेशनेन वारणेऽपि तत्रत्यनिगमनेऽभिधेयत्व-व्याप्यप्रमेयत्ववांश्चायमित्युपनयार्थप्रमेयत्वरूपपक्षतावच्छेदकरूपहेतुतावच्छेदका-वच्छिन्नान्विततादृशपक्षतावच्छेदकावच्छिन्ने स्वार्थान्वयबोधजनकेऽतिप्रसङ्गो दुर्वारः।

---

विवक्षणीया। तथा च पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितविषयतानिरूपित-प्रकारताप्रयोजकत्वं लक्षणार्थः। अतः विशेष्यताप्रयोजके उपनये नातिव्याप्तिरिति भावः। **एवं सतीति।** प्रकारतारूपचरमविषयतायाः निवेशे 'प्रमेयत्वमभिधेयं प्रमेयत्वात्' इत्यत्र प्रकृतपक्षान्वितस्वार्थेत्यत्र स्वार्थपदेन स्वार्थैकदेशं गृहीत्वा पञ्चमीप्रकृत्यर्थप्रमेयत्वरूपपक्षान्वितः यः हेतुवाक्यार्थैकदेशरूपः विभक्त्यर्थः तद्बोधकविभक्त्युपस्थापितार्थान्वित-स्वार्थैकदेशप्रतिपादकप्रतिज्ञायामतिव्याप्तिमाशङ्क्य स्वार्थपदेन स्वप्रतिपाद्यत्व-पर्याप्त्यधिकरणभूतः अर्थः विवक्षणीय इति दीधितिकारः वक्ष्यति। तदसङ्गतिः स्यात्। पक्षतावच्छेदकप्रमेयत्वत्वावच्छिन्ना या पञ्चमीप्रकृतिभूतप्रमेयत्वपदप्रयोज्या विषयता तन्निरूपिता या पञ्चम्यर्थनिष्ठा विषयता तन्निरूपितविशेष्यताप्रयोजकत्वस्य प्रतिज्ञायां सत्त्वेऽपि तन्निरूपितप्रकारताप्रयोजकत्वविरहात् अतिव्याप्तिशङ्कायाः अनुत्थितेः।

ननु स्वार्थैकदेशस्य स्वार्थत्वाभिमानमूलकातिव्याप्तिशङ्कया 'प्रमेयत्वम्' इत्यादिदीधितिग्रन्थो न अवतारणीयः। किन्तु चरमविषयतायाः विषयतात्वेन प्रवेशाभिमानमूलकातिव्याप्तिशङ्कयैव अवतारणीयः। तथा सति प्रकारतारूपत्वविवक्षया तदुद्धारसम्भवात् इत्यतः दोषान्तरमाह-**एवं प्रमेयत्वमिति।**

चरमविषयतायाः प्रकारतारूपायाः विवक्षणे 'प्रमेयत्वमभिधेयम् प्रमेयत्वात्' इत्यत्र 'अभिधेयत्वव्याप्यप्रमेयत्ववत्त्वात् अभिधेयम्' इत्याकारकनिगमने अतिव्याप्तिः। तथा हि-'अभिधेयत्वव्याप्यप्रमेयत्व-वाँश्चायम्' इति उपनयवाक्यम्। तत्र पक्षतावच्छेदकं हेतुतावच्छेदकं च प्रमेयत्वत्वमेकमेव। उपनये 'इदं'पदार्थे प्रमेयत्वं प्रकारः प्रमेयत्वत्वेन भासते। तथा च प्रमेयत्वत्वरूपपक्षतावच्छेदकावच्छिन्ना या विषयता

पक्षतावच्छेदकावच्छिन्नेत्यत्र विशेषणतयाऽन्वितत्वनिवेशे प्रमेयत्वमित्याद्यग्रिमग्रन्थानुत्थितेः पञ्चम्यर्थहेतुत्वस्य विशेष्यतयैव पक्षान्वयित्वेन प्रतिज्ञातिव्याप्तिप्रसक्तेः। विशेषणतया किञ्चिदन्वितत्वनिवेशेनैवोपपत्तेः प्रकृतपक्षनिवेशवैयर्थ्यापाताच्च। निगमनार्थविशेषणतया किञ्चिदन्वितेऽनन्वयेनात्रातिव्याप्तेस्तमनिवेश्यापि वारणसम्भवात्। मैवम्। शुद्धपक्षता-

---

तन्निरूपिता या 'इदं'पदार्थनिष्ठा विषयता तन्निरूपिता या निगमनार्थाभिधेयत्वनिष्ठा प्रकारता तत्प्रयोजकत्वमत्रत्यनिगमनेऽस्तीति अतिव्याप्तिर्दुर्वारा।

ननु द्वितीयविषयतापि प्रकारतारूपा विवक्षिता। तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या प्रकारता तन्निरूपितप्रकारता-प्रयोजकत्वं फलितार्थः। उपनयस्थ'इदं'पदार्थनिष्ठविषयतायाः प्रमेयत्ववत्त्वावच्छिन्नविषयतानिरूपितविशेष्यतारूपत्वेऽपि पक्षतावच्छेदक-प्रमेयत्ववत्त्वावच्छिन्नविशेष्यतानिरूपितप्रकारतारूपत्वं नास्तीति न निगमने पूर्वोक्तरीत्या अतिव्याप्तिः इत्याशङ्क्य तथा विवक्षणे 'प्रमेयत्वमभिधेयम्' इत्यादि अग्रिमदीधितिग्रन्थस्य अनुत्थितिः। पञ्चम्यर्थस्य हेतुत्वस्य प्रकृत्यर्थे प्रमेयत्वं प्रति विशेष्यतयैव भानात् प्रमेयत्ववत्त्वरूपपक्षतावच्छेदकावच्छिन्न-विषयतानिरूपितपञ्चम्यर्थनिष्ठविशेष्यतानिरूपितविशेष्यताप्रयोजकत्वस्य प्रतिज्ञायां सत्त्वेऽपि प्रमेयत्ववत्त्वावच्छिन्नविषयतानिरूपितप्रकारतानिरूपितप्रकारता-प्रयोजकत्वविरहेण अतिव्याप्तेः अप्रसक्तेः।

'किञ्च पक्षे विशेषणतयान्वितेत्यस्य स्थाने विशेषणतया किञ्चिदन्वितत्वनिवेशेनैव उपपत्तेः प्रकृतपक्षनिवेशवैयर्थ्यप्रसङ्गश्च। यत्किञ्चिन्निष्ठविषयतानिरूपितप्रकारतानिरूपितप्रकारताप्रयोजकत्वे सति न्यायावयवत्वं हेतुत्वमित्युक्त्यैव प्रतिज्ञानिगमनादिषु अतिव्याप्तिवारणसम्भवात्' इत्याह–***पक्षतावच्छेदकावच्छिन्नेत्यत्र*** इत्यादिना।

वैयर्थ्यमुपपादयति–***निगमनार्थस्येति।*** प्रकृतपक्षान्वितेत्यनुक्तौ निगमनार्थवह्न्यन्वितः यः स्वार्थः उपनयार्थः तद्बोधक'इदं'पदोप-स्थापितार्थान्वितस्वार्थबोधकत्वमादाय निगमनेऽतिव्याप्तिवारणाय हि प्रकृतपक्षान्वितेति निवेशनम्। विशेषणतया किञ्चिदन्वितत्वनिवेशे तु

वच्छेदकावच्छिन्नान्वितत्वं निवेश्य दर्शितातिप्रसङ्गवारणसम्भवात्। उपनयार्थव्याप्यविशिष्टपक्षान्वयिनो निगमनार्थस्य शुद्धपक्षतावच्छेदकावच्छिन्नानन्वितत्वेन तदन्वितार्थकेऽप्युपनये शुद्धपक्षतावच्छेदकावच्छिन्नान्वितार्थकपदोपस्थापितार्थान्वितार्थकत्वविरहात् प्रमेयत्वमभिधेयं प्रमेयत्वादित्यत्र व्याप्तिविशिष्टप्रमेयत्वरूपपक्षतावच्छेदकावच्छिन्न एव इदमर्थान्वयेन तदन्वितार्थकतया निगमने निरुक्तरूपविरहात्। एतेन

---

उपनयस्थ'इदं'पदार्थस्य विशेष्यतया निगमनार्थान्वितत्वेऽपि विशेषणतया निगमनार्थान्वितत्वं नास्तीति अतिव्याप्तेरप्रसक्तेः प्रकृतपक्षान्वितेत्यस्य वैयर्थ्यम्। परिष्कृतार्थरीत्यापि वैयर्थ्यमुपपादयितुं शक्यते–किञ्चिदर्थनिष्ठविषयतानिरूपितप्रकारतानिरूपितप्रकारताप्रयोजकत्वमित्युक्तावपि निगमनार्थनिष्ठविषयतानिरूपितविशेष्यतायाः उपनयस्थ'इदं'पदार्थे सत्त्वेऽपि प्रकारतायाः असत्त्वेन तादृशप्रकारतानिरूपितप्रकारताप्रयोजकत्वस्य निगमने विरहात् अतिव्याप्त्यप्रसक्तेः पक्षतावच्छेदकावच्छिन्नविषयतानिवेशनं व्यर्थमिति। एवं च चरमविषयता द्वितीयविषयता च प्रकारतारूपेति न विवक्षितुं शक्यते। तदविवक्षायां च पर्वतत्वावच्छिन्नोपनयस्थ'इदं'पदप्रयोज्यविषयतानिरूपितनिगमनार्थनिष्ठप्रकारतानिरूपितविशेष्यतारूपविषयताप्रयोजके उपनये अतिव्याप्तिरिति आक्षेपः अवशिष्यते। तं परिहर्तुमारभते–***मैवमित्यादिना।*** प्रकृतपक्षान्वितेत्यादि दीधितिलक्षणस्य अयमर्थः– शुद्धपक्षतावच्छेदकावच्छिन्नान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वमिति। शुद्धपक्षतावच्छेदकावच्छिन्नविषयतानिरूपिता या विषयता तन्निरूपितविषयताप्रयोजकत्वे सति न्यायावयवत्वमिति फलितोऽर्थः। 'वह्निव्याप्यधूमवान् अयम्' इति उपनयार्थे वह्निव्याप्यविशिष्टपर्वते एव निगमनार्थस्य अन्वयात् निगमनार्थनिष्ठा विषयता वह्निव्याप्यविशिष्टपर्वतत्वावच्छिन्नविषयतानिरूपिता। न तु शुद्धपर्वतत्वावच्छिन्नविषयतानिरूपितेति शुद्धपर्वतत्वावच्छिन्नविषयतानिरूपितविषयतानिरूपितत्वमुपनयार्थनिष्ठविषयतायां नास्तीति न उपनये अतिव्याप्तिः।

ननु शुद्धत्वमनिवेश्य पक्षतावच्छेदकावच्छिन्नान्वितेत्यादिनिवेशेनापि

पक्षसाध्ययोरभेदस्थले निगमनार्थघटकसाध्यरूपपक्षान्वितेदम्पदार्थान्वितार्थकतया निगमनातिव्याप्तेरपि नावकाशः।

यत्तु एकविशेषणतापन्नस्य यत्रापरविशेष्यता तत्र विशेष्यत्वविशेषणत्वरूपविषयतयोर्भेदेन पक्षविषयतानिरूपितविषयतानिरूपितस्वार्थविषयतानिवेशे हेतुमात्र एव लक्षणानुपपत्तिः पक्षविषयितानिरूपितसाध्यांचप्रकारतारूपविषयतया हेत्वर्थप्रकारताया निरूप्यनिरूपकभावविरहादतः पक्षविषयतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपितस्वार्थविषयतैव निवेशनीया एवञ्चोक्तरीत्या उपनयातिव्याप्तेर्नावकाशः।

---

उपनयेऽतिव्याप्तिः वारयितुं शक्यते। इदन्त्वेनैव रूपेण पक्षस्य उपनयप्रतिपाद्यत्वात् इदन्त्वावच्छिन्नान्वितार्थस्वार्थबोधकस्यापि निगमनस्य पक्षतावच्छेदकपर्वतत्वावच्छिन्नान्वितार्थस्वार्थबोधकत्वविरहात् इत्यत आह–***प्रमेयत्वमभिधेयमित्यादि।*** शुद्धत्वानिवेशे 'प्रमेयत्वम् अभिधेयं प्रमेयत्वात्' इत्यत्र अभिधेयत्वव्याप्यप्रमेयत्ववाँश्चायमिति उपनयार्थघटकप्रमेयत्वरूपपक्षतावच्छेदकात्मकहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपित'इदं'पदार्थविषयतानिरूपितविषयताप्रयोजके निगमनेऽतिव्याप्तिः। शुद्धत्वनिवेशे तु निगमनप्रयोज्यविषयतायाः अभिधेयत्वनिरुपितव्याप्तिविशिष्टप्रमेयत्वत्वरूपपक्षतावच्छेदकावच्छिन्नविषयतानिरूपित'इदं'पदार्थनिष्ठविषयतानिरुपितत्वेऽपि शुद्धप्रमेयत्वत्वावच्छिन्नविषयतानिरूपितविषयतानिरूपितत्वं नास्तीति न निगमनेऽतिव्याप्तिरिति भावः।

***निरुक्तरूपविरहादिति।*** शुद्धपक्षतावच्छेदकावच्छिन्नान्वितार्थकपदोपस्थापितार्थान्वितस्वार्थबोधकत्वविरहात् शुद्धपक्षतावच्छेदकावच्छिन्नविषयतानिरूपितविषयतानिरूपितविषयताप्रयोजकत्वविरहाद्वा इत्यर्थः।

***पक्षसाध्ययोरभेदस्थले*** इति। 'प्रमेयत्वं प्रमेयम् अभिधेयत्वात्' 'गोत्वाभावो गोत्वाभाववान् सास्नाद्यभावात्' इत्यादौ 'अभिधेयत्वात् प्रमेयम्' इत्याकारकनिगमनार्थघटकं यत् साध्यं प्रमेयत्वं तदभिन्नः यः पक्षः तदन्वितः यः उपनयस्थ'इदं'पदार्थः तदन्वितः यः निगमनार्थः तद्बोधकतया निगमने प्रसक्तायाः अतिव्याप्तेः पक्षतावच्छेदके शुद्धत्वनिवेशात् नावकाशः। अभिधेयत्वज्ञानाज्ञाप्यत्वविशिष्टप्रमेयत्वत्वरूपसाध्यता–

वच्छेदकात्मकपक्षतावच्छेदकावच्छिन्नान्वित'इदं'पदार्थान्वितार्थकत्वेऽपि निगमनस्य शुद्धप्रमेयत्वत्वावच्छिन्नान्वित'इदं'पदार्थान्वितार्थकत्वविरहात्। शुद्धत्वनिवेश-वैयर्थ्यवादिमतमुपन्यस्यति-**यत्तु एकविशेषणतापन्नस्येति।** एकत्र विशेषणतापन्नस्य अन्यं प्रति विशेष्यता यत्र तत्र विशेष्यताविशेषणतारूपयोः विषयतयोः भेदः आवश्यकः। यथा पर्वते विशेषणतापन्नस्य वह्नेः हेत्वर्थे धूमज्ञानज्ञाप्यत्वं प्रति विशेष्यत्वात् वह्निनिष्ठा पर्वतनिष्ठ-विषयतानिरूपितविषयता प्रकारतारूपा। धूमज्ञानज्ञाप्यत्वनिष्ठविषयतानिरूपिता वह्निनिष्ठाविषयता तु विशेष्यतारूपा। हेतुलक्षणे पक्षनिष्ठविषयता-निरूपितविषयतानिरूपितविषयताप्रयोजकत्वं निवेशितम्। इदं तु लक्षणं हेतुवाक्ये नायाति। पक्षनिष्ठविषयतानिरूपिता या साध्यनिष्ठा विषयता प्रकारतारूपा। तन्निरुपितत्वविरहात् हेत्वर्थनिष्ठविषयतायाः। सा हि साध्यनिष्ठविशेष्यतानिरूपिता। तथा च हेतुसामान्ये लक्षणस्य असम्भवः स्यात्। तद्वारणाय पक्षनिष्ठविषयतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपित-विषयताप्रयोजकत्वं हेतुलक्षणं वक्तव्यम्। पर्वतनिष्ठविषयतानिरूपितप्रकारत्व-रूपविषयत्वावच्छिन्ना या वह्निनिष्ठा विषयता विशेष्यतारूपा। तन्निरूपितविषयताप्रयोजकत्वं हेतुवाक्येऽस्तीति लक्षणसमन्वयः। अन्तरा भासमानपदार्थनिष्ठयोः विषयतयोः अवच्छेद्यावच्छेदकभावं स्वीकृत्य अयं परिष्कारः। एवं च शुद्धपक्षतावच्छेदकावच्छिन्नत्वानिवेशेऽपि उपनये निगमने च अतिव्याप्तेः नावकाशः। तथा हि-'वह्निव्याप्यधूमवानयम्' इति उपनयस्थ'इदं'पदप्रयोज्या या पक्षविषयता तन्निरूपितनिगमनार्थ-निष्ठविषयतानिरूपितायाः इदंपदार्थनिष्ठविषयतायाः पक्षनिष्ठविषयतानिरूपित-विषयतानिरूपितत्वेऽपि पक्षनिष्ठविषयतानिरूपितविषयत्वावच्छिन्न-विषयतानिरूपितत्वं नास्ति। निगमनार्थे पक्षनिष्ठविषयतानिरूपितविषयताभिन्नायाः विषयतायाः अभावात्। निगमनार्थे अन्यस्य विशेषणतया अभानात्। अतः पक्षनिष्ठविषयतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपितविषयता-प्रयोजकत्वमुपनये नास्तीति नातिव्याप्तिः।

एवं पक्षसाध्ययोः अभेदस्थले 'प्रमेयत्वं प्रमेयम् अभिधेयत्वात्' इत्यत्र निगमनातिव्याप्तेरपि नावकाशः। 'अभिधेयत्वात् प्रमेयम्' इति

पक्षविषयतानिरूपितनिगमनार्थनिष्ठप्रकारतानिरूपितविषयतायाः पक्षविषयतानिरूपकत-न्निष्ठविषयताया अभेदेनावच्छेद्यावच्छेदकभावविरहादेवं क्रमेण पक्षसाध्ययोरभेदस्थले निगमनातिव्याप्तेरपि नावतारः, एवं हेतुपक्षयोरभेदस्थले निगमनातिव्याप्तिरपि समाहिता, हेतुप्रकारतानिरूपिताया निगमनार्थप्रकारतानिरूपितायाश्चेदमर्थनिष्ठविशेष्यतारूपविषयतायाश्चा-भेदेनावच्छेद्यावच्छेदकभावविरहादिति। तन्न। एकविशेषणतापन्नस्य यत्रापरविशेष्यता तत्र विशेष्यताप्रकारतयोरभेदे बाधकविरहेण लाघवेन तस्यैवोपगमात् न त्ववच्छेद्यावच्छेदकभावापन्नविषयताद्वयस्य। यदि चैकविशेषणतापन्नस्यापरविशेष्यतास्थले प्रकारताविशेष्यतयोरभेदे दण्डी पुरुषवानित्यादिबुद्धेः पुरुषादिनिष्ठप्रकारतानिरूपित-

---

निगमनार्थप्रमेयत्वरूपसाध्यात्मकपक्षनिष्ठविषयतानिरूपिता उपनयस्थ 'इदं'पदार्थनिष्ठविषयता तन्निरूपिता निगमनार्थनिष्ठविषयता तत्प्रयोजकत्वस्य निगमने सत्त्वेऽपि पक्षनिष्ठविषयतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपित-विषयताप्रयोजकत्वं नास्ति। इदमर्थे विषयताद्वयविरहेण अवच्छेद्यावच्छेदक-भावविरहात्। एवं हेतुपक्षयोः अभेदस्थलेऽपि 'प्रमेयत्वम् अभिधेयं प्रमेयत्वात्' इत्यत्र निगमनेऽतिव्याप्तिरपि न भवति। 'अभिधेयत्व-व्याप्यप्रमेयत्ववाँश्चायम्' इति उपनयघटकप्रमेयत्वरूपपक्षात्मकहेतुनिष्ठ-प्रकारतानिरूपित'इदं'पदार्थनिष्ठविशेष्यतानिरूपितनिगमनार्थनिष्ठप्रकारता-प्रयोजकत्वस्य निगमने सत्त्वेऽपि पक्षनिष्ठविषयतानिरूपित-विषयत्वावच्छिन्नविषयतानिरूपितविषयताप्रयोजकत्वं नास्ति। हेतुनिष्ठ-प्रकारतानिरूपितायाः निगमनार्थनिष्ठप्रकारतानिरूपितायाश्च इदमर्थनिष्ठायाः विशेष्यतायाः एकत्वेन अवच्छेद्यावच्छेदकभावविरहात् इति भावः।

***पक्षविषयतानिरूपकतन्निष्ठविषयताया*** इति। पक्षविषयतानिरूपितायाः निगमनार्थनिष्ठायाः विषयतायाः इत्यर्थः। निगमनार्थे उपनयस्थ'इदं' पदार्थं प्रति प्रकारत्वरूपाया एकस्या एव विषयतायाः सत्त्वात् निगमनार्थनिष्ठा पक्षनिष्ठविषयतानिरूपिता विषयता विषयत्वान्तरावच्छिन्ना न भवतीति हृदयम्।

इदं मतं दूषयति–***तन्नेत्यादिना।*** एकत्र विशेषणतापन्नस्य यत्र अपरं प्रति विशेष्यत्वं तत्र विशेष्यताप्रकारतयोः अभेदे बाधकविरहेण अन्तरा

दण्डादिनिष्ठविशेष्यताशालित्वं दुर्वारमिति तस्याः पुरुषी न वा दण्ड इत्यादिसंशयविरोधिताप्रसङ्ग इति तद्भेदत्समूहालम्बनविषयतावैलक्षण्याय तयोरवच्छेद्यावच्छेदकाभाव एव च स्वीक्रियत इति मन्यते, तदा हेतुपक्षयोरभेदस्थले निगमनार्थधर्मितावच्छेदकहेतुप्रकारतानिरूपिताया निगमनार्थप्रकारता-निरूपितायाश्च विशिष्टहेतुत्वावच्छिन्नाया इदम्पदार्थपक्षविशेष्यताया ऐक्ये हेतोर्हेतुधर्मितावच्छेदकतापत्तिरिति तत्रावच्छेद्यावच्छेदकभावापन्नविषयताद्वयस्य स्वीकरणीयतया तत्रातिव्याप्तेर्दुर्वारत्वात्।

---

भासमाने पदार्थे एकनिष्ठविशेष्यतानिरूपिता अपरनिष्ठप्रकारतानिरूपिता च एकैव विषयता अङ्गीक्रियते, न तु अवच्छेद्यावच्छेदकभावा-पन्नविषयताद्वयम्। अतः उक्तपरिष्कारस्य अवच्छेद्यावच्छेदकभावापन्न-विषयताद्वयघटितस्य असम्भवात् पक्षनिष्ठविषयतानिरूपित-विषयतानिरूपितविषयताप्रयोजकत्वमित्येव लक्षणं वक्तव्यम्। तत्र च पूर्वोक्तरीत्या उपनयाद्यतिव्याप्तिवारणाय शुद्धपक्षतावच्छेदकावच्छिन्नत्वं विषयतायामवश्यं निवेशनीयमिति भावः।

विषयतयोः अभेदमते शुद्धत्वनिवेशस्य आवश्यकत्वं प्रदर्श्य तयोः भेदं स्वीकृत्य अवच्छेद्यावच्छेदकभाववादिमतेऽपि तन्निवेशार्थमाह–***यदि चेति।*** एकत्र विशेषणतापन्नस्य अपरविशेष्यतास्थले प्रकारताविशेष्यतयोः अभेदे 'दण्डिपुरुषवान्' इति बुद्धेः पुरुषनिष्ठ-प्रकारतानिरूपितदण्डनिष्ठविशेष्यताशालित्वं दुर्वारम्। तथा हि–'दण्डिपुरुषवान्' इति बुद्धौ पुरुषः भूतले विशेषणम्। पुरुषे दण्डः विशेषणम्। दण्डे दण्डत्वं विशेषणम्। दण्डस्य दण्डत्वं प्रति विशेष्यत्वं पुरुषं प्रति विशेषणत्वं च वर्तते। एवं पुरुषस्य दण्डं प्रति विशेष्यत्वं भूतलं प्रति विशेषणत्वं च वर्तते। अतः पुरुषे भूतलनिष्ठविशेष्यतानिरूपिता प्रकारता दण्डनिष्ठप्रकारतानिरूपिता विशेष्यता च वर्तते। एवं दण्डे दण्डत्वनिष्ठप्रकारतानिरूपिता विशेष्यता पुरुषनिष्ठविशेष्यतानिरूपिता प्रकारता च वर्तते। प्रकारताविशेष्यतयोः अभेदे सति दण्डनिष्ठप्रकारतायाः पुरुषनिष्ठविशेष्यतानिरूपितत्वे अङ्गीकृते सति दण्डनिष्ठप्रकारतारूपायाः तन्निष्ठविशेष्यताया अपि पुरुषनिष्ठविशेष्यतारूपतन्निष्ठ–

प्रकारतानिरूपितत्वमपि अवर्जनीयम्। एवं च 'दण्डिपुरुषवान्' इति बुद्धेः पुरुषनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यताशालित्वं दुर्वारमिति 'पुरुषी न वा दण्डः' (दण्डः पुरुषवान् न वा) इत्याकारकसंशयं प्रति 'दण्डिपुरुषवान्' इति बुद्धेः प्रतिबन्धकत्वप्रसङ्गः। पुरुषाभावप्रकारक-दण्डविशेष्यकबुद्धिं प्रति पुरुषप्रकारदण्डविशेष्यकबुद्धेः प्रतिबन्धकत्वात्। अतः प्रकारताविशेष्यतयोः भेदः अङ्गीकरणीयः। एवं तयोः अवच्छेद्यावच्छेदकभावोऽपि अङ्गीकरणीयः। अन्यथा समूहालम्बनविषयता-वैलक्षण्यानुपपत्तेः। एवं च शुद्धत्वविशेषणं व्यर्थमिति शङ्का।

समाधत्ते-*तदा हेतुपक्षयोरिति*। हेतुपक्षयोः अभेदस्थले 'प्रमेयत्वम् अभिधेयं प्रमेयत्वात्' इत्यत्र 'अभिधेयत्वव्याप्यप्रमेयत्ववदिदम्' इति उपनयः। 'अभिधेयत्वात् प्रमेयम्' इति निगमनम्। निगमनार्थस्य धर्मितावच्छेदकतया हेतुः भासते। तथा च निगमनार्थधर्मितावच्छेदक-हेतुनिष्ठप्रकारतानिरूपिता या 'इदं'पदार्थपक्षनिष्ठा विशेष्यता; एवं निगमनार्थनिष्ठप्रकारतानिरूपिता या अभिधेयत्वव्याप्यप्रमेयत्वावच्छिन्ना 'इदं'पदार्थनिष्ठा विशेष्यता, तयोः विशेष्यतयोः ऐक्ये सति हेतोः हेतुधर्मितावच्छेदकत्वप्रसङ्गः। अतः तत्र अवच्छेद्यावच्छेदकभावापन्न-विषयताद्वयं स्वीकरणीयमिति पक्षात्मकहेतुनिष्ठप्रकारतानिरूपितविशेष्यत्वा-वच्छिन्न'इदमर्थनिष्ठविशेष्यतानिरूपितप्रकारतारूपविषयताप्रयोजकत्वं निगमनेऽस्तीति निगमनेऽतिव्याप्तिः दुर्वारा। सा च अतिव्याप्तिः विषयतायां शुद्धपक्षतावच्छेदकावच्छिन्नत्वं निवेश्यैव वारणीयेति तद्वैयर्थ्यप्रतिपादकं यत्तुकारमतमयुक्तमिति भावः।

'प्रमेयत्वम् अभिधेयम्' इति दीधितिग्रन्थमवतारयति-*स्वार्थैकदेशस्यापीति*। प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वित-स्वार्थबोधकन्यायावयवत्वं हेतुत्वमिति दीधितौ हेतुलक्षणमुक्तम्। तल्लक्षणे स्वार्थैकदेशस्यापि स्वार्थत्वमस्तीति अभिमानमूलकतया प्रवृत्तां प्रतिज्ञाविशेषेऽतिव्याप्तिशङ्कां द्वितीयस्वार्थपदस्य स्वप्रतिपाद्यत्वपर्याप्त्यधिकरण-भूतविशिष्टार्थपरत्वं स्पष्टीकुर्वन् निराकरोतीत्यर्थः। तथा हि-'प्रमेयत्वम्

**प्रमेयत्वमभिधेयं प्रमेयत्वादित्यादौ प्रकृत्यर्थपक्षान्वितस्वार्थबोधक-पञ्चम्यन्तार्थान्वितः न प्रतिज्ञार्थः। अपि तु तदेकदेशार्थ इति।**

---

स्वार्थैकदेशस्यापि स्वार्थत्वाभिमानमूलां प्रतिज्ञाविशेषातिव्याप्तिशङ्कां स्वार्थपदस्य स्वप्रतिपाद्यत्वपर्याप्त्यधिकरणविशिष्टार्थपरतां स्पष्टयन्निराकरोति–***प्रमेयत्वमिति। प्रतिज्ञार्थः।*** साध्यविशिष्टपक्षरूपः। ***एकदेशार्थः।*** साध्यमात्रम्। यद्यपि प्रमेयत्वमभिधेयम् प्रमेयत्वादित्यादिन्यायान्तर्गतनिगमने हेतुभूतपक्षान्वितस्वार्थबोधकेदम्पदोपस्थापितपक्षान्वित-स्वार्थबोधकत्वं निगमनेऽश्रुतमिति विशेषणतया पक्षान्वितत्वं विवक्षणीयमिति कथितस्थले पञ्चम्यर्थः पक्षे न विशेषणमित्यतोऽपि नोक्तप्रतिज्ञायामतिव्याप्तिसम्भवः। तथापि निगमनार्थैकदेशस्य ज्ञाप्यत्वान्तभागस्य तादृशार्थान्विततया निगमनेऽप्यतिप्रसङ्गवारणाय

---

अभिधेयं प्रमेयत्वात् इत्यादौ पञ्चमीप्रकृतिप्रमेयत्वपदप्रतिपाद्यं यत् प्रमेयत्वं प्रकृते पक्षरूपं तदन्वितः यः स्वार्थः पञ्चम्यर्थः तद्बोधक-पञ्चम्युपस्थापितार्थान्वितः यः स्वार्थः प्रतिज्ञाप्रतिपाद्यः अभिधेयत्वरूपः तद्बोधकन्यायावयवत्वं 'प्रमेयत्वम् अभिधेयम्' इति प्रतिज्ञायामस्तीति अतिव्याप्तिरिति शङ्का। समाधानं तु–लक्षणघटकद्वितीयस्वार्थपदेन स्वप्रतिपाद्यत्वपर्याप्त्यधिकरणं विवक्षितम्। तच्च प्रकृते अभिधेयत्वविशिष्ट-प्रमेयत्वात्मकम्। तस्य च पञ्चम्यर्थान्वितत्वं नास्ति, किन्तु तदेकदेशस्य अभिधेयत्वस्यैवास्ति इति नोक्तप्रतिज्ञायामतिव्याप्तिरिति।

***स्वार्थपदस्येति।*** द्वितीयस्य स्वार्थपदस्येत्यर्थः। शङ्कते–***यद्यपीति।*** 'प्रकृतपक्षान्वित' इत्यत्र विशेषणतया प्रकृतपक्षान्वितत्वं विवक्षणीयम्। अन्यथा 'प्रमेयत्वम् अभिधेयं प्रमेयत्वात्' इत्यादिन्यायान्तर्गते 'तस्मात् अभिधेयम्' इति निगमने 'अभिधेयत्वव्याप्यप्रमेयत्ववदिदम्' इति उपनयवाक्यस्थं हेतुभूतप्रमेयत्वात्मकपक्षान्वितस्वार्थबोधकं यत् 'इदं' पदं तदुपस्थापितः यः पक्षः तदन्विताभिधेयत्वात्मकस्वार्थबोधकत्वमस्तीति अतिव्याप्तिः। विशेषणतया पक्षान्वितत्वनिवेशे तु उपनयस्थस्य 'इदं' पदार्थस्य हेतुभूतप्रमेयत्वरूपपक्षे विशेष्यतया अन्वितत्वात् विशेषणतया अन्वितत्वं नास्तीति नातिव्याप्तिः। एवं च 'प्रमेयत्वम् अभिधेयम्' इति प्रतिज्ञायामपि

स्वार्थपदस्य स्वप्रतिपाद्यविशिष्टपरताया आवश्यकत्वात् कथितस्थले पञ्चम्यर्थान्वित-स्वार्थबोधकत्वाभावेनाप्यतिव्याप्तिवारणसम्भवात्तत्कथनम्। केवलेन हेतुवाक्येन पञ्चम्यर्थविशेष्यकावान्तरवाक्यार्थबोधो जन्यते। ततश्च प्रतिज्ञास्थवह्न्यादिपदसहकारेण

---

अतिव्याप्तेः न प्रसङ्गः। हेतुभूतपक्षं प्रति पञ्चम्यर्थस्य विशेष्यतया पञ्चम्यर्थः विशेषणतया पक्षान्वितो न भवतीति विशेषणतया पक्षान्वितपञ्चम्यर्थान्वितस्वार्थबोधकत्वविरहात् प्रतिज्ञायाः। तथा च स्वार्थपदस्य स्वप्रतिपाद्यत्वपर्याप्त्यधिकरणपरत्वं किमर्थमिति शङ्का।

***कथितस्थले*** इति। 'प्रमेयत्वम् अभिधेयं प्रमेयत्वात्' इत्यादिस्थले इत्यर्थः। ***उक्तप्रतिज्ञायामिति।*** 'प्रमेयत्वम् अभिधेयम्' इति प्रतिज्ञायामित्यर्थः।

समाधत्ते – ***तथापीति।*** उक्तस्थले एव 'तस्मात् अभिधेयम्' इति निगमनप्रतिपाद्यस्य अभिधेयपदार्थस्य अभिधेयत्वस्य उपनयस्थ 'इदं'पदार्थरूपे पक्षे विशेषणतया अन्वितत्वात् पक्षे विशेषणतया अन्वितं यत् अभिधेयत्वं तदन्वितः यः स्वार्थः निगमनार्थः निगमनार्थैकदेशः 'तस्मात्' इति भागप्रतिपाद्यः हेतुज्ञानज्ञाप्यत्वरूपः तत्प्रतिपादकतया निगमनेऽतिव्याप्तिः। तद्वारणाय द्वितीयस्वार्थपदस्य स्वप्रतिपाद्यत्व-पर्याप्त्यधिकरणपरत्वमवश्यं वक्तव्यम्। तथा सति निगमनार्थैकदेशस्य ज्ञाप्यत्वान्तभागस्य निगमनप्रतिपाद्यत्वपर्याप्त्यधिकरणत्वं नास्तीति न निगमने अतिव्याप्तिः। एवं च स्वार्थपदेन स्वार्थैकदेशं गृहीत्वा प्रतिज्ञायां प्रसक्ताया अतिव्याप्तेरपि पर्याप्तिविवक्षयैव वारणसम्भवात् विशेषणतया पक्षान्वितत्वं न विवक्षणीयमिति भावः।

***तादृशार्थान्विततया*** इति। उपनयस्थ'इदं'पदार्थपक्षविशेषणतयान्वित-साध्यरूपस्वार्थान्विततयेत्यर्थः। ***कथितस्थले*** इति। 'प्रमेयत्वम् अभिधेयं प्रमेयत्वात्' इत्यादिन्यायान्तर्गतप्रतिज्ञायामित्यर्थः। ***पञ्चम्यर्थान्वितस्वार्थ-बोधकत्वाभावेनापीति।*** पञ्चम्यर्थान्वितः यः स्वप्रतिपाद्यत्व-पर्याप्त्यधिकरणरूपोऽर्थः तद्बोधकत्वाभावेनापीत्यर्थः। 'अपि'शब्देन प्रकृतातिव्याप्तिवारणे उभयोरन्यतरस्यैव उपयोगः सूच्यते।

वस्तुतस्तु उपनयातिव्याप्तिवारणाय शुद्धपक्षतावच्छेदकावच्छिन्नेति

**स्वार्थविशिष्टवैशिष्ट्यबोधजनकन्यायावयवत्वम्। विशिष्टवैशिष्ट्य-बोधजनकस्वार्थबोधजनकन्यायावयवत्वम्।**

---

धूमज्ञानज्ञाप्यो वह्निरित्याकारकस्वार्थनिष्ठबोधो जन्यते, ततस्समुदितप्रतिज्ञासहकारेण पक्षे स्वार्थविशिष्टस्वार्थवैशिष्ट्यबोधश्च, प्रत्येकमेतादृशबोधत्रयजनकताघटित-लक्षणत्रयमाह– ***स्वार्थेति।*** प्रथमं तृतीयबोधघटितं द्वितीयं प्रथमबोधघटितं तृतीयं च द्वितीयबोधघटितं बोध्यम्। (तथाच तल्लक्षणत्रयस्य स्वत्वगर्भतया तादृशबोधविशेषणतया स्वत्वं प्रविष्टं तादृशबोधमादाय लक्षणानि सम्भवन्तीति भावः।)

---

उपादानस्य आवश्यकत्वात् उक्तनिगमनेऽतिव्याप्तिरेव नास्तीति विशेषणतया पक्षान्वितत्वं न निवेशनीयम्। स्वार्थविशिष्टेत्यादिदीधितिग्रन्थमवतारयति– ***केवलेन हेतुवाक्येनेति।*** 'धूमात्' इति हेतुवाक्येन पञ्चम्यर्थज्ञाप्यत्व-विशेष्यकः धूमविषयकज्ञानज्ञाप्यत्वमित्याकारकः अवान्तरवाक्यार्थबोधः जायते। तदनन्तरं प्रतिज्ञास्थसाध्यवाचकपदसहकारेण धूमज्ञानज्ञाप्यो वह्निः इत्याकारकः हेत्वर्थविशिष्टसाध्यविषयकः बोधः जायते। तदनन्तरं समुदितप्रतिज्ञासहकृतात् हेतुवाक्यात् धूमज्ञानज्ञाप्यवह्निमान् पर्वतः इत्याकारकः हेत्वर्थधूमज्ञानज्ञाप्यत्वविशिष्टसाध्यवैशिष्ट्यविषयकः पक्षविशेष्यकः बोधो जायते। एतादृशबोधत्रयजनकत्वघटितं लक्षणत्रयं हेतुवाक्यस्य दीधितावुच्यते। तत्र प्रथमलक्षणं तृतीयबोधघटितम्। द्वितीयलक्षणं प्रथमबोधघटितम्। तृतीयलक्षणं द्वितीयबोधघटितम्। तथा हि–स्वार्थविशिष्टवैशिष्ट्यबोध-जनकन्यायावयवत्वं प्रथमं हेतुलक्षणम्। **स्वार्थः**–हेतुवाक्यार्थः धूमज्ञानज्ञाप्यत्वम्। तद्विशिष्टः वह्निः। तद्वैशिष्ट्यं पक्षे अवगाहमानो यो बोधः पूर्वं तृतीयतया उक्तः तज्जनकत्वं समुदितप्रतिज्ञासहकृतस्य हेतुवाक्यस्य अस्तीति लक्षणसमन्वयः। विशिष्टवैशिष्ट्यबोधजनकस्वार्थ-बोधजनकन्यायावयवत्वमिति द्वितीयं लक्षणम्। धूमज्ञाननिरूपितज्ञाप्यत्वविशिष्टो वह्निः इति विशिष्टवैशिष्ट्यबोधं प्रति धूमज्ञाननिरूपितं ज्ञाप्यत्वमित्याकारकः बोधः विशेषणतावच्छेदकप्रकारकज्ञानविधया जनकः इति लक्षणसमन्वयः। अस्मिन् लक्षणे बोधद्वयं घटकम्। तत्र द्वितीयो

***विशिष्टवैशिष्ट्येति।*** स्वतात्पर्यविषयबोधीयविशेषणावच्छेदकस्वार्थबोधजनक-न्यायावयवत्वमित्यर्थः। तेन निगमनार्थान्वितोपनयार्थबोधस्यापि निगमनार्थैकदेशविशिष्ट-वैशिष्ट्यबोधकतया निगमनार्थबोधस्य तज्जनकत्वेन यथाश्रुतलक्षणस्य निगमनेऽति-

---

बोधः पूर्वोक्तप्रथमबोधरूप इति ध्येयम्।

विशिष्टवैशिष्ट्यबोधजनकस्वार्थविशिष्टबोधजनकन्यायावयवत्वमिति तृतीयं लक्षणम्। द्वितीयलक्षणे स्वार्थविषयको बोधः घटकः। अत्र तु स्वार्थविशिष्टविषयको बोध इति भेदः।

धूमज्ञानज्ञाप्यत्वविशिष्टवह्निविशिष्टः पर्वत इत्याकारकः यः विशिष्टवैशिष्ट्यबोधः तज्जनकः यः हेत्वर्थविशिष्टविषयको बोधः धूमज्ञानज्ञाप्यो वह्निः इत्याकारकः तज्जनकत्वं हेतावस्तीति लक्षणसमन्वयः। अत्र स्वार्थविशिष्टविषयबोधस्य विशिष्टवैशिष्ट्य-बोधजनकत्वं प्रतिज्ञास्थवह्निपदसहकारेण हेतुवाक्यस्य अस्ति। अस्मिन् तृतीयलक्षणे घटकः द्वितीयबोधः पूर्वोक्तद्वितीयबोधात्मक इति ध्येयम्।

ननु विशिष्टवैशिष्ट्यबोधजनकस्वार्थबोधजनकन्यायावयवत्वमिति यथाश्रुतद्वितीयलक्षणस्य निगमनेऽतिव्याप्तिः। 'तस्माद्वह्निमान्' इति निगमनार्थान्वितः यः उपनयार्थः तद्विषयकः यः धूमज्ञानज्ञाप्यवह्निमान् धूमवान् पर्वतः इत्याकारकः सोऽपि निगमनार्थैकदेशभूतं यत् धूमज्ञानज्ञाप्यत्वं तद्विशिष्टवह्निवैशिष्ट्यविषयकबोधरूप इति तादृशबोधस्य विशेषणतावच्छेदकप्रकारज्ञानविधया जनकः यः निगमनार्थबोधः तज्जनकत्वस्य निगमने सद्भावात् इत्यतः द्वितीयलक्षणस्य परिष्कृतमर्थमाह- ***स्वतात्पर्यविषयेत्यादिना। स्वं***-हेत्ववयवः। तत्तात्पर्यविषयः बोधः धूमज्ञानज्ञाप्यवह्निमान् पर्वतः इत्याकारकः। तत्र विशेषणता-वच्छेदकभूतः यः स्वार्थः धूमज्ञानज्ञाप्यत्वरूपः तद्विषयकबोधजनकत्वे सति न्यायावयवत्वं हेतुवाक्येऽस्तीति लक्षणसमन्वयः। निगमनार्थान्वितो-पनयार्थविषयकबोधस्य निगमनतात्पर्यविषयत्त्वेऽपि निगमनार्थः तादृशबोधे विशेषणतावच्छेदकः न भवति। किन्तु विशेषणमेव इति स्वतात्पर्यविषयबोधीयविशेषणतावच्छेदकस्वार्थबोधजनकत्वं निगमने नास्तीति

**विशिष्टवैशिष्ट्यबोधजनकस्वार्थविशिष्टबोधजनकन्यायावयवत्वं वा तत्वम्।**

---

व्याप्तिरिति दूषणं प्रत्युक्तम्॥ विशेषणतावच्छेदकताया अव्यावर्तकत्वात्स्वतात्पर्य-विषयबोधीयत्वं तद्विशेषणम्। ***विशिष्टवैशिष्ट्यबोधेति।*** स्वतात्पर्यविषयबोधजनकता-वच्छेदकस्वार्थप्रकारताशालिबोधजनकन्यायावयवत्वमित्यर्थः। तेन निगमनार्थविशिष्टो-पनयार्थज्ञानस्य निगमनार्थविषयकत्वेन तादृशज्ञानजननस्वरूपयोग्यत्वेऽपि न निगमनेऽति-व्याप्तिः। लक्षणत्रयमेव हेतौ सङ्गमयन् अवयवान्तराद्व्यावर्तयति-

---

नातिव्याप्तिरिति भावः। विशेषणतावच्छेदके स्वतात्पर्यविषय-बोधीयत्वविशेषणस्य प्रयोजनमाह- ***विशेषणतावच्छेदकताया*** इति। ***अव्यावर्तकत्वात्*** इति। सर्वावयवार्थसाधारण्यात् इत्यर्थः। वह्निमत्पर्वतविशिष्टवैशिष्ट्यबोधमादाय प्रतिज्ञार्थस्य वह्निमत्पर्वतस्यापि विशेषणतावच्छेदकत्वात् स्वार्थविशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदक-प्रकारकज्ञानविधया सर्वावयवार्थज्ञानस्य हेतुत्वात् अतिव्याप्तिः। अतः स्वतात्पर्यविषयेति बोधविशेषणम्। विशिष्टवैशिष्ट्यबोधजनकस्वार्थ-विशिष्टबोधजनकत्वमिति तृतीयस्य हेतुलक्षणस्य यथाश्रुतस्य निगमने अतिव्याप्तिः। तथा हि-निगमनार्थविशिष्टोपनयार्थविशिष्टविषयकः यः बोधः धूमज्ञानज्ञाप्यवह्निमत्पर्वतविशिष्टः अयं देशः इत्याकारकः। सोऽपि धूमज्ञानज्ञाप्यवह्निविशिष्टपर्वतवैशिष्ट्यविषयकतया विशिष्टवैशिष्ट्यबोधात्मकः। तज्जनकः स्वार्थविशिष्टबोधः निगमनार्थविशिष्टोपनयार्थविषयकः बोध एव। न च-तस्य तज्जनकत्वं कथमिति-वाच्यम्। विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानविधया निगमनार्थविशिष्टोपनयार्थवैशिष्ट्यबोधं प्रति निगमनार्थविशिष्टोपनयार्थज्ञानस्य कारणत्वात्। अतो निगमनेऽति-व्याप्तिवारणाय तृतीयलक्षणं परिष्करोति-***स्वतात्पर्यविषयेति।*** ***स्वं***-हेत्ववयवः। तत्तात्पर्यविषयो बोधः धूमज्ञानज्ञाप्यवह्निमान् पर्वतः इत्याकारकः। तज्जनकतावच्छेदकीभूता या स्वार्थनिष्ठा प्रकारता धूमज्ञानज्ञाप्यत्वनिष्ठा प्रकारता। तादृशप्रकारताशालिबोधजनकत्वं हेतुवाक्ये अस्तीति लक्षणसमन्वयः। स्वपदेन निगमनस्य ग्रहणे तत्तात्पर्यविषयः यः बोधः सः न निगमनार्थविशिष्टोपनयार्थविशिष्टविषयकः बोधः, अपि तु

एकवाक्यतया हेत्वर्थविशिष्टसाध्यवैशिष्ट्यं भासते न पुनरवयवान्तरार्थविशिष्टस्य कस्यचिदिति। इतरान्वितस्वार्थाबोधक-न्यायावयवत्वमुदाहरणत्वम्। अन्वयव्याप्तिबोधकतत्त्वं व्यतिरेकव्याप्ति-बोधकतत्त्वं च विशेषलक्षणम्।

इतरोपस्थापितार्थविशेषणकस्वार्थबोधजनकन्यायावयवत्वम्। स्वार्थ-विशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वं चोपनयत्वम्। अवयवार्थविशेष्यक-स्वार्थबोधजनकन्यावयवत्वं निगमनत्वम्। हेत्वर्थश्च न प्रतिज्ञार्थे विशेषणत्वेनान्वेति। किन्तु तदकदेशार्थे इत्युक्तप्रायम्॥

इति

श्रीमन्महामहोपाध्याय-भट्टाचार्यतार्किकशिरोमणि-रघुनाथकविविरचितायां तत्वचिन्तामणिव्याख्यायामनुमानदीधित्यपराख्यायामवयवग्रन्थस्सम्पूर्णः।

---

***एकवाक्यतयेत्यादिना-इतरोपस्थापितेति।*** स्वाघटकपदोपस्थापितेत्यर्थः। स्वार्थत्वं स्वजन्यप्रतिपत्तिविशेष्यत्वमतो निगमनजन्यप्रतिपत्तिविशेष्ये मतुबाद्यर्थे तद्घटक-पदोपस्थापितसाध्यविशेषणकबोधजनकस्य निगमनस्य वारणायोपस्थापितान्तम्। अत्र प्रथमलक्षणे इतरार्थप्रकारकस्वार्थविषयताकत्वेन द्वितीये च स्वार्थांशे इतरप्रकारकत्वेन च बोधस्य निवेशाद्भेदः। ***अवयवार्थेति।*** अवयवजन्यप्रतिपत्तिविशेष्यकस्वार्थप्रकारक-

---

निगमनार्थान्वितोपनयार्थबोधः तज्जनकतावच्छेदकत्वं निगमनार्थनिष्ठ-विशेष्यतायामेवास्ति। न तु निगमनार्थनिष्ठप्रकारतायामिति न निगमने अतिव्याप्तिरिति भावः।

***निगमनार्थविषयकत्वेनेति।*** निगमनार्थप्रकारकत्वेनेत्यर्थः। ***तादृश-ज्ञानजननस्वरूपयोग्यत्वेऽपीति।*** निगमनार्थविशिष्टोपनयार्थवैशिष्ट्य-बोधजनकत्वेऽपि इत्यर्थः। ***न निगमनेऽतिव्याप्तिरिति।*** उक्तविशिष्ट-वैशिष्ट्यबोधस्य निगमनतात्पर्यविषयत्वाभावात्, निगमनार्थनिष्ठप्रकारताया निगमनतात्पर्यविषयबोधजनकतावच्छेदकत्वाभावाच्चेत्यर्थः।

दीधितौ ***एकवाक्यतया*** इति। प्रतिज्ञाहेत्वोः एकवाक्यतया हेत्वर्थविशिष्टसाध्यवैशिष्ट्यं पक्षे भासते। अतः विशिष्टवैशिष्ट्य-बोधजनकन्यायावयवत्वमित्यादिलक्षणत्रयं हेतुवाक्ये सङ्गच्छते। ***न पुनरिति।***

अवयवान्तरार्थविशिष्टस्य कस्यचिद्वैशिष्ट्यं पक्षे न भासते। अतः अवयवान्तरस्य तादृशलक्षणत्रयं नास्तीति अवयवान्तरे नातिव्याप्तिः। इतरान्वितस्वार्थबोधकन्यायावयवत्वं अन्वयव्यतिरेक्युदाहरणद्वयसाधारणं लक्षणम्। उदाहरणव्यतिरिक्तानां प्रतिज्ञादीनां चतुर्णामितरान्वितस्वार्थबोधकत्वमेवास्तीति तेषां व्युदासः। उदाहरणं तु अवयवान्तरार्थान्वितस्वार्थं न बोधयतीति तत्र लक्षणसमन्वयः। अन्वयव्याप्तिबोधकन्यायावयवत्वमन्वय्युदाहरणस्य लक्षणम्। व्यतिरेकव्याप्तिबोधकन्यायावयवत्वं व्यतिरेक्युदाहरणस्य लक्षणमिति विशेषलक्षणे। तत्त्वमित्यस्य न्यायावयवत्वमित्यर्थः।

इतरोपस्थापितार्थविशेषणकस्वार्थबोधकन्यायावयवत्वमुपनयस्य लक्षणम्। इतरपदेन निगमनं गृह्यते। तदुपस्थापितो योऽर्थः धूमज्ञानज्ञाप्यवह्निमत्त्वरूपः। तद्विशेषणकः यः स्वार्थः उपनयार्थः धूमवत्पर्वतरूपः। तद्विषयकबोधजनकत्वे सति न्यायावयवत्वमुपनयेऽस्तीति लक्षणसमन्वयः।

एवं स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वमुपनयस्य द्वितीयं लक्षणम्। ***स्वार्थः-*** उपनयार्थः। तद्विशेष्यकः यः इतरार्थान्वयबोधः निगमनार्थप्रकारकशाब्दबोधः। तज्जनकन्यायावयवत्वमुपनयेऽस्तीति लक्षणसमन्वयः।

प्रथमलक्षणे बोधस्य इतरार्थप्रकारकत्वविशिष्टस्वार्थविशेष्यकत्वेन निवेशः। द्वितीयलक्षणे स्वार्थविशेष्यकत्वविशिष्टेतरार्थप्रकारकत्वेन तस्य निवेश इति अनयोर्लक्षणयोः भेदः।

अवयवार्थविशेष्यकस्वार्थबोधकजनकन्यायावयवत्वं निगमनस्य लक्षणम्। ***अवयवार्थः-*** उपनयार्थः। तद्विशेष्यकः यः स्वार्थबोधः निगमनार्थप्रकारकबोधः तज्जनकत्वं निगमनेऽस्तीति लक्षणसमन्वयः।

उपनयलक्षणे स्वार्थपदेन स्वजन्यप्रतिपत्तिविशेष्यः विवक्षितः। अन्यथा हेत्वर्थविशेषणकप्रतिज्ञार्थैकदेशवह्निविशेष्यकबोधजनकत्वस्य प्रतिज्ञायां सत्त्वात् तत्रातिव्याप्तिः स्यात् इत्याह-***हेत्वर्थश्च न प्रतिज्ञार्थे*** इति।

***गादाधर्यां स्वाघटकपदोपस्थापितेत्यर्थ*** इति। तथा च स्वाघटकपदोपस्थापितार्थविशेषणकस्वजन्यप्रतिपत्तिविशेष्यविशेष्यक-

वोधजनकावयवत्वमर्थः। सर्वेषामेव वाक्यानां स्वार्थघटकविशेष्यांशे स्वार्थ-घटकार्थान्तरप्रकारकबोधजनकतया तत्रातिव्याप्तिवारणाय स्वार्थप्रकारेति प्रतिज्ञार्थघटक-साध्यरूपविशेषणे हेत्वर्थस्यान्वयेऽपि विशेष्ये पक्षे तदनन्वयात् प्रतिज्ञायां नोपनयलक्षणातिव्याप्तिः। न वा हेतौ निगमनलक्षणातिव्याप्तिः। उपनयलक्षणे स्वार्थपदस्य निगमनलक्षणे चावयवार्थपदस्य विशेष्यपरत्वादित्याह- ***हेत्वर्थश्चेत्यादिना। उक्तप्रायमिति।*** पूर्वं हेत्वर्थैकदेशे पञ्चम्यर्थस्यैकदेशार्थमात्रान्वयित्वमुक्तम् अत्र च हेतुसमुदायार्थस्य तथात्वमिति विशेषात्प्रायमिति।

***॥इति गदाधरीये दीधितिकारीयप्रतिज्ञादिलक्षणानि॥***

---

बोधजनकन्यायावयवत्वमुपनयस्य लक्षणम्। उपस्थापितान्तानिवेशे निगमनजन्यप्रतिपत्तिविशेष्यः यः मतुबर्थः सम्बन्धी तद्विशेष्यकसाध्य-विशेषणकबोधजनकत्वस्य निगमने सत्त्वात् तत्रातिव्याप्तिः। उपस्थापितान्तनिवेशे तु मतुबर्थविशेषणस्य साध्यस्य निगमनघटक-पदोपस्थापितत्वात् स्वाघटकपदोपस्थापितत्वं नास्तीति नातिव्याप्तिरिति भावः। ***स्वार्थांशे इतरप्रकारकत्वेनेति।*** स्वार्थविशेष्यकेतरप्रकारकत्वेनेत्यर्थः। ***अवयवजन्येति।*** अवयवः अत्र उपनयः तज्जन्यप्रतिपत्तिविशेष्यः पक्षः पर्वतादिः तद्विशेष्यकः यः स्वार्थप्रकारकबोधः- निगमनार्थप्रकारको बोधः तज्जनकत्वं निगमनेऽस्तीति लक्षणसमन्वयः। अत्र स्वार्थप्रकारकेत्यस्य प्रयोजनमाह-***सर्वेषामेव वाक्यानामिति।*** स्वार्थप्रकारकेति अनिवेश्य अवयवजन्यप्रतिपत्तिविशेष्यविशेष्यकबोधजनकत्वं निगमनस्य लक्षणमित्युक्तौ प्रतिज्ञादिष्वतिव्याप्तिः। प्रतिज्ञारूपावयवजन्यप्रतिपत्तिविशेष्यः पर्वतादिः तद्विशेष्यकबोधजनकत्वं प्रतिज्ञायामस्तीति। स्वार्थप्रकारकेति निवेशे तु स्वार्थः प्रतिज्ञार्थः वह्निमत्पर्वतरूपः। तत्प्रकारबोधजनकत्वं प्रतिज्ञायां नास्तीति नातिव्याप्तिरिति भावः। अन्यत् स्पष्टम्।

***॥इति भावदीपिकायां दीधितिकारीयप्रतिज्ञादिलक्षणानि॥***

## अथ अवशिष्टहेतुलक्षणम्

**हेतुपदेन ज्ञाने लक्षणा। अन्यथा लिङ्गस्याहेतुत्वेन हेतुविभक्त्यर्थानन्वयात्। तथैवाकांक्षानिवृत्तेः। अनुमितिहेतुज्ञान-करणधूमवत्त्वादिशब्दजन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानावृत्तिजातियोगि-ज्ञानकवाक्यत्वं हेतुत्वमित्यन्ये। जातिं विना केन रूपेण ज्ञानस्यानुमितिजनकत्वम्। वाक्यविशेषजन्यत्वस्यापि जन्यतावच्छेदक-रूपापरिचये दुर्ग्रहादित्यपरे।**

---

पूर्वं मूले पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वमिति हेतुलक्षणमुक्तम्। तत्र लाक्षणिकपदवत्त्वमुपपादयति–मूले ***हेतुपदेनेत्यादि।*** 'पर्वतो वह्निमान् धूमात्' इत्यत्र धूमपदस्य धूमज्ञाने लक्षणा। अन्यथा शक्यार्थस्य धूमस्य वह्न्यनुमित्यजनकत्वेन जनकत्वरूपविभक्त्यर्थे योग्यताविरहेण धूमस्यान्वयासम्भवात्। धूमपदस्य धूमज्ञाने लक्षणायां तु धूमज्ञानस्य वह्न्यनुमितिजनकत्वमस्तीति पञ्चम्यर्थे जनकत्वे तस्य अन्वयः सम्भवतीति भावः। ***हेतुविभक्त्यर्थेति।*** प्रकृत्यर्थे धूमे हेतुविभक्त्यर्थस्य जनकत्वस्य अन्वयो न स्यात्। धूमनिष्ठजनकत्वा-प्रसिद्धेरिति भावः। युक्त्यन्तरमाह–***तथैवाकाङ्क्षानिवृत्तेरिति।*** धूमज्ञाननिष्ठजनकताबोधस्यैव 'कुतो वह्निमान्' इति जिज्ञासानिवर्तकत्वादिति भावः। मतान्तरानुसारेण हेतुलक्षणमाह– ***अनुमितिहेतुज्ञानेत्यादिना।*** अनुमितिहेतुभूतं यज्ज्ञानं परामर्शरूपं तस्य कारणं यत् धूमवत्त्वादिशब्द-जन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानावृत्तिजातियुक्तं ज्ञानं तज्जनकवाक्यत्व-मित्यन्वयः। प्रतिज्ञादिभिः पञ्चभिर्वाक्यैः प्रत्येकं जायमानानां शाब्दबोधानां महावाक्यार्थबोधद्वारा अनुमितिहेतुपरामर्शकारणत्वं पूर्वमुपपादितम्। तदनुसारेण हेतुवाक्यजन्यज्ञानमनुमितिहेतुज्ञानकारणं भवति। हेतुवाक्यजन्यज्ञाने प्रतिज्ञादिजन्यज्ञानावृत्तिः हेतुजन्यज्ञानवृत्तिश्च जातिः वर्तते इति हेतुवाक्ये लक्षणसमन्वयः कर्तव्यः। अत्र जातौ धूमवत्त्वादिशब्दजन्यज्ञान-वृत्तित्वविशेषणमव्याप्तिशङ्कायाः वारणार्थम्। प्रतिज्ञादिजन्यज्ञानावृत्तित्व-

**अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्व-प्रतिपादकविभक्तिमन्न्यायावयवत्वमन्वयिहेतुत्वम्। एतदेव व्यतिरेक-व्याप्त्यभिधायकपदप्रक्षेपात् व्यतिरेकिहेतुत्वम्। अन्वयव्यतिरेको-दाहरणाकांक्षाप्रयोजकतथाभूतावयवत्वमन्वयव्यतिरेकिहेतुत्वम्। यद्वा पक्षसपक्षसतो विपक्षासतो हेतुवचनमन्वयव्यतिरेकि। अत्यन्ताभावा-प्रतियोगिसाध्यसमानाधिकरणपक्षसपक्षसद्धेतुवचनं केवलान्वयि। यद्वा अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयक-शाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्व-मन्वयिहेतुत्वम्।**

---

विशेषणमतिव्याप्तिशङ्कायाः वारणार्थम्। तत्र न्यायार्थज्ञानस्य महावाक्यार्थबोधरूपस्य समूहालम्बनबोधरूपस्य च उपनयार्थविषयकत्वात् परामर्शत्वेन रूपेण अनुमितिकारणत्वमित्यभिमानेन कारणान्तमुपात्तमित्यभिप्रेत्य दूषयति–***जातिं विनेति।*** परामर्शत्वं न जातिः मानाभावात्। जातित्वेऽपि महावाक्यार्थबोधे तदनुपगमात्। अन्यरूपेण च न कारणत्वं मानाभावादिति अनुमितिकारणत्वं न्यायार्थबोधे नास्तीति असम्भव इत्यर्थः।

नन्वेवं कारणान्तं परित्यज्यताम्। तथापि विशेष्यस्य लक्षणत्वसम्भवात् इत्यत आह–***वाक्येति। जन्यतावच्छेदकेति।*** धूमादिति उदासीनवाक्यजन्यबोधव्यावृत्तं जन्यतावच्छेदकं विनेत्यर्थः। ***दुर्ग्रहादिति।*** उदासीनतद्वाक्यातिव्याप्त्यवारकत्वात् इत्यर्थः। तत्साधारण्यास्तु जातेः मानाभावेन प्रागेव निराकरणादिति भावः। सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह–***अन्वयव्याप्तीति।*** अन्वयव्याप्त्यभिधायकः यः अवयवः अन्वय्युदाहरणरूपः तदभिधानप्रयोजकं कथमस्य गमकत्वमिति जिज्ञासोत्पादनद्वारा तज्जनकं यज्ज्ञानं तज्जनकः यः हेतुत्वप्रतिपादक-विभक्तिमान् न्यायावयवः तत्त्वमन्वयिहेतुत्वम्। व्यतिरेकव्याप्त्यभिधायका-वयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं व्यतिरेकिहेतुत्वम्।

## एतदेवाप्रतीतान्वयसाध्यसाधनेति विशेषणाद्व्यतिरेकिहेतुलक्षणम्।

प्राक् लिङ्गत्रैविध्याभिधानात् तदनुरोधेन हेत्ववयवत्रयं लक्षयति-***यद्वेति।*** पक्षे सपक्षे च वर्तमानस्य विपक्षेऽवर्तमानस्य च हेतोः वचनं प्रतिपादकः शब्दः अन्वयव्यतिरेकि। यथा धूमादिति। धूमो हि पक्षे पर्वते सपक्षे महानसादौ च वर्तते। विपक्षे महाह्रदे न वर्तते। अत्यन्ताभावाप्रतियोगि यत् साध्यं तत्समानाधिकरणः पक्षसपक्षयोर्वर्तमानो यो हेतुः तत्प्रतिपादकशब्दः केवलान्वयि। यथा घटोऽभिधेयः प्रमेयत्वादिति। अत्र च सद्धेतुविषयक एव हेत्ववयवः सङ्ग्राह्य इति स्वरूपासिद्धिविषयकवारणाय पक्षपदम्। असाधारणविषयक-हेत्ववयववारणाय व्यतिरेकिहेत्वतिव्याप्तिवारणाय च सपक्षपदम्। व्यभिचारिविरुद्धविषयकवारणाय विपक्षासत इति।

व्याप्तिग्राहकसहचारभेद एव हेत्ववयवभेदकः, व्यतिरेकव्याप्त्य-भावादिति मतमनुरुध्य विशेषलक्षणत्रयमाह। यद्वा दशाविशेषे अन्वयिसाधारणं लक्षणान्तरमाह- ***यद्वेति।*** अनुमितिकारणीभूतो यः परामर्शः तत्प्रयोजकं यत् शाब्दज्ञानं तस्य कारणीभूता या साध्यविषयिणी शाब्दधीः तज्जनकः यः प्रतीतः ज्ञातः अन्वयः सहचारः ययोस्तयोः साध्यसाधनयोर्वाचकः हेतुत्वार्थकविभक्तिमान् शब्दः तत्त्वमन्वयिहेतुत्वम्। कारणान्तं न्यायावयवार्थकमुदासीनवाक्यवारणाय। धूमादालोकवा-नित्यादिप्रतिज्ञावारणाय जनकान्तम्। प्रकृतहेतुविशिष्टहेतुत्वविषयतावहिर्भावेन साध्याविषयकत्वनिवेशान्न पर्वतो वह्निमान् वह्निसामग्रीमत्त्वादित्यादावव्याप्तिः। व्यतिरेकिहेत्ववयववारणाय बोधकान्तम् (वाचकान्तम्)। ***प्रतीतसाध्यान्वयसाधनेति*** पाठान्तरम्। प्रतीतः साध्यान्वयः साध्यसहचारमात्रं यत्र ईदृशं यत् साधनं तद्बोधकेत्यर्थः। निगमनवारणाय ***साध्याविषकेति।*** केवलव्यतिकिण्यतिव्याप्तेराह- ***प्रतीतान्वयेति।*** प्रतीतान्वयमात्रेत्यर्थः। प्रतीतान्वयं यत् साध्यं यस्य साधनस्य तत् साधनं तथा, तस्य वाचकमित्यपि विगृह्णन्ति। यो यो धूमवानित्युदाहरणांशेऽतिव्याप्तिवारणाय- हेतु***विभक्तिमदिति।*** दशाविशेषे व्यतिरेकिसाधारणं लक्षणमाह -***एतदेवेति।***

**कथायां धूमादित्येव प्रयोक्तव्यम्। न तु धूमवत्त्वादिति। मतुपो व्यर्थत्वात्।**

---

अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनका-प्रतीतान्वयसाध्यसाधकबोधकहेतुविभक्तिमच्छब्दत्वं व्यतिरेकिहेतुलक्षणमित्यर्थः।

मीमांसकैस्तु 'प्रतिज्ञादित्रिकं वापि यद्युदाहरणादिकम्' इति मतभेदेन लक्षणत्रयं प्रदर्श्य पक्षधर्मताया अप्रदर्शनात् प्रतिज्ञादित्रिकस्यालक्ष्यता। द्व्यवयववादिभिरपि पक्षधर्मताप्रदर्शकान्तर्भावेणैव लक्ष्यतास्वीकारात् इत्याक्षेपं समाधातुं धूमादिति न हेतुः, किन्तु धूमवत्त्वादित्येव। तथा च हेतुसम्बन्धिनः प्रक्रान्तपदस्य लाभात् न दोष इत्यभिहितम्। तद्दूषयति–*कथायामिति।* व्याप्तिपक्षधर्मतामात्रप्रदर्शकावयवद्वयादिबोधानामपि हेतुसाध्ययोर्ज्ञाप्यज्ञापकभावाप्रदर्शनेऽनाकाङ्क्षिततद्व्याप्तिप्रदर्शनासम्भवात् प्रतिज्ञाहेतूभयप्रदर्शनमावश्यकम्। उपनयस्त्वग्रे व्यवस्थाप्यः। एवं पक्षे साध्यस्य प्रतिज्ञातोऽवगमेऽपि दोषविशेषजन्यबाधशङ्कानुच्छेदात् निगमनप्रदर्शनमिति पञ्चानामवयवत्वसिद्धौ मतुप आधिक्यमित्यर्थः।

*'सामान्यवत्त्वे सति'* इति मूलग्रन्थमवतारयति गादाधर्या–*शब्दोऽनित्य* इत्यादिना। शब्दोऽनित्यः सामान्यवत्त्वे सति बाह्येन्द्रियजन्यप्रत्यक्षविषयत्वात् इति प्रयोगः। अत्र हेतौ सामान्यवत्त्वमात्रोक्तौ अनित्यत्वाभाववति आत्मादौ व्यभिचारः। तद्वारणाय बाह्येन्द्रियजन्यप्रत्यक्षविषयत्वोक्तिः। तावन्मात्रोक्तौ पृथिवीत्वादिसामान्येऽभावे च व्यभिचारः। तद्वारणाय सामान्यवत्त्वोक्तिः। अत्र हेतुघटकदलयोः प्रत्येकं हेतुत्वं न सम्भवति, उक्तरीत्या व्यभिचरितत्वात्। नापि सामान्यवत्त्वविशिष्टस्य बाह्येन्द्रियजन्य-प्रत्यक्षविषयत्वस्य हेतुत्वम्। सामान्यवत्त्वरूपस्य नामार्थस्य बाह्यकरण-प्रत्यक्षत्वरूपेऽपरनामार्थे सामानाधिकरण्यसम्बन्धेन विशेषणतयान्वये सत्येव विशिष्टस्य हेतुत्वं लभ्येत। तेन सम्बन्धेनान्वयस्तु न सम्भवति, नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात्। अतो विशिष्टस्य हेतुत्वं न सम्भवति। नापि विशेष्यविशेषणभावानापन्नयोर्मिलितयोर्द्वयोर्हेतुत्वं सम्भवति। सप्तम्यन्तपदोपस्थाप्यस्य सामान्यवत्त्वस्य हेतुत्वालाभात्। सप्तम्याः

सामान्यवत्वे सति बाह्यकरणप्रत्यक्षत्वात् इत्यपार्थकम्। विभक्त्युपस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्य अनन्वयादिति केचित्। तन्न। सतिसप्तमीबलात्सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य च सामानाधिकरण्योपस्थितौ विशिष्ट-हेतुत्वान्वयात्। तथैव व्युत्पत्तेः। न ह्ययमर्थोऽस्मान्नावगम्यत इति।

*॥इति तत्त्वचिन्तामणौ हेतुलक्षणम्॥*

---

शब्दोऽनित्यः सामान्यवत्त्वे सति बाह्यकरणप्रत्यक्षत्वादिति हेतुप्रयोगे हेतुघटकदळयोः प्रत्येकं व्यभिचारितया भेदेन नामार्थयोस्तयोरेकांशे अपरस्य विशेषणतयाऽनन्वयेन च विशिष्टहेतुत्वान्वयासम्भवेन विशेष्यविशेषणभावानापन्नयो-र्मिळितयोर्हेतुत्वान्वयो वाच्यः, सोऽपि न सम्भवति सामान्यवत्त्वादेस्सप्तम्यन्त-पदोपस्थाप्यस्य हेतुत्वार्थकपञ्चमीप्रकृत्यर्थत्वाभावादिति केषाञ्चित्पूर्वपक्षं समाधातुमुपन्यस्यति-***मूले हेतुग्रन्थे सामान्यवत्त्व*** इति। सामान्यवत्त्वस्य

---

हेतुत्वार्थकत्वविरहात्। बाह्यकरणप्रत्यक्षत्वपदोत्तरपञ्चम्याः हेतुत्वार्थकत्वेऽपि तया स्वप्रकृत्यर्थनिष्ठमेव हेतुत्वं बोधयितुं शक्यते। न तु स्वप्रकृत्यर्थभिन्नस्य सामान्यवत्त्वस्य हेतुत्वम्। प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वव्युत्पत्तेरिति केषाञ्चित् पूर्वपक्षः। मूलेऽपार्थकमित्यस्य अन्वयबोधाजनकमित्यर्थः। **विभक्त्यन्तरावरुद्धस्येत्यनेन** सप्तम्यर्थ-विशेषणतापन्नस्य सामान्यवत्त्वस्य पञ्चम्यर्थेऽन्वयो न सम्भवति, एकत्र विशेषणतयोपस्थितस्यान्यस्य विशेषणतयानन्वय इति व्युत्पत्तिविरोधादित्यपि सूच्यते।

तन्नेत्यादिसमाधानग्रन्थमवतारयति-***सामान्यवत्त्वस्येति। तादृश-विशेषणावच्छिन्न*** इति। सामान्यवत्त्वसामानाधिकरण्यावच्छिन्न इत्यर्थः। सतिशब्दसमभिव्याहृतसप्तम्याः सामानाधिकरण्यमर्थः। तत्र निरूपितत्व-रूपप्रतियोगितासम्बन्धेन सामान्यवत्त्वस्यान्वयः। सप्तम्यर्थस्य सामानाधिकरण्यस्य आश्रयतासम्बन्धेन बाह्यकरणप्रत्यक्षत्वेऽन्वय इति

बाह्यकरणप्रत्यक्षत्वे विशेषणत्वाविशेषणत्वासम्भवेऽपि सप्तम्यन्तार्थस्य सामान्यवत्त्व-सामानाधिकरण्यस्य तत्र विशेषणतया तादृशविशेषणावच्छिन्ने बाह्यकरणप्रत्यक्षत्वे हेतुत्वान्वयसम्भवान्नापार्थकतेत्याह-**तत्रेति।** ***सामान्यवत्त्वस्येति।*** सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वे विशेषणीभवत्सामानाधिकरण्यप्रतियोगितयोपस्थितावित्यर्थः। अथ सामानाधिकरण्ये सप्तम्या अननुशासनात्कथमेतत्, सतीत्यस्य वा कोऽर्थ इति चेन्न "यस्य च भावेन भावलक्षण" मिति सूत्रानुशिष्टसप्तम्याः गोषु दुह्यमानासु गत इत्यादौ यथा गोदोहनादिसमानकालीनत्वं गमनादौ बोध्यते तथा प्रकृतेऽपि समानदेशत्वप्रत्यायनात्। न च तादृशसप्तम्याः क्रियासमानकालीनत्ववत्क्रिया-समानदेशत्वस्य कदाचित्क्रियायां न प्रत्यायनसम्भवः। यस्य क्रियया अन्यस्य क्रिया लक्ष्यते विशेष्यते यद्वाचकपदसमभिव्याहृतकृदन्तपदोपस्थापितक्रिया समानकालीनत्वादिसम्बन्धेन क्रियान्तरविशेषणमिति यावत्, तद्वाचकपदात्सप्तमी-त्यर्थकत्वात्तादृशसूत्रस्य क्रियासमानकालीनत्वादौ क्रियान्तरविशेषणतया विवक्षिते तादृशसूत्रेण सप्तमीविधानात् सप्तमीप्रकृत्यर्थनिरूपितसामानाधिकरण्यादेरपरनामार्थ-विशेषणतया विशेषणे सप्तम्यनुशासनात्सामान्यवत्त्वसामानाधिकरण्यस्य प्रत्यक्षत्वे कुतो

---

विशिष्टस्य हेतुत्वं लभ्यत इत्यर्थः। ***तत्र विशेषणतयेति।*** बाह्यकरणप्रत्यक्षत्वे विशेषणतयेत्यर्थः। ***विशेषणीभवदिति।*** विशेषणतां प्राप्नुवत् यत् सामानाधिकरण्यं तन्निरूपकतयेत्यर्थः।

***अथ सामानाधिकरण्य*** इत्यादि। सामानाधिकरण्यरूपेऽर्थे सप्तम्याः पाणिन्यादिभिरननुशिष्टत्वात् कथं सप्तम्याः सामानाधिकरण्यार्थकत्वम्? एवं 'सति' इति शब्दस्य कोऽर्थः? तस्य च कुत्रान्वयः? इति शङ्का। तत्र समाधानम्-'यस्य च भावेन भावलक्षणम्' इति सूत्रेण समानकालकत्वं सप्तम्यर्थतयानुशिष्यत इति सम्प्रतिपन्नम्। तथा समानाधिकरणकत्वमपि सप्तम्यर्थ इति तेनैव सूत्रेणानुशिष्यते। तथा हि-गोषु दुह्यमानासु गत इत्यादौ गोकर्मकदोहनसमानकालिकत्वं गमने बोध्यते। तथा प्रकृतेऽपि समानदेशकत्वं बोध्यते। ननु यस्य क्रियया अन्यस्य क्रिया लक्ष्यते-ज्ञाप्यते यद्वाचकपदसमभिव्याहृतकृदन्तपदोपस्थापित-क्रियासमानकालिकत्वादिसम्बन्धेन क्रियान्तरविशेषणमिति यावत्। तद्वाचकपदात् सप्तमीति तस्य सूत्रस्यार्थः। गोवाचकपदसमभिव्याहृत-

कृदन्तदुह्यमानपदोपस्थापिता क्रिया दोहनक्रिया। सा समानकालिकत्व-सम्बन्धेन गमनक्रियायां विशेषणम्। अतस्तत्र समानकालिकत्वरूपः सम्बन्धः सप्तम्यर्थः। प्रकृते सामानाधिकरण्यस्य बाह्यकरण-प्रत्यक्षत्वरूपनामार्थविशेषणतया क्रियान्तरविशेषणत्वविरहात् कथं तेन सूत्रेण सामानाधिकरण्ये सप्तमीति चेत्–न। गोषु दुह्यमानासु गतः इत्यत्र गोपदोत्तरसप्तम्याः समभिव्याहृतपदोपस्थाप्या दोहनक्रिया अर्थः। दुह्यमानपदार्थस्य दोहनकर्मणः अभेदसम्बन्धेन गोपदार्थेऽन्वयः। गोपदार्थस्य सप्तम्यर्थे दोहने स्वनिष्ठकर्मतानिरूपकत्वसम्बन्धेनान्वयः। सप्तम्यर्थस्य दोहनस्य समानकालिकत्वसम्बन्धेन गमनक्रियायामन्वयः। तथा च दोहनकर्माभिन्नगोकर्मकदोहनसमानकालिकगमनकर्ता चैत्र इति बोधः। तथा सामान्यवत्त्वे सति बाह्यकरणप्रत्यक्षत्वात् इत्यत्र अस भुवि इति धातोः शतृप्रत्यये 'श्नसोरल्लोपः' इति असधात्वकारस्य लोपे निष्पन्नात् सत् शब्दात् सप्तम्यां सति इति शब्दः निष्पद्यते। अतः असधातोः आधारत्वमर्थः। 'अत्रास्ति घट' इत्यादौ एतद्देशनिष्ठाधारतानिरूपको घट इति बोधात् असधातोराधारतार्थकतायां आवश्यकत्वात्। तथा च समभिव्याहृतअसधात्वर्थाधारतारूपा क्रिया सामान्यवत्त्वे इत्यत्र सप्तम्याः अर्थः। सत् शब्दस्य शत्रन्तस्य आधारतानिरूपकमित्यर्थः। धातोराधारतार्थकत्वात् शतृप्रत्ययस्य निरूपकार्थत्वात्। आधारतानिरूपक-स्याभेदसम्बन्धेन सामान्यवत्त्वेऽन्वयः। प्रकृत्यर्थस्य सामान्यवत्त्वस्य निरूपितत्वसम्बन्धेन सप्तम्यर्थाधारतायामन्वयः। आधारतायाः समानदेशकत्व-सम्बन्धेन बाह्यकरणप्रत्यक्षत्वेऽन्वयः। तथा च आधारतानिरूपकाभिन्न-सामान्यवत्त्वनिरूपिताधारतासमानाधिकरणप्रत्यक्षत्वात् इति बोधः। सामान्यवत्त्वनिरूपिताधारतायाः प्रत्यक्षत्वस्य च एकाधिकरणत्वे बुद्धेऽर्थात् सामान्यवत्त्वप्रत्यक्षत्वयोः सामानाधिकरण्यलाभः। न च प्रत्यक्षत्वस्य क्रियात्वाभावेन सामान्यवत्त्वनिष्ठया आधारत्वक्रियया नामार्थस्य प्रत्यक्षत्वस्य लक्षणेऽपि क्रियालक्षणविरहात् कथमत्र सूत्रप्रवृत्तिरिति वाच्यम्। भावलक्षणमित्यत्र भावपदस्य धर्मसामान्यपरत्वेन क्रियापरत्वाभावात्।

लाभ इति वाच्यम्। यथा गोषु दुह्यमानास्वागत इत्यादौ गोपदोत्तर-सप्तम्यास्समभिव्याहृतक्रिया दोहनरूपार्थः। तत्र समभिव्याहृतकृदन्तार्थान्वितप्रकृत्यर्थस्य कर्मतानिरूपकत्वसम्बन्धेनान्वयः। तस्याश्च समानकालीनत्वसम्बन्धेन क्रियान्तरेऽन्वय इति तत्र दुह्यमानगोकर्मकदोहनसमानकालीनत्वलाभस्तथा प्रकृतेऽपि शतृप्रकृत्य-सिधातोराधारत्वमर्थः। अत्रास्ति घट इत्यादावेतद्देशनिष्ठाधारताप्रतियोगी घट इत्यादिप्रतीतेः, अत्र चाधारत्वरूपक्रियायां सामान्यवत्त्वस्य प्रकृत्यर्थस्य प्रतियोगित्वसम्बन्धेनान्वये आधारतायाः प्रत्यक्षत्वे समानदेशत्वसंबन्धेनान्वये प्रत्यक्षत्वे सामान्यवत्त्वसामानाधिकरण्यलाभसम्भवात्। भावलक्षणमिति भावशब्दस्य

---

यद्वा सत इते पञ्चम्यन्तं पदमध्याहार्यम्। सामान्यवत्त्वे सति सतः प्रत्यक्षत्वात् इति पूर्णं वाक्यम्। सप्तम्यर्थाधारतायाः समानाधिकरणत्वसम्बन्धेन पञ्चम्यन्तसच्छब्दार्थैकदेशासधात्वर्थाधारतायामन्वयः। अतः सामान्यवत्त्वनिरूपिताधारताक्रियया प्रत्यक्षत्वनिरूपिताधारतारूपक्रियायाः लक्षणात् सूत्रस्य प्रवृत्तिः। आधारतानिरूपकाभिन्नसामान्यवत्त्वनिरूपिताधारता-समानाधिकरणाधारतानिरूपकाभिन्नात् बाह्यकरणप्रत्यक्षत्वादिति शाब्दबोधः। तेन सामान्यवत्त्वनिरूपिताधारतायाः प्रत्यक्षत्वनिरूपिताधारतायाश्च सामानाधिकरण्यं लभ्यत इति सर्वं समञ्जसम्।

***गोपदोत्तरेत्यादि।*** दोहनरूपा समभिव्याहृतक्रिया गोपदोत्तरसप्तम्या अर्थ इत्यन्वयः। ***समभिव्याहृतकृदन्तेति।*** समभिव्याहृतं कृदन्तं दुह्यमानपदम्। तदर्थः दोहनकर्म। अभेदसम्बन्धेन तदन्वितः प्रकृत्यर्थः गोरूपः तस्येत्यर्थः। ***अत्रास्ति घट*** इति। एतत्पदोत्तरत्रल आधेयत्वमर्थः। तत्र प्रकृत्यर्थस्य एतद्देशस्य निरूपितत्वसम्बन्धेनान्वयः। आधेयत्वस्य आश्रयतासम्बन्धेन असधात्वर्थाधारतायामन्वयः। तिप्रत्ययस्य निरूपकत्वमर्थः। तस्य घटेऽन्वय इति एतद्देशनिरूपिताधेयताश्रय (एतद्देशनिष्ठ) आधारतानिरूपको घट इति बोधः। ***प्रतियोगित्वसम्बन्धेनेति।*** निरूपितत्वसम्बन्धेनेत्यर्थः। ***प्रत्यक्षत्वसत्त्व*** इति। प्रत्यक्षत्वनिरूपिताधारत्वे सामान्यवत्त्वनिरूपिताधारत्वस्य समानाश्रयवृत्तित्वलाभेनेत्यर्थः।

***कुत्रचिदित्यादि।*** यस्य चेति सूत्रानुशिष्टसप्तमीस्थले कुत्रचित् समानकालिकत्वं संसर्गः, कुत्रचित् समानदेशकत्वं संसर्ग इत्यत्र किं

धर्ममात्रपरत्वात्प्रत्यक्षत्वस्य क्रियात्वविरहेऽपि क्षतिविरहात्। सत इत्यस्याध्याहारेण वा प्रत्यक्षत्वसत्त्वे सामान्यवत्त्वसत्त्वस्य समानदेशतालाभेन सामञ्जस्यात्। कुत्रचित्समानकालीनत्वं क्रियायास्सम्बन्धः कुत्रचित्समानदेशत्वमित्यत्र किं नियामकमिति चेत्- यत्र समभिव्याहृतकृत्प्रत्ययस्य वर्तमानत्वेऽपि तात्पर्यं तत्र समानकालीनत्वं यत्र च न तद्विवक्षणं तत्र समानदेशत्वं सम्बन्ध इति नियमात्। प्रकृते च वर्तमानत्वाविवक्षया समानदेशत्वलाभात्। वर्तमानत्वाविवक्षायामपि विरोधिकालाविवक्षायां लटः साधुत्वात्। यत्र चातीतत्वमनागतत्वं वा कृतौ विवक्षितं दुग्धासु दोग्धव्यास्वित्यादौ तत्रोत्तरत्वं पूर्वत्वं वा सम्बन्ध इति दोहनोत्तरत्वादिकमेव प्रतीयते न तु समानकालीनत्वमित्यवधेयम्।

**इति गादाधर्याम् अवशिष्टहेतुलक्षणम्**

---

नियामकमिति चेत्-यत्र समभिव्याहृतकृत्प्रत्ययस्य कर्त्रादाविव वर्तमानकालेऽपि तात्पर्यं तत्र समानकालिकत्वं सम्बन्धः। यथा गोषु दुह्यमानासु गत इत्यत्र वर्तमानार्थकस्य लटः स्थाने शानचो विधानात् वर्तमानस्य विवक्षितत्वाच्च। सामान्यवत्त्वे सतीत्यत्र तु लटः स्थाने शतृप्रत्ययस्य विधानेऽपि वर्तमानकालो न विवक्षित इति तत्र समानदेशत्वं संसर्गः। **दुग्धासु दोग्धव्यास्विति।** 'गोषु दुग्धासु गत' इत्यत्र सप्तम्यर्थस्य दोहनस्य उत्तरकालिकत्वसम्बन्धेन गमनेऽन्वय इति अतीत-दोहनकर्माभिन्नगोकर्मकदोहनोत्तरकालिकगमनवानिति बोधः। गोषु दोग्धव्यासु गत इत्यत्र पूर्वकालिकत्वं सम्बन्ध इति अनागतदोहनकर्माभिन्न-गोकर्मकदोहनपूर्वकालिकगमनवानिति बोध इति भावः। **कृतौ विवक्षितमिति।** क्रियायां विवक्षितमित्यर्थः।

**इति भावादीपिकायाम् अवशिष्टहेतुलक्षणम्**

# अथ उदाहरणलक्षणम्

**हेतावुक्ते कथमस्य गमकत्वमित्याकांक्षायां व्याप्तिपक्षधर्मत-योरुपदर्शनप्राप्तौ व्याप्तेः प्राथम्यात्तत्प्रदर्शनायोदाहरणम्। तत्रानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतव-न्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम्। सामान्यलक्षणे साध्यसाधनसम्बन्धबोधजनकत्वम्। साध्यसाधनाभाव-सम्बन्धबोधजनकत्वञ्च विशेषलक्षणद्वयम्।**

---

मूले-***हेतावुक्त*** इति। कथमस्य हेतोः गमकत्वं साध्यज्ञापकत्वमिति जिज्ञासायां व्याप्तिपक्षधर्मतावत्त्वात् गमकत्वमिति वक्तुं गमकतौपयिकयोः व्याप्तिपक्षधर्मतयोः प्रदर्शनं कार्यम्। तत्रोदाहरणेन व्याप्तेः उपनयेन च पक्षधर्मतायाः प्रदर्शनं क्रियते। तत्राप्युदाहरणस्य प्राथम्ये विनिगमकमाह-***व्याप्तेः प्राथम्यादिति।*** न्यायार्थज्ञानानन्तरं मध्यस्थस्य परामर्शो जायते। तत्र व्याप्तेः प्रकारतावच्छेदकतया प्राथम्यम्। अवच्छेदकाभिलापपूर्वकप्रकाराभिलापादिति भावः। यद्वा कथमस्य गमकत्वमिति जिज्ञासायाः गमकत्वौपयिकलिङ्गनिष्ठप्रकारविषयकत्वादित्यर्थः। प्रकाशकृतस्तु विशेषणत्वेन व्याप्तेः प्रथमोपस्थिततया प्रथमाकाङ्क्षा-विषयत्वादित्यर्थः। पक्षधर्मतायाश्च वैशिष्टचरूपत्वेनातथात्वादिति भाव इति व्याचक्षते।

***अनुमितीति।*** अनुमितिहेतुभूतः यः परामर्शः तत्तात्पर्यकं वाक्यमुदाहरणं तज्जन्यज्ञानजनकं एवं व्याप्यत्वाभिमतवन्निष्ठः यः व्यापकत्वाभिमतेन साकं नियतसम्बन्धः तद्विषयकबोधजनकः यः शब्दः तत्त्वमुदाहरणत्वमित्यर्थः। अत्र जनकान्तं न्यायावयवार्थकम्। तद्धर्मधर्मितावच्छेदकतद्धर्मव्यापकताविशिष्टवैशिष्टचावगाहिताप्रयोजक-विषयताश्रयवीप्सावत्त्वं विशेष्यदलार्थः। यो यो धूमवान् स वह्निमानित्यादौ स्वघटकीभूतवीप्सासमभिव्याहृतसाध्यबोधकपदस्य हेतुव्यापकताविशिष्ट-साध्ये लक्षणा। यो यो न वह्निमान् स न धूमवानित्यादौ तु

**न्यायावयवदृष्टान्तवचनमुदाहरणमिति तु न। दृष्टान्तप्रयोगस्य सामयिकत्वेनासार्वत्रिकत्वात्। यो यो धूमवान् सोऽग्निमानित्येव व्याप्तिप्रतीतेः। नापि प्रकृतानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्य-ज्ञानविषयव्याप्त्युपनायकं वचनं तत्। उपनयातिव्याप्तेः।**

---

तथाविधहेत्वभावबोधकपदस्य साध्याभावव्यापकताविशिष्टहेत्वभावे लक्षणा। प्रयोजकीभूतसमभिव्याहारविषयताघटकवीप्साविषयतायाः प्रयोजकत्वात् लक्षणसमन्वयः। यो यो वह्निमान् स तेजस्वीति वाक्यवारणं तु प्रकृतन्यायावयवत्वविशेषणेनेति भावः। तद्धर्मपदेन धूमादिः वह्न्यभावादिश्च गृह्यते। अत इदमन्वयव्यतिरेक्युदाहरणद्वयसामान्यलक्षणम्।

विशेषलक्षणद्वयमाह–***साध्येति।*** प्रकृतहेतुधर्मितावच्छेदकक-प्रकृतहेतुव्यापकताविशिष्टप्रकृतसाध्यवैशिष्ट्यावगाहिताप्रयोजकविषयताश्रय-वीप्सावद्वाक्यत्वं, प्रकृतसाध्याभावधर्मितावच्छेदककप्रकृतसाध्याभाव-व्यापकताविशिष्टप्रकृतसाधनाभाववैशिष्ट्यावगाहिताप्रयोजकविषयताश्रय-वीप्सावद्वाक्यत्वमिति अन्वय्युदाहरणस्य व्यतिरेक्युदाहरणस्य च पृथक् असाधारणं लक्षणमित्यर्थः।

प्राचां मतमाह–***न्यायावयवेति।*** न्यायावयवत्वे सति यथापदार्थान्वितस्वार्थबोधकनामोत्तरप्रथमावत्त्वमित्यर्थः। यथापदार्थश्च हेत्वादिमति हेतुव्यापकताविशिष्टसाध्यादिमत्त्वमेव। एतन्मते वाक्यद्वयात्मकमुदाहरणम्। यथापदार्थः क इति जिज्ञासाव्युदासाय प्रथमवाक्यस्यावश्यकतेति। ***दृष्टान्तप्रयोगस्येति।*** यथा महानस इत्यादिदृष्टान्तवचनस्येत्यर्थः। ***सामयिकत्वेनेति।*** मया सदृष्टान्तमेवोदाहरणं प्रयोक्तव्यमित्यभिलाप-विशेषनियन्त्रितत्वेनेत्यर्थः। ***असार्वत्रिकत्वादिति।*** सकलोदाहरणा-घटकत्वादित्यर्थः। तथा चाव्याप्तिरिति भावः।

स्वलक्षणेऽव्याप्तिशङ्कां निरस्यति–***यो य*** इति। इत्येवेति। इतिवाक्यादेवेत्यर्थः। एवकारेण यथापदघटितवाक्यव्युदासः। ***व्याप्तिप्रतीतेरिति।*** व्यापकत्वप्रतीतेरित्यर्थः। ***प्रकृतानुमितीत्यादि।*** तत्पक्षसाध्यकानुमितिजनक-

**अत एवोपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम्। एतदेवान्वयव्यतिरेकव्याप्तिविषयकत्वविशेषितं विशेषलक्षणद्वयमित्यन्ये।**

---

ननूदाहरणे यत्पदद्विरुक्तिप्रयोजिकायाः महानसत्वमहानसान्यत्वादिना वक्तुर्यावत्साधनाधिकरणप्रत्यायनेच्छारूपवीप्सायाः किं प्रयोजनं? न हि साधनस्य यावदधिकरणे साध्यसत्त्वज्ञानमनुमितिहेतुर्येन यत्पदे वीप्सां विना यावद्धूमाधिकरणानुपस्थापने तत्पदेन तावदधिकरणानां परामर्शासम्भवात्सकलसाधनाधिकरणे साध्यवत्त्वाप्रतीतेरनुमित्यनिर्वाहः स्यादिति यत्तत्पदात्तावदधिकरणबोधो वीप्साप्रयोजनं भवेत्, न च व्याप्तिप्रत्यायनेच्छा वीप्सा तस्याश्चानुत्यौपयिकबोध एव प्रयोजनमिति

---

ज्ञानविषयव्याप्तिबोधकत्वे सति न्यायावयवत्वं तत्पक्षसाध्यकानुमितिप्रयोजकोदाहरणत्वमित्यर्थः। ***उपनयातिव्याप्तेरिति।*** इदमापाततः। पक्षधर्मत्वाविषयव्याप्तिविषयकबोधजनकत्वविवक्षायामुपनयातिव्याप्तिवारणसम्भवात्। उपनयजन्यबोधस्य पक्षधर्मत्वविषयकत्वात्।

***अत एवोपनयेति।*** उपनयवाक्यप्रयोगस्य प्रयोजिकायाः व्याप्यं पक्षे वर्तते वा न वेति जिज्ञासायाः जनकं न्ययावयवभूतं वाक्यमुदाहरणमित्यर्थः। पक्षः साध्यव्याप्यवान्न वेति संशयस्तु जिज्ञासाप्रयोजकः।

***एतदेवान्वयेत्यादि।*** अन्वयव्याप्तिबोधकोपनयप्रयोजकजिज्ञासाजनकत्वे सति न्यायावयवत्वमन्वय्युदाहरणत्वम्। व्यतिरेकव्याप्तिबोधकोपनयप्रयोजकजिज्ञासाजनकत्वे सति न्यायावयवत्वं व्यतिरेक्युदाहरणत्वम्। अन्वयव्यतिरेक्युदाहरणं च नास्त्येवेति भावः।

युगपत् सकलधर्मिप्रत्यायनेच्छा व्याप्तिप्रत्यायनेच्छा वा वीप्सेत्याशयेन शङ्कते गादाधर्या-***ननूदाहरण*** इति। उदाहरणे यो य इति यत्पदस्य द्विर्वचने प्रयोजिका या वक्तुः महानसत्वेन महानसान्यत्वेन सकलानां साधनाधिकरणानां बोधनेच्छा सा वीप्सा चेत्, तस्याः किं प्रयोजनम्? न हि साधनाधिकरणेषु सर्वेषु साध्यसत्त्वज्ञानमनुमितिहेतुः, तदा हि यत्पदे वीप्सां विना

अत्र च व्यभिचारवारणाय वीत्सामाहुः।।

---

वाच्यम्, व्याप्तेश्च पदार्थवाक्यार्थत्वविरहेण तत्प्रत्यायनेच्छायामपि शाब्द-तत्प्रत्ययस्यायोगात्। मानसबोधे च वक्त्रभिप्रायानुपयोगात्। यदि च तत्पदसमभिव्याहृतवह्न्यादिपदस्य धूमव्यापकताविशिष्टवह्न्यादिलाक्षणिकतया धूमादौ वह्निव्याप्तिलाभ इत्युच्यते तदा यत्पदे द्विरुक्तिं विनापि तल्लाभसम्भवात् द्विरुक्तिवैयर्थ्यमित्याक्षेपे प्राचीनसमाधानमुपन्यस्यति। ***अत्र चेति।*** उदाहरणस्थयत्पदे चेत्यर्थः। ***व्यभिचारवारणायेति।*** वीप्सामुद्दिश्य मानसव्याप्तिज्ञानविरोधिव्यभिचारधी-वारणप्रयोजनिकामाहुरित्यर्थः। यावद्धेत्वधिकरणे साध्यवत्त्वनिश्चये तेन विपरीतनिश्चयात्मकत्वेन साधनाधिकरणे साध्याभाववत्त्वरूपव्यभिचारग्रहस्य प्रतिबन्धक

---

सकलधूमाधिकरणानुपस्थापनेन तत्पदेन तावदधिकरणानां परामर्शासम्भवात् सकलसाधनाधिकरणेषु साध्यवत्त्वाज्ञानात् अनुमितेरनिर्वाहः स्यादिति सकलाधिकरणबोधो वीप्साप्रयोजनं भवेत्। न च व्याप्तिप्रत्यायनेच्छा वीप्सा, तस्याश्च अनुमितिप्रयोजकज्ञानोत्पादनमेव प्रयोजनमिति वाच्यम्। अनुमितिप्रयोजकज्ञानेत्यनेन शाब्दस्य ज्ञानस्य विवक्षणे व्याप्तेः पदार्थत्वं वाक्यार्थत्वं वा नास्तीति तद्बोधनेच्छायां सत्यामपि ततः शाब्दप्रत्ययोत्पादनस्यासम्भवात्। मानसबोधविवक्षायां तत्र वक्त्रभिप्राय-स्यानुपयोगात्। यदि च स वह्निमानिति तत्पदसमभिव्याहृतवह्निपदस्य धूमव्यापकताविशिष्टवह्निलाक्षणिकतया धूमे वह्निव्याप्तिलाभ इत्युच्यते, तदा यत्पदे द्विरुक्तिं विनापि लक्षणयैव व्याप्तिलाभसम्भवात् द्विरुक्तिवैयर्थ्यमित्याक्षेपः।

व्यभिचारज्ञानवारणमेव यत्पदे वीप्सायाः प्रयोजनमिति समाधानम्। तथा हि–साधनाधिकरणे साध्याभाववत्त्वज्ञानमेव व्यभिचारज्ञानम्। वीप्सया साधनाधिकरणे सर्वत्र साध्यवत्त्वनिश्चये सति विपरीतनिश्चयात्मकेन तेन उक्तव्यभिचारग्रहः प्रतिबध्यत इति व्यभिचारग्रहप्रतिबन्धः वीप्सायाः प्रयोजनमिति। एतेन यावत्साधनाधिकरणप्रत्यायनेच्छा वीप्सेति प्रथमपक्षे प्रयोजनसद्भावः उक्तः। ***उद्देश्यमानसेति।*** उद्देश्यं यत् मानसं व्याप्तिज्ञानं तत्प्रतिबन्धको यो व्यभिचारग्रहः तद्वारणं प्रयोजनं यस्यास्तां

यत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र न वीप्सा। केवलान्वयिन्यभेदानुमाने च वीप्सायामपि व्यभिचारतादवस्थ्यमिति तु वयम्।

इति भावः। नन्वेवं वाच्यत्वादिसाध्यस्य यत्रोपायान्तरात्केवलान्वयित्वं गृहीतं अयमेतदभिन्नः एतद्वृत्तियावद्धर्मवत्त्वादित्यत्र च हेतावेकमात्रवृत्तित्वं गृहीतं तत्र हेतौ साध्यसामानाधिकरण्यग्रहादेव मानसी व्याप्तिधीस्सम्भवति। प्रथमेऽभावे साध्यीयत्वाग्रहेण द्वितीये साध्याभाववत्तया गृह्यमाणेऽधिकरणान्तरे हेतोरग्रहेण व्यभिचारग्रहासम्भवादित्युभयसिद्धव्याप्तिकसाधकतानुमाने यथोदाहरणं न प्रयुज्यते तथात्र सामानाधिकरण्यलाभायोदाहरणप्रयोगेऽपि द्विर्यत्पदं न प्रयुज्यत इत्यत्रेष्टापत्तिमाह- **यत्र चेति।** सर्वत्रैव द्विरुक्तिरनपेक्षितेति स्वमतमाह- **वीप्सायामपीति।** अयमाशयः। द्विर्यत्तत्पदप्रयोगेऽपि सकलसाधनाधिकरणपरत्वाग्रहे

वीप्सामाहुरित्यर्थः। वीप्सया व्यभिचारशङ्कानिवृत्तौ सहचारग्रहवशात् मानसो व्याप्तिग्रहो जायत इति भावः। तत्र व्यभिघारशङ्कानिवर्तकस्वं प्रदर्शयति-**यावदिति।** इदमेव लक्षणम्। व्यतिरेक्युदाहरणे साध्याभाववति साधनाभाववत्तानिश्चयोऽपि विपरीतनिश्चयत्वेन व्यभिचारशङ्काविरोधी बोध्यः।

यत्र चेति मणिमवतारयति-**नन्वेवमिति।** यत्र वाच्यत्वरूपस्य साध्यस्य अत्यन्ताभावाप्रतियोगित्वरूपं केवलान्वयित्वमाप्तवाक्यादिना अवगतम्, एवम् अयमेतदभिन्नः एतद्वृत्तियावद्धर्मवत्त्वादित्यत्र हेतावेकमात्रवृत्तित्वमवगतं, तत्र व्यभिचारग्रहाभावासहकृतात् केवलात् हेतौ साध्यसामानाधिकरण्यरूपसहचारग्रहादेव मानसं व्याप्तिज्ञानं सम्भवति। प्रथमस्थले वाच्यत्वमत्यन्ताभावाप्रतियोगीति ज्ञानदशायां वाच्यत्वप्रतियोगिकोऽभाव इति ज्ञानासम्भवात् अभावे वाच्यत्वप्रतियोगिकत्वावगाहिव्यभिचारज्ञानासम्भवात् तन्निवर्तनस्यानपेक्षणात्। द्वितीयस्थले हेतोः पक्षमात्रवृत्तितया साध्याभाववति पक्षातिरिक्तेऽवृत्तेः साध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहासम्भवात्। तथा चोक्तस्थलद्वये व्यभिचारग्रहाभावं विनापि साध्यसामानाधिकरण्यग्रहादेव व्याप्तिग्रहसम्भवात् सामानाधिकरण्यलाभाय उदाहरणप्रयोगेऽपि द्विर्यत्पदं न प्रयुज्यतामित्याशङ्कामिष्टापत्त्या परिहरति

व्यभिचारतादवस्थ्याद्व्यभिचारधियोऽनिवृत्तिः तत्परत्वग्रहापेक्षायां च यद्योगप्राथम्याभ्यां साधननिष्ठव्याप्तितात्पर्यमेव गृह्यतां, तत एव लक्षणया व्याप्तिशाब्दबोधसम्भवात् तत्र व्यभिचारशङ्काया अविरोधित्वात् यावत्साधनवति साध्यवत्त्वबोधाय द्विर्वचनमनर्थकमेव। अत एव यन्नैवं तन्नैवमिति प्राचामुदाहरणोपदर्शनमपि सङ्गच्छते, आवश्यकश्च व्याप्तेः शाब्दबोधः। अन्यथा समानप्रकारतामपुरस्कृत्य विपरीतधियो विरोधितायाः दुष्कल्प्यतया महानसत्त्वादिना सकलधूमाधिकरणे साध्यवत्त्वबोधेऽपि

---

***यत्र चेत्यादिनेति*** भावः। ***उभयसिद्धेति।*** उभयवादिनिश्चितव्याप्तिक-हेतुप्रयोगस्थले यथोदाहरणं न प्रयुज्यते, व्याप्तेः पूर्वमेव निश्चितत्वात्, एवमुक्तस्थलद्वये साध्यसामानाधिकरण्यग्रहार्थमुदाहरणप्रयोगेऽपि यत्पदस्य द्विःप्रयोगो मास्तु, व्यभिचारग्रहाभावस्य पूर्वं सिद्धत्वादिति भावः। ***तथात्रेति।*** पूर्वोक्तस्थलद्वय इत्यर्थः।

शब्दतो व्याप्तिप्रत्ययार्थमेव व्याप्तिप्रत्यायनेच्छारूपा बोध्येति मतं निराकर्तुमुपक्रमते–***सर्वत्रैवेति।*** द्विरुक्तपदसमभिव्याहारस्थले तत्पदार्थांशे विधेयबोधकपदस्य यत्पदार्थविधेयव्यापकताविशिष्टस्वार्थे लक्षणेति निरस्यति–***द्विर्यत्प्रयोगेऽपीत्यादिना।*** ***महानसत्वादिनेति।*** महानसत्वादिनोप-स्थितेष्वधिकरणेषु साध्यवत्त्वप्रतीतावपि धूमवत्त्वावच्छेदेन वह्निमत्त्वाग्रहात् तद्रूपसामानाधिकरण्येन तेष्वेवाधिकरणेषु साध्याभावावगाहिव्यभिचारबुद्धौ बाधकाभाव इत्यर्थः। इदमुपलक्षणम्। व्याप्तिबोधानुपगमे धूमाद्यधिकरणानामेव यत्र बुद्धिस्थता तत्र यो यो वह्निमान् स धूमवानिति प्रयोगस्यापि प्रामाण्यापत्तेः। तादृशतत्तत्पदार्थेषु सर्वेषु धूमवत्त्वाबाधात्। धूमशून्याधिकरणस्याबुद्धिस्थत्वेन तत्पदार्थताविरहादित्यपि द्रष्टव्यम्।

***अयमाशय*** इत्यादि ***अशक्यत्वाच्चे***त्यन्तस्यायं सारार्थः– द्विर्यत्पदप्रयोगेऽपि द्वयोर्यत्पदयोः धूमाधिकरणसकलतात्पर्यकत्वं यदि न ज्ञायते, अपि तु कतिपयाधिकरणपरत्वमेव ज्ञायते तदा क्वचित् धूमाधिकरणे वह्निमत्त्वज्ञानं धूमाधिकरणान्तरे वह्न्यभावरूपव्याभिचारधियं प्रतिबन्धुं न शक्नोतीति द्वयोर्यत्पदयोः सकलधूमाधिकरणतात्पर्यकत्वग्रहः अवश्यमपेक्षितः। तदपेक्षया यच्छब्दयोगप्राथम्याभ्यां 'यद्वृत्तयोगः प्राथम्यम्'

साध्याभावशङ्काया अनुच्छेदेन मानसव्याप्तिग्रहसम्भवात्, धूमवत्त्वप्रकारेण तत्र तत्रैव यत्पदेनैकरूपेण विभिन्नरूपेण वा सकलधूमाधिकरणोपस्थितिसम्भवात् एवमद्विरुक्तेनापि तदर्थकतया द्विरुक्तिसार्थक्यमपि दुर्वचम्। न च सकृदुच्चरितेत्यादिव्युत्पत्ति-विरोधादेकस्माद्यत्पदान्नानेकाधिकरणबोधस्सम्भवतीति वाच्यम्। सकृदुच्चरितस्य नानाशक्त्याऽबोधकतायामेव व्युत्पत्तेः। सर्वनाम्नाञ्च बुद्धिस्थतावच्छेदकत्वोपलक्षित-धर्मावच्छिन्नत्वेन नानाधर्मिणामनुगमात् नानार्थेषु शक्तेरैक्येन व्युत्पत्तेरविरोधात्। अन्यथा

---

इति श्लोकोक्तरीत्या साधननिष्ठा या व्याप्तिः तत्तात्पर्यमेव गृह्यतां, किं यावत्साधनाधिकरणे साध्यवत्त्वग्रहेण व्यभिचारधीनिवृत्तिद्वारा मानसव्याप्तिग्रहेण। तात्पर्याधीनयत्पदनिष्ठलक्षणया शाब्दधीरूपव्याप्तिग्रहस्य सम्भवात्। शाब्दव्याप्तिज्ञाने व्यभिचारशङ्काया अप्रतिबन्धकत्वात्। तथा च यावत्साधनवति साध्यवत्त्वबोधाय द्विर्वचनमनर्थकम्। अत एव 'यन्नैवं तन्नैवम्' इति एकयत्पदघटितं व्यतिरेक्युदाहरणप्रदर्शनं सङ्गच्छते। प्रतिबध्यज्ञानसमानप्रकारकस्य विपरीतज्ञानस्यैव प्रतिबन्धकतया द्विरुक्त-यत्पदाभ्यां धूमवन्महानसं वह्निमत् धूमवन्महानसान्यत् वह्निमत् इति महानसत्वतदन्यत्वावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानस्य तदवच्छिन्नविशेष्यक-वह्न्यभावधीविरोधित्वेऽपि धूमवत् वह्न्यभाववदित्याकारकधूमवत्त्वावच्छिन्न-विशेष्यकसाध्याभावप्रकारकशङ्काविरोधित्वाभावेन उदाहरणजन्यज्ञानात् व्यभिचारशङ्कायाः अनिवृत्तेः मानसव्याप्तिज्ञानासम्भवात्। तथा च द्विर्यद्वचनमनर्थकम्।

किञ्च सकृदुक्तेन यत्पदेनैव एकरूपेण (धूमवत्त्वेन) विभिन्नरूपेण महानसत्वतदन्यत्वादिना वा सकलधूमाधिकरणा-नामुपस्थितिसम्भवात् तत्प्रयोजनकं द्विर्वचनमनर्थकम्। न च सकृदुच्चरितः शब्दः एकमर्थमेव गमयतीति न्यायात् कथं सकृदुक्तयत्पदेन अनेकाधिकरणबोधः सम्भवतीति वाच्यम्। सकृदुच्चरितः शब्दः अनेकशक्त्या अनेकार्थं न बोधयतीत्येव व्युत्पत्तेः। सर्वनाम्नां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकतया तादृशधर्मावच्छिन्नत्वेन रूपेण नानाधर्मिणामेकशक्त्या बोधने व्युत्पत्तिविरोधविरहात्। सकृदुक्तेन यत्पदेन एकरूपेण यावद्धेत्वधिकरणबोधसम्भवात् द्विरुक्तेरनावश्यकत्वात्।

द्विरुक्तिस्थले एकस्यैव पदद्वयरूपादेशस्थानतया पदभेदविरहेण द्विरुक्तावपि नानार्थबोधानुपपत्तेः। कथञ्चिदर्थद्वयबोधकत्वनिर्वाहेऽपि भूयोऽर्थबोधस्य निर्वाहयितु- मशक्यत्वाच्चेति।

अथ द्विरुक्तस्थल एव व्याप्तौ निरूढलक्षणा, अत एव यत्पदप्रयोगेऽपि वादिवाक्ये स्वारसिकलक्षणाविरहेण न व्याप्तिबोधनिर्वाहः। वस्तुतो व्याप्तिगोचरशाब्द- बोधानुरोधेन चेदुदाहरणप्रयोगः तदोपनयवद्व्याप्यपदेनैवोदाहरणेऽपि व्याप्तिबोधनं युज्यत इति सकलधूमाधिकरणे साध्यवत्त्वबोधनाय यो यो धूमवानित्युदाहरणम्। इत्थं

---

अन्यथा द्विरुक्तिस्थले एकस्य पदस्य पदद्वयमादेश इति वाचकस्य स्थानिन एकत्वेन पदभेदविरहात् नानार्थबोधानुपपत्तेश्च। आदेशस्य वाचकत्वस्वीकारेण अर्थद्वयस्य पदद्वयेन बोधनेऽपि तदधिकार्थाबोधकत्वात् सकलहेत्वधिकरणबोधानिर्वाहश्चेति। ***भूयोऽर्थबोधस्येति।*** बहुतरार्थबोधस्येत्यर्थः। वीप्सा चेति ग्रन्थमवतारयति–***अथ द्विरुक्तस्थल एवेत्यादिना।*** द्विरुक्तस्थले एव व्याप्तौ निरूढलक्षणा न तु सकृदुक्तस्थले। अत एव सकृदुक्तस्थले वादिवाक्ये स्वारसिकलक्षणाविरहेण न व्याप्तिविषयक- बोधनिर्वाहः। द्विरुक्तत्वाभावेन निरूढलक्षणाविरहात् वादिवाक्यत्वेन स्वारसिकलक्षणाविरहाच्च यत्पदस्य व्याप्तौ शक्त्यभावाच्च। किञ्च व्याप्तिविषयकशाब्दबोधानुसारेण तदर्थमुदाहरणप्रयोगश्चेत् तदा उपनये वह्निव्याप्यधूमवानित्याकारके व्याप्यपदेन व्याप्तिबोधनवत् उदाहरणेऽपि व्याप्यपदेनैव व्याप्तिः बोधयितुं शक्या। व्याप्यपदघटितमुदाहरणं तु न प्रयुञ्जते, अपि तु यो यो धूमवानित्येव प्रयुञ्जते। तेन सकलधूमाधिकरणे वह्निमत्त्वबोध एव उदाहरणतात्पर्यविषयः। तथा च यत्पदस्य अद्विरुक्तस्य नियमतः सकलधूमाधिकरणपरत्वविरहात् तत्परत्वग्रहार्थं यत्पदद्विरुक्तेरावश्यकता। किञ्च अद्विरुक्तस्य यत्पदस्य सकलधूमाधिकरणपरत्वे 'नित्यवीप्सयोः' इति सूत्रेण द्विरुक्तस्य विधानं व्यर्थं स्यात्, ततश्च द्विरुक्तस्य साधुता न स्यात्। अतो यत्पदे दिरुक्तेरावश्यकतेत्याशयेन यत्पदे द्विरुक्तिमङ्गीकृत्य तत्पदे द्विरुक्तेर- नावश्यकतां बोधयति ***मणिकार*** इति भावः।

वीप्सा च यत्पदे न तु तत्पदेऽपि। विरूपोपस्थितयोरपि तत्पदेन परामर्शात् बुद्धिस्थवाचकत्वादिति न व्युत्पत्तिविरोधः। यथा "यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्म" इत्यत्र। इदं च साध्यसाधनोभयाश्रयविकलानुपदर्शितान्वयविपरीतो-पदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतोपदर्शितव्यतिरेकभेदाभासरूपमिति।

॥इति तत्त्वचिन्तामणावुदाहरणग्रन्थः॥

---

च यत्पदस्य सकलधूमाधिकरणपरताया अवश्यकतयाऽद्विरुक्तयत्पदस्य तत्परत्वानियमेन तत्परत्वग्रहार्थं द्विरुक्तेरावश्यकता। एवं नित्यवीप्सयोरिति सूत्रेण द्विरुक्तिविधानस्य नित्यतया सकलधूमाद्यधिकरणपरत्वे यत्पदस्य द्विरुक्तस्य साधुत्वमेव नस्यादित्यतो द्विरुक्तेरावश्यकता इत्याशयेन यत्पदे द्विरुक्तिमभ्युपेत्य तत्पदे द्विरुक्तिं खण्डयति- **वीप्सा चेति।** द्विरुक्तिनियमोऽपि कदाचिद्यत्पद एव न तु तत्पदेऽपीत्यर्थः। सर्वत्रैव तत्पदे न द्विरुक्तिरिति नार्थः। *विवर्णभावं स स भूमिपाल इत्यादौ छन्दोनुरोधादिना द्विरुक्तिदर्शनात्। न्याये तु प्रयुज्यमानेऽधिकस्यान्याय्यतया साधुत्वेऽपि न तत्र द्विरुक्तिः सकलधर्मि-प्रत्यायनेच्छारूपवीप्सासत्वेऽप्यद्विरुक्ततत्पदस्य साधुतासंभवः महाकविप्रयोगदर्शनात्, एतदपि स्पष्टयितुं भवभूतीनां (भवभूतिनान्धाः) तथा प्रयोगो दर्शयिष्यते, द्विरुक्त-यत्पदबोधितनानाधर्मिणामेकेन तत्पदेन परामर्शायोग इत्याशङ्कां निरस्यति- **विरूपेति।** महानसत्वमहानसान्यत्वादिना विभिन्नप्रकारेणेत्यर्थः। तत्पदेन परामर्शात्। **तत्पदेन परामर्शसम्भवात्।** तत्पदस्य परामर्शकतायाम्, व्युत्पत्तिविरोधे द्विरुक्तयत्पदेनापि तावद्धर्मिबोधासम्भवात् व्युत्पत्तिविरोध एव न कथमित्याकांक्षायामाह- **बुद्धिस्थवाचकत्वादिति।** बुद्धिप्रकारावच्छिन्नेषु सर्वेष्वेकशक्तेरित्यर्थः। व्युत्पत्त्यविरोधं दृष्टान्तेन द्रढयति। **यथेति।**

इति श्रीमन्महामहोपाध्यायगदाधरभट्टाचार्यचक्रवर्तिविरचितायां
युक्तिनिकरकल्लोलमालातरङ्गितकल्पनापयःपारावार-
रूपिण्याम्-अनुमानदीधितिप्रकाशिकायाम्
अवयवग्रन्थः सम्पूर्णः॥

***विवर्णभावमिति।***

सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः।।
इति पूर्णः श्लोकः रघुवंशस्थः।

अत्र तत्पदे न वीप्सेति न नियमः। किन्तु वीप्सितयत्पद-समभिव्याहृतपदार्थतावच्छेदकव्यापकत्वबोधे यत्र तात्पर्यं तत्र तत्पदे न वीप्सेत्येव नियमः। यद्यत्पापमित्यादौ नाशप्रतियोगितारूपकर्मत्वे मदीयपापत्वव्यापकताबोधात्। यत्र तथाविधव्यापकताबोधे न तात्पर्यं, तत्र तत्पदे वीप्सा, यथा सञ्चारिणीत्यादौ। तत्र पतिंवराकर्तृक-व्यत्ययकर्मताविशिष्टमहीपालत्वव्यापकत्वस्य वैवर्ण्यप्राप्तौ बोधनासम्भवात्। तादृशकर्मतात्वेनानुपस्थितेः। किन्तु तत्र तत्तद्भिन्नकर्मकातीतव्यत्ययस्य समानकालीनवैवर्ण्यप्राप्तिमत्तत्तद्भिन्नमहीपालस्य समूहालम्बनबोध इत्यवधेयम्।

मूले *यथा* ***यद्यत्पापमिति।***

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमिह मयि भृशं धेहि देव प्रसीद।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय।।
इति मालतीमाधवीये प्रथमाङ्के नान्दीश्लोकः।

**न्याये तु** इति। काव्ये छन्दोनुसारेण तत्पदस्य द्विरुक्तावपि न्याये द्विरुक्तस्य साधुत्वेऽपि न प्रयोगः। एकेनैव तत्पदेन यत्पदद्वयोक्तार्थपरामर्शसम्भवात्। न च सकलधर्मिप्रत्यायनेच्छारूपवीप्सायाः सत्त्वेन कथमद्विरुक्तस्य साधुत्वमिति वाच्यम्। "यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे" इति महाकविभवभूतेः प्रयोगदर्शनेन साधुत्वात् इति भावः।

इदानीमुदाहरणाभासानाह मूले–**इदं चेति।** धूमवान् वह्नेः, वह्निमान् धूमादित्यादौ दृष्टान्तस्यायोगोलकस्य साध्यवैकल्यं साधनवैकल्यं च

उदाहरणाभासः। उभयं-साध्यसाधनोभयमाश्रयो निरूपकं यस्या व्याप्तेरिति व्युत्पत्त्या पर्वतो धूमवान् वह्नेरित्यादौ यो वह्निमान् स धूमवानिति व्याप्तिवैकल्यादाभासः। अनुपदर्शितान्वयम्-प्रकृतसाध्यसाधनव्याप्तिवैकल्यादाभासः। अनुपदर्शितोऽन्वयोऽन्वयव्याप्तिर्येनेति व्युत्पत्त्या इदं वाच्यं ज्ञेयत्वादित्यादौ यो यो वाच्यत्वाभाववान् स ज्ञेयत्वाभाववानिति अनुपदर्शितान्वय-व्याप्तिकत्वादाभासः। विपरीतोपदर्शितान्वयम्-विपरीतक्रमेणोपदर्शितोऽन्वयोऽन्वय-व्याप्तिर्येनेति व्युत्पत्त्या पर्वतो वह्निमान् धूमादित्यादौ यो यो वह्निमान् स धूमवान् इति विपरीतक्रमेणोपदर्शितान्वयव्याप्तिकत्वादाभासः। अनुपदर्शितव्यतिरेकः- अनुपदर्शितो व्यतिरेको व्यतिरेकव्याप्तिः येनेति व्युत्पत्त्या अयमेतद्घटाभिन्नः एतद्घटत्वात् इत्यादौ य एतद्घटत्ववान् स एतद्घटाभिन्न इति अनुपदर्शितव्यतिरेकव्याप्तिकत्वादाभासः। विपरीतोपदर्शितव्यतिरेकः- विपरीतक्रमेणोपदर्शितो व्यतिरेको व्यतिरेकव्याप्तिर्येनेति व्युत्पत्त्या उक्तस्थले यो य एतद्घटत्वाभाववान् स एतद्घटभिन्न इति विपरीतोपदर्शितव्यतिरेकव्याप्तिकत्वादाभासः। एषु च प्रकृतसिद्ध्यौपयिक-व्याप्तिप्रमानुपधायकत्वमाभासताप्रयोजकं बोध्यम्।

**॥इति भावदीपिकायाम् उदाहरणलक्षणम्॥**

# अथ उपनयलक्षणम्

उदाहरणानन्तरं भवतु व्याप्तिस्तथापि व्याप्तं कि पक्षे वर्तते न वेत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्व-प्रदर्शनायोपनयः। तत्रानुमितिकारणतृतीयलिङ्गपरामर्श- जनकावयवत्व-मुपनयत्वमिति सामान्यलक्षणम्। साध्यव्याप्यविशिष्टपक्षबोधका-वयवत्वम् साध्याभावव्यापकाभावप्रतियोगिमत्पक्षबोधकावयवत्वं च विशेषलक्षणद्वयम्। उदाहरणान्त एव प्रयोग इति न वाच्यम्। तृतीयलिङ्गपरामर्शस्य व्याप्तिपक्षधर्मतावगाहिनो अवयवान्तरादलाभात्। तदनभ्युपगमेऽपि पक्षधर्मताया अलाभात्। न तु हेतुवचनादेव तदवगमः। तस्य को हेतुरित्यकांक्षायां प्रवृत्तत्वेन हेतुस्वरूपोपस्थापकस्याततपरत्वात्।

---

***व्याप्तं किमिति।*** पक्षः साध्यव्याप्यहेतुमान् न वेति आकाङ्क्षायाः उपलक्षणमेतत्। साध्यनिष्ठव्यापकतानिरूपकहेतुमान् क इत्यर्थः। ***अनुमितिकारणेति।*** अनुमितिकारणीभूतः यः तृतीयलिङ्गपरामर्शः तज्जनकत्वे सति अवयवत्वमुपनयस्य लक्षणम्। पक्षांशे प्रकृतसाध्यानु-मित्यौपयिकव्याप्तिविशिष्टप्रकृतहेतुवैशिष्ट्यावगाहिशाब्दज्ञानजनकत्वमिति यावत्। यथाश्रुते उपनयस्य मानसपरामर्शाजनकत्वात्। अवयवत्वमित्यस्य न्यायावयवत्वमित्यर्थः। ***साध्यव्याप्येति।*** हेतुव्यापकत्वविशिष्टसाध्य-सामानाधिकरण्यविशिष्टहेतुवैशिष्ट्यावगाहिशाब्दबोधजनकन्यायावयवत्वम्। साध्याभावव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुवैशिष्ट्यावगाहिशाब्दबोधजनकन्यायावयवत्वं च उपनयस्य विशेषलक्षणद्वयम्।

मीमांसकमतं खण्डयति–***उदाहरणान्त*** इति। ***तृतीयलिङ्गपरामर्शस्येति।*** प्रकृतसाध्यानुमित्यौपयिकव्याप्तिविशिष्टपक्षधर्मताज्ञानस्य उपनयभिन्नात् अवयवात् अलाभात् तादृशज्ञानसम्पत्त्यर्थमुपनय आवश्यक इति भावः।

तदर्थस्यासिद्धत्वेन वादिवाक्यादेवाक्षेप इति चेन्न। अन्यथा प्रतिज्ञावाक्यादेव सर्वाक्षेपे अनाक्षेपकत्वात्। अवयवान्तरविलयात्।

---

ननु मीमांसकमते विशिष्टपरामर्शस्य अनुमित्यहेतुत्वात् विशिष्टपरामर्शस्य किमुपनयेनेत्यत आह–***तदनभ्युपगमेऽपीति।*** मीमांसकैरनुमितिहेतुत्वेन विशिष्टज्ञाना–नुमितिहेतुत्वानङ्गीकारेऽपीत्यर्थः। व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य अनुमितिहेतुत्व–नङ्गीकारेऽपि सम्भवतीति उपनयमङ्गीकृतम्। तादृशज्ञानं तु उपनयं विना न आवश्यक इति भावः।

ननु 'धूमवत्त्वात्' इत्यादि हेतुवाक्यादेव पक्षधर्मतालाभ इत्यत आह–***न तु हेतुवचनादिति। तदवगमः***–पक्षधर्मत्वावगमः। ***प्रवृत्तत्वेन***– प्रयुक्तत्वेन। ***हेतुस्वरूपोपस्थापकस्य। तस्य***–हेत्ववयवस्य। ***अतत्परत्वादिति।*** पक्षधर्मत्वा–प्रकृतहेतुविशिष्टहेतुत्वोपस्थापकत्वेनेत्यर्थः। हेतुप्रयोगात् पूर्वं पक्षधर्मतायाः अनाकाङ्क्षतत्वात् बोधकत्वात् इत्यर्थः। प्रत्युत मतुपः आधिक्यमपि पूर्वोक्तं स्मर्तव्यम्। इति भावः।

***वादिवाक्यादिति।*** हेत्वन्तात् वादिप्रयुक्तात् वाक्यादित्यर्थः। हेत्वन्तेन पक्षे हेतुज्ञाप्यसाध्यवत्ताप्रत्ययेन यः यः यज्ज्ञाप्यसाध्यवान् स तद्वान् इति सामान्यमुखव्याप्त्या हेतौ पक्षधर्मतानुमानादेव निर्वाहात् उपनयवैयर्थ्यमिति शङ्का। समाधत्ते–***तदर्थस्येति।*** हेत्वन्तार्थस्येत्यर्थः। ***असिद्धत्वेनेति।*** हेत्वन्तार्थजन्यज्ञानस्य वादिवाक्यजन्यत्वेन अप्रामाण्यशङ्का–कलङ्किततया अप्रामाण्यज्ञानाभावविशिष्टहेतुमत्तानिश्चयासम्भवेनेत्यर्थः। ***अनाक्षेपकत्वात्*** इति। पक्षे हेतुमत्त्वानुमापकत्वासम्भवात् इत्यर्थः।

***अन्यथेति।*** प्रकारान्तरेण हेतुमत्तानिश्चये अप्रामाण्यज्ञानाभावापेक्षणेऽपि अवयवाधीने तत्र तदभावापेक्षणेइत्यर्थः। ***प्रतिज्ञावाक्यादेवेति।*** प्रतिज्ञाजन्यशाब्दबोधानन्तरं 'यो यः साध्यवान् स तज्ज्ञापकहेतुमान्'

**प्रतिपाद्यानां स्वत एव तदवगम इति चेन्न। तेषां व्युत्पन्नाव्युत्पन्नतया सर्वत्र तदसम्भवात् प्रतिपादकेन स्वव्यापारस्य निर्वाहयितुमुचितत्वाच्च। अन्यथा अवयवान्तरेऽप्येवं प्रसङ्गादिति।**

**॥इति तत्त्वचिन्तामणवुपनयग्रन्थः॥**

---

इति व्याप्त्या तादृशज्ञापकत्वानुमानसम्भवात् हेत्ववयवाभिधानवैयर्थ्यप्रसङ्गात् इत्यर्थः। तथा च प्रतिज्ञाजन्यबोधस्य अप्रामाण्यज्ञानानास्कन्दिततया हेत्वभिधानस्येव उपनयाभिधानस्यापि आवश्यकत्वमिति भावः।

ननु उपनयवाक्याभावेऽपि प्रतिज्ञाहेतुभ्यां साध्यवत्पक्षहेत्वोः उपस्थितौ मध्यस्थस्य पक्षो हेतुमान् इति पक्षधर्मतोपनीतभानसम्भवात् उपनयवैयर्थ्यमिति शङ्कते–***प्रतिपाद्यानामिति।*** बोधनीयानां मध्यस्थादीनामित्यर्थः। **स्वत एवेति।** उपनयप्रयोगं विनैव हेतौ पक्षधर्मत्वावगम इत्यर्थः। समाधत्ते–***तेषामिति।*** प्रतिपाद्यानां केषाञ्चित् प्रागेव पक्षे हेतुमत्ताज्ञानमस्ति, केषाञ्चित्तु नास्तीति सर्वसाधारण्येन पक्षधर्मत्वोपनीतभानासम्भवादित्यर्थः। एतच्च तद्धर्मिकतदुपनीतभाने तद्धर्मिकतदुपनायकज्ञानमेव हेतुरिति मतेन। उपनायकज्ञानमात्रहेतुत्वेऽप्याह–***प्रतिपादकेनेति।*** वादिना इत्यर्थः। ***अन्यथेति।*** कस्साध्यव्याप्यवान् इति जिज्ञासायाः शाब्दबोधावगाहित्वमुपगम्य तन्निवर्तकशब्दानुविधाने उक्तरीत्या ज्ञापकोपनीतभानसम्भवेन हेत्ववयवादेर–नभिधानापत्तेरिति भावः। तत्रापि जिज्ञासायाः ज्ञानविषयत्वोपगमसम्भवात्।

**॥इति भावदीपिकायाम् उपनयलक्षणम्॥**

# अथ निगमनलक्षणम्

**उपनयानन्तरं निगमनम्। तच्चानुमितिहेतुलिङ्गपरामर्श प्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षधर्मताधीप्रयुक्तसाध्यधीजनक-वाक्यम्। न च व्याप्तिपक्षधर्मतयोश्चतुर्भिरेवावयवैः पर्याप्तेः किं तेनेति वाच्यम्। अबाधितासत्प्रतिपक्षितत्वयोरलाभे चतुर्णामप्यपर्यवसानात्। अथाभिधानाभिधेययोः व्याप्तिपक्षधर्मता-तल्लिङ्गप्रतिपादनादेव पर्यवसानेन अवयवान्तराणां निराकांक्षत्वम्। विपरीतशङ्कानिवृत्तेरपि तत एव लाभात्। अन्यथा निगमनेनापि तदवारणात्। न हि तद्विशेषदर्शनमनादृत्यैव तन्निवर्तकम्। सिद्धनिर्देशतया वारयतीति चेन्न।**

---

*अनुमितीति।* अनुमितिहेतोः लिङ्गपरामर्शस्य प्रयोजकं यत् शाब्दज्ञानं तस्य कारणभूतं यत् व्याप्तिपक्षधर्मताज्ञानप्रयुक्तं साध्यज्ञानं तज्जनकं वाक्यं निगमनमिति यथाश्रुतार्थः। अत्र कारणान्तं न्यायावयवार्थकम्। प्रकृतसाध्यीयप्रकृतव्याप्तिविशिष्टप्रकृतपक्षधर्मताविशिष्ट-प्रकृतहेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवैशिष्ट्यावगाहिबोधजनकत्वं विशेष्यदलार्थः। अनुषङ्गपक्षे इदं लक्षणम्। प्रतिज्ञायामतिव्याप्तिवारणाय ज्ञाप्यत्वविशिष्टान्तम्। तत्रापि 'धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान्' इति प्रतिज्ञावारणाय व्याप्तिविशिष्टान्तम्। 'वह्निव्याप्तिविशिष्टपर्वतवृत्तित्वविशिष्टधूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान्' इति प्रतिज्ञावारणाय प्रकृतपक्षनिवेशः। 'पर्वतो वह्निव्याप्यपर्वतवृत्तिधूमाद्वह्निमान् धूमात्' इत्यादिस्थले प्रतिज्ञावारणाय प्रकृतसाध्यनिवेशः। प्रकृतसाध्यं च पक्षे यद्रूपावच्छिन्नबोधिकाः प्रतिज्ञाः सम्प्रदायसिद्धाः तत्तद्रूपावच्छिन्नं विवक्षितम्। एवं च तादृशतद्रूपावच्छिन्न-वैशिष्ट्यबोधान्यतमबोधजनकत्वमर्थः। तेन 'तस्मात् इतरेभ्यो भिद्यते' इत्यादिनिगमनानां सङ्ग्रहः।

निगमनवैयर्थ्यं शङ्कते–*न च व्याप्तीति। पर्याप्तेः किं तेनेति।*

स्वरूपमात्राभिधानात्साध्यत्वानुपस्थितौ तस्मादिति हेतुविभक्त्य-नन्वयप्रसङ्गाच्चेति चेन्न। व्याप्तिपक्षधर्मताज्ञानेऽपि बाधसत्प्रतिपक्षबुद्धेः साध्यज्ञानेनानुत्पत्तिदर्शनात्। तदभावाबोधने समीहितानिर्वाहात्। अथ बाधादिविरहस्य प्रयोजकत्वं न तु तद्बोधस्य मानाभावाद-सिद्धेश्चेति किमर्थं बाधादिविरहो बोधनीय इति चेन्न। यदवगमे सति यन्न भवति तत्तदभावज्ञानसाध्यमिति व्याप्तेः। न चानन्वयः। तस्मादित्यन्वयबलादेव हेत्वनाकाङ्क्षितत्व-लक्षणसिद्धत्वज्ञानात् न त्वन्वयात्प्राक्।

---

लाभात् किं निगमनेनेत्यर्थः। ***अपर्यवसानादिति।*** अनुमितिसामग्र्य-सम्पादकत्वात् इत्यर्थः। पुनरपि निगमनवैयर्थ्यं शङ्कते-***अथेति।*** ***अभिधानाभिधेययोरिति।*** अनुमित्यौपयिकार्थबोधकशब्दप्रतिपाद्ययोः पर्यवसानेन पूर्णत्वेन अवयवान्तराणां निगमनानाम्। ननु निगमनानङ्गीकारे पक्षः साध्यवान् न वेति शङ्कायाः कथं निवृत्तिरित्यत आह-***विपरीतेति।*** ***तत एवेति।*** साध्यव्याप्तिविशिष्टवैशिष्ट्यबोधकशब्दादेवेत्यर्थः। ***अन्यथेति।*** तथाविधात् उपनयात् तादृशशङ्कानिवृत्त्यनङ्गीकारे इत्यर्थः। ***तदवारणादिति।*** तदवारणप्रसङ्गादित्यर्थः। विशेषदर्शनत्वरूपविरोधिताबीजसाम्यं व्युत्पादयति-***न हीति।*** तथा च ग्राह्याभावावगाहित्वमिव ग्राह्याभावव्याप्तिविशिष्ट-वैशिष्ट्यावगाहित्वं विशेषदर्शनत्वमेवेति निगमनं व्यर्थमिति भावः। शङ्कते-***सिद्धेति।*** निगमनं सिद्धत्वविशिष्टसाध्यबोधकतया तच्छङ्का-विरोधीत्यर्थः। ***स्वरूपेति।*** मात्रपदं सिद्धत्वविषयताव्यवच्छेदार्थम्। तथा च वादिवाक्ये लक्षणाविरहात् वह्निपदस्य सिद्धत्वविशिष्टवह्न्युपस्थापकत्वं न भवतीत्यर्थः। एतच्च सिद्धत्वं प्रमाणसिद्धत्वमित्याशयेन हेतुविभक्ति-साकाङ्क्षत्वाभावः सिद्धत्वमित्यत्राह-***साध्यत्वेति।*** तथा च निगमन-घटकवह्निमत्पदे हेतुविभक्तिसाकाङ्क्षत्वानुपगमे तत्साकाङ्क्षत्वस्यैव असत्त्वेन तज्ज्ञानाभावात् वह्न्यादौ हेतुविभक्त्यर्थान्वयो न स्यात्। जिज्ञासारूपाकाङ्क्षायाः वह्नौ उपगमे समभिव्याहाररूपाकाङ्क्षायाः

इह केचित्। यथा तस्मादिति सर्वनाम्ना हेतोः परामर्शः पूर्वोक्ताशेषरूपलाभाय तथा साध्यांशस्यापि तथेति सर्वनाम्ना सिद्धस्थल इव विरोधादिवारणाय युक्त इत्याहुः। तन्न। तथेति स्वरूपे, प्रकारे सादृश्ये वा। आद्ये तथा चायमिति प्रक्रमात्तथेति हेतुमानित्यर्थस्स्यात्। तथा चानन्वयः। न हि हेतुमत्त्वादेव हेतुमत्त्वमित्यन्वितम्। न द्वितीयः। सामान्येन पक्षस्याप्यन्वयव्याप्तौ प्रवेशात्। तत्प्रकारान्वयः तत्रैवेत्यनन्वयात्। अत एव न तृतीयोऽपि। अभेदानुमाने च अन्वयिनि तस्मात्तथेति सादृश्यान्वयाभावात्।

---

शाब्दबोधौपयिकत्वासम्भवेन आकाङ्क्षाज्ञानाभावासम्भवादिति भावः।

***व्याप्तीति।*** बाधज्ञानं प्रति व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वेनैव विरोधिता। उपनये च पक्षधर्मतामात्रभानमित्याशयेनेदम्। ***साध्येति।*** साध्यवत्ताज्ञानप्रतिबन्धकत्वादित्यर्थः। ***तदभावेति।*** अबाधितत्वादिबोधक-निगमनानुपगमे इत्यर्थः। ***समीहितानिर्वाहादिति।*** उद्देश्यपरानुमित्युत्पादा-निर्वाहादित्यर्थः। अवयवान्तरात् अबाधितत्वादिविशिष्टसाध्यबोधासम्भवात् बाधनिश्चयादितः साध्यवत्ताज्ञानानुदयप्रसङ्गादित्यर्थः। साध्याभावनिश्चयः बाध इति तदभावः अबाधितत्वम्। एवं सत्प्रतिपक्षितत्वं निश्चयगर्भमित्याशयेन शङ्कते-***अथेति।*** ननु अबाधितत्वबोधे अनुमितिसत्त्वं तदभावे तदभाव इति अन्वयव्यतिरेकानुविधानमेव मानमित्यत आह-***असिद्धेरिति।*** बाधसत्प्रतिपक्षौ निश्चयगर्भौ इत्याशयेन व्याप्तिमुपन्यस्य समाधत्ते-***यदवगमे सतीति। अनन्वय*** इति। अबाधितत्वबोधकशब्दाभावात् इति भावः। हेत्वनाकाङ्क्षितत्वलक्षणसिद्धत्वज्ञानादिति। तथा च वह्निपदस्य अबाधितत्वादिविशिष्टवह्नौ लक्षणा। विभक्त्यर्थान्वयोत्तरमेव हेत्वन्तेन एकवारं विभक्त्यर्थान्वये जाते पुनः विभक्त्यर्थान्वयतात्पर्यानुपपत्त्या लक्षणेति स्फुटयति-न ***त्विति। तस्मात्*** तथेति निगमनं निराकर्तुमाह-***इहेति। अशेषरूपं*** व्याप्तिपक्षधर्मत्वोभयम्। ***सिद्धस्थले***-मैत्रः

बहूनां च प्रक्रमे विशेष्यानन्वयात् वादिवाक्ये च योग्यतान्वयेऽतिप्रसङ्गात्। तस्मादित्यत्र तु हेतुविभक्त्यर्थानन्वयादेव नियमः। तस्मादनित्य इत्यभिधाने च विशिष्य सिद्धान्तादवगम्यते। पूर्वं साध्यतयोक्तस्य समर्थहेतुसम्बन्धेन पुनरुत्कीर्तनात्। अन्यथा तद्वैयर्थ्यात्। संशयप्रयोजनादयस्त्ववयवलक्षणाभावादेव नावयवाः। किन्तु न्यायाङ्गतया न्यायान्तर्गतत्वेनोपयुज्यन्त इति नाधिक्यम्। कण्टकोद्धारस्य च न सार्वत्रिकत्वं समयविशेषोपयोगित्वादिति।

*इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणावनुमानपरिच्छेदे अवयवग्रन्थस्सम्पूर्णः।*

---

पचति, अयमपि तथेति लोकप्रसिद्धस्थले। **विरोधः** उपक्रान्तप्रतिज्ञया सह उपसंहृतनिगमनस्य एकार्थबोधाजनकत्वरूपः। **स्वरूपे**–पूर्ववाक्यजन्यशाब्दबोधविशेष्ये। **प्रकारे**–तथाविधशाब्दबोधविशेष्यभिन्नप्रकारे। **सादृश्ये**–तथाविधशाब्दबोधविशेष्यसादृश्ये। **तथेति**–हेतुमान् इत्यर्थः। 'तथा'शब्देन हेतुमदुपस्थितिः। **अभेदेति।** चकारो भिन्नक्रमः। **तस्मादिति।** उक्तनिगमनघटक'तथा'शब्दार्थसादृश्यान्वयासम्भवात् इत्यर्थः।

ननु 'तथा'पदं बुद्धिस्थत्वेन साध्यबोधकमिति साध्ये पञ्चम्यर्थान्वय इत्यत आह–**बहूनामिति। प्रक्रमे** बुद्धिस्थे विशेष्ये नियमतः साध्ये एव तदन्वयस्य दुर्वचत्वात्। अन्यस्यापि बुद्धिस्थत्वात् इति भावः।

ननु अन्यत्र बाधात् न पञ्चम्यर्थान्वय इत्यत आह–**वादिवाक्ये** इति। बुद्धिस्थे इत्यर्थः। **योग्यतान्वये** बाधाभावबलात् पञ्चम्यर्थान्वयाङ्गीकारे **अतिप्रसङ्गात्।** बुद्धिस्थक्रमसंयोगादावपि निगमनघटकपञ्चम्यर्थान्वयप्रसङ्गात्। तथा च उपक्रमोपसंहारयोः विरोधो दुष्परिहर एवेति भावः।

ननु 'तस्माद्वह्निमान्' इति निगमनवादिमतेऽपि कथं तद्घटकपञ्चम्यर्थान्वयः। तच्छब्दस्य बुद्धिस्थवाचकतया घटादेः बुद्धिस्थत्वेन

तज्ज्ञाप्यत्वस्य साध्येऽबाधात् इत्यत आह–**तस्मादित्यत्रेति।** साध्यान्वयिपञ्चम्यर्थज्ञाप्यत्वे योग्यतातात्पर्याभ्यां प्रकृतहेतोरेवान्वय इत्यर्थः।

ननु निगमनोत्तरं कुत इत्याकाङ्क्षा कुतो न जायते इत्यत आह–**तस्मादिति। विशिष्यसिद्धता**– प्रकृतासाध्ये हेतुविभक्त्यर्थान्वय-निराकाङ्क्षता। **साध्यतयोक्तस्य**– हेतुज्ञानज्ञाप्यत्वेन बोधितस्य। **समर्थेति।** व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानज्ञाप्यत्वेन पुनर्बोधनादित्यर्थः। तथा च हेतुविभक्त्यर्थबोधोत्तरबोधविषयविभक्त्यर्थवत्त्वसङ्गेन तादृशनिराकाङ्क्षत्वानुमितिः आकाङ्क्षाज्ञानविघटिकेति न तादृशाकाङ्क्षासंभव इति भावः। **अन्यथेति।** निगमनानन्तरमनुमानात् तथा बोधाङ्गीकारे इत्यर्थः। **तद्वैयर्थ्यादिति।** निगमनवैयर्थ्यप्रसङ्गादित्यर्थः।

ननु साध्यसंशयादेरपि अवयवत्वात् तेषां पञ्चत्वकथनासङ्गतिरित्यत आह–**संशयेति। प्रयोजनम्**–साध्यनिर्णयेच्छा। आदिना हेत्वाकाङ्क्षादयः।

**न्यायाङ्गतयेति।** न्यायसम्पादकत्वेनेत्यर्थः। **उपयुज्यन्ते**–अपेक्ष्यन्ते। **कण्टकोद्धारस्येति।** पञ्चावयववाक्यप्रयोगानन्तरं नायमाभासः तल्लक्षण-रहितत्वात् इति प्रयुज्यमानस्य कण्टकोद्धारवाक्यस्य। **न सार्वत्रिकत्वम्** आभासशङ्कासमये एव तादृशवाक्यस्य प्रयोक्तव्यत्वात्। अत्र कृष्णम्भट्टैः अन्यथा व्याख्यातम्। तन्न युक्तमिति निरूपकः अस्माभिः 'कण्टकोद्धारवाक्यनाम्ना लघुप्रबन्धो लिखितः प्रकाशितश्च। स तथैवात्र पठितृसौकर्याय पुनर्लिख्यते।

## कण्टकोद्धारवाक्यम्

गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अवयवप्रकरणस्यान्ते "कण्टकोद्धारस्य न सार्वत्रिकत्वम्, समयविशेषोपयोगित्वात्" इति पङ्क्तिर्दृश्यते। इयं च पङ्क्तिः तार्किकाग्रगण्येन कृष्णम्भट्टेनेत्थं व्याख्याता–

"**कण्टकोद्धारस्य।** को वह्निमान्, कुतो वह्निमान्, कथमस्य गमकत्वम् इत्यादिप्रश्नसमूहस्य। **समयेति।** प्रकारान्तरेण प्रतिवादिनस्तथाविधाकाङ्क्षाबोधेन क्रमिकपञ्चवाक्यप्रयोगस्थले कण्टकोद्धारासंभवादिति

भावः।"

इति। श्रीमन्मथुरानाथभट्टाचार्यैरपीत्थमेव व्याख्यातम्। अध्यापका अपीत्थमेव पाठयन्ति। मम तु पठनकालादारभ्यात्र विषये तृप्तिर्नोपजायते स्म। यतस्तत्तदवयवोत्थापकप्रश्नपञ्चकस्य कण्टकोद्धारशब्दवाच्यत्वे न काप्यौचिती दृश्यते। अतः पूर्वोक्तमणिग्रन्थस्य तात्पर्यमन्यदेव भविष्यति कण्टकोद्धारशब्दार्थश्चान्य एव भविष्यतीति मन्यमान एवास्मम्। यदा पुनर्दैवात् **वेदान्तदेशिकविरचितं** तत्त्वमुक्ताकलापमपश्यं तदा तत्रत्येन एकेन श्लोकेन तत्त्वमवागच्छम्। तत् सांप्रतं विदुषां पुरत उपहरामि।

आभासोद्धारवाक्ये स्वयमिह पठितेऽप्यक्षतान्यस्य शङ्का
स्याच्चेद्व्यर्थोपनीतिर्निगमनमपि ते तत्तदर्थे यदात्थ।
तस्मादुद्घाटितानां परिहृतिरुचिता जेतुमिच्छोर्विशेषात्
उक्ते माने विमर्शो यदि भवति परं तत्र तर्कोऽपि वाच्यः॥

इति **तत्त्वमुक्ताकलापे** बुद्धिसरे एकोनषष्टितमः श्लोकः। तस्य नृसिंहराजीया व्याख्या–

"पर्वतो वह्निमान् धूमात् यो यो धूमवान् सोऽग्निमान् यथा महानसः तथा चायं तस्मात्तथेति पञ्चावयव–प्रयोगानान्तरम् 'नायमाभासस्तल्लक्षणरहितत्वात्' इति कण्टकोद्धारवाक्यं प्रयुञ्जते। तत्र किमिदं वाक्यं प्रयोजनरहितं प्रयोजनवद्वा। नाद्यः, प्रयोजनरहितस्य प्रयोगायोगात्। न द्वितीयः तत्रापि किमाभासशङ्का–निरासः प्रयोजनमुत तदन्यत्। न द्वितीयः, तथाभूत–स्यादर्शनात्। नाद्य इत्याह–आभासोद्धारवाक्य इति"

इत्यादिः परिदृश्यते। अनेन संदर्भेण स्पष्टमिदमवगच्छामः यत् पञ्चावयववाक्यप्रयोगानन्तरं "नायमत्राभासस्तल्लक्षणरहितत्वात्," इति वाक्यं प्रयोक्तव्यम्। तदेव च हेतुदोषरूपकण्टकोध्दारकत्वेन कण्टकोद्धारवाक्यपदेन आभासोद्धारवाक्यपदेन च व्यपदिश्यत इति।

*न्यायपरिशुद्धौ* च–

> "ये तु प्रतिज्ञादित्रयानन्तरं हेतोरसिद्ध्यन्यथा-
> सिद्धिपरिहारार्थ उपनयः, निगमने हेत्वंशः सिद्ध-
> साधनतापरिहाराय, साध्यांशस्तु बाधपरिहारायेति
> वर्णयन्ति तैर्नूनं तत्तद्दोषपरिहाराय मन्त्रपाठोऽय-
> मिष्टः। प्रतिज्ञाहेतुभ्यामेव तदर्थाभिधानसिद्धेः।
> अन्यथा नायमसिद्धो नापि बाधित इति व्यक्तमेव
> वक्तव्यत्वादाभासोद्धारनिर्बन्धः पुनरुक्तिश्च"

इति प्रत्यपादि। तद्व्याख्यायां च–

> "आभासोद्धारेति। नायमाभासस्तल्लक्षणरहितत्वात्
> इति कण्टकोद्धारवाक्येनैवाशेषदोषनिवृत्तिबोध-
> सिद्धेस्तदर्थं वाक्यान्तरप्रयोगस्तेन पुनरुक्तः
> स्यादित्यर्थः"

इत्यभ्यधायि। अयं संदर्भोऽपि पूर्वोक्तमर्थमुपोद्बलयति।

किं च न्यायाचार्या *उदयनाचार्याः* न्यायपरिशिष्टनामके ग्रन्थे "अवयवविपर्यासवचनमप्राप्तकालम्" (न्या.सू.5-2-11) इति न्यायसूत्रव्याख्यानावसरे–

> "अवयवशब्दस्त्वत्र समस्तकथाभागसंग्रहार्थः।
> वादिना हि प्रयोगोऽभिधेयः। तदनन्तरं संक्षेपतो
> विस्तरतो वा हेत्वाभासोद्धारः कार्यः। प्रतिवादिनापि
> जल्पे वादिप्रयुक्तं हेतुमुपालभ्य स्वपक्षसाधनं
> वक्तव्यम्। अथ हेत्वाभासा उद्धरणीयाः इति क्रमः"

इति प्रत्यपादयन्। अनेन ग्रन्थेनापि न्यायप्रयोगानन्तरं हेत्वाभासोद्धारकं वाक्यं प्रयोक्तव्यमिति प्रतीत्या तदेव च हेत्वाभासोद्धाररूपं परार्थानुमानरूपं वाक्यं कण्टकोद्धारशब्देन व्यवह्रियत इति निर्णयः सुशक एव।

मणिकारसमकालिकेन ***मणिकण्ठेन*** विरचिते ***न्यायरत्नेऽपि*** स्पष्टमुक्तम्–

"अन्यथा दूषणाभावप्रतिज्ञामपि कुर्यात्। ननु नायमसिद्धो न विरुद्ध इत्यादिकण्टकोद्धरण-व्याजेन दूषणाभावः प्रतिज्ञायत एव। मैवम्। एवं सत्यधिकावयवत्वप्रसङ्गः। न वा कण्टकोद्धारस्य सार्वत्रिकत्वम्"

इति। तथा **श्रीमद्व्यासतीर्थकृते** ***तर्कताण्डवेऽवयवप्रकरणे-***

"अपि चास्मिन् पक्षे कण्टकोद्धारोऽपि पृथङ् न कर्तव्यः स्यात्"

इत्यभिहितम्। तद्व्याख्याने च-

"नायमसिद्धस्तल्लक्षणरहितत्वात्" इत्यादि-कण्टकोद्धारानुमानेषु पञ्चावयवतां विनाप्युच्यमानेषु त्वयैव नियमस्त्यक्तः"

इत्युक्तम्।

इत्थमेभिर्ग्रन्थसन्दर्भैः पञ्चावयवप्रयोगानन्तरं वक्तव्यं "नायमाभास-स्तल्लक्षणरहितत्वात्" इत्याकारकं हेतुदोषोद्धारकमनुमानरूपं वाक्यं कण्टकोद्धारवाक्यमिति स्पष्टं प्रतीमः। तादृशं वाक्यं किं नियमेन प्रयोक्तव्यम् उत नेति संशये यं पुरुषमुद्दिश्य न्यायः प्रयुज्यते तस्य चेदस्ति न्यायवाक्यश्रवणान्तरमपि अनिवृत्ता हेतुदोषशङ्का तदा प्रयोक्तव्यम्, इतरथा तु न प्रयोक्तव्यमित्येवमनियममभिप्रेत्यैव "कण्टकोद्धारस्य न सार्वत्रिकत्वम्" इति मणिकारा अभिदधिरे। सूचितं चैतत्-"तस्मादुद्घाटितानां परिहृतिरुचिता" इत्यनेन वेदान्तदेशिकैः।

अयमत्र निष्कर्षः- उदयनाचार्याः कण्टकोद्धारस्य आवश्यकत्व-मवोचन्। मणिकारास्तस्यानियतत्वमूचुः। निगमान्तदेशिकास्तु वाद्युक्तहेतौ दोषशङ्कायां तर्काप्रयोगे तन्निवृत्त्यसंभवात् तर्कोऽपि प्रयोक्तव्य इति आवश्यकतर्कादेव तन्निवृत्तिसिद्धेः कण्टकोद्धारवाक्यमेव नावश्यकमिति मेनिरे। सर्वेषामपि कण्टकोद्धारशब्दार्थः पूर्वोक्त एवाभिमतो न तत्र विमतिरिति।

अतः प्राचीननैयायिकपरम्परागत कण्टकोद्धारशब्दार्थ संप्रदाय-विच्छेदात् यथावद्गृह्णन्तौ संदर्भानुगुणं शब्दशक्त्यलभ्यं च कंचिदर्थं परिकल्प्य पूर्वोक्तं मणिग्रन्थं व्याकुरुतां कृष्णम्भट्टमथुरानाथभट्टाचार्याविति सिद्धम्॥

इति श्रीशैलवंशतिलकस्य पण्डितराजस्य श्रीकृष्णताताचार्यस्य
तनयेन राजलक्ष्म्यम्बागर्भसंभूतेन चतुश्शास्त्रशिरोमणिना
शास्त्ररत्नाकर-देशिकदर्शनचूडामणि-वेदचतुःशास्त्ररत्नाकर-
पण्डितरत्न-तर्कवाचस्पति-दर्शनसार्वभौमेत्यादिबिरुदालंकृतेन
राष्ट्रपतिसम्मानितेन
तिरुपतिराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतिना

**एन्. एस्. रामानुजताताचार्येण**

**विरचिता**

**अवयवगादाधरीव्याख्या**

**भावदीपिका**

**सम्पूर्णा**

**- शुभमस्तु -**